# MANUŚANHITA.

# OR

# INSTITUTES OF MANU.

COMMENTED AND EDITED

BY

PUNDIT GANGADHUR KAVIRATNA KAVÍRAJ

*PUBLISHED BY*

DHARANIDHAR RAY KAVIRAJ.

---

## मनुसंहिता।

---

श्रीयुक्त गङ्गाधर कविरत्न कविराज कृत

प्रमादभञ्जनी टीका सहिता।

श्रीयुक्त धरणीधर राय कविराज कर्त्तृक

प्रकाशिता।

---

बहरमपुर—सैदावाद।

प्रमादभञ्जनयन्त्रे

मुद्रिता।

१२८८।

# मनुसंहिता।

## प्रमादभञ्जनीटीका।

### प्रथमाध्याय।

ॐ नमः शिवाय।

यामिमस्त्वाविव शिवा वर्द्धनारीनराकृती। पृक्तौनिताक्रियायुक्तौ पितरौप्रणमाम्यहम् ॥ १ ॥ पूर्व्वैरनेकैर्बु-धमानभिधिया प्रमादतोमानवधर्म्मसंहिताम। व्याख्यायधर्म्मीवहुधाविलोपितः प्रमादभञ्जनमलाविधीयते ॥ २ योधर्म्मशास्त्रस्यनिगूढमर्थंत स्तत्त्वं नविज्ञाय करोतिव्यत्ययतः। व्याख्यांतलाद्धर्म्मविलोपदोषतः सराजदण्डंरसमाच्छि-दार्हति ॥ ३ ॥ असद्व्याख्याणां वैघोरे मग्नांमानवसंहितां। वेदान्तवत्सउद्धर्त्तुं तत्त्वतोऽयंममोद्यमः ॥ ४ ॥ स्फुरत्-हृदयसंस्थवेंश्यामतोवेंश्यामकेशा हिमलरुचिरवर्णाधानमयुग्यत्थितावाक्। मनुवचनमसद्व्याख्यार्णवा दुद्धरन्तीममंमृदु-रसनायंवाग्नृतान्तदोषा ॥ ५ ॥ वागवाक्तपदापरामृत मयीसूक्ष्मासतीभास्वती हृत्पद्माम्बरसद्मनिस्थितवती पश्चाद्दितक्रमात्। प्रत्तावाक्तपदामतात्र रसनाग्रेश्यामाङ्गनेक्रीडतिभासाऽमेवकलाविधीमन् वचोव्याख्याविधौ-सास्तमे ॥ ६ ॥ व्यासादिभिर्धर्म्मशास्त्रे यानुक्तानिपृथक्पृथक्। तेषांभिन्नार्थकाभासाभिन्नार्थै रधिकार्थकैः ॥ ७ ॥ कुत्रिकार्थकैर्वाक्यैःसमन्नीयप्रयत्नतः। व्याचक्षेऽधेत्वबोधार्थमहं मानवसंहिताम् ॥ ८ ॥ सर्व्वशास्त्रंकृतादौ-तुकास्त्वंहिसुमे धशाम। आसीदेतनचैवासीत्त्रिपिवद्धंततः पुनः ॥ ९ ॥ द्वापरान्तेमुनिवरो व्यासःसत्यवतीसुतः। वेदान्विभज्यचतुरो मुनीन ध्यापयच्छुभान् ॥ १० ॥ सुमन्तोजैमिनिःपैलोवैशम्पायनएतच। साङ्गांस्तेजगृहु-र्वेदान्यपाठांसस्मृतीनपि ॥ ११ ॥ तेचशिष्यान् बहून्वेदान् साङ्गानध्यापयंस्ततः। मीमांसासूत्रमकरोज्जै-मिनिः स्मृतिवेदयोः ॥ १२ ॥ तद्वत्वासोऽथशिष्येभ्योधर्म्मशास्त्राणि कृतमुयः। अध्यापयच्च प्रथमंस्मृतिंमानव संहिताम् ॥ १३ ॥

अथखलुनापृष्टाउपदेष्टार*उपदिशन्तिकिमपि*तस्मादादौसंहितायाः*प्रकाशकऋषिःप्रश्नन्निर्द्दिशति ॥०॥

**मनुमेकाग्रमासीन मुपगम्यमहर्षयः। प्रतिपूज्ययथान्याय मिदंवचनमब्रुवन्॥ १॥**

स्वायम्भुवमाद्यं मनु*मेकाग्रमव्यग्रचित्त*मेवासीनंमहर्षयउपगम्य*यथान्यायं प्रतिपूज्य ॥ १ ॥ मनुकृतयथायोगोचितसत्कारा*दनन्तरंयथान्यायं*सत्कृत्यवचनमिदं*वक्ष्यमाणमब्रुवन् ॥ ३ ॥ तद्यथा ॥ १ ॥

**भगवन्सर्व्ववर्णानां यथावदनुपूर्व्वशः। अन्तरप्रभवानाञ्चधर्म्मान्नोवक्तुमर्हसि॥ २**

भगवन्नित्यादि ॥ १ ॥ * ॥ भोभगवं स्त्वंसर्व्वेषांवर्णानां*ब्राह्मणक्षत्रियवैश्य*शूद्राणामन्तरप्रभवानामन्तराणांधर्म्मा*न्नोऽस्मभ्यंवक्तुमर्हसीति ॥ १ ॥ * ॥ २ ॥ * ॥ ननुसन्तिधर्म्मोपदेष्टारोदेवा*अनेकचबहवो ब्रह्मादयस्तांस्तु*किमर्थंमहर्षयोनैतेोपजग्मुः ॥ १ ॥ वेदाचार्य्या ब्रह्माद्यीगाचार्य्याः शिवो*धर्म्माचार्य्यस्तु स्वायम्भुवोमनुरि*त्यतोधर्म्म जिज्ञासवस्तमूपागुः ॥ २ ॥ उक्तंचपराशरेण* स्वसंहितायां व्याख्याय*धर्म्ममेष्टवते ॥ ३ ॥

**नकश्चिद्वेदकर्त्तास्तिवेदस्मर्त्ताचतुर्मुखः। तथैवधर्म्मंस्मरतिमनुःकल्पान्तरान्तरे इति॥ ४॥ कौर्म्मेचेश्वरगीतायां*विभूतियोगकथने*भगवताशिवेनोक्तम*सर्व्वेषांवेदविदुषामहं स्वायम्भुवोमनुरिति॥ ५॥**

इत्यभिप्रेत्यमहर्षयस्तदुप*गमनव्यापारमूचुः ॥ ६ ॥

**त्वमेकोह्यस्यसर्व्वस्य विधानस्यस्वयम्भुवः। अचिन्त्यस्याप्रमेयस्यकार्य्यतत्त्वार्थवित्प्रभो॥ ३॥**

त्वमेकइत्यादि ॥ १ ॥ भोप्रभो हियस्मात्त्वमेकोऽस्यसर्व्व*स्याखिलस्यजगतोविधानस्य*सर्गरक्षा प्रलयविधानकर्त्तुः ॥ १ ॥ अप्रमेयस्यलौकिक*प्रमाणैः प्रत्यक्षानुमानादिभि*रज्ञात मप्रकारस्याचिन्त्यस्यहृदा*चिन्तयितुमप्रकारस्य ॥ २ ॥ स्वयम्भुवःपरमेश्वरस्यशिवस्य*कार्य्याणां तत्त्वार्थविदसित्वम्*धर्म्मान्वक्तुं त्व मर्हसि ॥ ३ ॥ अथेदंकश्चिद्व्याचष्टे* यस्मात्त्वमेकोऽद्वितीयोऽस्यसर्व्वस्य* प्रत्यक्षश्रुतस्यस्मृत्या* द्यनुमेयस्यविधानस्यवेदस्य ॥ ४ ॥ विधीयन्तेकर्म्माण्य ग्निहोत्रादीनि*येनेतिविधानं वेद*स्तस्यस्वयम्भुवोऽपौरुषेयस्य ॥ ५ ॥ अचिन्त्यस्य तर्कशाखा* विभिन्नत्वादियत्तया* परिच्छेत्तुमयोग्यस्य ॥ ६ ॥ अप्रमेयस्यमीमांसादिन्याय* निरपेक्षतयाऽनन्तमानस्याप्रमेयस्य ॥ ७ ॥ कार्य्यमनुष्ठेयमग्निष्टोमादि*तत्त्वं ब्रह्मसत्यंज्ञान*मनन्तंब्रह्मेत्यादि वेदान्तवेद्यम् ॥८॥ द्विवार्थःप्रतिपाद्य*भागस्त्वंवेत्सीति कार्य्यतत्त्वार्थवित्*भवसिभोप्रभो इति ॥ ९ ॥ ततसर्व्वमयुक्तंनहि*वेदः स्वयम्भूर पौरुषेयोपि*परमपुरुषादीश्वरात्सम्भूतो*यतउक्तं मुण्डके ॥ १० ॥

**यः सर्व्वज्ञः सर्व्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्मनाम रूपमन्नञ्च जायत इति ११**

शास्त्रयोनित्वादिति चोक्तं*नापराचिन्त्यामियत्तया*परिछिन्नत्वाम्मन्वादिभिर्ज्ञातत्वात्॥ १२॥ नापरमर्षिभिर्मन्वादिभिःखलु* मीमांसादिनाय निरपेक्षतयैव* ह्यवगततत्त्वार्थत्वात्॥ १३॥ *॥ ३॥ *॥

**सतैःपृष्ठस्तथासम्यगमितौजामहात्मभिः। प्रत्युवाचार्च्च्य तान्सर्व्वान्महर्षीन्श्रूयतामिति॥ ४॥**

सतैरित्यादि॥ १॥ अमितौजाइत्यमिततत्त्ववान्स*मनुर्महात्मभिस्तैर्महर्षिभि*स्तथासम्यक्पृष्टः सर्व्वां*स्तान्महर्षीनार्च्च्य यथार्हं सत्कृत्य*श्रूयतामितिप्रत्युवाच॥ १॥ *॥ ३॥ *॥ धर्म्मान्नोवक्तुमर्हसीतिधर्म्मं*पृष्टोमनुः प्रथमतो*धर्म्मस्वरूपं विवक्षु*र्धर्म्मप्रादुर्भावमाह॥ १॥

**आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिवसर्व्वतः॥ ५॥**

आसीदिदमित्यादि॥ ५॥

**असद्वाइदमग्र आसीत्ततोवैसदजायत। तदात्मानं स्वयमकुरुततस्मात्तत्सुकृतमुच्यते॥ ६॥**

इति तैत्तिरीयशाखोक्तमन्त्र*मस्याच तण्डीशाखोक्तं*सदेवसौम्येदमग्र आसी*दितिब्राह्मणं च सूत्वा*मवरेतद्वचनं।स्म.ह॥ २॥ इदं महाप्रसर्गावस्थं यत्किञ्च*प्राण्यप्राणिभूतमतमोरूपं*तत्सर्व्वं तमोभूतं पूर्व्वमासीत्। ३। तर्हि किं निश्चिय तम*स्तत्तमोभूत मिदंप्रा*गासीदितिनेत्याह॥ ४॥ अप्रज्ञातमिति निश्चि*यत्तमस्तद्विलोकेषु*सर्व्वैरेवप्रत्यक्षेण प्रज्ञायते॥ ५॥ यत्तुतमोनकैरपि*प्रत्यक्षेण प्रज्ञात,मज्ञातेत*त्तमोभूतमिदं सर्व्वज्ञा प्रज्ञातं॥६॥ तर्हि किं कल्पान्तेयत्तु*तमस्ततमोभूतमिदमासी*न्नेत्याह तदा हि तमो न भवति॥ ७॥ उक्तं छान्दोग्योपनिषदि॥

**अथततऊर्द्ध्व उदेत्य*नैवोदेतानास्तमेता*एकलएवमध्ये स्थाता*तदेष श्लोको-भवति॥ ८॥ नवैतत्रनिम्लोचोनोदीयायकदाचन। देवास्तेनाहं सतोऽरनमा रिराधिषिब्रह्मणा॥ इति॥ ९॥ नहवाअस्माउदेति*ननिम्लोचतिसकृद्दिवा*हैवास्मै भवतीति॥ १०॥**

तर्हि किं त्रिगुणसाम्य*लक्षणे प्रकृत्यवस्थेषे*प्राकृते महाप्रलये* यत्तमोज्योति र्विहीनं*स्तिमितमेवा स्तवत्तमोभूत**मत्रञ्चविष्णुपुराणे॥ ११॥

नाहर्नरात्रिर्न नभोनभूमि*र्नासीत्तमोज्योतिरभून्नचान्यत्*श्रोत्रादिबुद्ध्यानुपलभ्यमेकं*प्राधानिकंब्रह्मपुमांस्तदासीत् इति ॥ १२ ॥

नासीत्तमोज्योतिरिति*न तमोनज्योतिरिति*सजलमेघा वलिवाम्ने नभसि*यथास्तिमितं तम*स्तद्वत्तमोभूतमिति ॥ १३ ॥ नेतादृशा लक्षणमिति*स्तिमितत्वं तस्य लक्षणं*तर्हि यत्तम स्तर्क्यं तत्तमोभूतं*नेतादृशमतर्क्यमिति ॥ १४ ॥ अथ तर्हि किं निर्व्वाणाख्ये*परमात्मशिवात्मविशेषे*प्राकृत प्रलये यत्तम*स्तत्तमोभूतमिदमासीत् ॥ १५ ॥ यदुक्तं श्वेताश्वतरोपनिषदि। यजुर्वेदीयमन्त्रेषु ॥ १६ ॥

यदातमस्तन्नदिवानरात्रिर्नसन्नचासच्छिवएव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञाचतस्मात् प्रसृतापुराणी ॥ १७ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवविदित्वातिमृत्युमेतिनान्यःपन्थाविद्यतेऽयनायइति ॥ १८ ॥

नेतादृशाविज्ञेयमिति*तदितमः साङ्ख्ययोगाधिगम्य*मुक्तं श्वेताश्वतरोपनिषदिच। १९।

नित्योनित्यानां चेतनश्चेतनानां बहूनां यो विदधातिकामान्। तत् कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वादेवं मुच्यते सर्व्वपाशैरिति ॥ २० ॥

विज्ञानमयकोषस्यात्मायोगस्त*द्विज्ञानं तेनाधिगम्यः*सपरमात्मापुरुषः*इतरां साङ्ख्ययोगाधिगम्यं तमः २१ —इत्यं तमोभूतमिदं*सर्व्वतः प्रसुप्तमिव*प्राक् सर्गादासीदिति ॥ २२ ॥ सर्व्वतःप्रसुप्तःपुरुषोयथा * सुषुप्तिस्थानःखल्वात्मा*प्राज्ञस्तमसानिगूढः*क्रियागुणव्यपदेश*रहितएववर्त्तते ॥ २२ ॥ तथातमोभूतमिदं*सर्व्वं मूलप्रकृतौप्र*गवर्त्तनमूलप्रकृतिस्तुशक्तिः*क्रियागुणव्यपदेश*हीनासुप्तेवावर्त्तत ॥ २४ ॥ एतदुक्तं श्वेताश्वतरोपनिषदि। ब्रह्मवादिनो वदन्तीत्युप क्रम्य ॥ २५ ॥

ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्। यः कारणानिनिखिलानितानिकालात्मयुक्तान्यधितिष्ठत्येकः इति ॥ २५ ॥

अततेब्रह्मवादिनः*स्वगुणैरिति स्वप्रभावशक्तिभि*र्निखिलानि कारणानिपूर्व्वोक्तानि ॥ २३ ॥ स्वभावनियतियदृच्छा*प्रधानचेतस्य पुरुष*पञ्चमहाभूतानि*कालजीवात्म युक्तान ॥ २७ ॥ एषामधिष्ठाता यएकोदेवः*शिवस्तस्यात्मायाशक्ति*स्तांस्वगुणै र्निगूढांब्रह्मअपश्यन् ॥ २८ ॥ देवस्यात्मेति विशेषणेनदेवस्य*निजशक्ति ज्ञानबल*क्रियादीनांच्यवच्छेदः ॥२९॥ इत्येवंप्रभावमयमिदं*सर्व्वं यदातमोरूप*प्रभावरूपं भवति*तदामहमेवक्रियागुणहीनां*

सतोसर्गस्थिति प्रलयादिभ्यो * निवर्त्तमानावर्त्तते ॥ २१ ॥ एतदेवप्राक्सर्गात्क्रियायोगा* व्यपदेशाभावात्सद * पासदिता भिप्रायेण* तैत्तिरीयशाखायामुक्तं ॥ २२ ॥ असद्वाइदमग्रआसीदितितच* सदितिसिद्धान्तं निश्चितञ्छा- न्दोग्ये * सदेवसौम्येदमग्र * आसीदेकमेवेत्युक्तं ॥ २३ ॥ * ॥ ५ । * ॥ अथसर्गकालेऽस्मात्कृतिब्रह्मणः *प्रथमं यदजायत* तत्संक्षेपेणोच्यते ॥ १ ॥

ततःस्वयम्भूर्भगवानव्यक्तोव्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्त- मोनुदः ॥ ६ ॥

ततःस्वयम्भूरित्यादि*ततःशक्तिब्रह्मणःस्वयम्भूर्यथा*जज्ञेतदुक्तंतैत्तिरीये*योपनिषदिमन्त्रेण ॥१ ॥ ततोवैसदजाय- तेति* प्रस्यब्राह्मणंछान्दोग्योपनिषदि*सम्पतिवादःकृतश्च ॥ २ ।

तद्धैकआहुरसदेवसौम्येद * मग्रआसीदेकमेवा * द्वितीयंतस्मादसतःसज्जा- येतेति ॥ ३ ॥ कुतस्तुखलुसौम्यैवं *स्यात् कथमसतःसज्जायेततस्मात्*सत्त्वेवसौ म्येदमग्र*आसीदेकमेवाद्वितीयं॥४॥ तदैक्षतबहुस्यांप्रजायेयेति*तत्तेजोऽसृ जततदैक्षतबहु*स्यांप्रजायेयेतितदपोऽसृजत ॥ ५ ॥ ताऐक्षन्तबहुस्यामप्रजा येम*होतितात्रन्नमसृजन्त ॥ ६ ॥

इति तेजोवन्नमिति*त्रयंसत्ततोऽजायत*यदुतेजस्तल्लोहित*मिवरूपं तेजसांवीजम् ॥ ७ ॥ यास्ताआपस्ताःशुक्ला- इवमत्स्वांसा * मपामाकरभूतारसायया:* यत्तदन्नं तत्कृष्णमिव ॥ ८ ॥ त्रिभिरेतैर्लोहितशुक्लकृष्णै*रूपाहिताऽ सौशक्तिःसा*प्रजावाग्रूपागायत्रीवभूव ॥ ९ ॥ एतल्लोहितशुक्लकृष्णाभासा*गायत्रीनामैवक्रिया*गुणवत्यपदिष्टं सत्त- तोऽजायत ॥ १० ॥ यावैसागायत्रीसैव *लोहितशुक्लकृष्णात्म*तेजोवन्नांशंविना*परमव्योमांशेन ॥ ११ ॥ षट्- अशःशुभावहो * विधियस्मात्सस्वयःशिव*स्तंस्वयमात्मानं शिवमकरूत * तस्मात्स्वयरूपत्वात्तत् *सुकृतंधर्म्मं नामो- च्यते ॥ ११ ॥ अतएवआसौस्वयम्भूः*शिवादेवोधर्म्मोऽद्य्युक्त*स्तदेषस्योक्तस्तैत्तिरी*योपनिषद्युक्तएव ॥ १२ ॥

असद्वाइदमग्रआसीत्ततोवैसदजायत। तदात्मानंस्वयमकुरुततस्मात्तत्सुकृतमुच्यते इति ॥ १४ ॥ उक्तंचकणादेन*यतोऽभ्युदयनिःश्रे * यससिद्धिःसधर्म्मः इति ॥१५

इतेयतद्धर्म्मस्वरूपमुक्तातस्य * कार्यं निखिलमुच्यते*व्यञ्जयन्निदमित्यादि ॥ १६ ॥ भगवान् सर्व्वैश्वर्यवान्ऽ- व्यक्तो*वाङ्मनसाभ्यामग्राह्यः* इदंमहाभूतादिप*त्तद्दिशातिदाश्रयं *सद्दाशिवर्गुर्दादि ॥ १७ ॥ तद्व्यञ्जयन्सृज- मानो*वृत्तौजास्तेषांज्योतिर्भि*र्वृत्तंमण्डलमोजोज्योतिःस्वरूपं*वलंयस्यसआदित्यः* पश्चात्तज्ज्योतिर्मण्डलः ॥ १८ ॥ तथावृत्तौजाःसन्यत्तमो * महानिर्व्वाणप्रलयेऽभू*त्तत्तमोनुदः प्रादुरासी* दितियतदुक्तंवेदादिषु ॥ १९ ॥ तद्यथा

मुण्डकोपनिषदि * यः सर्वज्ञः सर्ववि * द्यस्य ज्ञानमयं तपः * तस्मादेतद्ब्रह्म नाम * रूपमन्नञ्च जायते इति ॥ २० ॥

अत एतद्ब्रह्म सदाशिवगुर्वादि * पञ्चब्रह्ममुरुपास्ते * त्तिरीयोपनिषदि च * सदा इदमग्र आसी * दित्यस्यानुवाक उक्तः ॥२१॥

ततोऽकामयत बहु * स्यां प्रजायेयेति स तपोऽतप्यत * स तपस्तप्त्वा सर्वमसृजत ॥२२॥ यदिदं किञ्च * तत्सृष्ट्वा * तदेवानुप्राविशत् ॥ २३ ॥ निरुक्तञ्चानि- रुक्तञ्च * निलयनञ्चानिलयनञ्च * विज्ञानञ्चाविज्ञानञ्च * सत्यञ्चानृतञ्च सत्यमभव द्यदिदं किंच * तत्सर्वं सत्यमित्याचक्षते इति ॥ २५ ॥

अथ ज्ञानवाको भगवतोप * मन्वानामहर्षिणां च * वायवीयपुराणे तु * व्याख्यातस्तद्यथोच्यते ॥ २६ ॥

ज्ञानक्रियाचिकीर्षाभि स्तिसृभिः स्वीयशक्तिभिः। शक्तिमानीश्वरः शश्वद्विश्वं व्याप्यावतिष्ठते ॥ २७ ॥ ज्ञानशक्तिस्तु कार्यं यत्कारणं करणं तथा। प्रयोजनं च तत्त्वेन बुद्धिरूपाध्यवस्यति ॥ २८ ॥ इदमित्थमिदं नेत्थं भवेदित्यभिमानिका। इच्छाशक्तिर्महेशस्य नित्या कार्यनियामिका ॥ २९ ॥ अथेच्छयाक्रियाशक्ति र्यथा- ध्यवसितं धिया। कल्पयत्यखिलं कार्यं क्षणात् सङ्कल्परूपिणी ॥ ३० ॥ यथा- शक्तिसमुत्थानाशक्तिः प्रसवधर्मिणी। शक्त्या परमया नित्या प्रसूते सकलं- जगत् ॥ ३१ ॥ एवं शक्तिसमायोगाच्छक्तिमानुच्यते शिवः। शक्ति शक्तिमदुत्थन्तु शाक्तं शैवमिदं जगत् ॥ ३२ ॥ यथा न जायते पुत्रः पितरं मातरं विना। तथा भवं- भवानीं च विना नैव चराचरम् ॥ ३३ ॥ परमात्मा शिवः प्रोक्तः शिवा चैव प्रकीर्त्तिता। पितामहेश्वरो ज्ञेयः शिवा मातेति कीर्त्यते ॥ ३४ ॥ तस्माच्छक्तिमयं सर्वं जगत् स्थावरजङ्गमम्। शिवाद्यवनिपर्यन्तं यया ततमिदं जगत् ॥ ३५ ॥ ततः शिवा- ख्यायाः शक्तेः शक्त्या शक्ति समुत्थया। तस्यां वै क्षोभ्य मायायामादौ नादः समु- त्थितः ॥ ३६ ॥ नादाद्विनिःसृतो बिन्दुर्बिन्दोरोमित्यभूद्ध्वनिः। सा तु माहेश्वरी- जाता शुद्धविद्या महोदया ॥ ३७ ॥ सा वाचामीश्वरी शक्ति र्वागीशाख्या तु शू- लिनः। या सा वर्णस्वरूपेण मातृकेति विजृम्भते ॥ ३८ ॥ तत्त्वहर्णमयो देवो बभूवादौ सदाशिवः ॥ अथानन्तसमायोगात् कलां मायामवासृजत् ॥ ३९ ॥

नियतिश्च कला विद्या कालश्च गुणपूरुषौ ॥ मायातः पुनरेवाभूद्व्यक्तं त्रिगुणात्मकम् ॥ ४० ॥ त्रिगुणात्तु ततोऽव्यक्तादविक्रिया: स्युस्त्रयो गुणा: ॥ सत्त्वं रजस्तम इत्येभिर्व्याप्तमखिलं जगत् ॥ ४१ ॥ गुणेभ्यः क्षोभ्यमाणेभ्यो गुणेशास्त्रिमूर्त्तिनः ॥ अभवन्महदादीनि तत्त्वानि च यथाक्रमम् ॥ ४२ ॥ तेभ्यः स्युरण्डपिण्डानि ह्यसङ्ख्यानि शिवाज्ञया ॥ इत्ययं शक्तिशिवाभ्यां सर्गो यथा ॥ ६३ ॥

तथैवं शक्तिशिवाभ्या*मनुप्रविष्टतेजोवन्न*विकारवर्णात्मकध्वनिमया*विद्याश्चयब्रह्मपुरुषः* सदाशिव आदावभूत् ॥ ४४ ॥ * ॥ ततश्चतस्रोऽपराविद्यामायाख्या * बभूवुस्तत्रार्थ्यविद्याश्चगः * सेतिहासपुराणोऽथर्ववेदोऽभूत् ॥ ४५ ॥ साम विद्या श्चयः साम*वेदोयजुर्विद्याश्चयो* यजुर्वेदऋग्विद्याश्चयऋग्वेदः ॥ ४६ ॥ इतिहे विद्ये परापरे ब्रह्मणी*पञ्चब्रह्मपुरुषाः*सदाशिवोवेदान्तोवेदाश्चत्वारः ॥४७॥ एषांपञ्चानांब्रह्मणां*निलयनंनामरूप*मन्नञ्चयथाऽजायततदुक्तंच*छान्दोग्योपनिषदि ॥ ४८ ॥

तस्य ह वा एतस्य हृदयस्य*पंचदेवसुषयः स*योऽस्य प्राङ्सुषिः स प्राण * स्तच्चक्षुः स आदित्यः ॥ ४९ ॥ अथ योऽस्य दक्षिणः सुषिः स व्यान*स्तच्छ्रोत्रं स चन्द्रमा*अथ योऽस्य प्रत्यङ्सुषिः *सोऽपानः सा वाक् सोऽग्निः ॥ ५० ॥ अथ योऽस्योदङ्सुषिः* स समानस्तन्मनः*स एव विद्युदन्यः ॥ ५१ ॥ अथ योऽस्योर्ध्वः सुषिः स उदानः*स वायुः स आकाश*स्तेवा एते पञ्चब्रह्म*पुरुषाः स्वर्गस्य लोकस्य द्वारपाः ॥ ५२ ॥

एतेप्राणादयःपञ्च*ब्रह्मपुरुषाऋग्वेद*यजुर्वेदसामवेदा* थर्वाङ्गिरसाख्यवेद * सदाशिवाख्यवेदान्ताः क्रमेण ज्ञेयाः ॥ ५३ ॥ यथैषांनाम*रूपमन्नञ्चा*जायततच्च*यथैवोक्तं ॥ ५४ ॥

असौ वा आदित्यो देवमधु तस्य*द्यौरेव तिरश्चीनवंशोऽन्तरीक्ष* मपूपो मरीचयः पुत्राः ॥ ५५ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य*प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव* पुष्पं ता अमृता आपः ॥ ५६ ॥ ता वा एता ऋच एतमृग्वेद* मभ्यतपंस्तस्याभितप्तस्य यशस्*तेज इन्द्रिय* मन्नाद्यं रसोऽजायत ॥ ५७ ॥ तद्व्यक्षरत्तदादित्यमभितो * ऽश्रयत्तद्वा एतद्यदेत * दादित्यस्य रोहितं रूपम् ॥ ५८ ॥ अथ येऽस्य दक्षिणा रश्मयस्ता* एवास्य दक्षिणा मधुनाड्यो यजूंष्येव मधुकृतो

यजुर्वेद एव*पुष्पं ता अमृता आपः ॥ ५९ ॥ तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यं * मन्नाद्यं रसोऽजायत ॥ ६० ॥ तद्व्यक्षरत्तदादित्य*मभितोऽश्रयत्तद्वा एत*द्यदेतदादित्यस्य शुक्लं रूपम् ॥ ६१ अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव *पुष्पं ता अमृता आपः ॥ ६२ ॥ तानि वा एतानि सामान्येतं सामवेदमभ्यतपंस्तस्याभितप्तस्य* यशस्तेज इन्द्रियं वीर्य्यं *मन्नाद्यं रसोऽजायत ॥ ६३ ॥ तद्व्यक्षरत्तदादित्य*मभितोऽश्रयत्तद्वा एत*द्यदेतदादित्यस्य कृष्णं रूपम् ६४ अथ येऽस्योदञ्चो रश्मयस्ता एवा * स्योदीच्यो मधुनाड्योऽथ* र्वाङ्गिरस एव मधु* कृत इतिहासपुराणं * पुष्पं ता अमृता आपः ॥ ६५ ॥ ते वा एतेऽथर्वाङ्गिरस एत-दितिहासपुराणमभ्य* तपंस्तस्याभितप्तस्य*यशस्तेज इन्द्रियं वीर्य्यं * मन्नाद्यं रसोऽजायत ॥ ६६ ॥ तद्व्यक्षरत्तदादित्य* मभितोऽश्रयत्तद्वा एत*द्यदेतदादित्यस्य परं कृष्णं रूपम ॥ ६७ ॥ अथ येऽस्योर्द्ध्वा रश्मय * स्ता एवास्योर्द्ध्वा मधुनाड्यो गुह्या एव* वादेशा मधुकृतो ब्रह्म*पुष्पं ता अमृता आपः ॥ ६८ ॥ ते वा एते गुह्या आदेशा* एतद्ब्रह्माभ्यतपंस्तस्या*भितप्तस्य यशस्तेज इन्द्रियं वीर्य्यं *मन्नाद्यं रसोऽजायत ॥ ६९ ॥ तद्व्यक्षरत्तदादित्य*मभितोऽश्रयत्तद्वा एत* द्यदे-तदादित्यस्य मध्ये क्षोभत इव ॥ ७० ॥ ते वा एते रसानां रसा * वेदा हि* रसास्तेषा-मेते रसास्तानि वा* एतान्यमृतानाममृतं वेदा*ह्यमृतास्तेषामेतान्यमृतानि ७१

इति तस्य परमव्योमरूपस्य*त्रिपात् पुरुषस्याम्बाङ्गुलोमानेन*चतुरशीताङ्गुलमा*दशाङ्गुलं शिरोग्रीवं स्वः ॥ १२ ॥ ततोऽधस्ताच्चतुर्विंशताङ्गुलं *भुवःपादस्ततोऽधस्तात्*पञ्चाशदङ्गुलं भूःपाद इति ॥ १३ ॥ तत्र हृदये भुवः पादे* पञ्चदेवगणस्य*स्तानि शिवमाह्वहृदयमन्दिरं *शक्तिरात्मा ब्रह्म वसति*तन्मन्दिरस्य द्वाराणि ॥ १४ ॥ तत्पञ्चद्वारपालाः सद्याशिवादि*पंचब्रह्मपुरुषा महाभूतानि*तैःपंचभिर्द्वारैःपंच*रसामृतानि चरन्ति ॥ १५ ॥ तस्माद्धृदये मण्डलाकाराणि*तानि नभवुरिति तस्मादिता*मण्डलमभितो व मिदं*महाभूतादिससर्ज ॥ १६ ॥ तत्सम्भूतान्मण्डलज्योतिर्भिर्वत्तौजाः*सं स्तत्तमोऽनुनोद ॥ ७७ ॥ * ॥ इति ॥ ६ ॥ * ॥ तताभ पादेयत्ससर्ज*तत्संक्षेपेणोच्यते*योऽसावतीन्द्रियेत्यादि॥१॥*॥७॥*॥ योऽसावव्यक्तः स्वयम्भूरतीन्द्रिय*इन्द्रियाण्यतिक्रान्तोऽग्राह्योवाङ्मन*साभ्यां ग्रहीतुमशक्यः १

योऽसावतीन्द्रियोऽग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्व्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥७॥

योऽसाववयक्तः स्वयम्भूरतीन्द्रिय* इन्द्रियाणातिक्रान्तोऽग्राह्योवाङ्मन* साभ्यांग्रहीतुमशक्यः ॥ १ ॥ सूक्ष्मोऽणोरणीयान्सनातनोनित्यो*ऽचिन्त्यश्चेतसाचिन्तयितुमशक्यः * सस्वयंसर्व्वभूतमयः ॥ २ ॥ कालश्चेतनप्रधाना* व्यक्तमहदादितत्त्वभूतात्मकः * सन्नुद्बभावुद्गीतवान् ॥ ३ ॥ तद्यथा। विद्याविद्याश्रयपञ्च *ब्रह्मपुरुषाणां मध्ये*पञ्चोविद्याश्रयःसद्यशिवोब्रह्म*प्रणवादिवर्णमयः* पुरुषस्त्रिधावभव ॥ ४ ॥ तत्राचैकांशऋग्वेदेप्राविश* द्वितीयोंऽशोयजुर्वेदे*तृतीयांशःसामवेदे ॥५॥ तथाथर्व्ववेदश्चत्रिधाभूत्वाद्या*न्तांशऋग्वेदेप्राविशत्*पौष्टिकांशोयजुर्वेदे*आभिचारिकोंऽशःसाम*वेदेऽथैकंत्रयीत्वमभूत् ॥ ६ ॥ त्रयीचैकोभूयसदभुत्ततस्ततां * तत्पुनर्द्विधाभूत्वार्द्धः* कालोमहाविष्णुरभू*द्द्वितीयार्द्धश्चिदभूव ॥७॥ चित्प्रसादांशःश्चेतनोनामात्मास*विष्णुश्चिद्गुणांशःपुनःप्रधानाख्यः* सब्रह्मानामदेवता ॥ ८ ॥ ततःश्चेतनाधिष्ठितं*प्रधानंकालः प्रविश्य*श्चेतनं क्षोभयन्प्रधानंच*संकोचविकाशगुणां*स्त्रीन्पृथगेवचकार ॥ ९ ॥ असौभगवान्स्वयम्भू*र्विद्याविद्यापञ्चब्रह्म* पुरुषादीन्प्रधानान्तान् * प्रविश्यैकीभूयत्रिगुणा*साम्यलक्षणमव्यक्तंनामात्माभूत् ॥ १० ॥ तदव्यक्तंत्रिगुणवैषम्यलक्षणं*महान्तमात्मानंसृष्ट्वा*ऽहङ्कारंततःससर्ज ॥ ११ ॥ अहङ्कारस्त्रिधाभव*द्वैकारिकोनामसात्विकस्तैजसो* नामराजसोभूतादि * र्नामतामससेति ॥ १२ ॥ ततभूतादिःपञ्चतन्मात्राणि*महाभूतानिससर्ज*शब्दस्पर्शरूपरस*गन्धमात्राःखमारुत* ज्योतिरम्बुभूपञ्चमाः ॥ १३ ॥ तैजसश्चदशेन्द्रियाणिससर्ज *वैकारिकोमनोदेवताश्चैषां* ससर्जसृष्ट्वाचैतानि* सर्व्वभूतमयःसोऽभूत् ॥ १४ ॥ * ॥ ७ ॥ एवमस्मत्रिगुणालक्षणःसद*सदात्मकोऽव्यक्ताख्यात्मा*यदित्थंसर्व्वभूतमयोबभूव*तदुक्तं मुण्डकोपनिषदि ॥ १५ ॥

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः * सहस्रशःप्रभवन्तिसरूपाः। तथाऽक्षराद्विविधाःसौम्यभावाः*प्रजायन्तेतत्रचैवापियन्ति ॥ १६ ॥

इतितत्सरूपावहवोमहान्तः*प्रजायन्तेततोयदजायतत*दुक्तंततःपरंतत्र ॥ १७ ॥

दिव्योह्यमूर्त्तःपुरुषःसवाह्याभ्यन्तरोह्यजः। अप्राणोह्यमनाःशुभ्रोह्यक्षरात्परतःपरः ॥ १८ ॥ एषोऽहङ्कारस्तद्यथा* एतस्माज्जायतेप्राणोमनःसर्व्वेन्द्रियाणिच। खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणी ॥ १९ ॥

अत्रप्राणःपञ्चमहाभूतानि*तत्पूर्व्वपूर्व्वानुप्रवि*ष्टानिपुनःखादीनीति ॥ २० ॥*॥ ७ ॥ एवसर्व्वभूतमयोऽव्यक्ताख्यात्मा*त्माऽव्याकृतशरीरोस*न्नसौपरमात्माशिवः*पुनर्यदेवससर्ज ॥ १ ॥ तच्छान्दोग्योक्तंसदाह्यसोऽभिधाये*-तारादिभिःपंचभिःश्लोकैः ॥ २ ॥

आपोनाराइतिप्रोक्ताआपोवैनरसूनवः। तायदस्यायनंपूर्व्वंतेननारायणःस्मृतः॥ १०॥

नरं एवतद्रतारि*निपातनान्नाराआपः * इतार्थोऽणविधानस्थापनार्थंचोक्तं * नरसूनवइतिनरः* सूनुर्यासांता आपः॥ २॥ *॥ १०॥ *॥ ब्रह्मेतिनामुष्यनिरुक्तिमाहस्म*तत्कारणमित्यादि॥ ११॥

यत्तत्कारणमव्यक्तंनित्यंसदसदात्मकम्। तद्विसृष्टःसपुरुषोलोकेब्रह्मेतिकीर्त्त्यते॥ ११॥

यदेवतत्प्रसिद्धं*सदसदात्मकंसत्तु*विद्याअयोविज्ञान*मसदविज्ञानंतात्॥ २॥ त्रिगुणसाम्या लक्षण*मव्यक्तं नामब्रह्मनित्यं* तेनाव्यक्तेनब्रह्मणा*विसृष्टइतिब्रह्मानाम*लोकेसपुरुषउक्तः॥ ३॥ *॥ ११॥*॥ अयतस्मिन्नण्डे कथमयमजायतेत्यत*उच्यतेतस्मिन्नण्डेस * इत्यादितत्कार्यग्रस्थ॥ १॥ तस्मिन्नित्यादि॥ १२॥

तस्मिन्नण्डेसभगवानुषित्वापरिवत्सरम। स्वयमेवात्मनोध्यानात्तदण्डमकरोद्द्विधा॥ १२॥

तस्मिन्नप्सर्वोत्पन्नेऽण्डे*सभगवान्नारायणो*ब्रह्मापरिवत्सरंदैवमेकाब्द * उषित्वात्मनःस्वियस्य*ध्यानात्तदण्डंद्विधाकरोत्॥ १॥०॥ *॥ १२॥ *॥

ताभ्यांसशकलाभ्याञ्चदिवंभूमिञ्चनिर्म्ममे। मध्येव्योमदिशश्चाष्टावपांस्थानञ्चशाश्वतम्॥१३॥

तस्मादण्डान्निर्जातः*सनारायणःपञ्चतत्त्वो*ब्रह्मातातभ्यामण्डस्याद्धैमराजत*शकलाभ्यांदिवंभूमि *द्वयथासङ्ख्यं निर्म्ममे॥१॥ ऊर्द्ध्वेनतदण्डस्यशकलेन*स्वर्लोकंराजतेनभू*लोकंनिर्म्ममेमध्येतु*द्यावापृथिव्योरन्तर्व्योमान्त*रीक्षलोकंदिशश्चाष्टौ॥ २॥ ऊर्द्ध्वाधश्चदिशोप्रागेवप्रसिद्धे*अपामितियाएतायाः* स्याषोऽग्रेभूतसर्गे*तासांशाश्वतंस्थानञ्च निर्म्ममे॥ ३॥ तदुक्तमैतरेयोपनिषद्दि*सईक्षतलोकान्नुसृजाइति* सइमाल्लोकानसृजत्॥ ४॥ अम्भोमरीचीमरमापोऽदोम्भः*परेणदिवंद्यौःप्रति*ष्ठान्तरीक्षंमरीचयः*पृथिवीमरोयाअधस्तात्ताआपः॥ ५॥ इति॥ *॥ १३॥ एवंलोकान्सृष्ट्वालिङ्ग*शरीरिणःपुरुषान्प्रा*णयथाससर्जतदाह*उद्बवर्हेत्यादिश्लोकैः॥ १४॥

उद्बबर्हात्मनश्चैव मनःसदसदात्मकम्। मनसश्चाप्यहङ्कार मभिमन्तारमीश्वरम्॥१४॥
महान्तमेवचात्मानंसर्व्वाणित्रिगुणानिच। विषयाणांग्रहीतॄणिशनैःपञ्चेन्द्रियाणिच॥ १५॥

सइतानुवर्त्ततेच*सनारायणोमाख्या*खलुात्मनःस्वस्मादेव*स्थूलत्वात्सदसदात्मकं*मनउद्बवर्हाहङ्कार॥१॥ मनसश्चमनःस्थमेवाहङ्कार * मभिमन्तारमीश्वर * सहतर्हाहङ्कार॥ २॥ प्रागेवाव्यक्तात्चेतना * इत्यानिमहान्तौनि*त्रयोविंशतितत्त्वानि*जातानितत्सर्वतत्त्व*मध्योत्तमहान्ब्रह्मा॥३॥ स्वशरीरस्थानांतेषां* मनःप्रभृतीनां सत्त्व*कृत्या[illegible]सञ्चारः॥४॥ एतत्तद्भिस्तुश्लोके* मेतल्लिङ्गशरीरि*पुरुषासर्गएवोक्तः*नतुमहदादिसर्गः॥५॥ एतच्चिद्दान्दर्शयित्तुयात्वसे*महदादिक्रमेणैव*जगन्निर्म्माणमिति*दर्शयितुंतत्सृष्टिमा*हौदवर्हेत्याव सादि॥६। ब्रह्मात्मनःपरमात्मनःसकाशा*त्तोनक्रमेणमनउद्भूतवानि*तोवमादितदयुक्तं*नह्यास्तिपरमात्मनो*मनःप्रभृतिकिमपि॥ ७॥ *॥ १४॥ *॥ उद्बवर्ह॥

महान्तमित्यादि ॥ १५ ॥ चात्मतत्त्वएवमहान्तं विद्यामंजीवमात्मानं * मद्ब्रह्मणउद्बवर्ह * विषयाणांशब्दादीनां ग्रहीतृणिपञ्चबुद्धीन्द्रियाणिनकर्म्मेन्द्रियाणि ॥ १ ॥ अनेनुद्बवर्हसर्व्वाणितानि*मनःप्रभृतीनित्वष्टौ त्रिगुणानि सत्वरज*स्तमोगुणविकारात्मकानित्युः ॥ २ ॥ तत्वेन्द्रियाणिपञ्चाहङ्कारिकाणि*नतुमात्रभौतिकानि ॥ ३ ॥ १५ इत्यष्टौमनःप्रभृतीनि*स्वस्माद्भूतात्ब्रह्मा*यदकरोत्तदुच्यते*तेषान्त्ववयवानित्यादि ॥ १६ ॥

**तेषान्त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम्। सन्निवेश्यात्ममात्रासुसर्व्वभूतानिनिर्म्ममे १६**

तेषांषण्णामहङ्कार*पञ्चेन्द्रियाणाममितौ*जसांसूक्ष्मानवयवानेकश * आत्मनोमहतोविद्या *तात्रासुमात्रास्वे-कशः ॥ १ ॥ सन्निवेश्यार्थःअधिका*सर्व्वभूतानिविधान*मयान्सूक्ष्मान्सर्व्वपुरुषान्निर्म्ममे ॥ २ ॥ • ॥ १६ ॥ यानीमानिसर्व्वभूतानिनिर्म्ममे*तेषांसंज्ञानिरुक्तिमाह*यन्मूर्त्यवयवेत्यादि ॥ १७ ॥

**यन्मूर्त्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयन्तिषट्। तस्माच्छरीरमित्याहुस्तस्य**
**मूर्त्तिंमनीषिणः ॥ १७ ॥**

तस्यमहतआत्मनःषड्येसूक्ष्मा * अहङ्कारपञ्चेन्द्रिय*मनोवयवाइमानि * वक्ष्यमाणपञ्चमहा* भूतादीन्याश्रयन्ति ॥ १ ॥ तस्यामहतआत्मन* स्तांषट्सूक्ष्मावयवात्मिकांमूर्त्तिं * महाभूताद्याश्रयणा * मनीषिणःशरीरमाहुः ॥ २ ॥ * ॥ १७ ॥ ननुमायिकानाश्रयन्तीत्यत*आहतदाविशन्तीत्यादि ॥ १८ ॥

**तदाविशन्तिभूतानिमहान्तिसहकर्म्मभिः। मनश्चावयवैःसूक्ष्मैःसर्व्वभूतकृदव्ययम् १८**

यदात्वहङ्कारपञ्चेन्द्रियाणां* सूक्ष्मसूक्ष्मावयवान्षडेकशएकैकस्यामात्ममात्रायां * ब्रह्मासन्नावेशयत् ॥ १ ॥ तदातेसूक्ष्माःषडवयवाःसूक्ष्मै*रवयवैर्मनसोतानिविशन्ति*समनोमयःपुरुषोऽभूत्॥ २ ॥ तदामहान्तिपंचच*भूतानि कर्म्मभिःपंच * कर्म्मेन्द्रियैःसूक्ष्मैरवयवैर्युक्तै * र्विशन्तीत्ययप्राणमयःपुरुषः ॥ ३ ॥ इतिसप्तदशैकंलिङ्गंशरीर * मव्ययंविनानिर्म्माणं *नवैतिसर्व्वभूतकृत्*स्थूलसर्व्वपुरुषाणां*भूतात्मावीजधर्म्मकं ॥ ४ ॥ लोकेखलुयत्तत्कारणमव्यक्तं*नित्यंसदसदात्मकं *सविज्ञानानन्दमयःपुरुषः ॥ ५ ॥

**उक्तमप्येतन्मुण्डकोपनिषदि*अग्निर्मूर्द्धाचक्षुषीचन्द्रसूर्य्यौ * दिशःश्रोत्रेवाग्विवृ-**
**ताश्चवेदाः। वायुःप्राणोहृदयंविश्वमस्य* पद्भ्यांपृथिवीह्येषसर्व्वभूतान्तरात्मा।**
**इति ॥ ६ ॥**

एषसर्व्वभूतान्तरात्मेतिस्मृत्वा * मनुरुवाचेदंसोऽय * मव्यक्ताख्य आनन्दमयःपुरुषः ॥ ७ ॥ महदादीनित्व योविंशति * तत्वानिसृष्ट्वानुप्रविश्यसर्व्व * भूतमयस्त्वव्याकृत * शरीरोलोकेऽस्तीदृशो ॥ ८ ॥ सएवसमस्तएष* व्याकृतशरीरोनारायणोनाम*महाब्रह्माण्डावभूवाण्डात् ॥ ९ ॥ अस्यनारायणस्यव्यस्ता*एतेलिङ्गशरीरिणः*पुरुषा

न्तरात्मा ॥ १० ॥ * ॥ १८ ॥ इदंसप्तदशैकं सूक्ष्मशरीरं*यथाभवततथाह* सर्व्वभूतश्चतदाह*तेषामिदन्तु-
तादि ॥ १८ ॥

तेषामिदन्तुसप्तानांपुरुषाणांमहौजसाम। सूक्ष्माभ्योमूर्त्तिमात्राभ्यःसम्भवत्यव्ययाद्व्ययम ॥ १९ ॥

तेषांमहौजसां सप्तानामेव*महदहङ्कारपञ्च*बुद्धीन्द्रियाणां पुरुषाणां*सूक्ष्माभ्योमूर्त्तिमात्राभ्यो*यद्वाथंसूक्ष्म
शरीरम ॥ १ ॥ तद्व्ययमशरीरमव्ययात्पुनः*सप्तदशैकंलिङ्गं*शरीरंचाव्ययदुच्यते ॥ २ ॥ तस्माद्व्ययाल्लिङ्गशरीर
द्वय*मिदन्तुस्थूलशरीरं*सम्भवतीनिवीजधर्म्मकत्वम ॥ ३ ॥ * ॥ १९ ॥ अथकथमस्माद्व्ययाद्वयं*सम्भवतितत्रविं
वीज*मतात्मजाद्भाद्यतीत्यादि श्लोकस ॥ १ ॥ * ॥ २ ॥

आद्याद्यस्यगुणन्त्वेषामवाप्नोतिपरःपरः। योयोयावतिथश्चैषांसस्तावद्गुणःस्मृतः ॥२०

तदाविशन्तिभूतानि * महान्तीतिगानितुखं*वायुर्ज्योतिरापोभूरि*तेजतानितेषांपूर्व्वःपूर्व्वः*परंपरमनुप्रावि
शत् ॥ १ ॥ तेनेप्रामाद्याद्यसमहाभूतस्य*गुणन्तुशब्दंस्पर्शंरूपंरसं*गन्धंपरःपरोवायु*प्रभृतिरवाप्नोतीति ॥ २ ।
तद्यथोर्यावायुरादि*र्भावीयावतिथःसस*तावद्गुणःस्मृतइति ॥ ३ ॥ शब्दगुणाकाशंतस्यस्पर्श * गुणोवायात
प्रवेशाच्छब्द*स्पर्शगुणोवायुरभूत् ॥ ४ ॥ वायोरूपगुणेज्योतिषाप्रवेशात्तत्क्ज्योतिः*शब्दस्पर्शरूपगुणम् ॥५
त्रिगुणमाजेजसस्तु*रसगुणास्वपुखप्र*वेशाच्चतुर्गुणाआपोवभूवुः ॥ ६ ॥ चतुर्गुणेनामपांच*गन्धगुणायांपृथिव्यां*
मनुप्रवेशात्पृथिवी*पञ्चगुणावभूवेति ॥ ७ ॥ पञ्चविशेषभूतानान्ताखाऽऽत्मा*सर्व्वेषांप्राणिनमन्नमयान * मेतानि
हिपञ्चभूतानि*तस्मिन्सूक्ष्मशरीरे प्रतिष्ठितानि ॥ ८ ॥ जरायुजाण्डादियोनिषु*तत्तद्बीजमवक्रम्य*प्रविश्य सूक्ष्मशरीरी
भूतात्मा*पुर्व्वमेभ्यः पञ्चभूतेभ्यः* भूतानिसृजति ॥ ९ ॥ * ॥ २० ॥ इतीत्वंसूक्ष्मशरीरिणःपुरुषान्*सृष्ट्वा यत
करोत्तदाह*सर्व्वेषान्तुस इत्यादि ॥ १ ॥ * ॥ २१ ॥

सर्व्वेषान्तुसनामानि कर्म्माणिचपृथक्पृथक्। वेदशब्देभ्यएवादौपृथक्संस्थाश्च निर्म्ममे ॥ २१ ॥

यएतेसूक्ष्मशरीराः*सृष्टास्तेचतत्सृष्टयोनिषुजाता*यद्यन्नाम कर्म्माकृतयोभवन्ति ॥ १ ॥ आदौवेदोक्तशब्देभ्य
स्तेषांपृथक्पृथक्नामानि*देवासुरादीनिनरादीनिपशु*गोमहिषविहङ्गादीनि*नामानिनिर्म्ममेतथा ॥ २ ॥ तेषांयस
यत्कर्म्मत*त्तेषांयस्यासंस्थाचाकृतिस्ताश्च*सनातनोनिर्ममे ॥ ३ ॥ * ॥ २१ ॥

कर्म्मात्मनांचदेवानांसोऽसृजत प्राणिनांप्रभूः। साध्यानाञ्चगणंसूक्ष्मंयज्ञञ्चैवसनातनम् ॥ २२ ॥

कर्म्मात्मनामित्यादि ॥ कर्म्मात्मनांयोयोदेवश्चादित्यादिर्दिवादिकरोतिसस * कर्म्मात्मकोदेवस्तेषां * कर्म्म
कारिणांदेवानां*गणंसूक्ष्मंप्रभुरसृजत् ॥ १ ॥ प्राणिनाञ्चगणंसूक्ष्मं*साध्यानाञ्चसूक्ष्मंगणं*सूक्ष्मंसनातनं यज्ञञ्चैव
सृजत् ॥२॥*॥२२॥ अथात्रेदतपद्वयं*मार्कण्डेयपुराणेयत्*क्रौष्टुकिं प्रतिमार्कण्डेयउवाच ॥१ ॥ निष्प्रभेऽस्मिन्

रालोकेतर्व्वतस्तमसावृते। वृहदण्डमभूदेकमचरंकारणं परम ॥ २ ॥ तद्दिभेदतदण्डस्थो भगवान् प्रपितामहः। ब्रह्मयोनिःस्वयंब्रह्ममयः स्रष्टाजगतांप्रभुः। तन्मुखादोमिति महान भूच्छब्दोमहामुने। ततोभूश्चभुवश्चोर्द्धात्ततः स्वश्चरयन्तरं ॥ ४ ॥ एताव्याहृतयस्तिस्रःस्वरूपं तद्दिवस्वतः। ओँमित्यस्मात्स्वरूपात्तुतुच्छरूपंरवेःपरम ॥ ५ ॥ ततोमहद्दतिस्थूलंजनःस्थूलतरस्ततः। ततस्तपस्ततः सत्यमितिमूर्त्तीनिसप्तधा ॥ ६ ॥ स्थितानितस्यरूपाणि भवन्तिनभवन्तिच। स्वभावभावयोर्भावं यतोगच्छतिसंश्रयम ॥ ७ ॥ आद्यन्तं यत्परं सूक्ष्मम रूपं परमं स्थितम्। ओँ मितुरक्तं मयाविप्र तत् परं ब्रह्मतद्वपुः ॥ ८ ॥ तस्माद्दण्डाद्दिभिन्नात्तु ब्रह्मणो व्यक्तजन्मनः। ऋचोवभूवुः प्रथम प्रथमाद्वदनान्मुने ॥ ९ ॥ जवापुष्पनिभाःसद्य स्तेजोरूपास्तुसंहताः। पृथक्पृथग्विभिन्नाश्चरजोरूपवहास्ततः ॥ १० ॥ यजूंषिदक्षिणाद्वक्त्रादनिवद्धानि काञ्चनम। यादृग्वर्णं तथावर्णान्यसंहतिधराणिच ॥ ११ ॥ पश्चिमंयद्दिभोर्वक्त्रं ब्रह्मणः परमेष्ठिनः। आविर्भूतानिसामानितच्छन्दांसितानिच ॥ १२ ॥ अथर्व्वणामशेषंच भङ्गाञ्जनचयप्रभम्। यावद्घोरस्वरूपंतदाभिचारिकशान्तिकम ॥ १३ ॥ उत्तरात्प्रकटीभूतं वदनात्तस्यबेधसः। तत्त्वरुत्त्वतमःप्रायं सौमग्रासौमग्रस्वरूपवत् ॥ १४ ॥ ऋचोरजोगुणाःसत्त्वं यजुषांचगुणोमुने। तमोगुणानि सामानितमःसत्त्वमथर्व्वसु ॥ १५ ॥ एतानिजूलमानानितेजसाऽप्रतिमेनवै पृथक्पृथगवस्थानभाञ्जिपूर्व्वमिवाभवन् ॥ १६ ॥ ततत्वदादग्रंयत्तेजओँमितुरक्तयाभिशब्दरते। तस्यस्वभावाद्यत्तेजस्तत् समावृतरसंस्थितम १७ यथायजुर्मयंतेजस्तद्वत् साम्नांमहामुने। एकत्वमुपयातानिपरेतेजसिसंश्रये ॥ १८ ॥ शान्तिकंपौष्टिकंचैवतथाचैवाभिचारिकम्। ऋगादिषुलयंब्रह्मन् त्रितयंत्रिष्वथागमत १९ ततस्तन्मण्डलीभूतं छान्दसं तेजउत्तमम्। परेणतेजसा ब्रह्मन्नेकत्व मुपयातितत् ॥ २० ॥ इति ॥ इतेत्रवन्मगुदादिपञ्चब्रह्म।त्म* काम्तमयेखलुनारायणस्या*दितास्यमण्डलेजातेपुनर्यत्स* ससर्जतन्मुण्डकोक्तंवेदंस्मृत्वाह ॥ १ ॥

अग्निवायुबविभ्यस्तुत्रयंब्रह्मसनातनम्। दुदोहयज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥ २३ ॥

अग्नीतारादि ॥ २२ ॥ मुण्डकोपनिषदियथा ॥ * ॥ तस्मादृचःसाम यजूंषिदीक्षायज्ञाश्चसर्व्वेक्रतवोदक्षिणाश्च। संवत्सरश्चयजमानश्चलोकाः सोमोयत्र पवतेयत्र सूर्यः ॥ १ ॥ तस्माच्चदेवावहुधासं प्रसूताःसाध्यामनुष्याः पशवोवयांसि। प्राणापानौव्रीहियवौतपश्चश्रद्धासतरंब्रह्मचर्यंविधिश्च ॥ २ ॥ सप्तप्राणाः प्रभवन्तितस्मात् सप्तार्च्चिषः समिधः सप्त-

हीमाः। सप्त मे लोकायेषुचरन्ति प्राणा गुहाशयानिहिताः सप्तसप्त ॥ ३ ॥ अतःसमुद्रा गिरयश्चसर्व्वे अस्मात् स्यन्दन्ते सिन्धवः सप्तरूपाः। ततश्चसर्व्वाओषधयोरसाश्चयेनैषभूतैस्तिष्ठते ह्यन्तरात्मा ॥ ४ ॥ इति ॥ अग्नीत्यादिभिश्चतुर्भिःश्लोकैरेक*वाक्यं तद्यथोच्यते*इमावच्यमाणाःस्थूलाः* प्रजाः स्रष्टुमिच्छन्निमा * ऋग्वेदादिसृष्टिं ससर्ज ॥ १ ॥ अग्निस्तृतीयं महाभूतं * वायुश्चतुर्थं महाभूतं * रविरस्य नारायणस्य*हितस्यापश्चान्नतमण्डलं ॥ २ ॥ ऋगयजुःसामलक्षणं*त्रयं ब्रह्मसनातन*ऋग्वेदं यजुर्वेदञ्च*सामवेदञ्चेतित्रयीं ॥ ३ ॥ अग्नेर्ऋग्वेदं दुदोह*वायोर्यजुर्वेदं रवेः * सामवेदं यज्ञसिद्ध्यर्थमिति ॥ ४ ॥ १२ ॥ कालमित्यादि ॥ २४ ॥ २५ ॥

कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा। सरितः सागरान् शैलान् समानि विषमाणि च ॥ २४ ॥ तपो वाचं रतिञ्चैव कामं च क्रोधमेव च। सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥२५

कालं संवत्सरं ससर्ज*कालविभक्तीरयनादीः*समानिविषमाणिचेति*उच्चावचानिसर्व्वाणि ॥१॥*॥२४॥२५॥

कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत। द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः ॥ २६ ॥

कर्म्मणामित्यादि ॥ २६ ॥ वच्यमाणानांप्रजानां * कर्म्मणांविवेचनार्थं *धर्म्माधर्म्मौव्यवेचयत् ॥ १ ॥ एभिर्यथाविधियज्ञादिभिस्त * कर्म्मभिः धर्म्मःस्यात्*इत्येभिरवैधैःकर्म्मभि * रधर्म्मोभवतीत्येवं ॥ २ ॥ इमावच्यमाणाःस्थूलाः*प्रजाःस्रष्टुमिच्छन्निमाः*भूतशरीरिणीःप्रजा*स्ताभ्यांधर्म्माधर्म्माभ्यां च ॥ ३ ॥ सुखदुःखादिभिर्द्वन्द्वैः*सुखदुःखशीतोष्णादि* द्वन्द्वैरयोजयदिति ॥ ४ ॥ * ॥ २६ ॥ * ॥ ननुयादृमाःप्रजाःस्रष्टुमिच्छन * ब्रह्मासृष्टिमिमां ससर्ज*ताःप्रजाःकथंसम्भविष्यन्तीत्यत*आहाण्व्योमात्राइत्यादि ॥१॥ * ॥२७॥

अण्व्योमात्राविनाशिन्यो दशार्द्धानां च याः स्मृताः। ताभिः सार्द्धमिदं सर्व्वं सम्भवत्यनुपूर्व्वशः ॥ २७ ॥

आद्याद्यास्येतानेनोक्तानां*दशार्द्धानांपञ्चानांपूर्व्वं*पूर्व्वभूतानुप्रविष्टानां*याविनाशिन्योऽण्व्योमात्राः॥१॥ ताभिरण्वीभिर्विनाशिनीभिः पञ्च*स्थूलभूतानांमात्राभिः*सार्द्धमिमं दृश्यशरीरिसर्व्वम*नुपूर्व्वशःसम्भवति ॥ २ ॥ विनाशिन्यइतिविशेषणेन*पूर्व्वपूर्व्वभूतानुप्रविष्टपञ्च*भूतानामण्व्योमात्राइत्युक्तंज्ञेयं ॥ ३ ॥ ननुपञ्चानांमहाभूतानामण्व्योमात्रानहिताःस्तुस्थूल*पंचभूततयापरि*णामिन्योनित्यत्वाच्चनविनाशिन्यः ॥ ४ ॥ * ॥ २७ ॥

यन्तु कर्म्मणि यस्मिन् स न्ययुङ्क्त प्रथमं प्रभुः। स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ २८ ॥

यश्चितादि ॥ १८ ॥ सनातरायश्चोऽस्ताय * सूक्ष्मशरीरिणं यस्मिन् * कर्मणिप्रथममेव * परमेश्वरेणेच्छा वशात्प्रायुङ्क्त ॥१॥ सस्थूलशरीरीपुमान्*पुनःपुनःस्थूलदेहे*तयासृज्यमानःसदैव*कर्मस्वयंभेजे नतु*प्राक्तनकर्म वशात*दाप्राक्तनकर्माभावात् ॥ २ ॥ १८ ॥ ननुतत्किं किंकर्मेत्यतआह*हिंस्राहिंस्रेत्यादि ॥ १८ ॥

**हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। यद्यस्यसोऽदधात्सर्गे तत्तस्य स्वयमाविशत ॥ २९ ॥**

सवै ब्रह्मायस्यासूक्ष्म*शरीरिणःसर्गकाले*हिंस्रं चाहिंस्रं चमृदुक्रूरं च*धर्मं चाधर्मं चऋतं * चानृतचैषांदधाधात् ॥१॥ तस्मात्तदेवहिंस्रादि*कर्मस्वयंतमाविशत् *ननुब्रह्माप्रियाप्रियभावेऽतत्तत्कर्मतस्मिंस्तस्मिन्*पुरुषे किमायोजयत् ॥ २ ॥ २८ ॥ तत्रदृष्टान्तमाह*यथर्त्त्वित्यादि ॥ ३० ॥

**यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये। स्वानिस्वान्यभिपद्यन्ते तथाकर्माणि देहिनः ॥३०**

यथाखलुवसन्तादय ऋतवः ऋतुविपर्यये*स्वानेवर्त्तु लिङ्गानिस्वय*ममिष्वोऽभ्युपपद्यन्ते ॥१॥ तथाहिंस्रादीनिस्वानि*कर्माणिपुनःपुनःसृज्यमानाःस्ते * सूक्ष्मादेहिनोऽभिपद्यन्ते ॥२॥*॥३०॥ ननुसूक्ष्मशरीरिणांप्रथमंसर्गकालेतु*परमेश्वरेच्छया*यद्यद्हिंस्राहिंस्रादिकर्म*स्वभावोऽयंयंब्रह्मासमर्ज ॥ १ ॥ ससर्वएवलोके*किमेकविधएवस्थूल*शरीरीजायतद्वतातः ॥ २ ॥ **ब्राह्मणोऽस्यमुखमासीद्*बाहूराजन्यःकृतः। ऊरूतदस्ययद्वैश्यःपद्भ्यां शूद्रोऽजायत ॥ १ ॥** इतिवेदंस्मृत्वामनु*राहलोकानान्तुविवृद्ध्यर्थमित्यादिकंश्लोकं ॥ ४ ॥ * ॥ ३१ ॥ * ॥

**लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत् ॥ ३१ ॥**

ननु लोकानांविवृद्ध्यर्थं * ब्रह्मास्वमुखबाहादिभ्यः*क्रमेणब्राह्मणादीन्निरवर्त्तय*दितात्वजिज्ञासमेतत् ॥ १ ॥ यावन्तोवैसूक्ष्मशरीरिणःसृष्टा * स्तेषांमध्ये केचिद्ब्राह्मणाः केचित्क्षत्रियाः * केचिद्वैश्याः केचिच्छूद्रा * इत्येवंतावन्तोवैश्याः ॥२॥ नचतेभ्योऽधिकालोके *लोकाःसम्भवन्तिकथं*लोकानांविवृद्ध्यर्थमिति*वचनमुपपद्यते ॥३॥ लोकानांविशेषवृद्ध्यर्थमित्यर्थो* ह्युपपन्नं यावन्तोहि* सूक्ष्मशरीरिणस्तेषां*हिंस्राहिंस्रादिधर्मैर्यैः*विशेषाउक्तास्तत्तद्धर्मवृद्ध्यर्थम्॥४॥सामानातोहिंस्रादिधर्माणोयेते तत्तद्धर्मवृद्ध्या*ब्राह्मणादिविशेषाः*सम्भविष्यन्तीतिवृद्ध्यर्थं ॥५॥यस्तुब्राचष्टेब्राह्मणादिभिःसायं*प्रातरग्नावाहुतिःप्र*क्षिप्तासूर्यामुपतिष्ठते*सूर्याद्वृष्टिर्वृष्टेरन्नं*मन्नात्प्रजावाहुल्यमिति॥६ तदसाधुनह्यन्नाल्लोका*विवर्द्धन्ते कस्यचिद्बहु*प्रजाःकस्यचिदल्पप्रजाः*नाधिकाःसूक्ष्मशरीरिभ्यः ॥ ७ ॥ अथब्राह्मणमित्यादेरेकवचनं * जात्यभिप्रायं वर्णा*संख्याचैषांवक्ष्यते*शुक्लरक्तपीतकृष्णाः ॥ ८ ॥ एतास्वतस्रोजातयः*सामान्यप्रभेदाःसूक्ष्मा* नवाक्तत्यःसूक्ष्मसर्गप्रकरणात् ॥ ९ ॥ एतद्ब्राह्मणादयोजातयोन*सूक्ष्मशरीरिषुसर्ग*कालेब्राह्मणायोजिताः ॥ १० ॥ चतुर्विधाण्डजरायुजादियोनिषु * पुनर्देवनरतिर्यग्योनिषुच* तत्तद्बीजमनुप्रविश्यसूक्ष्मशरीरी * यदालोके स्थूलशरीरीजायते ॥ ११ ॥ तदातत्तज्जीवजन्मब्राह्मणा* जातिर्लोकेऽभिव्यज्यते *नसर्गकालेयोजिता*तेषुसूक्ष्मशरीरिषु ॥ १२ ॥ पापविशेषेणब्राह्मणोऽपिहिस्वल्पा * तिर्यग्योनिषजात्यन्तरेवासात्* यतउक्तं

पुराणेषु ॥१३॥ अभिवादितस्तु यो विप्रो नाशिषं कुरुते यदि। श्मशाने जायते वृक्षो गृध्रकङ्कसमावृतः ॥१४॥ इति ॥ नखलु चत्वारो वर्णा*एव जातयइति नियमः * समानप्रसवा हि जातिः*समानःप्रसवात्मिका*जन्मत्वसमानप्रसवात्मकम् ॥ १५ ॥ ननु कथं वर्णो जातिर्भवति* शुक्लादयो वर्णा ब्राह्मणादयः*समानप्रसवात्मकः*कारणसमवायो जातिः ॥ १६ ॥ सता ब्राह्मणादयो वर्णाः*शुक्लादयो न रूपभेदाः*किन्तर्हि ब्राह्मणः सत्त्व*गुणप्राय त्वेन*शुक्ल*वर्ण निर्मलत्वाच्छुक्ल उक्तः ॥१७॥ रजोगुणप्रायत्वात्क्षत्रियो रक्त*इवेति रक्तो वर्णउक्तो * वैश्यस्त्रिगुणप्रायत्वात्*पीतइवेति पीतः ॥१८॥ तमोगुणप्रायत्वाच्छूद्रः कृष्णइ*वेति कृष्णा वर्ण उक्तः*इत्थं इत्युपसङ्ग्रहम् ॥१९॥ यमसौ ब्रह्मा ब्राह्मणं*वर्णं स्वमुखान्निरवर्त्तयत्तं*गायत्र्या छन्दसा सृष्ट्वा*द्विधाऽपाटयदथ ॥२०॥ तस्यार्द्धेन पतिं निर्ममे तस्य च* पत्नीमपरार्द्धेन*यं बाहुभ्यां क्षत्रियं वर्णमसृज*त्तं त्रिष्टुभा छन्दसाऽसृजत् ॥२१॥ सृष्ट्वा च तं द्विधापाटयत्तस्य चा*र्द्धेन पतिं समसृज*दर्द्धेन तयोः पत्नीं च ॥२२॥ यमूरुभ्यां वैश्यं वर्ण*मसृजत्तं जगत्या छन्दसाऽसृजत्*द्विधा चापाटयत्तस्या*र्द्धेन पतिं*मर्द्धेन तं चांपत्नीञ्च ॥२३॥ पद्भ्यां यं शूद्रं वर्णमसृजत्तं*न केनापि च्छन्दसा न * चापाटयत्तस्मादन्यः स्वाशयः शूद्रः ॥२४॥ छन्दसा चांशगं उक्तो वशिष्ठेन*स्वसंहितायां तद्यथा ॥२५॥ **गायत्र्या छन्दसा ब्राह्मणमसृज* त्रिष्टुभा राजन्यं जगत्या वैश्यं * न केनचिच्छन्दसा शूद्र * मित्यसंस्कार्यो विज्ञायते ॥२६॥ अतएव दशमाध्याये वक्ष्यते *ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ इति ॥२७॥** एषां त्रयाणां द्विजानां*पाटनमुक्तं वशिष्ठेन*स्वसंहितायां तद्यथा २७ **पाटितोयं द्विजः पूर्व्वमेकदेहः स्वयम्भुवा। पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति श्रुतिः ॥२८॥ यावन्न विन्दते जायां तावदर्द्धो भवेत् पुमान्। नार्द्धं प्रजायते पूर्णः प्रजायेतेति च श्रुतिः ॥२९॥** पतिपत्न्योः सन्तानन्तु*विवाहमन्त्रैर्भवति*विप्रक्षत्रियवैश्यानाम ॥२९ ।*॥३१॥ सृष्ट्यसर्गं स्थूलं*सर्गो यथा पूर्व्वं च* स्यादतजर्द्धं उच्यते ।

**द्विधाकृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥ ३२ ॥**

द्विधाकृत्वेत्येवमादि ॥ १ ॥ ३२ ॥ स प्रभुर्नारायणो ब्रह्मा स्वदेहं * द्विधाकृत्वार्द्धेन पुरुषोऽभव*दर्द्धेन नारी चाभवत् ॥ १ ॥ ये ते सूक्ष्मशरीरिण*स्तेषामेकं मिथुनधर्म्मिणस्तस्यां* सार्द्धाङ्गभूतायां नार्य्यां*विराजं स्थूलपुरुषमसृजत ॥ २ ॥ * ॥ ३२ ॥ * ॥

**तपस्तप्त्वाऽसृजद्यन्तु स स्वयं पुरुषो विराट्। तं मां वित्तास्य सर्व्वस्य स्रष्टारं द्विजसत्तमाः ३३**

तपइत्यादि ॥ ३३ ॥ स विराट् पुरुषः स्वयं तपस्तप्त्वा*यमसृजत्तं मां वित्त ॥ १ ॥ ३३ ॥

**अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्। पतीन् प्रजानामसृजं महर्षीनादितो दश ॥३४**

अहमित्यादि ॥ ३४ ॥ प्रजाः स्रष्टुमिच्छन्नह*मादितः प्रजानां पतीन्* दशमहर्षीनसृजम ॥ ३४ ॥ तान्यथा-पूर्व्वमसृजत्तदाह*मरीचिमित्यादि श्लोकेन ॥ १ ॥ ३५ ॥

**मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च ॥३५ ॥**

वक्ष्यामि ॥ १ ॥ * ॥ ४२ ॥ * ॥ अथानिक्रमयोगस्याभिधास्यामि ॥ १ ॥ * ॥ ४२ ॥ यथेदानीं चतुर्विधा * योनयः कर्म्मणो रीरिणामुत्पत्तौ * तासु यस्यां योनौ ये जायन्ते तदाह ॥ १ ॥

**पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ ४३ ॥**

पशव इत्यादि ॥४३॥ पशवो ग्राम्या गवादयः * साधारणो गजावीनां * मृगा आरण्या इति पृथगुक्तं ॥१॥ व्याला दुष्टस्वभावाः उभयतोदत इत्यूर्ध्वाधोदन्तान्वयो याति * उभयतोदतो वक्रीमौ दन्ता यस्य स्पन्द इति ॥ २ ॥ जघिष्ठस्वभाव स्कन्द शिवाकुला * जतुदन्ताश्च दच्छव्दो * भल्ल इत्यपरादयो हि * पृथक्शब्दादित्याहुरेके ॥ ३ ॥ उभयतोद इत्यस्य नैव * रक्षःपिशाचमनुष्याणां प्राप्तौ * स्पष्टार्थं पुनर्वचनं कृतं ॥ ४ ॥ जरायुजा इति जरायुर्गर्भ * विशेषोऽयं नाम तः सन् * गर्भ शिशुर्वर्त्तते ॥ ५ ॥ * ॥ ४३ ॥

**अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः । यानि चैवम्प्रकाराणि स्थलजान्यौदकानि च ४४**

अण्डजा इत्यादि ॥४४ आदावन्तर्गर्भे भवति ततोऽण्डात् * पुनर्जायन्त इत्यण्डजाः * पक्षिण इत्यादयः ॥१॥*॥४४॥

**स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् । ऊष्मणश्चोपजायन्ते यच्चान्यत्किञ्चिदीदृशम् ॥ ४५ ॥**

स्वेदजमित्यादि ॥ ४५ ॥ स्विद्यतेऽनेनेति स्वेद * ऊष्मा तदिच्छन्तीति * ऊष्मणश्चोपजायन्त इति * नपार्थिवद्रव्याणां तापेन क्लेदः ॥ १ ॥ * ॥ ४५ ॥ * ॥

**उद्भिज्जाः स्थावराः सर्व्वे बीजकाण्डप्ररोहिणः । ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ४६**

उद्भिज्जा इत्यादि ॥ ४६ ॥ जायमानो यद्भूमिं भिनत्ति सा खलु उद्भिद् योनिस्तस्यां ये जायन्ते त उद्भिज्जास्ते चतुर्विधास्तथा निर्द्दिश्यात् ॥१॥ बीजकाण्डप्ररोहिण इति * बीजप्ररोहिणः काण्ड * प्ररोहिणश्च भवन्ति ॥ २ ॥ चातुर्विध्यं तेषां क्रमाद्दर्शयति * ओषध्य इत्यादि तेहि * चतुर्विधा ओषधिवनस्पति * वृक्षवीरुद्भेदादिति ॥३॥ सर्व्वा ओषधयः फलपाकान्ता इति * यासां फलपाकेन नाशस्ता वहु * पुष्पफलोपगा ओषध्यो याः ॥ ४ ॥ * ॥ ४६ ॥ * ॥

**अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७**

**गुच्छगुल्मन्तु विविधं तथैव तृणजातयः । बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८ ॥**

अपुष्पा इत्यादि ॥ ४७ ॥ य उद्भिज्जा अपुष्पाः फलवन्तस्ते * वनस्पतयो वटादयो * ये चोद्भिज्जाः पुष्पिणश्च * फलिनश्च ते वृक्षा वा वनस्पताख्या ॥ १ ॥ * ॥ ४७ ॥ * ॥ ये चोद्भिज्जा गुच्छश्च गुल्मश्चेतस्य * विविधं तथैव विविधा * स्तृणजातयः प्रताना * वल्ल्य एव च बीजकाण्डरुहाः ॥ १ ॥ ते वीरुध इत्युक्ताः स्मृत्यन्तरे * इति चतुर्विधा उद्भिज्जाः ॥ २ ॥ * ॥ ४८ ॥ * ॥

**तमसा बहुरूपेण वेष्टिताः कर्म्महेतुना । अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ४९ ॥**

तमसेत्यादि ॥ ४९ ॥ एते चतुर्विधा उद्भिज्जाः * कर्म्महेतुना लोके कृतं * यदसत्कर्म्म तदेव हेतु * र्यस्य तेन बहु कर्म्मणा ॥१॥ तमसा वेष्टिताः सन्तः * बहिःसंज्ञाहीना अन्तः * संज्ञाः सुखदुःखसमन्विताश्च ॥ २ ॥ * ॥ ४९ ॥ * ॥

**एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः। घोरेऽस्मिन् भूतसंसारे नित्यं सततयायिनि ५०**

एतदन्तादृत्यादि ॥५०॥ ब्रह्मादाद्या एतदन्ता* स्थावरपर्यन्ता निपुणगतयोः मया* नित्यं सततयायिनि* घोरेऽस्मिन्भूतसंसारे समुदाहृताः ॥१॥ तत्र नारायणोऽसौ ब्रह्मा स्वयम्भूः* स्तेन सृष्टास्तत्र मरीचिप्रभृत* हीजमासादाजराय* स्वादिवत् योनिगतयः ॥२॥*॥५०॥

**एवं सर्व्वं स सृष्ट्वेदं मां चाचिन्त्यपराक्रमः। आत्मन्यन्तर्दधे भूयः कालं कालेन पीड़यन्॥ ५१॥**

एवमित्यादि ॥५१॥ एवमुक्तप्रकारेण* सर्व्वमिदं सोऽचिन्त्यपराक्रमो* ब्रह्मा सृष्ट्वा विराजं मां च सृष्ट्वा ॥१॥ द्विपरार्द्धमितं स्वस्थितेः कालं* स्वशरीरमे कालेन पीड़यन्* स्वस्यात्मन्यात्मनोऽन्तर्दधे इति ॥२॥*॥५१॥*॥

**यदा स देवो जागर्त्ति तदेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्व्वं निमीलति॥ ५२॥**

ननु यावत्कालं चरमकालेन* न पीड़यति तावन्तं* कालं स किं करोतीत्यत* आह यदेत्यादि श्लोकान् ॥१॥*॥५२॥ स नारायणो ब्रह्मादेवो यदा* जागर्त्ति तावन्तं कालं* मिदं जगच्चेष्टते संजीवति ॥१॥ यदा शान्तात्मा स्वपिति* तदा सर्व्वमिदं महो* लोकपर्य्यन्तं निमीलति* कल्पान्तप्रलयं याति ॥२॥*॥ ५२॥ कथमित्यत आह तस्मिन्नित्यादि ॥ ५२

**तस्मिन्स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः। स्वकर्म्मभ्यो निवर्त्तन्ते मनश्च ग्लानिमृच्छति॥ ५३॥**

तस्मिन्नारायणे ब्रह्मणि स्वस्थे तु* स्वपति सति शरीरिणः* कर्म्मात्मान इन्द्रियाणि* स्वकर्म्मभ्यो निवर्त्तन्ते* मनश्च ग्लानिमृच्छति ॥१॥ एतस्मिन्काले चतुर्मुखविष्ण्वादयोऽपि स्वपन्तीति* चामरत्वात्ते न लीयन्ते* यत्राऽन्यस्तु लीयन्ते ॥२॥ पुनर्यदा स जागर्त्ति* तदा पुनरिदं जगज्जीवत्सत्* चेष्टते इत्यपुनः पुनर्भवति ॥३॥ ५३॥ ततः कथमन्तर्धातीत्यत* आह युगपदित्यादि ॥१॥*॥५४॥*॥

**युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि। तदायं सर्व्वभूतात्मा सुखं स्वपिति निर्वृतः॥ ५४॥**

यदा सर्व्वेषां शरीरिणां स्थूल* शरीरिणामात्मानस्तु* तस्मिन्नारायणे महात्मनि सर्व्वे* युगपत्प्रलीयन्ते ॥१॥ तदायं सर्व्वभूतात्मा* नारायणो ब्रह्मा स्वस्थः* सर्व्वांश्च नरम्य स्थित्वा* निर्वृतः सन्सुखं स्वपि* तीति सुप्तो भवति ॥२॥५४॥

**तमोऽयन्तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः। न च स्वं कुरुते कर्म्म तदोत्क्रामति मूर्त्तितः॥५५॥**

तमोऽयमित्यादि ॥ ५५॥ अयं चतुर्म्मुखो ब्रह्मा* नारायणोऽयमादित्य* स्तमः समाश्रित्य सेन्द्रिय एव* चिरं निर्व्वतिस्वं कर्म्म न कुरुते ॥१॥ ततोऽनन्तरं मूर्त्तित* उत्क्रामतीय एवावात्मात्मा* व्याकृतमिदं शरीरं भवात् ॥२॥*॥५५॥

**यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च। समाविशति संसृष्टस्तदा मूर्त्तिं विमुञ्चति॥५६॥**

यदाणुमात्रिकइत्यादि ॥ ५६॥ अयमित्यनुवर्त्तते* यदायं नारायणो ब्रह्मा* यत्तदव्यक्ताख्यात्मा* महदादीनि तत्त्वानि* समाविशत्यामं शरीरी ब्रह्माऽभवत् ॥१॥ तदव्यक्तात्मकाणुमात्रिको भूत्वा* स्थास्नु चरिष्णु च बीजं*

स्थावरजङ्गमानांस्थ्म * शरीरात्प्रविश्य मा विक्रम ॥ २ ॥ निखिलमवाप्ताखण्डमात्मानं समा* विमृतितैः सर्व्वं यस् सृष्टीयदा*भवतितदामूर्त्तिमिमां उज्झति ॥ ३ ॥ विमयाचैतदाकूरशरीरं *तल्लोकस्थावाप्तंप्रविशन्तव * स्तीयतेतदा पृथिव्यादीनिव * तत्त्वानिस्वस्व प्रकृतौलीयन्ते ॥ ४ ॥ तदात्वेकर्मे व्यवाप्तं सम्पद्यते *. तद्वाप्तस्थानांतयाणां गुणानां*तमोरजसिलीयते * रजःसत्त्वे ततएकीस्यात् ॥ ५ ॥ एकीभूतं तत्त्रिगुणं *प्रधानं नामत्तेतस्मात्*कालाद्य- प्रथगस्तितै*एवं त्रयाणां यार्थक्यो*प्राप्तानामयमहाप्रलयोज्ञेयः ॥ ६ ॥ *॥५६ ॥

एवं जागरस्वप्नाभ्यामिदंसर्व्वं चराचरम्। सजीवयतिचाजस्रं प्रमापयतिचाव्ययः ॥ ५७ ॥

एवमित्यादि ॥५७। सव्यय एवमुक्तप्रकारेण*जागरेणसर्व्वमिदं *चराचरं जीवयति*स्वप्नेनप्रमापयति*येनैव- मजस्रं स्यात् ॥ १ ॥ तथाचपुनःपुनःकल्पोभवति*बहूनांकल्पानामन्ते*सचस्थास्नुचरिष्णुवीजमविनाश* मर्त्तिमेतां विसृजति ॥ २ ॥ * ॥ ५७ ॥ * ॥

इदंशास्त्रन्तु कृत्वासौमामेवस्वयमादितः। विधिवद्ग्राहयामास मरीच्यादींस्त्वहंमुनीन् ॥५८॥

इदमित्यादि ॥ ५८ ॥ स्पष्टार्थःश्लोकोऽयं ॥ ५८ ॥

एतद्वोऽयंभृगुःशास्त्रं श्रावयिष्यत्यशेषतः। एतद्धिमत्तोऽधिजगे सर्व्वमेषोऽखिलंमुनिः॥५९

एतद्वइत्यादि ॥ ५९ ॥ अं महर्षयवोयुष्मा* नयंभृगुरेतच्छास्त्र* मशेषतःश्रावयिष्यति ॥ १ ॥ कस्मादित्यत आह एतदित्यादि * हियस्मादेषभृगुर्मुनि * रेतन्मदं ब्रह्मणाप्रोक्तंधर्म्मसम * सर्व्वं शास्त्रं मत्तोऽखिलमधि- जगे ॥ २ ॥ * ॥ ५९ ॥

ततस्तथासतेनोक्तो महर्षिर्मनुनाभृगुः। तानब्रवीदृषीन्सर्व्वान्प्रीतात्माश्रूयतामिति॥६०

ततइत्यादि ॥ ६० ॥ ततोऽनन्तरन्तुसमहर्षिर्भृगु * स्तेनस्वायम्भुवेन मनुनोक्तःप्री * तात्मातानृषीन्सर्व्वा- ञ्श्रूयतामित्यब्रवीत् ॥ १ ॥ * ॥ ६० ॥ अथभृगुस्वायम्भुवादिमन्वन्तरकालानुक्रमं ज्ञापयितुं स्वायम्भुवेत्यादि ॥ १ ॥ ६१ ॥

स्वायम्भुवस्यास्यमनोःषड्वंश्यामनवोऽपरे। सृष्टवन्तःप्रजाःस्वाःस्वामहात्मानोमहौजसः॥६१

अस्यस्वायम्भुवस्यमनोरन्तरे *प्रथमसर्गेप्रथम*कल्पेयासृष्टिःसामनुनाप्रोक्ता ॥१॥ ततःप्रभृतयश्चबहवःकल्पा*अती- ताःसाम्प्रतिकेऽस्मिन्*श्वेतवराहकल्पेप्र*वर्त्तमानेयत्तदुच्यते ॥२॥ अस्यस्वायम्भुवस्यमनोरपरे*तद्वंश्याःसदृशप्रभावाः षड्*मनवःक्रमेणस्वाःस्वाः*प्रजाःपुत्रादिसन्ततीः*स्वस्वान्तरेसृष्टवन्तः ॥ २ ॥ * ॥ ६१ ॥ तेषड्मनवःकेकिंवंश्या स्तेतात*आहस्वारोचिषइत्यादि ॥ १ ॥ * ॥ ६२ ॥

स्वारोचिषश्चौत्तमिश्च तामसोरैवतस्तथा। चाक्षुषश्चमहातेजाविवस्वत्सुतएवच ॥ ६२ ॥

महातेजा इतिप्रत्येकंयोज्यं * यद्यदंशप्रयोयस्त * न्मार्कण्डेयपुराणे * विस्तरेणरेणशातव्यं * तत्सं- ग्रहेणोच्यते ॥ १ ॥ अरुणास्पदनगरे * वरुणातटेकश्चिद्ब्राह्मणोऽवात्सीत * सहिमालयोपरि कथञ्चिद्- गात् ॥ २ ॥ तत्रतंस्त्रीमौलियां * वरूथिनीनामाप्सरा * सा ब्राह्मणसक्तचित्ताबभूव ॥ ... ब्राह्मणस्तां-

प्रत्याख्याय * स्वभवनमागत्य सा * दुःखितचित्ताऽवर्त्तत ॥ ४ ॥ तत्प्रभावात्तस्यामासक्तचित्तः कलि * नाम गन्धर्व्वस्तया प्राक्प्रत्याख्यात* स्तं ब्राह्मणमूर्त्तिमास्थाय तामुपागात् ॥ ५ ॥ ततो जातः पुत्रः स्वरोचिर्नाम भूत्* स्वरोचिषो भागीतः स्वात्* सएकदा क्रिमपि च* वनं विहर्त्तुं जगाम ॥ ६ ॥ तत्र देवैः प्रार्थितात* इनदेवता च गौभि* स्वाग-तां तामुपागात् ॥ ७ ॥ ततो जातः पुत्रोऽद्रतिमान्नाम* स्वारोचिषो मनुरभूत् ॥ ८ ॥ * ॥ १ ॥ उत्तानपादस्य पुत्र* उत्तमो नाम तस्य च* जायावहुलानामवाभ्रवासीत् ॥ १ ॥ सा तस्याः सखा नागराजकन्यायां * वरेणोत्तमात् पुत्र मजनयत्* स औत्तमिर्नाम मनुः ॥ २ ॥ * ॥ २ ॥ सुराष्ट्रो नाम राजासीत् * सविमर्द्दाख्येन राज्ञा * पराजितो राज्याद्भ्रष्टो वनमगात् ॥ १ ॥ तत्र प्राक्मृता स्वजाया * स्वलूत्पलावती नाम* मृगरूपमप्यद्भाग्या * प्रापात्मृगी च भूव ॥ २ ॥ सा तद्वनमागतं तं *राजानं रमयाञ्चक्रे तमपि*ततो जातः पुत्रस्तामसो नाम मनुरभूत् ॥ ३ ॥ * ॥ ३ ॥ स्वायम्भुववंशे जातो * दुर्गमो नाम राजासः * स्वजायायां रेवत्यां * पुत्रं जनयामास स* रैवतो नाम मनुरभूत् ॥ १ ॥ * ॥ ४ ॥ ब्रह्मणश्चक्षुषो जातः *पूर्व्वं यः स तु चाक्षुषो * नाम्ना विख्यातोऽभवत् ॥ १ ॥ स च तत्पुनरनन्तो * नाम चर्य्यायां तस्य-पत्न्यां *गिरिभद्रायां जातः पुत्र*श्चाक्षुषो नाम मनुरभूत् ॥ २ ॥ * ॥ ५ ॥ सूर्य्यात् संज्ञायां जायायां*जातः प्रथमः पुत्रो यः* स वैवस्वतो नाम मनुः ॥ १ ॥ * ॥ ६ ॥ * ॥ ६२ ॥

**स्वायम्भुवाद्याः सप्तैते मनवो भूरितेजसः। स्वे स्वेऽन्तरे सर्व्वमिदमुत्पाद्यापुश्चराचरम् ॥६३॥**

स्वायम्भुवाद्या इत्यादि ॥ ६३ ॥ एते स्वायम्भुवाद्याः सप्त* भूरितेजसो मनवः* स्वे स्वेऽन्तरे सर्व्वमिदं *चराचरं किञ्चित्स्वयं* किञ्चित्प्रजापतिभिश्चोत्पाद्यापुः ॥ १ ॥ * ॥ ६३ ॥ ननु यो ब्रह्मा जागर * स्वप्नाभ्यां यदिदं सर्व्वं * जीवयति प्रमापयति* तत् कतिकालान् जागर्त्ति* कतिकालान् स्वपितीत्यत आह ॥ १ ॥ * ॥

**निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रन्तु तावतः ॥६४॥**

निमेषा इत्यादि ॥ ६४ ॥ अक्ष्णोर्निमेषा दश चाष्टौ चेत्यष्टादश निमेषकालः काष्ठा भवति * ताः काष्ठास्त्रिंशत्तु कला ॥ १ ॥ त्रिंशत्कला मुहूर्त्तः स्यात्* तावता मुहूर्त्तेनेति* त्रिंशता मुहूर्त्तैरहो*रात्रस्तु नृणां भवति ॥ २ ॥ ६४ ॥ नन्वकोऽस्य विभाजकः * किं सूर्य्योऽथवा चन्द्रोऽथ * वोभयोऽन्यो वा कोपीत्य*त आह रात्र्यहनी इत्यादि ॥१॥*॥६५॥

**रात्र्यहनी विभजते सूर्य्यो मानुषदैविके। रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः ॥६५॥**

मानुषदैविके *इति दैवत्वे पि च* पितृणां पृथगुच्यते ॥ १ ॥ मानुषाणां देवानाञ्च* रात्र्यहनी द्वे सौरे * सूर्य्यो वि-भजते ॥ १ ॥ तत्र रात्रिर्भूतानां मानुषीरात्रि * र्मनुष्याणां स्वप्नाय दैवी रात्रि*र्देवानां स्वप्नायाहस्तु *कर्म्मणां चेष्टायै प्रायः ॥ २ ॥ * ॥ ६५ ॥

**पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः। कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी ॥६६॥**

अथ मानुषाणां रात्र्यहनी त्रिंश*न्मुहूर्त्तादि विक्रं तत * द्विधा प्रोच्येते पित्र्ये इत्यादिभ्याम् ॥ १ ॥ ६६ ॥ पितॄणां रात्र्यहनी *चान्द्रो मासोऽभ्याख्यातान्न* सौर इति ज्ञापयति* प्रविभागस्त्वित्यादि ॥ १ ॥ पित्र्ययो रात्र्यह्नोः प्रविभागस्तु *पक्षयोः कृष्णशुक्लयोः *कृष्णः पक्षः पितॄणां कर्म्मचेष्टास्वहः *स्वप्नाय शुक्लः शर्व्वरी ॥ २ ॥ ६६ ॥

**दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः। अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम्॥ ६७**

दैवे इत्यादि॥ ६७॥ सौरो वर्षो दैवे रात्र्यहनी स्यातां * तयोः प्रविभागस्तु दैवमहः * उदगयनं दैवी रात्रिः * दक्षिणायनं भवति॥ १॥ *॥ ६७॥

**ब्राह्मस्य तु क्षपाहस्य यत् प्रमाणं समासतः। एकैकशो युगानां च क्रमशस्तन्निबोधत॥ ६८॥**

ब्राह्मस्येत्यादि॥ ६८॥ क्षपा चाहश्च तयोः समाहारस्तु * तस्य ब्राह्मस्याहोरात्रस्य यत्प्रमाणं * युगानामेकैकशश्च यत्प्रमाणं * समासतः क्रमशस्तन्निबोधत॥ १॥ *॥ ६८॥

**चत्वार्याहुः सहस्राणि वर्षाणां तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः॥ ६९**

चत्वार्याहुरित्यादि॥ ६९॥ दैवे इति विभक्तिविपरिणामात् * इहवर्त्तते ते नतु * देवानां वर्षाणां चत्वारि * सहस्राणि कृतं युगं * कालज्ञा विद्वांस आहुः॥ १॥ तस्य कृतयुगस्य तु * सन्ध्या पूर्व्वकल्पस्यान्ते * कलेरन्ते तावच्छती * दैव चतुःशतवर्षं * सन्ध्यांशस्तस्यैव ताया पूर्व्वं * दैवचतुःशतवर्षम्॥ २॥ इति दैववर्षाणामष्टशताधिकं * चतुःसहस्रवर्षं * कृतयुगं भवतीति॥ ३॥ ६९॥

**इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु। एकापायेन वर्त्तन्ते सहस्राणि शतानि च॥ ७०॥**

इतरेष्वित्यादि॥ ७०॥ कृतयुगादितरेषु * त्रेताद्वापरकलिषु * सन्ध्यासन्ध्यांशसहिते * एकापायेन क्रमशः * सहस्राणि शतानि च वर्त्तन्ते॥ १॥ पूर्व्वसन्ध्यासन्ध्यांशोऽन्त्यः * दैववर्षाणां षट्शताधिकानि * त्रिसहस्रवर्षं त्रेतायां सन्ध्या * पूर्व्वं त्रिशतं सन्ध्यांशोऽन्त्यम्॥ २॥ दैववर्षाणां चतुःशताधिकानि * द्विसहस्रं द्वापरस्तः * सन्ध्या द्विशतं पूर्व्वं * सन्ध्यांशोऽन्त्यं च द्विशतं॥ ३॥ दैववर्षाणां द्विशताधिकमेकं * सहस्रं कलियुगं स्यात् * सन्ध्या पूर्व्वं शतवर्षं * सन्ध्यांशोऽन्त्यं शतवर्षम्॥ ४॥ ७०॥ एतच्चतुर्युगमानमेकीकृत्याह यदेतदित्यादि श्लोकमेकं॥ १॥ ७१॥

**यदेतत् परिसङ्ख्यातमादावेव चतुर्युगम्। एतद्द्वादशसाहस्रं देवानां युगमुच्यते॥ ७१॥**

यदेतच्चतुर्युगमादौ * परिसङ्ख्यातमेव * तदेतद्द्वादशसाहस्रं देवानां * वर्षं देवानामेकं युगमुच्यते॥ १॥ *॥ ७१॥

**दैविकानां युगानां तु सहस्रं परिसङ्ख्यया। ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च॥ ७२॥**

दैविकानामित्यादि॥ ७२॥ दैविकानां युगानां परिसङ्ख्यया * सहस्रं युगं नृणां तु * चतुःसहस्रयुगं तद्ब्राह्मं * एकमहर्ज्ञेयं * तत्र ब्रह्मा जागर्त्ति॥ १॥ तस्मिन् जाग्रति सर्व्वमिदं जीवति * चतुर्दशचमन्वन्तराणामस्मिन् काले * भवन्ति चतुर्दश चेन्द्राः॥ २॥ तावती दैवयुगसहस्रमिता * ब्राह्मी रात्रिरेव च स्यात् * तत्र ब्रह्मा स्वपिति॥ ३॥ तस्मिन् स्वप्ते सर्व्वमिदं * प्रलीयते आमहर्लोकात् * कल्पान्तजीविनो जनः * लोके वसन्तो वर्त्तन्ते॥ ४॥ *॥ ७२॥

**तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः। रात्रिं च तावतीमेव तेऽहोरात्रविदो जनाः॥ ७३॥**

तद्वा इत्यादि॥ ७३॥ पूर्व्वोक्त ब्राह्माहोरात्र * कालस्य विस्पष्टार्थमयं श्लोक उक्तः॥ १॥ *॥ ७३॥

**तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते । प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥ ७४ ॥**

तस्येत्यादि ॥ ७४ ॥ तत्र ब्राह्म्यां रात्रौ प्रसुप्तः स ब्रह्मा * तस्य ब्राह्मस्याहर्निशस्यान्तेऽवसाने * प्रतिबुध्यते जागर्त्ति ॥ १ ॥ प्रतिबुद्धश्च प्रलयातीतः स * नारायणो ब्रह्मा सिसृक्षुर्भूतानि * सदसदात्मकं स्वं मनः सृजति ॥ २ ॥ ७४ ॥

**मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥ ७५**

मनः सृष्टिमित्यादि ॥ ७५ ॥ सदसदात्मकतया * सृष्टं मनस्तेन ब्रह्मणा * सिसृक्षया चोद्यमानं * विकुरुते विक्रियमाणात्तस्मात्तु ॥ १ ॥ पूर्वमाकाशं जायते * तस्याकाशस्य गुणं * शब्दं बुधा विदुः ॥ २ ॥ ७५ ॥

**आकाशात्तु विकुर्वाणात् सर्वगन्धवहः शुचिः । बलवान् जायते वायुः स वै स्पर्शगुणो मतः ७६**

आकाशात्त्वित्यादि ॥ ७६ ॥ आकाशात्तु विकुर्वाणात् * स्पर्शगुणः सर्वगन्धवहः शुचिः * बलवान् वायुर्जायते ॥ १ ॥ * ॥ ७६

**वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम् । ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ७७**

वायोरपीत्यादि ॥ ७७ ॥ विकुर्वाणाद्वायोरपि * विरोचिष्णु तमोनुदं * ज्योतिरुत्पद्यते भास्वत् * तज्ज्योती रूपगुणमुच्यते ॥ १ ॥ * ॥ ७७ ॥

**ज्योतिषश्च विकुर्वाणादापो रसगुणाः स्मृताः । अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः ७८**

ज्योतिषश्चेत्यादि ॥ ७८ ॥ तस्माज्ज्योतिषो विकुर्वाणात् * रसगुणा आपो जायन्ते * विकुर्वन्तीभ्यस्ताभ्योऽद्भ्यश्च * गन्धगुणा भूमिर्जायते ॥ १ ॥ इत्येषा द्वितीयकल्पादिषु पञ्च * महाभूतानां ब्रह्मणः * पुनरेषादितः सृष्टिः * इतः परं मनःसृष्टिः ॥ २ ॥ एतत्कथनं कल्पान्ते * तेषां नाशज्ञापनार्थं * ततो नहि प्रयोजनं ॥ ३ ॥ प्रथमकल्पे त्ववात्ता * महामहतोऽहङ्कार * स्तस्मादहङ्कारात् सात्त्विकात्माऽभूत् तत्तु विकारो न प्रकृतिः ॥ ३ ॥ ४ ॥ भूतादिस्तामसादहङ्कारा * दाकाशादीनि महाभूतानि वै * बभूवुरिति तानि तु * न कल्पान्ते विनश्यन्ति ॥ ३ ॥ द्वितीयादिषु कल्पेषु * ब्रह्मा पुनरतिरिक्तानि पञ्च * महाभूतानि कल्पान्ते नश्वराणि * मनसैमानि सृजति ॥ ४ ॥ इतोऽधुनास्मिन् मनः प्रकृति * र्गीतायामुक्ता तद्यथा ॥ ५ ॥ **भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ इति ॥ ६ ॥** यद्यप्यत्र वेदान्ते * मनःशब्देनाहङ्कार * स्ताहाहङ्कारशब्देन तत्कार्यम् * तथाहं मनसो विकार * मध्ये पठितत्वादिति ॥ ७ ॥ एतेनापि व्याख्यानेनाहङ्कारकार्योपाधिका *ऽकृतः स्यात्तस्मात्तदसाधु ज्ञेयम् ॥ ८ ॥ एष पञ्चमहाभूतसर्गस्तु * तैत्तिरीयोपनिषदि * पञ्चकोशानुवाकेषु * प्रोक्तं तत्सूत्रीकारस्तद्दर्शयति ॥ ९ **तस्माद्वा एतस्मादात्मन आकाशः * सम्भूत आकाशाद्वायु * र्वायोरग्निरग्नेरापोऽद्भ्यः * पृथिवी पृथिव्या अन्नं * अन्नात् पुरुष इति ॥ १० ॥** कल्पान्ते सुप्तो योऽसौ ब्रह्मा तस्मादेव * प्रतिबुद्धादेतस्माद् ब्रह्मणः स * त्वात्मनो मनस आकाशः सम्भूतः ॥ ११ ॥ इत्येवं प्रेत्यापरत्वो यस्तोयो योऽसौ * तस्मादेव गर्भाशयमनुप्रविश्य * शुक्रान्तिकं योगं गच्छन्तमेतस्मादात्मनः ॥ ११ ॥ मनःकरणकादाकाशः सम्भूत * इत्येवमादिरूपेण * पुरुषस्य पुनर्भवो * यथा कल्पान्ते पुनः सर्गः ॥ १२ ॥ इतीदं व्याख्यानमविद्वानादित * एवमेवमात्मन आकाशादिसर्गं * व्याचष्टे तदसाधु * शुद्धाकाशान्महदहङ्कारौ ॥ १३ ॥ * ॥ ७८ ॥ ननु मनुनामाधिपतेः * कतिकालान् भवतीत्यत * आहेत्यग्रिमेति ॥ १ ॥ * ॥ ७८ ।

शतवर्षं मर्त्यानां स्यात् ॥ १ ॥ एवं मर्त्यैर्यानि कर्माणि क्रियन्ते * तेषां कर्मणामाशिषः * फलानि लोके कृतयुगं * युगानुरूपं फलन्ति ॥ २ ॥ शरीरिणां प्रभावश्च * शक्तिश्च युगं वै * लोके ऽत्र फलति ॥ ३ ॥ * ॥ ८४ ॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ ८५ ॥

अन्ये इत्यादि ॥ ८५ ॥ न केवलमायुरादेरेव विशेषो युगे * युगे भवतीत्यत आह * हानिः कृतयुग इत्यादि ॥ १ ॥ कृतयुगे ऽन्ये वाचिका धर्माः युग * स्वभावात् प्राणिनां सामर्थ्यात् * त्रेतायां त्वपरे धर्माः * द्वापरे चापरे धर्माः * कलियुगे चान्ये धर्माः ॥ २ ॥ * ॥ ८५ ॥ ते के धर्मा * इत्यत आह * तपः परम् * इत्यादिश्लोकम् ॥ १ ॥ ८६ ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ ८६ ॥

कृतयुगे परं धर्मं तप एव * त्रेतायां परं धर्मं ज्ञानमुच्यते । द्वापरे यज्ञमेव परं धर्मं * माहुः कलौ युगे दानमेकं परं ॥ १ ॥ * ॥ ८६ ॥ ननु सर्व्वस्यैव किमेकविधं * धर्मं कृतादिषु तपः प्रभृतिः * नेत्यवान्तरं पृथगि * त्यत आह सर्व्वस्येत्यादि ॥ १ ॥ * ॥ ८७ ॥

सर्व्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः । मुखबाहूरुपज्जानां पृथक्कर्म्माण्यकल्पयत् ८७

स महाद्युतिर्ब्रह्मा * तु अस्य सर्व्वस्य सर्गस्य * गुप्त्यर्थं रक्षार्थं द्विजानां * ब्राह्मणक्षत्रियवैश्य * शूद्राणां कर्म्माणि पृथगकल्पयत् ॥ १ ॥ ८७ ॥ कस्य कानी * त्यत आह * अध्यापन * मित्यादिकम ॥ १ ॥ ८८ ॥

अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥ ८८ ॥

ब्राह्मणानामिति [illegible] * वर्त्तमानानां ब्राह्मणानां * ब्राह्मणात् स्वस्य पत्नीषु * ब्राह्मणकन्यायां [illegible] * [illegible] कन्यायां ब्राह्मणेषु १ जातानां [illegible] * [illegible] वर्णकमिष * गम्बष्टानां पज्ञानां ॥२॥ परब्राह्मणपत्नीषु * पुनर्भूषु च ब्राह्मणा * ज्जातानां कुण्डगोलक * पौनर्भवानां [illegible] * नाध्यापनादीनि षट् * कर्म्माण्यकल्पयद् ब्रह्मा ॥ २ ॥ * ॥ ८८ ॥

प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिञ्च क्षत्रियस्य समासतः ॥ ८९ ॥

प्रजानामित्यादि ॥ ८९ ॥ क्षत्रियस्येति क्षत्रियात् * स्वस्य पत्नीषु जातस्य * राजन्यमाहिष्याख्यस्य ॥ १ ॥ परक्षत्रियपत्नीषु * पुनर्भूषु च क्षत्रिया * ज्जातस्य कुण्डस्य गोलकस्य पौनर्भवस्य च * [illegible] स्य च प्रजारक्षा * दीनि कर्म्माण्यकल्पयत् ॥ २ ॥ विषयेष्वसक्तिरिति * नृत्यगीतादिषु सततानासक्तिः * समासतः संक्षेपतः ॥ १ ॥ * ॥ ८९ ॥

पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ ९० ॥

पशूनामित्यादि ॥ ९० ॥ वैश्यस्येति वैश्यात् स्वस्य * पत्न्यां वैश्यकन्यायां वै * जातस्य तथा परवैश्यपत्नीषु * जातस्य कुण्डस्य गोलकस्य च ॥ १ ॥ पुनर्भूषु जातस्य पौनर्भवस्य * पशुपालनादीनि सप्त * कर्म्माणि ब्रह्मा ऽकल्पयत् ॥ २ ॥ वणिक्पथं वाणिज्यं * स्थलजलपथेन * क्रयविक्रयकर्म्म * कुसीदं वृद्ध्यर्थप्रयोगः ॥ ३ ॥ * ॥ ९० ॥

एकमेव तु शूद्रस्य प्रभुः कर्म्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ ९१ ॥

एकमित्यादि ॥ ९१ ॥ शूद्रस्येति शूद्रात् स्वस्य * जायायां जातस्य मद्र * शूद्रजायायां जातस्य * पञ्चस्यनीचस्य च * पुनर्भूपुत्रौ नर्भवस्य ॥१॥ एकमेव कर्म्मत्रयाणां वर्णानां * मेघानां ब्राह्मणक्षत्रियवैश्यानां * मत्सरत्वयाशुश्रूषां * प्रभुर्ब्रह्मासमादिशत् ॥ २ ॥ * ॥ ९१ ॥

ऊर्द्ध्वंनाभेर्मेध्यतरःपुरुषःपरिकीर्त्तितः। तस्मान्मेध्यतमंत्वस्य मुखमुक्तंस्वयम्भुवा ॥ ९२॥

ऊर्द्ध्वमित्यादि ॥ ९२ ॥ पुरुषः खलु सर्व्व एव पादमस्तकमध्ये मेध्यो मेध्यतरो मेध्यतमः ॥ १ ॥ तत्रजाततमाम मध्यस्थः इमे मेध्यास्ततऊर्द्ध्वं मध्यस्था नाभेर्मेध्योऽधोभर्ध्व मेध्या * ततः कण्ठादूर्द्ध्वं मेध्यतम इति ॥ २ ॥ तस्माद्-स्यपुरुषस्य * नाभेरूर्द्ध्वं कण्ठान्तान्मेध्यतरा * मेध्यतमं मुखं स्वयं * भुवा नारायणेनोक्तम् ॥ ३ ॥ तेन तत्र जातः शूद्र * त्वमेधाजरुभ्यां जातौ * वैश्यो मेधोवाञ्छभ्यात्तु * जातः क्षत्रियो मेध्यतर * उत्तमाङ्गजो ब्राह्मणो मेध्यतमः ॥ ४ ॥ * ॥ ९२ ॥

उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैवधारणात्। सर्व्वस्यैवास्यसर्गस्यधर्म्मतोब्राह्मणःप्रभुः ॥ ९३

उत्तमाङ्गेत्यादि ॥ ९३ ॥ ब्राह्मणो नारायणस्योत्तमाङ्ग * सर्वोद्भवाज्ज्यैष्ठ्यादग्र * जन्माद् ब्रह्मणो वेदस्य * धारणाद् ब्राह्मणः सर्व्व * स्यैवास्य सर्गस्य प्रभुः ॥ १ ॥ * ॥ ९३ ॥ तस्य ब्राह्मणो धर्म्मतः * प्रभुरित्यत्राह * तं हीत्यादि श्लोकम् ॥ १ ॥ * ॥ ९४ ॥

तंहिस्वयम्भूः स्वादास्यात्तपस्तप्त्वादितोऽसृजत्। हव्यकव्याभिवाह्यायसर्व्वस्यास्यचगुप्तये ॥ ९४ ॥

हि यस्मात्तं ब्राह्मणं स्वयम्भूर्ब्रह्मा * तपस्तप्त्वा स्वादास्यादादितो देवा * कव्याभिवाह्याय सर्व्व * स्यास्य गुप्तये च असृजत् ॥ १ ॥ * ॥ ९४ ॥

यस्यास्येनसदाश्नन्तिहव्यानित्रिदिवौकसः। कव्यानिचैवपितरःकिम्भूतमधिकंततः ॥ ९५ ॥

यस्येत्यादि ॥ ९५ ॥ यस्य ब्राह्मणस्यास्येन * त्रिदिवौकसो हव्यानि * सदाश्नन्ति पितरश्च * कव्यानाश्नन्ति ततो * ऽधिकं किं भूतमस्ति ॥ १ ॥ ९५ ॥ अपरश्च श्रेष्ठत्वे * कारणमेतत् प्रदर्श्यते * भूतानामित्यादिना ॥ १ ॥ ९६ ॥

भूतानांप्राणिनःश्रेष्ठाःप्राणिनांबुद्धिजीविनः। बुद्धिमत्सुनराःश्रेष्ठानरेषुब्राह्मणाःस्मृताः ९६

भूतानां स्थावरजङ्गमानां * चेतनाचेतनानां मध्यात् * प्राणिनश्चेतनाः श्रेष्ठाः * प्राणिनां बुद्धिजीविनः ॥ १ ॥ बुद्धिमत्सु मध्यात् * नरा मनुष्याः श्रेष्ठाः * नरेषु ब्राह्मणाः श्रेष्ठाः स्मृता इति ॥ २ ॥ * ॥ ९६ ॥ तर्हि किं सर्व्व एव ब्राह्मणाः श्रेष्ठा * ब्राह्मणेषु श्रेष्ठो नास्ती * त्यत आह ब्राह्मणेष्विति ॥ १ ॥ ९७ ॥

ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः। कृतबुद्धिषुकर्त्तारःकर्त्तृषुब्रह्मवेदिनः ॥ ९७ ॥

ब्राह्मणेषु मध्ये विद्वांसो निखिल * शास्त्रविदः श्रेष्ठाः स्मृताः * विद्वत्सु ब्राह्मणेषु मध्ये कृत * बुद्धयः श्रेष्ठाः स्मृताः * ॥ १ ॥ कृतबुद्धिषु ब्राह्मणेषु * मध्ये तत्तत्कर्म्मणां * कर्त्तारः श्रेष्ठाः स्मृता * स्तत्तत्कर्म्मणां कर्त्तृषु * मध्ये ब्रह्मवेदिनो ब्राह्मणाः श्रेष्ठाः ॥ २ ॥ * ॥ ९७ ॥

**उत्पत्तिरेव विप्रस्य मूर्त्तिर्धर्म्मस्य शाश्वती। स हि धर्म्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ९८ ॥**

उत्पत्तिरित्यादि ॥ ९८ ॥ एवञ्चेत् विप्रस्योत्पत्तिरेव * धर्म्मस्य शाश्वती मूर्त्तिः * कस्मात् स ब्राह्मणो हि यस्मात् * धर्म्मार्थमुत्पन्न इति ॥ १ ॥ धर्म्मार्थमुत्पन्नत्वे किं * स्यादित्यत आह ब्रह्म * भूयाय कल्पते इति ॥ २ ॥ * ॥ ९८ ॥ अस्तु ब्रह्मविद् ब्राह्मणो * ब्रह्मभूयाय कल्पतां * लोकानां ततः किं भवतीत्यत आह ब्राह्मण इत्यादि ॥ ९९ ॥

**ब्राह्मणो जायमानो हि पृथिव्यामधिजायते। ईश्वरः सर्व्वभूतानां धर्म्मकोषस्य गुप्तये ॥ ९९ ॥**

हि यस्मात् जायमानो * ब्रह्मविद् ब्राह्मणः खलु * पृथिव्यामधीतोऽश्वरो जायते ॥ १ ॥ अधिरीश्वर इति गतिसंज्ञ * स्तेन यस्मादधिकं * यदावेश्वरवचनं * तत्र सप्तमीति पाणिनीयसूत्रम् ॥ २ ॥ एतद्विद्वान् व्याचष्टे * पृथिव्या मधि उपरि * भवतीत्येतदर्थ इति तत्त्व ॥ ३ ॥ ननु कस्मान्नृपित्वे भवतीश्वर * इत्यत आहेश्वर इत्यादिक्रमद्योतं ॥ ४ ॥ सर्व्वभूतानां धर्म्मकोषस्य * गुप्तये रक्षणार्थं स * ब्रह्मविद् ब्राह्मण ईश्वरो * न तु नृपवच्छासनार्थेश्वरः ॥ ५ ॥ * ॥ ९९ ॥

**सर्व्वं स्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीगतम्। श्रैष्ठ्येनाभिजनेनेदं सर्व्वं वै ब्राह्मणोऽर्हति ॥ १०० ॥**

सर्व्वमित्यादि ॥ १०० ॥ धर्म्मकोषपालकत्वे * नेश्वरत्वाद् ब्रह्मविदो * ब्राह्मणस्यैतत् सर्व्वं स्वं स्वीयमेव * यदिदं जगतीगतं किञ्चित् ॥ १ ॥ कथमिदं सर्व्वं तस्य स्वमित्यत * आह श्रैष्ठ्येनेत्यादि ॥ २ ॥ सर्व्वभूतश्रैष्ठ्येनाभिजनेन च सर्व्वमेवेदं * ब्राह्मणोऽर्हतीति ॥ ३ ॥ * ॥ १०० ॥ इत्यत आह।

**स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च। आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ १०१ ॥**

स्वमेवेत्यादि ॥ १०१ ॥ सर्व्वार्हत्वाद् ब्राह्मणः स्वमेव स्वीयमेव सर्व्वमिदं भुङ्क्ते * स्वमेव वस्ते परिधत्ते * स्वञ्च ददाति नान्यस्य ॥१॥ ब्राह्मणस्यानृशंस्यात् कारुण्याद्धीतरे जना * भुञ्जते न तु स्वीयं वस्तु ॥ २ ॥ * ॥ १०१ ॥

**तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्व्वशः। स्वायम्भुवो मनुर्धीमानिदं शास्त्रमकल्पयत् ॥ १०२ ॥**

तस्येत्यादि ॥ १०२ ॥ तस्य ब्राह्मणस्य शेषाणां * क्षत्रियवैश्यशूद्राणां * अनुपूर्व्वशः कर्म्मणां * विवेकार्थं स्वायम्भुवो * मनुरिदं शास्त्रमकल्पयत् ॥ १ ॥ * ॥ १०२ ॥

**विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः। शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित् ॥ १०३ ॥**

विदुषेत्यादि ॥ १०३ ॥ विदुषा पण्डितेनैव * ब्राह्मणेनेदं शास्त्रं प्रयत्नतो * निःसंशयेन यथार्थं * यथा शास्त्रात् शक्यं तथाध्येतव्यं ॥ १ ॥ क्षत्रियेणापि वैश्येन च * नैवं प्रयत्नतः कस्मात् * शिष्येभ्यश्च प्रवक्तव्यं सम्यगिति ॥ २ ॥ ब्राह्मणेनैवेदं शास्त्रं * शिष्येभ्यः सम्यक् प्रवक्तव्यं * नान्येन क्षत्रियेण * वैश्येन वा शिष्येभ्यः * प्रवक्तव्यं स्वयन्त्वध्येतव्यमिति ॥ ३ ॥ * ॥ १०३ ॥

**इदं शास्त्रमधीयानो ब्राह्मणः शंसितव्रतः। मनोवाग्देहजैर्नित्यं कर्म्मदोषैर्न लिप्यते ॥ १०४ ॥**

इदमित्यादि ॥ १०४ ॥ ब्राह्मणः प्रशंसितव्रत * इदं मानवं शास्त्रमधी * यानो मनोवाग्देहकृत * कर्म्मदोषैर्न लिप्यते ॥ १ ॥ * ॥ १०४ ॥

पुनाति पङ्क्तिं वंश्यांश्च सप्त सप्त परावरान् । पृथिवीमपि चैवेमां कृत्स्नामेकोऽपि सोऽर्हति १०५

पुनातीत्यादि ॥ १०५ ॥ पङ्क्तिं पङ्क्तिभोजिब्राह्मणवर्गं वंश्यांश्च * इदं शास्त्रमधीयानो * ब्राह्मणः पुनाति वंश्यांश्च * परान् सप्तावरान् सप्त च पुनाति ॥ १ ॥ इदं शास्त्रमधीयानः * स ब्राह्मण एकोऽपि इमां * कृत्स्नां पृथिवीमप्यर्हति ॥ २ ॥ * १०५

इदं स्वस्त्ययनं श्रेष्ठमिदं बुद्धिविवर्द्धनम् । इदं यशस्यमायुष्यमिदं निःश्रेयसं परम् ॥ १०६ ॥

इदमित्यादि ॥ १०६ ॥ इदं शास्त्रं श्रेष्ठं स्वस्ति * स्वस्त्ययनं मङ्गलप्राप्त्युपायः • निःश्रेयससाधनत्वात् * निःश्रेयसं परं श्रेष्ठं ॥ १ ॥ * ॥ १०६ ॥

अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम् । चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः १०७

अस्मिन्नित्यादि ॥ १०७ ॥ अस्मिन् इह मानवे शास्त्रे * धर्मो निखिलेन वै उक्तः * कर्मणामपि अस्मिन् गुणदोषौ उक्तौ * चतुर्णां वर्णानामपि * शाश्वत आचार उक्तः ॥ १ ॥ * ॥ १०७ ॥

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च । तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥ १०८ ॥

आचार इत्यादि ॥ १०८ ॥ श्रुत्युक्तः स्मार्त एव च आचारः * परमो धर्मो यस्मात् तस्मात् * द्विजः सदा अस्मिन्नाचारे * युक्तः सन् नित्यमात्मवान् भवेत् ॥ १ ॥ * ॥ १०८ ॥

आचाराद्विच्युतो विप्रो न वेदफलमश्नुते । आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत् ॥ १०९

स्पष्टार्थोऽयं श्लोकः ॥ १०९ ॥ * ॥

एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् । सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥ ११० ॥

एवमित्यादि ॥ ११० ॥ मुनय आचारतो धर्मस्य * गतिं दृष्ट्वा सर्वस्य * तपसो मूलमाचारं * परं जगृहुः ॥ १ ॥ * ॥ ११० ॥ अथ अस्मिन् मानवे शास्त्रे * यद्यदभिधेयं तत्तत् * जगतश्चेत्यादिभिः * संदर्शितान्यैरष्टाभिः ॥

जगतश्च समुत्पत्तिं संस्कारविधिमेव च । व्रतचर्योपचारञ्च स्नानस्य च परं विधिम् ॥ १११ ॥ दाराधिगमनं चैव विवाहानाञ्च लक्षणम् । महायज्ञविधानं च श्राद्धकल्पं च शाश्वतम् ॥ ११२ ॥ वृत्तीनां लक्षणं चैव स्नातकस्य व्रतानि च । भक्ष्याभक्ष्यं च शौचं च द्रव्याणां शुद्धिमेव च ॥ ११३ ॥ स्त्रीधर्मयोगं तापस्यं मोक्षं संन्यासमेव च । राज्ञश्च धर्ममखिलं कार्याणां च विनिर्णयम् ॥ ११४ ॥ साक्षिप्रश्नविधानं च धर्मं स्त्रीपुंसयोरपि । विभागधर्मं द्यूतं च कण्टकानां च शोधनम् ॥ ११५ ॥ वैश्यशूद्रोपचारं च सङ्कीर्णानां च सम्भवम् । आपद्धर्मं च वर्णानां प्रायश्चित्तविधिं तथा ॥ ११६ ॥

सर्वं तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा। श्रुतिप्रामाण्यतो विद्वान् स्वधर्मे निविशेत वै ॥ ८ ॥

सर्वन्त्वित्यादि ॥८॥ विद्वानिदन्तु सर्वं समवेक्ष्य*ज्ञानचक्षुषा श्रुतिप्रामाण्यतो*मनुक्तेस्वधर्मे निविशेतैव ॥१॥८ तत्स्वधर्मं निवेशफलमाह*श्रुतिस्मृतीत्यादि ॥१॥*॥९॥

श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः। इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ९

श्रुतिस्मृत्युक्तं धर्ममिह* मानवोऽनुतिष्ठन्निह*लोके कीर्त्तिमवाप्नोति*प्रेत्य चानुत्तमं सुखमवाप्नोति ॥१॥ एतदुक्तं दिशा ॥क्तं*भ्रान्तेः परलोकतां * मोक्षं गच्छतीतियत्तदपाद ॥१॥९॥ ॥ २ ॥ का पुनः श्रुतिः का च स्मृतिरित्यत* आह श्रुतिस्त्वित्यादि ॥१।

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः। ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ १० ॥

श्रुयतेऽस्मादितिश्रुति * वेदो ज्ञेयः स्मृतिस्तु धर्मशास्त्रं * ते द्वे शास्त्रे सर्वार्थेषु वर्त्तते *तस्मादमीमांस्ये स्यातां ॥ २ ॥ हेतुवादेनामीमांस्ये * न विचारयितव्ये * हि यस्मात्ताभ्यां श्रुतिस्मृतिभ्यां धर्मो* निर्बभौ निश्चितः * कारणेन तत्त्वं न ग्रेयम् ॥ ३ ॥ * ॥ १० ॥ *॥

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः। स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ॥ ११ ॥

य इत्यादि ॥ ११ ॥यो द्विजो हेतुशास्त्राश्रयात्*हेतुवादेन ते धर्मस्य* मूले द्वे श्रुतिस्मृती अव* मन्येत स वेदनिन्दकः ॥१॥ वेदनिन्दकत्वान्नास्तिकः*साधुभिः स्वसमाजाद्वहि*ष्कार्यो भवतीति ॥२॥*॥११॥

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् १२

वेद इत्यादि ॥१२॥ तयोरवमाने वेदनिन्दको*यतः ॥ तन्नदाह* वेदः स्मृतिः सदाचारः स्वस्य*चात्मनः प्रियं नानास्य* ॥१। एतच्चतुर्विधं धर्मस्य*साक्षात्प्रत्यक्षं त एव* लक्षणं प्राह तदवमाने *सनास्तिक एव भवति ॥ १ ॥ यतोऽभ्युदयनिःश्रेयससिद्धिः स*धर्म इति कणादेनोक्तं*नातरेणाधर्मं नाभ्यु*दयनिःश्रेयससिद्धिः ॥३॥ दृष्टाभावं यदा हि नास्ति कर्म*नास्ति कर्मफलमिति*।स नास्तिको बहिष्कार्यः ॥ ४ ॥ *॥१२॥ ननु तर्हि केषां धर्मज्ञानं भव*तीत्य तत्राहार्थेत्यादि ॥१३॥

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते। धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ १३ ॥

अर्थकामेषु ये संसक्तानवा * स्तेषां धर्मज्ञानं विधीयते * धर्मं जिज्ञासमानानां * यतः परं प्रमाणं श्रुतिः ॥१॥ वेदानां वेदमिति * हासपुराणं पञ्चमं * तदपरं प्रमाणम ॥ २ ॥ तच्छ्रुत्यर्थस्मरणादपरेषां*स्मृतिश्चापरं प्रमाणं* धर्मप्रवचने भवति ॥३। तत्र नास्तिका यदाङ्गवादुक्तं गौतमेनाक्ष*पादेन न्यायिकीशास्त्रे ॥ ४ ॥ तद्यथा ॥ * ॥

तदप्रामाण्यमनृत * व्याघातपुनरुक्त * दोषेभ्यः पुत्रकामे * ष्टिहवनाभ्यासेषु ॥ ५ ॥ व्याख्यातञ्चैतत्सूत्रं * वात्स्यायनेनतद्यथा * तस्यवेदस्याप्रामाण्य * मनृतदोषात्पुत्रकामेष्ट्यादौ ॥ ६ ॥ अग्निहोत्रहवनादौ * व्याघातदोषादभ्यासे * पुनरुक्तदोषाच्चेति ॥ ७ ॥ तद्यथा। पुत्रकामः पुत्रेष्ट्यायजेतेति * दायात्पुत्रेष्ट्याजिनः * पुत्रजन्मफलंनेच्यते * इतिदृष्टार्थवेदस्यानृतदोषः ॥ ८ ॥ अग्निहोत्रंजुहुयात्स्वर्गकाम * इतादृष्टार्थोपिवेदो * नप्रमाणंभवति * विहितव्याघातादृयथा ॥ ९ ॥ उदितेहोतव्यमनुदिते * होतव्यंसमयाध्युषिते *होतव्यमितिविधाय*विहितञ्चतद्व्याहन्ति ॥१०॥ तद्यथाश्यावोऽस्या*हुतिमभ्यवहरति*यउदितेजुहोति ॥११॥ शबलोऽस्या*हुतिमभ्यव*हरतियोऽनु*दितेजुहोति ॥१२॥ श्यावशबलौचास्याहुति * मभ्यवहरतोयःसमया*ध्युषितेजुहोति ॥१३॥ त्रिःप्रथमामन्वाहत्रिरुत्तमामि*त्यभ्यासेपुनरुक्तस्य*दोषोभवतिपुन* रुक्तञ्चप्रमत्तवाक्यम् ॥१४॥ अथात्रसमाधानमुक्तंगौतमे*नाक्षपादेन तद्यथा ॥१५॥ नकर्म्मकर्तृसाधनवैगुण्या *दभ्युपेताकालभेदेदोष*वचनादनुवादोपपत्तेश्च* ॥१६॥ व्याख्यातञ्चैतत्सूत्रं*वात्स्यायनेनर्षिणा*तद्यथादर्श्यते ॥१७ नानृतदोषःपुत्रकामेष्टौ*कर्म्मकर्तृसाधनवैगुण्या*दिष्टिःसम्भोगश्चकर्म्म * तद्विद्दम्पत्योःकर्त्तारः ॥१८॥ साधनंहविरादातिवकालश्च*त्रयाणामेषांयथोक्तगुणयोगात्*ध्रुवंपुत्रस्यजन्मस्यात्*वैगुण्यात्तुविपर्य्ययः ॥१९॥ नचव्याघातोहवने *अभ्युपेताकालभेदे*दोषवचनादिति ॥२०॥ योऽभ्युपगतंहवन * कालंभिनत्त्यतस्तस्मात्तत्रजुहोति * तत्राभ्युपगतकालभेदेदोष*एषउच्यतेविद्वद्भिः ॥२१॥ अनुदितेहोतव्यमित्येवंजानन् * यउदितेऽर्केजुहोति * श्यावोऽस्याहुतिमभ्यवहरतीति ॥ २२ ॥ उदितेहोतव्यमिति * जानन्योऽनुदितेजुहोति*शबलोऽस्याहुतिमभ्यवहरति॥२३॥ इत्येवमुदितेऽनुदितेहोतव्य*मितिजानन्यःसमयाध्युषितेजुहोतिश्याव*शबलौह्यावेवचास्या*हुतिमभ्यवहरतः॥२४॥१३॥ इत्येवंकालभेदेदोषोभवतु *श्रुतिद्वैधेतुकथंश्रुतिः*परंप्रमाणंभवती*त्यतआहश्रुतीत्यादि॥१४॥

**श्रुतिद्वैधन्तुयत्रस्यात्तत्रधर्म्मावुभौस्मृतौ। उभावपिहितौधर्म्मौसम्यगुक्तौमनीषिभिः ॥१४॥**

यत्रखल्वेकस्मिन्कर्म्मणिश्रुति*द्वैधंवर्त्ततेतत्रोभावेवधर्म्मौ*स्मृतौकस्मादित्यतआहोभावपीत्यादाद्यं॥१॥०॥१४॥ ननुक्वश्रुतिद्वैध*मित्यतस्तदुदाहरणंदर्शयितुमाहोदित इत्यादि ॥ १ ॥ * ॥ १५ ॥

**उदितेऽनुदितेचैवसमयाध्युषितेतथा। सर्व्वथावर्त्ततेयज्ञइतीयंवैदिकीश्रुतिः ॥ १५ ॥**

उदितेहोतव्य*मनुदितेहोतव्य *समयाध्युषिते *होतव्यमितितु॥ १ ॥ सर्व्वथायज्ञोवर्त्तते *वैदिकीयंतिधा श्रुतिरस्ति*तत्रोभावेवधर्म्माविताज्ञबुधाः ॥ २ ॥ अभिधायकाभिधेय* नियमनियोगाद्वै* समयउच्यते ॥ ३ ॥ समयेनाध्युषितःकालोयस्य * कर्म्मणोयःकालउक्तः ॥ ४ ॥ * ॥ १५ ॥ एतच्छास्त्राधिकारिण * माहनिषेकादौ त्यादि ॥ १ ॥ * ॥ १६ ॥

**निषेकादिश्मशानान्तोमन्त्रैर्यस्योदितोविधिः। तस्यशास्त्रेऽधिकारोऽस्मिन्ज्ञेयोनान्यस्य कस्यचित् ॥ १६ ॥**

निषेकोगर्भाधानं*श्मशानंमरणंविधिः*क्रियातिविधिरुदितः*मन्त्रैरित्यनेनशूद्र* धर्म्माणांनाधिकार इतिज्ञापितम ॥ १ ॥ ० ॥ १६ ॥ नन्वाचारउक्तःसाधूनांधर्म्मस्य*मूलंतेचसाधवःके*इत्यतआहसरस्व*तीत्यादिकश्लोकम्॥१७

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते ॥ १७ ॥

देवनद्योः सरस्वती * दृषद्वत्योर्मध्ये यं देशमनुदेशं * देवनिर्म्मितं ब्रह्मावर्त्तं नाम्ना बुधाः प्रचक्षते ॥१॥०॥१७

तस्मिन्देशे य आचारः पारम्पर्य्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते १८

तस्मिन्नित्यादि ॥ १८॥ तस्मिन्ब्रह्मावर्त्ते देशे * पारम्पर्य्यक्रमागतः कृतयुगादिषु वर्णानां चतुर्णां * सान्तरालानां द्विद्विवर्ण * जातानाञ्च वर्णानाम् ॥ १ ॥ परम्परया क्रमेणा * गतो य आचारः सर्वे * तेषां सदाचार उच्यते ॥ २॥०॥१८ अपरञ्चाह कुरुक्षेत्र * मित्यादिकं * श्लोकद्वयं ॥ १ ॥ ० ॥ १२ ॥

कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः ॥ १९ ॥

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन्पृथिव्यां सर्व्वमानवाः ॥२०॥

कुरुक्षेत्रञ्चेकोदेशो * मत्स्याश्च वदेशाः * पूर्व्वमत्स्य उत्तरमत्स्यो दक्षिण * मत्स्य पश्चिममत्स्यः ॥ १ ॥ एवं बहवः पञ्चालाः * शूरसेनाश्च मथुरादय * एष सर्व्वो ब्रह्मर्षिदेशो * ब्रह्मावर्त्ताद्देशादनन्तरो देशः ॥ १९ ॥ * । एतदित्यादि । २० । एतत्कुरुक्षेत्रादिदेश * प्रसूतस्याग्रजन्मनो * ब्राह्मणस्य सकाशात् * पृथिव्यां सर्व्वे मानवाः * स्वं स्वं चरित्रमाचरणं शिक्षेरन् ॥ ० ॥ * ॥ २० ॥

हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः ॥ २१ ॥

हिमवदित्यादि । २ । हिमवद्विन्ध्ययोर्मध्ये यः * देशजातं विनशनात् * कुरुक्षेत्रे यत्सर * स्वत्या अन्तर्धानं ॥ २ तस्मात्पूर्व्वं प्रयागात्पश्चिमं चरत् * स मध्यदेशः प्रकीर्त्तितः । ४ । ० ॥ * ॥ २१ ॥ * ॥

आसमुद्रात्तु वै पूर्व्वादासमुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः २२

आसमुद्रादित्यादि ॥२२॥ पूर्व्वात्समुद्रादापर्य्यन्तं * पश्चिमात्समुद्रादापर्य्यन्तं * तयोर्हिमवद्विन्ध्ययोर्गिर्य्योश्च * मध्यमार्य्यावर्त्तं विदुः ॥ ० ॥ ० ॥ २२ ॥ ० ॥

कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥ २३ ॥

कृष्णसारइत्यादि ॥ २३ ॥ यत्र देशे कृष्णसारो * मृगः स्वभावाच्चरति स यज्ञियो देशो ज्ञेय * स्ततः परो म्लेच्छदेशोऽनयज्ञियः ॥ ० ॥ ० ॥ २३ ॥

एतान्द्विजातयो देशान्संश्रयेरन्प्रयत्नतः। शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्षितः २४॥

एतानित्यादि ॥२४॥ द्विजातयो ब्राह्मणादय एतान् * पूर्व्वोक्तान्देशान्प्रयत्नतः * संश्रयेरन् वृत्तिकर्षितोऽपि नान्यान् * देशान् संश्रयेरन्निति ॥ १ ॥ शूद्रस्तु वृत्तिकर्षितो * यस्मिन्कस्मिंश्चिद्देशेनि * वसेत्तत्र न दोषोऽस्ति ॥ २४ ॥ ० ॥

एषा धर्म्मस्य वो योनिः समासेन प्रकीर्त्तिता। सम्भवश्चास्य सर्व्वस्य वर्ण धर्म्मान्निबोधत ॥२५॥

एषेत्यादि ॥२॥२४॥०॥ एषा धर्म्मस्य योनिरुत्पत्तिदेशो * वो युष्मान् समासेन प्र * कीर्त्तिता सम्भवश्च जगत्सर्गो * मया

समासेनकीर्त्तितः ॥ १ ॥ अथास्यसर्व्वस्यवर्णधर्म्मान्मन्त्री*निरीक्षतवर्णानांधर्म्माःसंस्काराः* आश्रमग्रहणादयोऽत्र * यावन्तोवक्ष्यन्तेतान् ॥३॥ ० ॥ चरकेणोक्तंहिकर्त्तुरभिप्रायाः पृथग्विधाः। अतश्चप्रकृतिंवुद्ध्वादेश कालान्तराणिच। तन्त्रकर्त्तुरभिप्रायानुपायांश्चार्थमादिशेत्। इति। इत्यतेत्वस्मिंस्तन्त्रेऽत*ऊर्द्ध्वं वक्ष्यतेप्रथमं*निषेकादिःसंस्कारोद्विजवर्णानाम् ॥ ४ ॥ द्वितीयोभिक्षाविधिस्तृतीयःकर्म्मयोगोब्रह्मचारिणां* ततोऽन्य- च्चाश्रमग्रहणं*विवाहस्तदाश्रमकर्म्म ॥ ५ ॥ तस्माद्विष्णुपुराणोक्त*क्रमोऽत्रतन्त्रे नश्चेयः*सचक्रमस्तस्मिन्पुराणेऽभि धेयस्य ॥ ६ ॥ तद्यथा ॥ वर्णधर्म्मःस्मृतस्त्वेकआश्रमाणामतःपरम्। वर्णाश्रमस्तृतीयःस्याद्गौणो नैमित्तिकस्तथा। इति। अत्रैषांलक्षणमुक्तं। वर्णत्वमेकमाश्रित्ययोधर्म्मःसंप्रवर्त्तते। वर्णधर्म्मः सउक्तस्तु यथोपनयनंनृप। यस्त्वाश्रमंसमाश्रित्ययोऽधिकारःप्रवर्त्तते। सखल्वाश्रमधर्म्मस्तु भि- क्षादण्डादिकोयथा। वर्णत्वमाश्रमत्वञ्चयोऽधिकृत्यप्रवर्त्तते। सवर्णाश्रमधर्म्मस्तु मौञ्जीयद्या मेखलायथा। योगुणेनप्रवर्त्तेतगुणधर्म्मःसउच्यते। क्षत्रियस्ययथाभोक्तुंप्रजानांपरिपालनम्। निमित्तमेकमाश्रित्ययोधर्म्मःसंप्रवर्त्तते। नैमित्तिकःसविज्ञेयःप्रायश्चित्तविधिर्यथा। इति प्रमादोत्नैवंविद्वानिहवर्ण* धर्म्मशब्दोवर्णधर्म्माश्रमधर्म्मा* दिषुपलक्षकइतिव्याचष्टे ॥ १ ॥ अस्मिंस्तन्त्रेभिधेयस्य * क्रमःप्रथमाध्यायेऽक्तो*जगतश्चसमुत्पत्तिं* संस्कारविधिमित्यादि ॥ २ ॥ ० ॥ २५ ॥ ०॥ जगदुत्पत्त्युपदेशा*दनन्त रंसंस्कारविधिमाह*वैदिकैरित्यादिभि ॥ १ ॥ ० ॥ २६ ॥

**वैदिकैःकर्म्मभिःपुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्यःशरीरसंस्कारःपावनःप्रेत्यचेहच२६**

द्विजन्मनामितिकाल * सामान्येनमनिजुधानात् * भविष्यद्भवद्भूतानां * द्विजन्मवतांब्राह्मण * क्षत्रियवै श्यानांशरीरसंस्कारः। ॥ २ ॥ भविष्यद्भवद्भूतशरीरस्य * संस्कारइहप्रेत्यच * पावनःपवित्रकरो * निषेकादिः पुण्यैरेव * वैदिकैःकर्म्मभिःकार्यः ॥ ३ ॥ वैदिकैरितियथोक्त * स्वरवर्णाभ्यामुच्चरितमन्त्रेण * यथोक्ता नुष्ठानेनच * व्यापारैर्वैदिकैर्द्विरेवकर्त्तव्यः ॥ ४ ॥ नत्वयथोक्तस्वरवर्णाभ्यांदुष्टै * र्मन्त्रैर्नैवायथोक्तानुष्ठान व्याति* क्रमेणनिषेकादिःकर्त्तव्यइति ॥ ५ ॥ स्वरवर्णाभ्यांदुष्टोहि * मन्त्रोनैवस्वार्थमाह * तस्मादमन्त्रोभवति * नचतैः क्रियासिद्ध्यति* महाभाष्येपतञ्जलिनाप्युक्तञ्च ॥ ६ ॥ दुष्टःशब्दःस्वरतोवर्णतोवामिथ्याप्रयुक्तोनतमर्थमाह। सवाग् वज्रोयजमानंहिनस्तियथेन्द्रशत्रुःस्वरतोऽपराधात्इति॥ ७ ॥ संस्कारस्यसामान्यलक्षणमुक्तं*चरकेणाकारणञ्च*तद्यथा त्रप्रदर्श्यते ॥ ८ ॥ परिमाणंपुनर्मानंसंस्कारःकरणंमतम् ॥ करणंपुनःस्वाभाविकद्रव्याणा* मभिसंस्कारःसंस्कारो* हिगुणाधानमुच्यते ॥ ९ ॥ तेगुणास्तोयाग्निसन्निकर्षशौच * मन्थनदेशकाल*वशेनभावनादिभिः*कालप्रकर्षभाजना* दिभिश्चाधीयन्तइति ॥ १० ॥ व्याख्यातञ्चैतत्तद्यथा *गुणाधानमितियस्मिन्* स्वाभाविकेद्रव्येयेगुणानसन्ति ॥ ११ ॥ तेषांगुणानांतत्रय* दाधानमुत्पादनंतत् * समाककरणंसंस्कारइत्युच्यते ॥ १२ ॥ तेगुणास्तोयाग्निसन्निकर्षादिभि* रमन्त्रकैःसमन्त्रकैश्चाधीयन्ते*जनयन्तेतद्यथाप्रदर्श्यते ॥ १३ ॥ हविःप्रलिप्तस्रुक्स्रुवादिपात्राणां* तोयेनधौतात् पवित्रतागुण*उत्पद्यतेइतितोय*सन्निकर्षाद्गुणाधानं ॥१४॥ अशुचितैजसपात्राणामग्निना*दाहाच्छु चित्वगुणाधानं

भवति*विण्मूत्रोत्सर्गादुत्तरं*मृज्जलशौचेनशुद्धिः ॥ १५ ॥ दधिमन्थनात्तक्रभावेलघुत्व*प्रभृतिगुणाधानंस्यात्*दरणि मन्थनादग्निस्तेजाग्नौ*याज्ञिकत्वगुणाधानं ॥ १६ ॥ तीर्थादिदेशवासवशाच्छुचि*त्वादिगुणाधानंभव*तेत्वंकाल विशेष वशाच्चसर्व्वं * जलेशारदेशस्तं ॥ १७ ॥ व्यापारोभावनायात्सैवचोत्पादनाक्रिया । भावनयाक्रिययाद्दोषधिषुक्त लक्ष*स्वरसादौगुरुलघु*त्वादितद्गुणाधानं ॥ १८ ॥ आदिनात्वभ्यासादिगुणेनापिच* इदत्वादिगुणाधानं*कालप्रक- र्षादासवारिष्टादिषु*बहुविधगुणाधानं ॥ १९ ॥ भाजनविशेषस्थापनात्पाकादि * करणाच्चगुणविशेषाधानंस्यात् । यथाताम्रपात्रेषु।खण्डखण्डपाकविधानं ॥ २० ॥ आदिनानिवातगृहे*स्थितिस्थापनादिनाच*गुणविशेषाधानंस्यात् ॥ २० ॥ एवंमन्त्रेणप्रोक्षणोदकैश्छाग*पश्वादिप्रोक्षणाद्गुण*विशेषाधानमितीव*मादिकमुदाहर्त्तव्यं ॥२१॥ सोऽयं संस्कारोभविष्य*द्भवद्भूतानांब्राह्मण*क्षत्रियवैश्यानामेव*भविष्यद्भवद्भूतशरीरस्य ॥ २२ ॥ वैदिकैःस्वरवर्णाभ्या* मुच्चरितमन्त्रैर्गार्भै*र्होमादिभिःकर्म्मभिस्तु*निषेकादिरिहलोके*प्रेत्याचमरणेपिपावनस्यकार्यः ॥ २३ ॥ निषेकइत्यक- र्त्तरिच*कारकेसंज्ञायांघञ्*यमभिप्रेत्यस्त्रियागर्भाशये*सेक्तव्यस्यवेत्स्य*शुद्धिरुद्गुणाधानं॥२४॥ तेनप्रथमर्त्तौप्राग्रेतः* सेकान्निषेकःसंस्कारो*गार्भहोमैर्विधिवैःकर्त्तव्यइति ॥२५॥ व्याससंहितायामुक्तं *गर्भाधानंप्रथमर्त्ता*वितितत्तु रेत् कथञ्चित्*नसंस्कारोभवति*तर्हिद्वितीयाद्यब्दषु ॥ २६ ॥ यतउक्तंविष्ण्वादिभिः*स्वस्वसंहितायांयथा*तत्रविष्णुसंहि- तायांयदुक्तं* गर्भस्यस्पष्टताज्ञानेनिषेककर्म्मइति ॥ २७ ॥ शङ्खेनाप्युक्तंतद्यथा * गर्भस्यस्फुटताज्ञानेनिषेकःपरि- कीर्त्तितः। इति ॥ २८ ॥ गर्भस्येतिगर्भाशयस्यस्पष्टतास्फुटतासाचविज्ञायतेह्यार्त्तव*प्रवृत्त्यैवषोडशरात्रं यावत् ।२९। ततःपुनरस्फुटाभवतियोनिः*सागर्भाशयउच्यते*पुनर्मासान्तेस्फुटाभवतियोनिः ॥ ३०॥ इत्येवंमासिमासिगर्भाशय.* स्फुटश्चास्फुटश्चभवे*त्तदुक्तंसुश्रुतायुर्वेदे ॥ ३१ ॥ नियतांदिवसेऽतीतेसङ्कुचत्यम्बुजंयथा । ऋतौव्यतीतेनार्य्यास्तुयोनिः संव्रियतेतथा ॥ ॥ ३२ ॥ मासेनोपचितंकालेधमनीभ्यांतदार्त्तवम् । ईषत्कृष्णंविगन्धञ्चवायुर्योनिमुखंनयेत् ॥३३॥ तद्वर्षाद्द्वादशात्कालेवर्त्तमानमसृक्पुनः । जरापक्वशरीराणांयातिपञ्चाशतःक्षयम् ॥ ३४ ॥ इति ॥ व्यासेनाप्युक्तंत- द्यथा*रजोदर्शनतोयाःस्युरात्रयःषोडशर्त्तवः । ततःपुंवीजमक्लिष्टं शुद्धेक्षेत्रेप्ररोहति ॥ ३५ ॥ इति ॥ वैदिकैःकर्म्म भिरितिकिमर्थं*स्वरतोवर्णतश्चादुष्टैर्मन्त्रैस्तु*यथोक्तानुष्ठानेनकृतएव ॥ ३६ ॥ निषेकादिःशरीरसंस्कारइह* लोकेच प्रेत्याचमरणानन्तरं*परलोकेपावनःपवित्रकरः ॥ ३७ ॥ अधममध्यममध्यमोत्तम*वरप्रवरगुणाधानंस्याद्धि *जन्मनां ब्राह्मणक्षत्रियवैश्यानां ॥ ३८ ॥ स्वरतोवर्णतोवापि*दुष्टैर्मन्त्रैरयथोक्तविधानेन*कृतानिषेकादिरकृताभवति ३९ स्वरवर्णान्तरदुष्टाह्निमन्त्रा *नस्वस्वार्थवाचकाःस्यु*स्तेनसंस्कारासिद्धस्ते *संस्काराभासाभवन्ति*तत्वाएवासंस्का- रेण ॥ ४० ॥ तथाविधसंस्काराभासेनतुसंस्कृताभासाअसंस्कृता*अपियेतेसर्व्वेद्विजाः*शूद्रवद्भावाद्ब्राह्म* णाक्ष- त्रियावैश्याएव ॥ ४१ ॥ समब्राह्मणसमक्षत्रियसम*वैश्याउक्ताब्राह्मणत्वादनपायात्* इत्युक्तं व्याससंहितायां तद्- यथा ॥ ४२ ॥ सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे । सहस्रगुणमाचार्य्येह्यनन्तंवेदपारगे ॥ ४३ ॥ ब्रह्मवीजसमुत्- पन्नोमन्त्रसंस्कारवर्जितः । जातिमात्रोपजीवीचसभवेद्ब्राह्मणःसमः ॥ इति ॥ ४४ ॥ सममब्राह्मणेदान*मित्यत्राब्रा- ह्मणइति*सदृशार्थेनञ्समब्राह्मणइति*विवरणादेवबोध्यं ॥ ४५ ॥ एतेनक्षत्रियवैश्यौचव्याख्यातौ * क्षत्रवीजसमुत्- पन्नो*मन्त्रसंस्कारवर्जितः । जातिमात्रोपजीवीचसभवेत्क्षत्रियःसमः ॥ ४६ ॥ वैश्यवीजसमुत्पन्नो ० मन्त्रसंस्कार वर्जितः । जातिमात्रोपजीवीचससमोवैश्यउच्यते ॥ ४७ ॥ वच्यातेत्रवहिस्त्वयं ० शूद्रेणतुसमोह्ययोयावद्वेदेनजायते

इति ॥ ४८॥ तर्हि शूद्रवद्भवेत् कथं सम*ब्राह्मण एवसमक्षत्रियएव*समवैश्यएवेति विज्ञायते ॥४९॥ तेकथं नशूद्रा इतिचेत् तत्रोच्यते स्वरवर्ण * दुष्टमन्त्रैः संस्कारैस्तुवेदेजातत्वाभावेऽपि * ब्राह्मणत्वादानपायान्नशूद्रःस्यात् ॥ ५० ॥ वक्ष्यमाणन्तु शूद्रादूति०वेन्नतेषां ब्राह्मणादिशब्दैनपरायणादिभि ० रशौचविधानसोक्तत्वात्तद्यथा॥ ५१॥ जन्मकर्मादिविभ्रष्टः सन्ध्योपासनवर्जितः । नामधारकविप्रश्चदशाहं सूतकीभवेदिति ॥ ५२ ॥ एतेनक्षत्रियवैश्यौचव्याख्यातौ०षड्द्विमोद शाहेनदादशाहेनभूमिपः। वैश्यः पञ्चदशाहेन शूद्रोमासेनशुद्ध्यतीति॥ ५३ ॥ इत्येवं स्वरवर्णविहीनमन्त्रैः संस्काराभासानपुण्याः०जनकास्तस्मात्ते द्विजन्मानां मिहचपि तावपावनः ॥ ५४ ॥ इतिस्थापनीयं वैदिकैःकर्मभिः पुण्यैरित्युक्तमेषतु संस्काराभासोनसंस्कारकल्पेषु०शास्त्रेगण्यते क्वापि ॥ ५५ ॥ ईदृशा एवसंस्काराभासाः सर्वे ० ब्राह्मणक्षत्रियवैश्याः * इदानीं संस्काराभासाः ॥ ५६ ॥ समब्राह्मण समक्षत्रिय सम *वैश्याःप्रायेणदृश्यन्ते*तेषां व्यवच्छेदार्थञ्च ॥ ५७ ॥ संस्काराणां नामभिर्निर्द्देशनेन*कल्पादिशब्देनपञ्च* विधविकल्पेनपञ्च * त्रिधगुणाधानात्मक*संस्कारा इहस्थापिताः ॥ ५८ ॥ न्यूनकल्पेऽधमगुणाधानकल्पा*मधामगुणाधानञ्च * उत्तमगुणाधानञ्च*प्रवरगुणाधानं चाति*प्रवरगुणाधानं चेति ॥ ५९ ॥ कथमेवं विज्ञायते * महर्षिभिर्वेदेन संस्काराणां निर्द्देशात्*तद्यथाविष्णुसंहितायाम ॥ ६० ॥ गर्भस्यस्पष्टताज्ञाने*निषेककर्मस्पन्दनात्*पुरापुंसवनं षष्ठे*ऽष्टमेवा सीमन्तोन्नयनं ॥ ६१ ॥ जातेचदा केजातकर्मणीन* व्यपगमेनामधेयं ॥ ६२ ॥ माङ्गल्यंब्राह्मणस्य * बलवत्क्षत्रियस्य*धनोपेतं वैश्यस्य*जुगुप्सितशूद्रस्य ॥ ६३ ॥ चतुर्थेमास्यादित्यदर्शनं षष्ठे*ऽन्नप्राशनं तृतीये ऽब्दे* चूडाकरणमेताएव*क्रियास्त्रीणाममन्त्रिका*स्तासां समन्त्रकोविवाहः ॥ ६४ । गर्भाष्टमेऽब्दे ब्राह्मण*स्योपनयनं गर्भैकादशेराज्ञो*गर्भद्वादशेवैश्यस्य । ६५ ॥ ततोनन्तरं विवाहइत्येवं यज्ञवल्क्याङ्गिरादिभिश्च * दशसंस्कार निर्द्देशः*कृतान्यूनकल्पएव । ६६ । एतैर्दशभिःसंस्कारैः*स्वरवर्णाभ्यामदुष्टैः*मन्त्रैर्यथाक्रमसुष्ठानेनसंस्कृताः* ब्राह्मणक्षत्रियवैश्याः*तेद्विजाताद्विजाःस्युः । ६७ । शूद्रभावादपेताश्चभवन्ति*यतउक्तं तावच्छूद्रसमोह्येषो* यावद्वेदेनजायते इति । ६८ । इत्येवं दशसंस्कार * संस्काराद्वेदाध्ययनाभावेपुनः * शूद्र इवमापद्यन्ते । ६९। यत उक्तं मनुनैव*योऽनधीत्यद्विजोवेद*मन्यत्रकुरुतेश्रमम् । सजीवन्नेवशूद्रत्व*माशुगच्छतिसान्वयः इति । ७० एते वेदाध्ययनहीना*दशसंस्कारसंस्कृता*ब्राह्मणब्रुवक्षत्रिय* ब्रुववैश्यब्रुवाश्चधमाब्राह्मण * क्षत्रियवैश्या भवन्ति ॥ ७१ ॥ उक्तंहिव्यासेनस्वसंहितायां* द्विगुणंब्राह्मणब्रुवें*इत्यस्य विवरणे ॥ ७२ ॥ गर्भाधानादिभिर्मन्त्र* वेदोपनयनेनच । नाध्यापयतिनाधीते*सभवेद्ब्राह्मणब्रुवः इति ॥ ७३ ॥ एतेनक्षत्रियब्रुव* वैश्यब्रुवौचव्याख्यातौ* वेदोपनयनमात्रे*णवेदाध्ययनासिद्धेः ॥ ७४ ॥ एषत्वधमकल्पःसंस्कारेषु *व्यासेनस्वसंहितायां*मधमगुणमधमगुणोत्तम*गुणप्रवरगुणाधानं ॥ ७५ ॥ अभिप्रेतार्थाःसंस्काराउक्ता* गर्भाधानपुंसवनंसीमन्तोजातकर्म्मच । नामक्रियानिष्क्रमणान्नाशनंवपनक्रिया ॥ ७६ ॥ कर्णवेधोव्रतादेशोवेदारम्भक्रियाविधिः । केशान्तःस्नानमुद्वाहोविवाहाग्निपरिग्रहः ॥ ७७ ॥ त्रेताग्निसंग्रहश्चेतिसंस्काराःषोडशस्मृताः । नवैताःकर्णवेधान्तामन्त्रवर्ज्जं क्रियाःस्त्रियाः ॥७८॥ इति ॥ अत्रवपनक्रियाचूडा*ततःपरं कर्णवेधश्चूडातोऽनन्तरः * व्यासेनस्कन्देऽत्रैव ॥ ७९ ॥ कृतचूडेचबालेचकर्णवेधोविधीयते ॥ इति ॥ बालेप्राक्चूडातोपिकर्णवेधः*कृतचूडेवाकर्णवेधःकर्त्तव्यः ॥ ८० ॥ व्रतादेशउपनयनः संस्कार * मात्रं वेदारम्भक्रियाविधिरिति*वेदाध्ययनारम्भपूर्वकब्रह्म*चर्यव्रताचरणवेदाध्ययनं ॥ ८१ ॥ केशान्तोब्रह्मचर्यान्त

राखेवपनं*समयुक्तेमधारिणाञ्चि*ब्रह्मचर्यं कर्त्तव्यं*तस्यावपनकरणं ॥ ८२ ॥ स्नानमितियथाविधि* गुर्व्वनुज्ञयास्नात्वा समावर्त्तनं*गुरुकुलात्पुनःपितृकुलेगमनं । ८३ ॥ अत्रयोगविभागाच्चत्वारःकल्पा* अधममध्यमोत्तमप्रवरा * स्नापकेर्ण्याभवन्तिबुद्धिमद्भिः ॥ ८४ ॥ तद्यथाब्राह्मणएव*लक्षणेनकन्नेगर्भा * धानाद्युपनयनान्तैः*संस्कृतोवेदारम्भं कृत्वापिवेत् ॥ ८५ ॥ ब्रह्मचर्य्यमाचरन्वेदाध्ययनं*नकृत्वाकेशान्तञ्च*नकृत्वास्नात्वासमावर्त्तोविवाहं * कृत्वाग्न्याधानं वमेत ॥ ८६ ॥ सताधोनैनाधापयनीतातस्तु * ब्राह्मणएवःक्षत्रिय*एवं वैश्य शूद्रःस्यात् ॥ ८७ ॥ भ्रष्टब्रह्मचर्याश्रमत्वादधमो*ब्राह्मणःक्षत्रियोवैश्यो*इतिसंस्कारेष्वधमःकल्पोऽयं ॥ ८८ ॥ तादृक्संस्कारैःसंस्कृतःशूद्र*इवा वाद्र्पतोवेदाध्ययनेऽपि*धर्मोपवेदाध्ययना*भावात्पुनःशूद्रवद्भावः ॥ ८९ ॥यतउक्तं योऽनधीत्यद्विजोवेद*मन्यत्रकुरुतेश्रमं । सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः ॥ इति ॥ ९० ॥ पराशरेणापिचोक्तं *अग्निकार्य्यात्परिभ्रष्टाः* सन्ध्योपासनवर्जिताः । वेदञ्चैवानधीयानाः*सर्व्वेते वृषलाःस्मृताः ॥ ९१ ॥ तस्माद्वार्षलभीतेन * ब्राह्मणेनविशेषतः । अध्येतव्याप्येकशाखा*यदिसर्व्वं नशक्यते ॥ इति ॥ ९२ ॥ अथयोब्राह्मणःक्षत्रियोवैश्योवा* मन्त्रैर्यथाविधिवेदारम्भक्रिया*विधिं ब्रह्मचर्यं चरन्*वेदाध्ययनं करोति ॥ ९३ ॥ त्रिवेदेकवेदमेकशाखांवाधीत्य * चाद्यि व्रत ब्रह्मचर्यो*गुरुणानुमतःस्नात्वा*समावृत्तउद्वाहं करोति ॥ ९४ ॥ पिताज्येष्ठभ्रातृहीनस्यतस्य*वैवाहिकाग्निग्रहणे * धिकारसत्वेपितृ*ग्निग्रहणमकुर्व्वतः ॥ ९५ ॥ विवाहान्तैस्तैःकर्म्मभि*संस्कारोमध्यमगणाधानं स्यादिति*तातोमध्यमकल्पोऽयं ॥ ९६ ॥ अथोत्रिवाऽनत्तवाकाअनग्नयः * शूद्रसमानधर्म्माणः * इतिवशिष्ठवचनात् ॥ ९७ ॥ असंस्कृतवेदस्य * वा हाशौचविधानाच्च *व्राहात्केवलवेदस्य*इतिपराशरोक्तत्वात् ॥ ९८ ॥ इतेवञ्चविवाहान्तैस्तैः कर्म्मभिः*यथाविधिसंस्कृतोयः * साग्निकपितृमानथवा*साग्निकज्येष्ठभ्रातृमान् ॥ ९९ ॥ तस्याग्निग्रहणेऽधिकाराभावात्*कर्म्मस्वप्यनधिकारात्पितृक्रिययाज्येष्ठभ्रातृ * क्रिययाचक्रियासिद्धेः ॥ १००॥ साग्निकदक्षावादेकाहाशौचादि*विधानादुत्तमकल्पः* एकाहाच्छुद्ध्यते विप्रो*योऽग्निवेदसमन्वित * इतिपराशरवचनात् ॥ १०१ ॥ एषयदापितृज्येष्ठभ्रातृहीन*आग्निं गृह्णातितदापुरुत्तमगुणा*धानादुत्तमोभवति*शुद्धिर्त्रैकाहाद्भवति॥१०२॥ एषोपुरुत्तमकल्पः संस्कारेषु*यदापुनरेषत्रेताग्निमंग्रहं*कृत्वासंस्कृतोभवति* तदाप्रवरोभवति ॥ १०३ ॥ त्रेताग्निरग्निवयं वैद्युताग्नि*दावाग्निर्ग्न्हदाहाग्नि* रितुक्तं कात्यायनेनतद्यथा ॥ १०४ ॥ यद्यग्निरग्निनानेनसम्भवे दाहितःकचित् । अग्नयेविविचयइतिजुहुयादाघृताहुतिं ॥ १०५ ॥ अग्नयोऽप्सुमतेचेतिजुहुयाद्दैद्युते नचेत् ॥ अग्नये शुचये चेतिजुहुयाद्दवाग्निना । १०६ ॥ ग्न्हदाहाग्निनाग्निस्तुयष्टव्यःक्षामवांद्विजैः ॥ दावाग्निनाचसंसर्गे हृदयंगदितप्रते । इति ॥ १०७ ॥ इतिचतुर्विधःसंस्कार*कल्पोव्यासेनाभिप्रेतो*गौतमोनातिप्रवर*कल्पमभिप्रेत्याचत्वा*रिंशत् संस्कारा उक्तास्तद्यथोच्यते ॥१०८॥ द्वौलोकेधृतव्रतौराजा ब्राह्मणश्चबहुश्रुतस्तयोश्चतुर्विधस्य मनुष्यजातस्यान्तः संज्ञानायत्तजलनपतनसर्पण मायत्तंजीवनं प्रसूतिरक्षण मसंकरोधर्म्मः ॥१०९॥ सएपबहुश्रुतोभवतिलोक*वेदवेदाङ्गविद्वाको*वाकेतिहास पुराणेषुकुशलः ॥११०॥ तदपेक्षस्तद्वृत्तिश्चत्वारिंशता*संस्कारैःसंस्कृतस्त्रिषु* कर्म्मस्वभिरतः षट्सु*वासामयचाविशेषभिविनीतः ॥१११॥ षड्भिःपरिहार्य्योराज्ञा* नवध्यश्चावध्यश्चादण्ड्य * स्त्रावहिष्कार्य्यश्चापरि*वाद्यश्चापरिहार्य्यश्च इति ॥११२॥ गर्भाधानपुंसवन*सीमान्तोन्नयनजात * कर्म्मनामकरणनिष्क्रमणान्न*प्राशनचौडोपनयनानिनव ॥९॥११३॥ चत्वारिवेदव्रतानिस्नानं सह * धर्म्मचारिण्याग्निसंयोगः ॥११४॥१०॥४॥ पञ्चानां

महायज्ञानां*मनुष्ठानं देवपितृ*मनुष्यभूतब्रह्मणामिति पञ्च ॥५॥०॥११५॥ अष्टकापार्वणश्राद्ध*श्रावण्याग्रहायणी*
चैत्र्याश्वयुजीति सप्त ॥७॥०॥११६॥ पाकयज्ञसंस्थाऽग्न्याधेय*मग्निहोत्रं दर्शपौर्ण*मासावाग्रयणं चातु*र्मास्यं निरूढ
पशुब*न्धः सौत्रामणीति सप्त ॥७॥०॥११७॥ हविर्यज्ञसंस्थाग्निष्टो*मोऽत्यग्निष्टोम उक्थ्यः*षोडशिवाजपेयोऽति*रात्रो
ऽप्तोर्याम इति सप्त*सोमसंस्था चेत्येते चत्वारिंशत् ॥८॥०॥४०॥०॥११८॥ वाजसनेयेऽप्युक्तं*सहस्रगुणमाचार्या*दनन्तं
वेदपारगं इत्याचार्यवेदपारगयोर्द्वयोः * लक्षणाभ्यां तद्यथा ॥११९॥ अग्निहोत्री तपस्वी च * वेदमध्यापयेच्च यः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥१२०॥ इत्यनेनोक्तमकल्प*संस्कृतः प्रदर्शितः । प्रवरातिप्रवरौ च* वेदपारग
वचनेन तद्यथा ॥१२१॥ इष्टिभिः पशुबन्धैश्च*चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येनचेष्टं स दृष्टवान्॥१२२
मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद्वेदपारग इति ॥ १२३ ॥ नन्वेवं सति
द्विजन्मनां शरीर*संस्कारो वैदिकैः पुण्यैः*कर्म्मभिः कार्याः केनेति*चेत्तत्रोच्यते वैदिक*पुण्यकर्म्मविदा कार्याः ॥१२४॥
अतः कश्चिदेवं प्रकारेण पञ्च*विधसंस्कारविकल्प*मविद्वानृषिः प्रमादीत्युत्तरः ॥१२५॥ अतश्चौत्तरकालिक*जनैरप्र
वचनतया मन्तव्या*मिति मनसि निधाय*श्लोकं रचयित्वोवाच ॥१२६॥ अष्टौ संस्कारकर्म्माणि*गर्भाधानमिव स्वयम् ।
पिता कुर्यात्तदन्यो वानस्य भावेपि तत्क्रमात् इति ॥१२७॥ प्रमादिनोक्तमिदमयुक्तं कस्मात्* बहुविधदोषदर्शनात्
॥१२८॥ गर्भाधानमिवेति भविष्यद*पत्यस्य पिता स्वजायां*गर्भे रेतस आधानं*यथा स्वयमेव कुर्यात्* नान्यो व्यभि
चारदोषात् ॥१२९॥ तथाष्टौ संस्कारकर्म्माणि खलु*गार्भहोमादिचूड़ान्त*कर्म्माण्यष्टौ कुर्यान्नान्य*इत्यत्र दृष्टान्ता
सिद्धिः ॥१३०॥ प्रागपत्योत्पत्तेः पितृत्वासिद्धे*रुक्तं हि चरकेयथा * सतस्तस्यैव पुरुषस्य * प्रागपत्यात् पितृत्वं न
भवति तच्चापत्य इच्छतीति ॥१३१॥ भविष्यदपत्यस्य पितेत्यसाधु*प्रयोगस्तत्राह प्रमादी*नैवमस्ति चैव प्रयोगो *
वात्स्यायनभाष्ये यथा* जनिष्यमाणं पुत्रमभिनन्दतीति ॥१३२॥ सत्यमेवं प्रयोगः स्यात् * पुत्रो भविष्यतीतिवत्
पिता भविष्यतीति स्यात् ॥१३३॥ तथापि तस्याभावेपि*तदन्योऽन्येति पक्षे दृष्टान्तो न*भवति सति च पितरि*तदन्येन कृते
को दोषः ॥१३४॥ अष्टाविति च गर्भाधानसंस्कार*कर्म्मादिचूड़ान्तानि सु*स्तेनोपनयनस्याचा* नाकर्तृकत्वं प्राप्यते
॥१३५॥ यद्यनाकर्तृकोपनयने दोषो*न भवति कुतोऽन्येषां*संस्काराणां सति च*पितर्यनाकर्तृकत्वे दोषः स्यात् ॥१३६
तत्राह कश्चित्प्रमादी*गर्भाधानमिवेति गर्भाधानं तु* गर्भहोमादि रेतः*सेकान्तं कर्म्मोच्यते ॥१३७॥ भविष्यदपत्य
स्य पिता यथा * रेतःसेकान्तं गर्भाधानं स्वय*मेव कुर्यान्नान्यो व्यभिचारदोषात् ॥ १३८ ॥ तथापि तेनैव स्वयं पुं *
सवनाद्युपनयनान्त*कर्म्माण्यष्टौ कुर्य्यादिति ॥१३९॥ एवमुक्तेपि केवलमुपनयन*स्यानाकर्तृकत्वं निरस्तं भवति* शेष
दोषो वर्त्तत एव ॥१४०॥ अपरश्चायं दोषः* गार्भहोमादि रेतःसेकान्तं यदि* गर्भाधानसंस्कारः स्यात् ॥१४१॥ तदा
तद्दिने ऋद्धिश्राद्धं कृत्वा*कथं मैथुनमापद्येत*तदङ्गत्वेन वाचनिकमिति चे*त्तदाप्यमहेऽत्र दोषं ॥१४२॥ स्वयं तेन
कात्यायनेन हि * वाचनिकं गर्भाधानं * रेतःसेकान्तं कर्म्म गर्भाधानसंस्कार इति ॥१४३॥ तेन किं तद्दिने रेतः*सेक
स्त्वापत्तासम्भवः स्या*दपरश्च दोषोऽयं ॥ १४४ ॥ यस्तु मातुर्वा पितुर्वा*सपिण्डीकरणं कृत्वा * वृद्धिं कृत्वा गर्भा
धानसंस्कारं*कुर्य्यात् स कथं तद्दिने*मैथुनं कर्म्मापद्येत ॥१४५॥ इतोऽप्यदोषो दोषश्चापरोऽयं* यातु खलु नृत
मतो विधवा स्या*त्तस्यां क्षेत्रजाते सति*नियोगात् सुतोत्पादने ॥१४६॥ रेतःसेकादेवरादिर्गर्भा* धानसिवपुं
सवना*द्युपनयनान्तान्यष्टौ*संस्कारकर्म्माणि कुर्य्यात् ॥१४७॥ क्षेत्रिणो हि चैत्रजः पुत्रः* पुत्रप्रतिनिधिस्तु कौसहना

गर्भाधानादिभिर्वहृष्टैः*उपनयनस्याविस्तरमितियुक्तः ॥ २७ ॥ इहायमेवकर्मभिर्यैः शरीरसंस्कृतंस्यात्* तदाहस्वाध्यायेनेत्यादि ॥ १ ॥ ० ॥ २८ ॥ ० ॥

**स्वाध्यायेनव्रतैर्होमैस्त्रैविद्येनेज्ययासुतैः । महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुः ॥ २८ ॥**

स्वाध्यायेनब्रह्मयज्ञेन*नितान्तवेदादिपाठेन*व्रतैश्चान्द्रायणादिभिः*होमैरग्निहोत्रादिभिः ॥ १ ॥ त्रैविद्येनत्रिवेदोक्तकर्मणा इज्ययायज्ञेन * वाजपेयादिना सुतैः * सुतोत्पादनेनच * महायज्ञैः यज्ञैश्चैतैः * रियं तनुर्ब्राह्मीक्रियते ॥ २ ॥ ० ॥ २८ ॥ ० ॥ अथकर्तव्यसंस्कारांणांक्रममाहप्राङ्नाभीत्येवमादि ॥ १ ॥ ० ॥ ० ॥

**प्राङ्नाभिवर्द्धनात् पुंसोजातकर्म विधीयते । मन्त्रवत्प्राशनं चास्यहिरण्यमधुसर्पिषाम् ॥ २९ ॥**

गार्भैरित्युक्त्वाप्राक् पुंसवनंयोगादित् * गर्भाधानकालः सिद्धः * तदानिषेककर्म * प्राग्स्पन्दनाभिव्यक्तेः पुंसवनं । १ । षष्ठेऽष्टमे वा सीमन्तोन्नयन* मितिविष्णुयाज्ञवल्क्यौ* सीमन्तश्चाष्टमे मासीतिव्यासः * इत्युक्तं स्तूपितमेव । २। पुंसोजातस्यपुत्रस्य*प्राङ्नाभिवर्द्धनादित*नाभिनाडीच्छेदनात्पूर्वं*वेदोक्तमन्त्रेणजात*कर्म विधीयते स्मृत्यादिभिः ॥ ३॥ कर्मचविधायजातहिरण्यंकिञ्चित्किञ्चिन्मधुसर्पिषां* गव्यमेषांमिश्रीकृतानां*मस्य शिशोःप्राशनं च*मन्त्रेणैवविधीयते ॥ ४ ॥ ० ॥ २९ ॥ ० ॥

**नामधेयंदशम्यान्तुद्वादश्यांवापिकारयेत् । पुण्येतिथौमुहूर्त्तेवानक्षत्रेवागुणान्विते ॥३०॥**

नामधेयमित्यादि ॥ ३० ॥ अस्यजातस्यबालस्य * दशम्यान्तुरात्रावतीतायांसत्यामेकादशेऽहनिनाम*धेयं पिताकारयेत् । १ ॥ द्वादश्यांरात्रावतीतायांत्रयोदशेऽहनिक्षत्रियस्य*वाअथवातत्पञ्चदश्यां*रात्रावतीतायांषोडशेऽहनि वैश्यस्य ॥ २ ॥ त्रिंश्यांरात्रावतीतायां* मेकत्रिंशेऽह्निशूद्रस्य*मन्त्रैःपिताऽऽनामधेयंकारयेत् ॥ ३ ॥ विष्णुनाचैव उक्तं स्वसंहितायां*जातेचदारकेजातकर्माशौच*व्यपगमेनामधेयमितिनानयोर्विरोधः ॥ ४ ॥ यदितेषुदिनेषुननामधेयं*कारयेत्तदापुण्यतिथ्यादिषु*यथाविधिनानामधेयं कारयेत् ॥ ५ ॥ ० ॥ ३० ॥ यस्ययन्नाम*कुर्यात्तदाह*मङ्गल्यमित्य*वमादिश्लोकः ॥ १ ॥ ० ॥ ३१ ॥ ० ॥

**मङ्गल्यंब्राह्मणस्यस्यात्क्षत्रियस्यबलान्वितम् । वैश्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितम् ३१**

ब्राह्मणस्यमङ्गल्यंनामधेयं*मित्रभद्रादिकं शुभसूचकं*क्षत्रियस्यबलान्वितं शूरादि ॥ १ ॥ वैश्यस्यधनसंयुक्तं देववसुरामधने*त्येवमादिकं नाम ॥ २ ॥ शूद्रस्य जुगुप्सितं नाम*दीनभङ्गुरादिक* मितिप्रायिकाभिप्रेतं ॥२॥०॥ विष्णुनाचोक्तं स्वसंहितायां*मङ्गल्यंब्राह्मणस्य*बलवत्क्षत्रियस्य*धनोपेतं वैश्यस्य*जुगुप्सितं शूद्रस्य ॥ २ ॥ ० ॥ प्रकारान्तरेणनामकरणमाहशर्मवदित्यादि एकमेकश्लोकम् ॥ १ ॥ ३१ ॥

**शर्मवद्ब्राह्मणस्यस्याद्राज्ञोरक्षासमन्वितम् । वैश्यस्यपुष्टिसंयुक्तंशूद्रस्यप्रेष्यसंयुतम् ३२**

धर्म्मवदितयादि मनुना * ख्यापितं हि धर्म्मयुक्तं * मिति शर्म्मादि कमथ * वा शर्म्मान्तं ब्राह्मणस्ये ति बोद्धव्यं ॥ १ ॥ एवं यशोगणाञ्चयं * तैर्नवशर्म्माशर्म्मचरित * एवं शिशुपालःप्रभृति * राज्ञा वाहो भूपादीनाम् ॥ २ ॥ इयमुक्तिर्नामधेय * विधानस्यानियमार्थं * शास्त्रेतिहास योगाक * यौवार्थ उक्तिःप्रवि धा * भिहितानां यमहापुराणोऽग्निना ॥ ३ ॥ उभौविधिनिषेधौचनियमा नियमावपि। वै षमन्यपरिसङ्ख्या चतदीयापड्विधोक्तिका ॥ ४ ॥ इति ॥ तेनापरोक्तनामधे यकरणं * मपिसङ्गच्छते मति * निषेधाभावेन मनुना*ह्यनुमतं भवतीति ॥ ५ ॥ विष्णुपुराणे चोक्तं तु* शर्म्मवद्ब्राह्मणस्योक्तं *वर्म्मेति क्षत्रसंयुतम् *गुप्तदासात्मकं नाम*प्रशस्तं वैश्यशूद्रयोः ॥ इति ॥ अत्रापिप्रशस्तपदेनानियमोक्तिरियमिति*ख्यापितं तेनान्यत्रोक्तं *नामधेयश्चा नुमतम् ॥ ७॥ शङ्खेनतूक्तं । अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते। नामधेयञ्चकर्त्तव्यं वर्णानाञ्च समाक्षरम् । मा ङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितं । वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् । शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य तु । धनान्तञ्चैव वैश्यस्य दासान्तञ्चान्त्यजन्मनः । इति । मनुवचनेन तु सा* तत्प्रतिषेधाभावान्नवि रुद्धं शङ्खेनोक्तं ॥११ ॥ यमेनोक्तञ्च शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च भूभुजः*भूतिर्दत्तश्च वैश्यस्य*दासः शूद्रस्य नाम च । इति॥८॥यथाग्निशर्म्मा विष्णुशर्म्मा वा*देवः कृतवर्म्मा भीम*वर्म त्रातादिनामैवं नामान्ते ॥९॥यस्तु वा चश्चेर्दृष्टे * नामान्ते शर्म्मादिशब्दः*प्रयोक्तव्य इतियथा*रामकृष्णादेवशर्म्मेति ॥१०॥ तदर्माधुनहिकचित्, नरीचिं बशर्म्म लिपाता मि*तेषांनपर्णं करोति ॥११॥ नायिकाभिप्रायेण त*न्माङ्गल्यादियुक्तनाम*करणं मन्वादिभिरुक्तं।१२॥ पाणिनीयम हाभाष्ये*व्याकरणस्य प्रयोजन* मेकमुक्तं दशम्यां पुत्रस्येति * तन्नामकरणं नावैयाकरणः * कर्त्तुं शक्नोतिवि- धानम ॥ ११ ॥ यतउक्तं जातिमन्वीये, दशमं नानिष्पादितायां * परेऽहनिसम्पुत्रास्त्री* ॥ १२ ॥ सर्व्व गन्धौषधैर्गौरसर्षपैश्च * स्नाता लघुहतवस्त्रं * परिधायपवित्रेष्ट * लघुभूषणवतीचसमं स्पृश्यमङ्गलानि ॥ १३ ॥ उचितामर्च्चयित्वा च देवतां * शिखिनःकृष्णाः सममाज्यं च* साधुब्राह्मणानस्वस्तिवाचयित्वा॥ १४ ॥ कुमारक महतेन*वासमैनाम्क्लादयेत्प्राक् *शिरसमन्दक्षिणसंवासंनेया ॥ १५ ॥ देवतापूर्व्वं द्विजातिभ्यःप्रणाम*तौबत्का कुमारस्याकारयेन्नाक्षत्रिकं नामाभिप्रायिकञ्चेति ॥ १६ ॥ तत्राभिप्रायिकं नाम * घोषवदाद्यन्तस्थान्तमूष्मान्तञ्च* द्व्यक्षरं त्रिपुरुषान्तर* मनवरं तद्धितञ्च ॥ १७ ॥ नाक्षत्रिकन्तुनक्षत्र * देवतासंयुक्तं कृतं *द्व्यक्षरं चतुरक्षरं वा ॥ १८ ॥ इति ॥ इतिब्राह्मणबालस्य*नामकरणमेवमेव*क्षत्रियादीनांमानुवशौचव्यपगमे नामकरणं विष्णुवचनाद्विधेयम् । ब्राह्मणादीनां प्रसूतानांह्यशौच*व्यपगमएकादश्या* ह्यादिषुभवतीत्यत*द्विवहांसःशूद्राविषये, पैठीनसिवच नं तु ॥ २० ॥ सर्व्वतर्णस्त्रीविषयेप्रमाहतो*व्याचक्षतेतदसाधु ॥ २१ ॥ इत्येवं नामकरण*विधानेघोषवदादिःसंज्ञा नावैयाकरणो*वेदतस्माद्व्याकरणं *द्विजैरध्येतव्यमितिप्रयोजनम् ॥ ६२ ॥ मायेऽस्मिवमाभिप्रायिकं नाम * सर्व्वयुगे व्यवह्रियतेसर्व्वेण*वर्णेनकुचिन्माङ्गल्यादियुक्तं ॥ २३ ॥ ० ॥ ३२ ॥ ० ॥ अथस्त्रीणांनामकरणमाह*स्त्रीणांसुखोद्य मित्यादि १ ॥ ० ॥ ३३ ॥ ० ॥

**स्त्रीणांसुखोद्यमक्रूरं विस्पष्टार्थं मनोहरम्। मङ्गल्यंदीर्घवर्णान्तमाशीर्व्वादाभिधानवत् ॥ ३३ ॥**

ब्राह्मणादि बालिकानां * नामधेयं सुखोद्यं सुखेनोच्चार्य्यं * मक्रूरमकष्टकरं * निस्पष्टार्थं मनोहर श्रवणं * ॥ १ ॥ मङ्गल्यमुच्चारणे शुभसूचकं * दीर्घवर्णान्तमाशीर्व्वादार्थकं च * यथोक्तविधानेनैव * पिता कारयेदिति॥ २ इत्येवं व्यस्तं समस्तं वा ब्राह्मणादिकन्यानां * नामधेयं कृतेविवाहे निष्पन्ने * क्रियाविधौ द्विजातीनां देव्यन्तं शूद्रायादासान्तम् ॥ ३ ॥ ब्रह्मक्षत्रियवैश्यानां स्त्रियादेव्यन्तता स्मृता। दासान्तता तु शूद्राया इति शास्त्रे व्यवस्थितम् ॥ ४ ॥ ० ॥ २२ ॥ ० ॥ एवं नामकरणमुक्त्वा * तदनन्तरं ये संस्काराः * कर्त्तव्यास्तान् क्रमेणाह * चतुर्थे मासी त्यादि ॥ ० ॥ २४ ॥

## चतुर्थे मासिकर्त्तव्यं शिशोर्निष्क्रमणं गृहात्। षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले ॥२४॥

शिशोर्जन्मोत्तरं चतुर्थे मासि तु * गृहान्निष्क्रमणं कार्यं * याज्ञवल्क्येनाप्युक्तम * अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥ १ ॥ व्यासेनाप्युक्तं स्वसंहितायां यथा * एकादशेऽह्नि नामार्कं * स्यो ह्यामासि चतुर्थके इति ॥ २ ॥ मङ्गले नचोक्तं * चतुर्थे मासि कर्त्तव्यमादित्यस्य प्रदर्शनमिति ॥ १ ॥ विष्णुनाप्युक्तं चतुर्थे * मास्यादित्यदर्शनमिति * तेनयद्यमवचनं पठति ॥ २ ॥ ततस्तु तीयेकर्त्तव्यं मासि सूर्य्यस्य दर्शनमिति तल्लिपिकप्रमादः ॥ ततस्तु तीयेकर्त्तव्यमिति पाठो * मन्वादीनां बहूनां वचनदर्शनात् ॥ ३ ॥ षष्ठेऽन्नेति ॥ * ॥ जातस्य शिशोः षष्ठे मासि तु कर्त्ते * ऽन्नप्राशनं यद्वा कुले * पूर्व्वं कस्यचिदन्नप्राशने यदा * कृते मङ्गलमभूत्तु * चेष्टम् ॥ ४ ॥ * ॥ २४ ॥ * ॥ क्रमिकत्वादाह चूडेत्यादि ॥ ० ॥ २५ ॥ ० ॥

## चूडाकर्म्म द्विजातीनां सर्व्वेषामेव धर्म्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् २५

द्विजातीनां सर्व्वेषामेव चूडा * कर्म्म धर्म्मतः प्रथमेऽब्दे कार्यं * तृतीयेऽब्दे वा श्रुतिचोदनात् ॥ १ ॥ याज्ञवल्क्येनोक्तं चूडा * कार्या यथाकुलमिति ॥ २ ॥ ० ॥ व्यासेनोक्तं पञ्चमासान्नमश्नीयाच्चूडाकर्म्म कुलोचितम्। कृतचूडे तु बाले च कर्णवेधो विधीयते ॥ ३ ॥ इति ॥ मङ्गले नचोक्तं षष्ठेन्नप्राशनं मासि चूडा कार्या यथाकुलम्। इति। ४। यस्त्वाद्यसंस्कारार्थेति पतेत्स्वकालाच्चेत् कथंचन। कृत्वातएव कर्त्तव्यास्तस्योपनयनादधः। इति। ५। स्वकालादतिपतितः * संस्कारउत्तरसंस्कारात् * पूर्व्वं कर्त्तव्य इत्येवं * सर्व्वसंस्कारा उपनयनादधो * नयुगपन्नच पर्यात्। इति ।६। ० । २५ । क्रमिकत्वादुपनयनमुच्यते * गर्भाष्टमेऽब्द इत्यादि । १ । ० । २६ । । ०

## गर्भाष्टमेऽब्दे कुर्व्वीत ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः २६

उपनायनमित्युपनयतु * भवानिति यत् प्रयुङ्क्ते * तदुपनायनमुप * नयनक्रियायां चोदनां कुर्व्वीत * णिजन्तादुपनीञ्ल्युट्। १। निषेकादिकर्म्माणि स्वयंकरणे * नविहितानीति * स्वयमकर्त्तव्यानि स्युः ॥ २ ॥ तर्हि पित्रादिभिः स्वयं कार्य्याणीति प्राप्तौ * तत्प्रतिषेधार्थं णिचा * पित्रादीनां प्रयोजकत्वं ख्यापितम् ॥ ३ ॥ उपनयनान्ताः क्रियाः पिता * दशो ब्राह्मणान् नियोजयेयुरिति * नतूपनयनमेवोपनायनम् इति। ४ गर्भाष्टमेऽब्दे ब्राह्मणस्येतियो * ब्राह्मणान्मन्त्रैः स्वोढायां * ब्राह्मणकन्यायां वा * क्षत्रियकन्यायां वाथ * वैश्यकन्यायां वा जातः । १ । यत्र ब्राह्मणादपरब्राह्मणेन * मन्त्रैरोढायां ब्राह्मण * कन्यायां क्षत्रियकन्यायां वा वैश्य * कन्यायां वा नियुक्तायां । २ ।

अनियुक्तायां वा मधवाया जातः*कुण्डो विधवायां जातो वा*गोलकोयस्तस्यां पुनर्भूं*जातः पौनर्भवः पुत्रः। ३। यश्च ब्राह्मणादनुलोमजाया*मत्तयोनौ चान्‌ढायामेव* क्षत्रियकन्यायां वैश्यायां वाजातः ४ स स ब्राह्मणास्तस्य तस्यै वगर्भा*दष्टमेवर्षे वयसि*उपनयनजनक*क्रियाभाचार्यः कुर्वीत ।५। गर्भान्नवमदश* मैकादशद्वादशश*मासःसज भवतिततःपरन्तु*वैकारिकःप्रसवकालइतिहि। ६। सश्रुताचार्यैरायुर्वेदेऽभिहितं तस्माद्‌गर्भाधानदिन*मारभ्याष्टमादिवर्षे * गणनाकर्त्तव्या न तु जन्मदिवसमारभ्य। ७। तेनगर्भाष्टमादिवत्सरोच्छ्रा * कालउपनयनस्य * ब्राह्मणादेस्तोऽधःकालेच्‌ डादिः। ८। न तु तत ऊर्द्ध्वउपनयना*दधोगर्भाष्टमाद्‌बाब्दे*पतितच्‌डान्ताःकार्याः इति विष्णुनाप्युक्तं स्वसंहितायां यथा*गर्भाष्टमेऽब्दे ब्राह्मण * स्योपनयनं गर्भैका * दशेराज्ञोगर्भ द्वादशेविशः। इति। ।१०। व्यासेनवोक्तं। विप्रोगर्भाष्टमेवर्षे क्षत्रएकादशेतथा। द्वादशेवैश्यजातिस्तुव्रतोपनयमर्हति। इति। गर्भेतान*नचैकादशद्वादश*योरन्वयः। शङ्खेनाप्युक्तं। १२। गर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनं। गर्भादेकादशेराज्ञोगर्भात्तु द्वादशेविशः। इति। १३। याज्ञवल्क्येनापि वोक्तमष्टमेचाब्दे*ब्राह्मणस्योपनयन * मितनतु मन्वादिभिः* सर्वैःहिनसम्भवति॥ १४॥ तद्‌यथा॥० गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशेसैके विशामेके यथाकुलमिति॥ १५॥ ०॥ ३६॥ अथकाम्योपनयनकालमाह* ब्रह्मवर्चसेत्यादि॥ १॥ ०॥ ३७॥ ०॥

## ब्रह्मवर्च्चसकामस्य कार्यो विप्रस्यपञ्चमे। राज्ञोवलार्थिनःषष्ठे वैश्यस्येहार्थिनोऽष्टमे॥ ३७॥

ब्रह्मणोवर्च्चस्तेजस्तत्*कामस्य विप्रवालस्य*पंचमेऽब्दे* राज्ञोवलार्थिनःषष्ठे*ईहार्थिनोवैश्यस्याष्ट* मउपनायनंकार्य्यम्॥ १॥ उक्तंहिगोतमेनैत*दुपनयनं ब्राह्मण*स्याष्टमे नवमे पंचमे वाकाम्य*गर्भादिःसङ्ख्यावर्षाणाम्॥ इति॥ २॥०॥३७॥ अथोपनयनस्यगौणकाल*माहाषोड़शादित्यादि॥१॥०॥ ३८०॥

## आषोड़शाद्‌ब्राह्मणस्य सावित्रीनातिवर्त्तते। आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतोविशः ३८

आङ्‌हाभिविधौतेन * ब्राह्मणस्यगर्भाद्‌षोड़शवर्षं * वयोत्यापसावित्रीनातिवर्त्तते॥ १॥ गर्भाष्टमेऽब्देइत्यतोनुवृत्ते * गर्भाद्‌षोड़शादिति॥ २॥ विष्णुनापिह्य तद्वचनद्वयं*गर्भद्वादशेविशइ*त्यस्मादुत्तरंतेषांसञ्चेत्याद्युक्त्या*वक्तव्यवधानेनोक्तं ३ तत्रगर्भेत्यस्यानुवृत्ते* स्पसक्ताभावदर्शना* तत्रापिपूर्व्वतोगर्भेत्यस्यानुवृत्तिरिष्टा॥ ४॥ याज्ञवल्क्येनापिस्वसंहितायां * मुपनीयगुरुरित्यादि*द्वाविंशति * श्लोकानुक्त्वाभिहितं॥ ५॥ आषोड़शाब्दाद्‌द्वाविंविंशाच्चतुर्विंशाच्चवत्सरात्। ब्रह्मक्षत्रविशांकालऔपनायनिकःपरः॥ इति॥६॥ तत्रापिगर्भाष्टमेत्यस्यगर्भशब्द * स्यानुवृत्तेन्सम्भवः ७ व्यासेनचस्वसंहितायामुक्तं* विप्रोगर्भाष्टमेवर्षे क्षत्रएकादशेतथा। द्वादशेवैश्यजातिस्तुव्रतोपनयमर्हति।८। तस्याप्राप्तव्रतस्यायं कालःस्याद्द्विगुणाधिकः। वेदव्रतच्युतोव्रात्यःसव्रात्यस्तोममर्हति॥ इति॥ ९॥ अत्रद्विगुणइतिनोक्त्वा * द्विगुणाधिकइत्युक्त्या * गर्भाद्द्विगुणोऽब्दःकालो*ऽधिककालो*नास्मादधिकःकालोस्त्यु प*नयनस्येतिख्यापितं। १०। इत्येवंविष्णुवचनादिदर्शनात्*शङ्खवचनेपिगर्भा*दित्यस्यानुवृत्तिरिष्टा॥ ११॥ पूर्व्वश्लोके प्रत्येकं गर्भादित्युक्त्या*परश्लोकेतदनुवृत्तिनिषेधोज्ञापनात्॥१२ तद्‌यथागर्भाष्टमेऽब्देकर्त्तव्यंब्राह्मणस्योपनायनं॥ गर्भादेकादशेराज्ञोगर्भात्तुद्वादशेविशः १३ षोड़शाब्दस्तुविप्रस्य

द्वाविंशः क्षत्रियस्य तु ॥ विंशतिः सत्वतस्ख्यातु वैश्यस्य परिकीर्त्तिता ॥ १४ ॥ गर्भाद्दाषोड़शादितीव* व्याख्यानमवि द्वानयः स* मर्य्यादायामाङ्श्चदृष्टतु ।क्त।यदुयमवचनं *निदर्शयतितद् यथा ॥ १५ ॥ पतितायस्यसावित्रीदश वर्षाणि दशपञ्चच ॥ ब्राह्मणस्यविशेषेणतथाराजन्यवैश्ययोः ॥ १६ ॥ प्रायश्चित्तं यत्तदेषां प्रोवाचवदतां वरः । विवस्वतःसुतः सोमात् धर्माधर्मार्थतत्त्ववित् ॥ १७ ॥ सशिखंवपनं कृत्वाव्रतं कुर्य्यात्समाहितः हविष्यं भोजयेदन्नं ब्राह्मणान् सप्तपञ्चवा । इति । अत्रदशपञ्चचेति* द्वादशमासपर्य्यन्तं* प्रसवकालमभिप्रेत्यशमेन * सएकवत्सरस्ततःपरं पञ्चदश वर्षं । १८ । तथाराजन्यवैश्ययो* रिति । क्रविंशवर्षं तु क्षत्रियस्य * त्रयोविंशवत्सरं वैश्यस्येति * सव्वत्तचनादवि रुद्धं । २० । तस्मान्नमर्य्यादायामाङ् * जन्मनःप्रभृतिपञ्च* दशाद्वाव्दगणनाया ॥ २१ ॥ नवमदशमैकादशमासेषु * जातानांत्रिहीक्रमासा* न्नूनाभवन्तीतिदोषः ।२२। गौतमेनाभिहितं हि* प्रागुपनयनात्काम * चारवादभक्षोऽहुतोऽब्रह्मचारी* यथोपपादम् त्रपुरीषोभवेत् । २३ । नास्याचमनकल्पोवि* द्यतेऽन्यत्रापमार्जन*प्रधावनावोक्षणेभ्यः ॥ २४ ॥ नतदुपस्पर्शनाशौचं नत्वेवै * नमग्निहवनवलिहरणायोनियुञ्ज्या* न्नब्रह्माभिव्याहारये * दन्यत्रस्वधानिनय नात ॥२५॥ इति । दक्षसंहितायांचोक्तं *जातमात्रःशिशुस्तावद् यावदष्टौसमावयः । सहिगर्भसमोज्ञेयोव्यक्तिमात्रः प्रदर्शितः ॥ २६ ॥ भक्ष्याभक्ष्ये तथापेये वाच्यावाच्ये कृतानृते । अस्मिन् काले नदोषोऽस्तिसयावन्नोपनीयते । २७ उपनीतस्यदोषोऽस्तिक्रियमाणैर्विगर्हितैः । अप्राप्तव्यवहारोऽसौयावत्षोड़शवार्षिकः ॥ २८ ॥ इतियमेनाप्यभि हितं हि* ऊनैकादशवर्षस्य पञ्चवर्षात्परस्यच । प्रायश्चित्तं चरेद्भ्राता पिताऽन्योवापिवान्धवः । २९ । अतोवालतर स्यापिनापराधोनपातकम् । राजदण्डोनतस्यास्तिप्रायश्चित्तं नविद्यते ॥ ३० ॥इति॥ अतकेचित्प्रमादिनोभाषन्ते * अष्टौसंस्कारकर्माणिगर्भाधानमिवस्वयम् । पिताकुर्य्यात्तदन्योवातस्याभावे पितृक्रमादिति ॥३१॥ केनचित्प्रमा दिनाकृतं श्लोक-माषं मत्वाप्रभाषन्ते *पितापुत्रस्योपनयनान्तांस्तु* संस्कारान् कुर्य्यान्नान्यः ॥३२॥ तस्यपितुरभावे पान्योवाकुर्य्या*दितितदसाधु,वक्ष्य*दोषादितिमाग्दर्शितं ।३३। पिताकुर्य्यात्तदन्योवा*तस्याभावेपीतियदुक्तंतत्र*चा परोऽयंदोषोदृष्टः ॥३४॥ तस्याभावेपान्यःकुर्य्या*दित्युक्त्यासिद्धोयत्तदन्यादृत्युक्तं। तत्रतत्पदग्रहणा* मधिकाख्यवाक्य दोषः॥३५॥ ततोपिचतस्याभावेद्दृतमावः*किमन्योनाभावः * पितुरन्योऽन्याभाववान्*यःसकुर्य्यादितिचे ॥ ३६ ॥ तदाजीवतिपितरि*पितुर्व्वन्यःसर्व्व एव*कर्त्तुमर्हतिप्रागमाविसपितु * नसम्भवतिनहिप्राक् *पितुरुत्पत्तेःपुत्रःस्यात् । ३७ । तर्हिचात्यन्ताभावे*यदापितासन्निधौनास्तितदान्यः* कुर्य्यादित्यबाधुःसाभावःपितरि*मृतेऽन्यःकुर्य्यादि तिचेत् ।३८। तदाबकश्चास्त्रोक्तव्यवहार*श्रुतिर्नैवोपपद्यते*श्रूयतेहिछान्दोग्योपनिषदि। ३९ । उद्दालकेजीवतितस्य* पुत्रःश्वेतकेतुःपितु*रनात्वब्रह्मचर्य्यं द्वादशवर्षं *कृत्वानूचानमानीभूत्वा-समावृत्तःपितुरग्रेऽगात्।४०।जीवतिदशर थे सन्निहितेच*वशिष्ठोरामादीनुपानाययत । जीवतिचवसुदेवेरामकृष्णौ* सान्दीपनिरुपानायर्यादिति ॥ ४१ ॥ तस्मात्तस्याभावेतदन्यः*कुर्य्यादितासङ्गतमि*त्यापरेचदोषादृष्टाः । ४२ । पुत्राचार्यस्य श्राद्धान्न*भोजिब्राह्मणपङ्क्ति दूषकत्वं *गुरुपित्राचार्य्याणांच*साङ्कर्य्यदोषोभवति ॥ ४३ ॥ यदिहिपितापुत्रस्य*पुंसवनादिसंस्कारान् *कुर्य्या त्तदागुरुर्भवतियदुपनयनसंस्कारंकुर्य्या* त्तदाब्रह्मदाताभवेत् ॥ ४४ ॥तदेकस्मिन् पितरिगुरुत्वं च*पितृत्वंचब्रह्म दातृत्वं चयुग*पद्भवतिततोभेदोक्तिर्नस्यात् ॥ ४५ वक्ष्यते हात्रैवस्वयं* आचार्य्याणांमतंपिता *गौरवेणातिरि च्यते *उत पादकब्रह्मदात्रो*र्गरीयान् ब्रह्मदःपिता ॥ इति ॥ ४६ ॥ एकस्मिंस्त्रिधात्वेऽज्ञात् कार्य्य * कार्य्यवचनात

हिकाग्निं न*गृह्णीत्वा यान् जनयन्ति ॥६॥ तत्र ते ये ब्राह्मणक्षत्रिय*वैश्यास्ते यथाकालं* गर्भादाषोड़शवर्षादिपर्य्यन्तं*यथाविधि न संस्कृताः ॥७॥ स्वरवर्णाभ्यामदुष्टै* मन्त्रैर्यथोक्तानुष्ठानेन * निषेकादिसंस्कारपूर्व्वोपि नयनसंस्कार*हीना अतआषोड़शाब्दादित्यूर्द्धम् ॥८॥ सप्तदशादिषु वर्षेषु * सावित्रीपतिताः सावित्र्या ब्रह्म*चर्य्यव्रताधिकारहेतुभूतायाः*ग्रहणाच्युता भवन्ति ॥९॥ इत्यतो व्रात्या व्रतं नार्हन्तीति*ते चार्य्यैर्ब्राह्मणक्षत्रियवैश्यैः*विगर्हिता भवन्तीति ॥१०॥ विष्णुसंहितायामपि*चाषोड़शादित्यादिक * वचनद्वयलक्षणं कप्रसिद्धत्वात् ॥११॥ याज्ञवल्क्योक्तं तद्यथा * षोड़शाब्दन्तु विप्रस्य द्वाविंशं क्षत्रियस्य तु। विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ॥ १२ ॥ नाभिभाषितसावित्रीमत ऊर्द्ध्वं निवर्त्तयेत्। विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्याः सर्व्वधर्म्मबहिष्कृताः इति ॥१३॥ वक्ष्यते चात्र स्वयं हि* शूद्रेण तु समो ज्ञेयो यावद्वेदे न जायते इति ॥१४॥ असंस्कृता इति न प्रसज्यप्रति * षेधे नञ् पर्युदासोऽयं *संस्कृतादन्ये येते असंस्कृताः॥१५॥ ते तु त्रिधा यथोक्त ब्राह्मणादीनां* पुत्राः स्वरवर्णाभ्यामदुष्टैर्मन्त्रै*र्यथोक्तानुष्ठानेनोप*नीतादन्येऽनुपनीताः॥१६॥ ये स्वरवर्णान्यतरदुष्टैर्मन्त्रै*र्यथोक्तानुष्ठानेनोपनीता उप*नीताभासाः षोड़शाब्दादतीताः ॥१७॥ ये च ये च स्वरवर्णाभ्यामदुष्टैर्मन्त्रै* र्यथोक्तानुष्ठानव्यतिक्रमेणोप*नीता उपनीताभासाः*षोड़शवर्षादतीताः ॥१८॥ इति त्रिधा व्रात्या एते नापरे च*संस्कृतादन्ये व्याख्याता*द्विविधाः शूद्रवङ्गा वा*पन्नवर्णसङ्कराः ॥१९॥ द्विविधाश्च व्रात्यकुलोत्पन्ना वर्णा* सांकर्य्यदोषशूद्रभावापन्नाश्च*तत्र व्रात्यानां त्रयाणां*प्रायश्चित्तं व्रात्यस्तोमः ॥२०॥ व्यासयाज्ञवल्क्याभ्यामुक्तस्तत्र* व्याससंहितायां यथा ॥ २१ ॥ तस्याप्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः। वेदव्रतच्युतो व्रात्यः स व्रात्यस्तोममर्हतीति ॥ २२ ॥ याज्ञवल्क्यसंहितायाञ्च * आषोड़शाब्दाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात्। ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ २३ ॥ अत ऊर्द्ध्वं पतन्त्येते सर्व्वधर्म्मबहिष्कृताः। सावित्रीपतिता व्रात्या व्रात्यस्तोमादृतेक्रतोः इति ॥२४॥ अत्र तु संहितायां प्रायश्चित्तप्रकरणे वक्ष्यते च*सामान्यत एव यथा ॥ २५ ॥ येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् इति ॥ २६ ॥ येषां द्विजानामिति द्विजवर्णानां * न तूपनयनसंस्काराद्द्विजानां *ये ह्युपनयनसंस्कारेण द्विजा * स्तेषां यथाविधि गायत्र्यनुक्ता ॥ २७ ॥ यथाविधिगायत्र्यनुवचने* द्विजत्वं हि न सिद्ध्यति * तस्योपनयनसंस्कारस्यासिद्धेः ॥ २८ ॥ गायत्र्यनुवचने हि त्रिभिस्तु*पूर्व्वपूर्व्वपुरुषा इत्यादिना*प्रागुक्तास्ते ब्राह्मणक्षत्रियवैश्याः ॥२९॥ ते जनयन्ति यान् पुत्रान्*तेभ्यो यथाकालं स्वर*वर्णाभ्यामदुष्टैर्मन्त्रै *र्यथोक्तानुष्ठानेनैव*यथोक्ताचार्य्येण गायत्रीप्रदानं ॥३०॥ तद्विपर्य्यये गायत्र्यनुवचनं*त्रिविधानां व्रात्यानां भवति तांस्त्रीन् * कृच्छ्रांश्चारयित्वा पुन*र्यथावदुपनययेत् ॥३१॥ शूद्रवङ्गा वापन्नाः सांकर्य्यदोषा * न्विताश्च ते ये ब्राह्मणक्षत्रियवैश्या * वैवाहिकाग्निग्रहणे * ऽधिकारिणो भवन्त्यपि ॥३२॥ दारान् गृहीत्वाग्निं न गृह्णन्ति ते तु*निरग्नयः शूद्रसमानधर्म्मणः*स्वकर्म्मणाश्चाग्निहोत्रा*दीनां त्यक्तारो भवन्ति॥३३॥ ते शूद्रवङ्गा वापन्नास्त्यक्तस्वकर्म्माणो यांस्तु * पुत्रान् जनयन्ति ते पुत्राः शूद्रव *ङ्गावर्णसांकर्य्यदो*षान्विता भवन्तीत्यतः ॥३४॥ तेषां तद्दोषप्रशम*प्रायश्चित्तं न कारयित्वा यदि*यथाकालं स्वरवर्णादुष्टमन्त्रै ॥ ३५ ॥ र्यथोक्तानुष्ठानेनापि*गायत्र्यनूच्येत तथापि*यथाविधिगायत्र्यनु*वचनं न भवति तत्प्रायश्चित्ता*भावेऽधिकाराभावात् ॥३६॥ स्वरादिदुष्टमन्त्रैर्भ्रष्टो द्युपनये * त्तदापि यथाविधिगायत्र्यनु* वचनं न स्याद्दुष्टमन्त्रै * स्तदर्थानभिधानात् ॥ ३७ ॥

एवमयथोक्तानुष्ठाने नापि*स्वस्ववर्णोद्दिष्टमन्त्रैः*गायत्र्यनुवचनं न* यथाविधिगायत्र्यनुवचनं स्यात् ॥३८॥ तदुपनय नाभास*एवनतूपनयनं*ता स्त्रीन् कृच्छ्रांश्चारयित्वापुन* र्यथावदुपनाययेत् ॥ ३९ ॥ अपरे ये यथाकालं * यथोक्तविधानेन*स्वस्ववर्णोद्दिष्टमन्त्रै*रुपनीतावेदावरम्भं*कृत्वानवेदमधियते*नब्रह्मचर्यं चवन्ति॥५० ॥विप्लुत ब्रह्मचर्यास्ते* स्वतःसमावर्त्तदारान्* गृहीत्वागृहस्थाधर्मन्तेषां*शूद्रवत्सम्बन्धश्रमः ॥ ४१ ॥ वक्ष्यतेहि योऽनधीत्य द्विजोवेद*मन्यत्रकुरुते श्रमं । सजीवन्नेवशूद्रत्व*माशुगच्छतिसान्वयः । इति ॥४२॥ पराशरेणा प्युक्तंहि*अग्निकार्यात्परिभ्रष्टाःसन्ध्योपासनवर्जिताः । वेदश्चैवानधीयानाःसर्व्वेते वृषलाःस्मृताः ॥४३॥ तस्मा द्वृषलभीतेन ब्राह्मणेन विशेषतः । अध्येतव्योऽप्येकशाखा यदिसर्व्वान शक्यते इति ॥ ४४ ॥ वक्ष्यते चात्रस्वय मेव*स्वकर्म्मणाञ्च त्यागेनजायन्ते वर्णसङ्कराः ॥ इति ॥४६॥ इतिद्विविधाः शूद्रवद्भावापन्ना*वर्णसङ्कराश्च ब्रा ह्मणाद्युवाद्या*स्त्रयस्तेषां प्रायश्चित्त*मिदं कृच्छ्रत्रयमुक्तम् ॥ ४५ ॥ अथापरे द्विविधाः *समब्राह्मणसम*क्षत्रियसम वैश्याः ॥४७ ॥ तत्रैकविधायेषां पूर्व्वपूर्व्व*पुरुषायथाकाले स्वस्ववर्ण * इष्टैर्मन्त्रैरुपनीताभासाःस्युः ॥ ४८ ॥ नतत्प्रायश्चित्तं कृत्वापुन , र्यथावदुपनीता यथाकाले * देवद्वन्तिते व्रात्याएवज्ञेयाः ॥ ४८ ॥ यथावदुप नयना* भावेगायत्र्यावेदेनचब्राह्मणा*परित्यक्ता * स्तेषामापातत्त्रीन्कृच्छ्रां * श्चारयित्वायथावद * पनाययेदि त्यादिशेत् ५० तेयानुत्पन्नान्जनयाञ्चक्रुस्ते व्रात्यकुलोत्पन्नावर्णसङ्कराः*शूद्रवद्भावापन्नाश्च ५१ तद्दोषत्रयशान्त्या र्थं *प्रायश्चित्तं नैवकृत्वा*येऽनुपनीताभवन्ति*तदुपनयनासिद्धेः ५२ तेपिगायत्र्याब्राह्मणा*परित्यक्ताएषामपि* कृच्छ्र त्रयंप्रायश्चित्तमभिहितं ५३ इमान्तेचद्वन्द्वारः*वेदानीं सर्व्वेब्राह्मणा*क्षत्रियवैश्याःप्रायेण ५४ अथैवमपियेषां पूर्व्व पूर्व्व*पुरुषानैवोपनीता*स्तेचगायत्र्याब्राह्मणा*पतितत्यक्ताभवन्तीति ५५ तांस्त्रीन्कृच्छ्रांश्चारयित्वा*यथावदुपनाय येदितिचैषांद्विजानामिति*वचनानन्तरं वक्ष्यते ५५ प्रायश्चित्तंचिकीर्षन्तिविकर्म्मस्थास्तुयेद्विजाः। ब्रह्मणाचपरित्यक्ता स्तेषामप्येषएतदादिशेत्इति ५६ ईदृशाश्चेदानीं बहवोब्राह्मणा*क्षत्रियवैश्याभवन्ति*येषान्तुपितादयोप्यनुपनीता* स्तेषामापस्तम्भवचनं ॥ ५२ ॥यस्यपितापितामहा*वनुपनीतौस्यातां तस्य*संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यम् ॥५७ ॥ यस्यप्रपितामहादे*रपिनानुस्मर्य्यतउपनयनं* तस्यद्वादशवर्षाणि* त्रैविद्यकं ब्रह्मचर्य्यम् ॥ ५८ ॥ इत्यापस्तम्बवच ने*प्रपितामहादिवचना*द्यावतां पुरुषाणांनै*वोपनयनंभवति*तत्रयःप्रायश्चित्तंकुर्य्यात्*सउपनयनमर्हति ।५९। एतदविद्वान्कश्चित्*प्रमादोस्वयंश्लोकं*रचयित्वानारद * वचनमिदमित्याह ॥ ६० ॥ आसप्तमात्पुरुषान्नोपनीता यदिद्विजाः । प्रायश्चित्तशतेनापिनतेषां निष्कृतिर्भवेत् इति ॥ ६१ ॥ एतद्दनार्षं यत्आसप्तमपुरुषादेषामुपनयनं नास्ति*तेषुकिं द्विजादितिप्रयोगःस्यात् ॥ ६२ ॥ नचतेषां ब्राह्मणत्वादपायःस्या*द्दासेनाब्राह्मणलक्षणे * समब्रा ह्मणइत्युक्तेः ॥ ६४ ॥ वक्ष्यतेचात्रस्वयं मनुः * तपोबीजप्रभावैस्तुतेगच्छन्तियुगेयुगे । उत्कर्षञ्चापकर्षञ्चमनुष्येष्विह जन्मतः । इति। ६४ ॥ द्विजोवृजोत्पन्नवाद्द्विजाइतिचे * त्तत्रापिप्रायश्चित्तशतेनापि*नतेषां निष्कृतिर्भवे*दितिनो पपद्यते ॥६५॥ नह्येदमनुपनयनजपापं * पञ्चमहापातकेषूक्तं नवोप*पातकेषु नचक्षुद्रपातकेषु च ॥ ६६ ॥ अनादिष्ट पापमेत*दनादिष्टपापप्रायश्चित्तमुक्त*मत्रियाज्ञवल्काभ्यांचान्द्रयणं यथा ॥ ६४ ॥ अनादिष्टेषुपापेषु * चान्द्रायण मथोदित*मित्यात्रियाज्ञवल्केनापियथा* अनादिष्टेषुपापेषुशुद्धिश्चान्द्रायणेनत । इति ॥ ६८ ॥ सम्वर्त्तेनाप्युक्तं

यथा*चान्द्रायणन्तु सर्व्वेषां*पापानां पावनं परम् । कृत्वा शुद्धिमवाप्नोति परमं स्थानमेव च ॥ ७० ॥ इति । विष्णुसंहितायामपि* येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥ ७१ ॥ प्रायश्चित्तं चिकीर्षन्ति विकर्मस्थास्तु ये द्विजाः । ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् ॥ ७२ ॥ इत्यादुक्त्वा पुनरुक्तं*अनुक्तानिःस्मृतीनां च पापानामपनुत्तये । शक्तिं चावेक्ष्य पापञ्च प्रायश्चित्तं प्रकल्पयेत् । इति ॥ ७३ ॥ विष्णुना तीर्थान्तरगणं*सर्व्वपापेषु पराकः*इत्यकश्चित् प्रमादोऽस्ववुद्धाह ॥ ६ ॥ एतेयेऽनुपनीता*बहुपुरुषपर्यन्तं*तेषां प्रायश्चित्तं कर्त्तुमर्हन्ति न तु*कृत्वापि प्रायश्चित्तमुपनयनमर्हन्ति ॥ ५ ॥ तदर्यान्तिकं यदर्थं*प्रायश्चित्तं करोति यः सप्रायश्चित्तं कृत्वाकिं*तन्न कर्त्तुमर्हति*यथा चण्डायश्चित्तं स्यात् ॥ ७५ ॥ व्रात्यानां कृतव्रात्यस्तोमादिप्रायश्चिजानामुपनयनं नास्तीत्याचार्य्यैः तावत्कृच्छ्रान् यथावदुपनाययेत् *इतिमनुक्तं वाच्यं स्यात् ॥ ६६ ॥ सन्ध्योपासनकालातीये* प्रायश्चित्तं कृत्वाकिं न*तत्सन्ध्योपासनां कर्त्तुमर्हतीति ॥ ७० ॥ ० ॥ ३६ ॥ ० ॥ व्रात्यत्वे दोषमाह नैतैरित्यादिक*मेकश्लोकं ॥ १ ॥ ४० ॥

**नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् । ब्राह्मान्यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह ।४०।**

एतैर्व्रात्यैर्ब्राह्मणादिभिरपूतैः सह ब्राह्मणः*आपद्यपि कर्हिचिद्विधिवद्वा चाध्यापनयाजनादीन्यौनानपि*ब्राह्मान्सम्बन्धान्नाचरेत् ॥ १ ॥ * ॥ व्रात्यानामुपनयनाय*प्रायश्चित्तं प्रायश्चित्त*प्रकरणे दर्शयिष्यते ॥ २ ॥ ० ॥ ॥ ४० ॥ अथास्मिन्नुपनयने*वर्णभेदेनाजिनादि*विधिमाह कार्ष्णेत्यादि ॥ १ ॥ ० ॥ ४१ ॥ ० ॥

**कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च । ४१ ।**

ब्राह्मणक्षत्रियवैश्याः* ब्रह्मचारिण आनुपूर्व्येण क्रमात्*कृष्णमृगरुरुमृग*चर्म्मच्छागचर्म्माणि वसीरंस्तथा । १ । शणसूत्रवस्त्रक्षौम*सूत्रवस्त्राविकसूत्र*वस्त्राणि च वसीरन् परिदधुः ॥ २ ॥ अत्र रुरुश्चित्रमृगः *गौतमेन त्वेवमेव* चर्म्माणि वस्त्राणि चोक्ता*पुनः सामान्यतोऽन्यदुक्तं यथा ॥ ३ ॥ सर्व्वेषां कार्पासक्षौमाविकं तं वासः * काषायमप्येके वार्क्षं *ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोरिति ॥ ४ ॥ विष्णुनाप्युक्तानि * मार्गवैयाघ्रवास्तानि चर्म्माणि ब्रह्मचारिणः*मिति ब्राह्मणक्षत्रियवैश्यानां ५ विष्णुना पुनरुक्तानि*कार्पासशणाविकानुपवीतानि वासांसि च इति ॥ ६ ॥ ० ॥ ४१ ॥ अथैषामुपनयने*मेखलां क्रमेणाह*मौञ्जीत्रिवृदित्यादि ॥ १ ॥ ० ॥ ४२ ॥ ० ॥

**मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला । क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ४२**

विप्रस्य मेखला कटिसूत्रं मौञ्जीमुञ्जकृता*त्रिवृत्समा समत्रिगुणा*श्लक्ष्णा चाकर्कशा कार्या ॥ १ ॥ क्षत्रियस्य तु मेखला*मौर्वी मूर्वासूत्रकृता*समा त्रिवृज्ज्यानिकवत् कार्या ॥ २ ॥ वैश्यस्य मेखला शण*तान्तवी समा त्रिवृदेवेति ज्ञेयं*त्रिगुणा प्रदक्षिणा मेखला इति*सामान्यात् प्रचेतोवचनात् ॥ ३ ॥ ० ॥ ४२ ॥ ० मुञ्जादीनामभावे मेखला*विधानं प्रकारमाह*मुञ्जालाभ इत्यादि ॥ १ ॥ ४ ॥ ४३ ॥ ० ॥

**ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः । अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥४७॥**

ऋजवइत्यादि ॥ ४७ ॥ ते सर्व्वे ब्राह्मणादीनां दण्डाः सौम्य * दर्शना अव्रणा ऋजवः सत्वचो * ऽनग्निदूषिता नराणां * अनुद्वेगकराः कार्य्याः स्युः ॥१॥ विष्णुना चोक्ताः दण्डाः * केशान्त ललाट नासादेशतुल्या * इति न बलक्षणक्रमात् ॥२ शङ्खेनैव हि दण्डास्तु * कर्ण * ललाटैस्तु तुल्याः प्रोक्ताः क्रमेन तु । अवक्राः सत्वचः सर्व्वे नाग्निदग्धास्तथैव च । इति ॥३ गौतमेनोक्तास्तु दण्डा * अव्रणा अवक्राः सवल्कला मूर्द्ध * ललाटनासाग्रप्रमाणाः । इति ॥४॥४७॥ अथैषां ब्रह्मचारिभि * र्नित्यधार्य्यत्वमाह * प्रतिगृह्येत्यादिश्लोकम् ॥१॥४८॥

**प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥४८**

इत्थं वक्तेषु दण्डे * प्सितं दण्डं प्रतिगृह्य * गायत्र्या भास्करमुप * स्थायाग्निं चतसृषु * दिक्षु प्रदक्षिणं परीत्य * यथाविधि भैक्षं चरेत् ॥४८॥ विधिमाह भवदित्यादि * ॥४९॥

**भवत्पूर्व्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ४९ ॥**

उपनीतो द्विजोत्तमो * ब्राह्मणो भवत्पूर्व्वं भैक्षं चरेत् * भवति भिक्षां देहीति ॥ १ ॥ भवन्मध्यन्तु राजन्यो * भैक्षं चरेदिति भिक्षां * भवति देहीति वैश्यस्तु * भवदुत्तरं भैक्षं चरे * दिति भिक्षां देहि भव * तीति सर्व्वत्रोपनीत इति योजनम् ॥ २॥४९ ॥ ततोपनयने निष्पन्ने प्रथमं * या भैक्षं भिक्षेत तामाह * मातरं वेत्यादिना ॥ १ ॥ ५० ॥

**मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् । भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥५०**

प्रथमं मातरं भिक्षां * भिक्षेत तदभावे तु * निजां स्वसारं वा तद * भावे मातुर्निजां भगिनीं भिक्षेत ॥ २ ॥ तदभावे तु याचनारी * नैनं ब्रह्मचारिणं भिक्षां प्रदातु * मवज्ञाय प्रत्याख्यात * कुर्य्यात्तां प्रथमं भिक्षेत ॥३ ॥ विष्णुना चोक्तं भिक्षावाक्यं यथा * भवदाद्यं भवन्मध्यं * भवदन्तं भैक्षचरणमिति ॥४॥ याज्ञवल्क्येन चोक्तं * दण्डाजिनोपवीतानि * मेखलाञ्चैव धारयेत् । ब्राह्मणेषु चरेद्भैक्ष * मनिन्द्येष्वात्मवृत्तये ॥५॥ आदिमध्यावसानेषु भवच्छब्दोपलक्षिता ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥६॥ शङ्खेनापरमेवोक्तं * आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् । भैक्षस्याचरणं प्रोक्तं वर्णानामनुपूर्व्वशः ॥ ७ ॥ भैक्षचर्य्यान्तथा कुर्य्याद्ब्राह्मणेषु यथाविधि । गुरुणा चाभ्यनुज्ञातः प्राश्नीयात् प्राङ्मुखः शुचिः ॥ ८ ॥ व्यासेन चोक्तं स्वसंहितायां यथा * ईषच्चलितमध्याह्ने ऽनुज्ञातो गुरुणा स्वयम् । अलोलुपश्चरेद्भैक्षं व्रतिषूत्तमवृत्तिषु । सद्यो भिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् । कृतमाध्याह्निकोऽश्नीयादनुज्ञातो यथाविधि । नाद्यादेकान्नमुच्छिष्टं भुक्त्वाचाचामितामियात् । नान्यभिक्षितमादद्यादापन्नो द्रविणादिकम् । अनिन्द्यामन्त्रितः श्राद्धे पैत्र्येऽद्याद्गुरुचोदितः । एकान्नमप्यविरोधे व्रतानां प्रथमाश्रमी । इति ॥ हारीतेन स्वसंहितायामुक्तं * अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम् । धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः । सायं प्रातश्चरेद्भैक्षं भोज्यार्थं संयतेन्द्रियः । आचम्य प्रयतो नित्यं न कुर्य्याद्दन्तधावनम् इति ॥ ५० ॥ ० ॥

**समाहृत्य तु तद्भैक्षं यावदन्नममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥५१॥**

समाहृत्येत्यादि ५१ यावदन्नं स्वस्य च तृप्तियोग्यं *तावत् आहृत्य अमायया *कलं विना तद्भैक्षं तु *गुरवे निवेद्य ज्ञापयित्वा आचम्य *शुचिः प्राङ्मुखः सन्नश्नीयादिति ॥ १ ० ॥ ५१ ॥ ० ॥ नन्वथ प्रादिङ्मुखः किं न भुङ्क्ते *तत्राह आयुष्यमित्यादि ॥ १ ॥ ० ॥ ५२ ॥ ०

**आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः । श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः ॥ ५२ ॥**

आयुष्यमित्यादिपदं *क्रियाविशेषणं द्रवा *विशेषणं वाऽऽकृतं सत्यम् ॥ १ ॥ ० ॥ ५२ ॥ यथा भुङ्क्ते *तदाहोप *स्पृशेत्यादि *श्लोकमेकम् ॥ ॥ १ ॥ ० ५३ ॥

**उपस्पृश्य द्विजो नित्यमन्नमद्यात् समाहितः । भुक्त्वा चोपस्पृशेत् सम्यगद्भिः खानि च संस्पृशेत् । ५३ ।**

द्विज इति ब्रह्मचारी *स्नातो वानप्रस्थो यति *राचम्य समाहितश्च * नित्यमन्नमद्यादिय ॥ १ ॥ भुक्त्वा चान्नमद्भिः समागाचम्य *खानि प्राणचक्षुर्नासा *छिद्राणि अद्भिः स्पृशेदिति ॥ २ ॥ ० ॥ ५३ ॥ ० ॥

**पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् । दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥ ५४ ॥**

पूजयेदित्यादि ॥ ५४ ॥ अशनमेतदन्नं तु *द्विजो दृष्ट्वा न कुत्सयन् *पूजयेत् सत्कारं कुर्यात् *हृष्येत् प्रसीदेत् सर्व्वशः *प्रतिनन्देन्नित्यमद्याच्च ॥ १ ॥ ० ॥ ५४ ॥ ० ॥ तथाकृतान्नकर्म्मानयाह *पूजितमि *त्यादि श्लोकम् १ । ० ।५५॥

**पूजितं ह्यशनं नित्यं बलमूर्ज्जं च यच्छति । अपूजितन्तु तद्भुक्तमुभयं नाशयेदिदम् ॥ ५५ ॥**

ऊर्ज्जं तेजः *उभयं बल *मूर्ज्जं च *तेऽन्तद्द्वयं ॥ १ ॥ ० ॥ ५५ ॥ नोच्छिष्टमित्यादि ॥ ५६ ॥

**नोच्छिष्टं कस्यचिद्दद्यान्नाद्याच्चैव तथान्तरा । न चैवात्यशनं कुर्यान्न चोच्छिष्टः क्वचिद्व्रजेत् । ५६ ।**

द्विज उच्छिष्टं स्वभुक्तान्नशेषं *न कस्यचिद्दद्यान्न च *द्वयोर्भोजनयोरन्तरा *मध्ये पुनरन्नमद्यात् ॥ १ ॥ एतेन ब्रह्मचारिणा *मपि द्विरशनं मनुनाख्यापितम् *न चातिमात्रमश्नीया *दुच्छिष्टः सन्न क्वचिद्व्रजेत् ॥ २ ॥ ० ॥ ५६ ॥ ० ॥

**अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् । अपुण्यं लोकविद्विष्टं तस्मात्तत् परिवर्ज्जयेत् ॥५७॥**

अतिभोजने दोषमाहानारोग्य *मित्यादि श्लोकः स्पष्टार्थः ॥ १ ॥ ० ॥ ५७ ॥ ० अथोपस्पृशेद्यथा तथा पुनराह *ब्राह्मेण विप्रस्तीर्थेनेत्यादि ॥ १ ॥ ० ॥ ५८ ॥ ० ॥

**ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत्। कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥५८॥**

वक्ष्यमाणेन ब्राह्मेण तीर्थेन वा*काऽयेन तीर्थेन वा*वा त्रैदशिकेन दैवेन तीर्थेन*विप्रादिर्नित्यमुपस्पृशेत् ॥ १ ॥ ॥ ० ॥ पित्र्येण तीर्थेन वक्ष्यमाणेन*विप्रादिः कदाचिदपि*नोपस्पृशेन्नाचामेदिति ॥२॥० ५८ ॥ ० ॥ अथ तद्ब्राह्मादितीर्थमुच्यते, अङ्गुष्ठमूलस्येत्यादि १ ॥ ० ॥ ५९ ॥

**अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते। कायमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरधः॥ ५९ ॥**

अङ्गुष्ठाङ्गुलिमूलस्य तले ब्राह्मं तीर्थं प्राहुः*कनिष्ठाङ्गुलिमूले तु *कायं प्राजापत्यं तीर्थम् ॥ १॥ चतसृणामङ्गुलीना*मग्रे दैवं तीर्थं तयोः*कायदैवयोरधस्तात्*कनिष्ठाङ्गुली*मूलादधस्तर्जनीमूल * पर्यन्तं करतलं पित्र्यं ॥ २ ॥ सामान्येनोक्तस्य विशेषेणाग्रहो * विष्णुयाज्ञवल्क्यवचन * दर्शनादिति योयथा ॥ ३ ॥ तत्र विष्णुनाभिहित*मथ द्विजातीनां कनीनिकामूले*प्राजापत्यं नाम तीर्थ*मङ्गुष्ठमूले ब्राह्मम् ॥ ४ ॥ अङ्गुल्यग्रे दैवं* तर्जनीमूले पित्र्य*मिति याज्ञवल्क्ये*नाप्येवमेवोक्तं ॥५॥ कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् इति ॥ ६ ॥ शङ्खेनाप्युक्तमेवञ्च * कायं कनिष्ठिकामूले *तीर्थमुक्तं करस्य तु ॥ अङ्गुष्ठमूले च तथा*ब्राह्मं तीर्थं प्रकीर्त्तितम् ॥ ७ ॥ अङ्गुल्यग्रे स्मृतं दैवं पित्र्यं तर्जनिमूलकम् ॥ ७ ॥ ० ॥ ० ॥ ५९ ॥ ० ॥ अथाचमनक्रममुच्यते यथा*त्रिराचामेदित्यादि ॥ ६० ॥

**त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात्ततो मुखम्। खानि चैव स्पृशेदद्भिरात्मानं शिर एव च ६०**

ब्राह्मेण कायेन दैवेन वा * तीर्थेन ब्राह्मणः क्षत्रियो वा * वैश्यो वा प्राङ्मुख उदङ्मुखो वा समासीनः ॥ १ ॥ पादौ प्रक्षाल्य पाणी च * मणिबन्धनात् प्रक्षाल्य * पूर्व्वं वक्ष्यमाणविधायपस्त्रिरा * चामेत् हृद्गताभिः* यथा स्यात्तथा त्रिः पिबेत् ॥ २ ॥ ततो मुखमङ्गुष्ठेन * द्विः प्रमृज्यात्ततः परं, मद्भिः खानीन्द्रियाणि संस्पृशेत् ॥ ३ ॥ संहताभिस्तर्जनी * मध्यमानामिकाभि * स्त्र्यङ्गुलीभिर्मुखस्य * च्छिद्रं यद्वतः स्पृशेत् ॥ ४ ॥ अङ्गुष्ठतर्जनीभ्यां संहताभ्यान्तु * नासिकाच्छिद्रे द्वे स्पृशेत् * अङ्गुष्ठानामिकाभ्यां द्वे * चक्षुश्छिद्रे श्रोत्रच्छिद्रे * पुनःपुनश्च संस्पृशेत् ॥५॥ अङ्गुष्ठकनिष्ठाभ्यान्तु*नाभिच्छिद्रमात्मानमात्मस्थानं *हृदयं करस्य तलेन संस्पृशेच्छिरश्च सर्व्वाङ्गुलिभिः ॥६॥ चकारेणानुक्तं बाहुद्वयमपि*सर्व्वाङ्गुलीनामग्रेण* संस्पृशेत् कात्यायनोक्ति*दर्शनात्तद्यथोच्यते ॥७॥ त्रिः प्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत् ॥ आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोंऽसकम् ॥ ८ ॥ संहताभिस्त्र्यङ्गुलीभिरास्यमेवमुपस्पृशेत्। अङ्गुष्ठेन प्रदेशिन्या घ्राणञ्चैवमुपस्पृशेत् ॥ ९ ॥ अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रं पुनःपुनः। कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै ॥ १० ॥ सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न तूच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः ॥ ११ ॥ इति ॥ हारीतेनाप्येवमेवोक्तं यथा*दक्षिणन्तु करं कृत्वा* * गोकर्णाकृतिवत्पुनः। त्रिः पिबेदीक्षितं तोय* मास्यं द्विः परिमार्जयेत्

॥ १२ ॥ ०॥ पादौ शिरस्ततोऽभ्युक्ष्य त्रिभिरासन्यमुपस्पृशेत्। अङ्गुष्ठानामिकाभ्यां तु नासिके च ततः श्रुती ॥ १३ ॥ ०॥ ततो हृदयमूर्द्धि च भिशाग्रतोऽसकौ ॥ अनेन विधिनाचम्य ब्राह्मणः शुद्धमानसः ॥ इत्यादि ॥ १४॥ एवमेव शङ्खयाज्ञवल्क्यादिभिः*सामान्येनोक्तं विशेषेणाव्याख्येय*तत्तद्यथोक्तं दर्श्यते १५॥० ब्राह्मेणैव तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः। द्विः प्रमृज्य मुखं पश्चादद्भिः खं समुपस्पृशेत् इति शङ्खवचनं १६। ०।विष्णुनाप्येवमेवोक्तं* ब्राह्मेण तीर्थेन त्रिराचामेन्मुखं*द्विः प्रमृज्यात् खानि चाद्भि*र्मूर्द्धानं हृदयं स्पृशेत्। १७ । ०। इति याज्ञवल्क्येनाभिहितं*त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्। इति। १८ । ०।०। ६०। अथाचमनजलं यथा स्यात्तथा*चाह्यानुष्णाभिरित्यादि। १।०। ६१।०।

**अनुष्णाभिरफेनाभिरद्भिस्तीर्थेन धर्म्मवित्। शौचेप्सुः सर्व्वदाचामेदेकान्ते प्रागुदङ्मुखः ॥ ६१॥**

धर्म्मविद्द्विजः शौचेप्सुः*प्राङ्मुख उदङ्मुखो वा*एकान्ते वसं स्तीर्थेन। १। ब्राह्मेणकायेन दैवेन वाप्यद्भि*रनुष्णाभि*रफेनाभिः*सर्व्वदा खल्वाचामेत्। २। विष्णुनाऽनष्णाभिरद्भिरित्युक्तं * तेनातपोष्णा अपोन*प्रतिषिद्धास्तेतद्यथा। ३। अनष्णाभिरफेनिलाभि*रशूद्रैककराजिताभि* रक्षाराभिरद्भिः। १। शुचौदेशे त्वासीनोऽन्तर्जानुः प्रा*ङ्मुख उदङ्मुखो वा*तन्मनाः सुमनाश्चाचामेत्। इति। याज्ञवल्क्योक्तदर्शना*द्विफेन पदेनबु*बुदस्यापि ग्रहणम्। ३। तद्यथा। अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः। इति। ०। ६१। ०। आचमने प्रवृत्ता*द्विजा यावन्मिता अपः*पिबेयुस्तदाह हृद्गाभिरित्यादि। १। ०। ६२। ०।

**हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः। वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः। ६२।**

विप्रो निरुक्ताभिरद्भिः*पीताभिर्हृद्गाभिः पूयते भूमिपः*कण्ठगाभिर्वैश्यः प्राशिताभिस्तालु*गाभिः पूयते विशुद्धः। १। शूद्रो जिह्वौष्ठस्पृष्टाभि*रद्भिः पूयते स्त्री च सर्व्वा* विष्णुवचनदर्शनात्। २।। तद्यथा। हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः। शुद्धेरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः। इति। ३। वचनमिदं याज्ञवल्क्येनाप्युक्तं*शङ्खेनाभिहितं यथा। ४ ।हृद्गाभिः पूयते विप्रः*कण्ठगाभिस्तु भूमिपः। तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः। इति। अद्भिरिति पूर्व्वतोऽनुवर्त्तते ॥ ४ ॥ ०॥ ६२ ० ॥

**उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः। सव्ये प्राचीन आवीती निवीती कण्ठलम्बने ॥ ६३॥**

द्विजो दक्षिणे पाणा*वुद्धृते सत्युपवीतं*वामस्कन्धे नाभौ च य*स्तिष्ठति तदुपवीत* मुच्यते तद्वानुपवीतीत्युच्यते ॥१॥ वामे पाणावुद्धृते सति परीतं प्राचीनावीतमुच्यते*तद्वान् प्राचीनावीतीत्युक्तः ॥ २ ॥ मालावत्कण्ठलम्बने*

तूपवीतं निवीतमुच्यते तद्वान् * निवीतीत्युच्यते द्विजः ॥२॥६३॥ अथमेखलादीनां विनाशे यथा * पुनर्ग्रहणं कर्त्तव्यं तदाह मेखलेत्यादि ॥ ६४॥

**मेखलामजिनं दण्डमुपवीतं कमण्डलुम् । अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवित् ॥ ६४ ॥**

मेखलामित्यादि प्रत्येकं * पदं व्यस्तं मेखलादि * यद्विनश्यति तत्पुनः * एवं मन्त्रविन्मन्त्रेण * गृह्णीयात् समस्तानि च विनष्टानि ॥१॥६४॥ अथैवमुपनीतस्य * व्रतादिष्टसारब्धवेदाध्ययनस्य * ब्राह्मणस्य क्षत्रियस्य वैश्यस्य च * प्राक्समावर्त्तनादेव ॥ १ ॥ ब्रह्मचर्याश्रमान्तर्गतसंस्कार * विशेषस्य केशान्तस्य * कालविशेष उच्यते * केशान्तः षोडश इत्यादि ॥६५॥

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते । राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ॥६५॥**

ब्राह्मणस्योपनीतस्य क्रियमाण * व्रतस्यारब्धवेदाध्ययनस्य * जातोत्तरं षोड़शवर्षे वयसि * केशान्तो नाम संस्कारो विधीयते ॥ १ ॥ न गर्भात् षोड़शे वर्षे * तस्योपनयनकालत्वेनोक्ते * रेवं क्षत्रियवैश्ययोः ॥ २ ॥ कश्चिद्व्याचष्टे बौधायन वचनात् * गर्भात् षोड़शादिष्विति * तद्वचनमदृष्ट्वैवेतदाह ॥ ३ ॥ यस्माद्धि षोड़शादिषु * भवत्युपनयनं तस्य कदाचित् * केशान्त इत्यनुपपत्तेस्तदसत् ॥४॥ द्व्यधिके द्वाविंशे चतुर्विंशे वर्षे * वैश्यस्य केशान्तः कार्य्यः ॥ ४ ॥ ॥ ६५ ॥ ब्राह्मण क्षत्रियवैश्यानां पुंसां * गर्भाधानादि संस्कारा * उक्ताः स्त्रीणां संस्कारा * नाहामन्त्रिकान्वित्यादि ॥ ६६॥

**अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः । संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम् ॥६६॥**

प्रकरणाद् ब्राह्मण क्षत्रियवैश्यानामेतत् * स्त्रीणां शरीरस्य संस्कारार्थमियम् * मावृत्पुंसामुपनय * नान्तानां या न पूर्व्वोक्ता १ अशेषतः शेषमपूपनयनं * विहायान्यज्जातकर्म्मादि चूड़ान्ता क्रिया * यथाकालं यथाक्रमं * समन्त्रिका तु कार्य्या स्यात् ॥२॥ यस्त्वेवमर्थमशक्त्वा व्याचष्टे * इयमावृदयं जात * कर्म्मादिक्रियाकलापः * समग्र इति तदसाधु * व्यासादि वचनदर्शनात् ॥३॥ तद्यथा । नवैताः कर्णवेधान्ता मन्त्रवर्ज्जं क्रियाः स्त्रियाः । विवाहो मन्त्रतस्तस्याः शूद्रस्या मन्त्रतो दश ॥ इति व्यासः ॥ ४ ॥ याज्ञवल्क्येनचोक्तं गर्भाधान * मृतावित्यादाभिधाय * चूड़ाकार्य्या यथाकुलम ॥ एवमेनः शमं याति बीजगर्भसमुद्भवम् । तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः । इति ॥ २ ॥ विष्णुना प्युक्तं गर्भस्य स्पष्टता * ज्ञाने निषिक्त कर्म्मेत्यादि ॥१॥ तृतीयेऽब्दे चूड़ाकरण * मेताएव क्रियाः स्त्रीणाममन्त्रिका * स्तासां समन्त्रको विवाहः । इति ॥२॥६६॥ ननु तर्हि द्विजस्त्रीणां * मुपनयनविधानाभावात् कथं * द्विजत्वं भवतीत्यत * आह वैवाहिक इत्यादि ॥६७॥

**वैवाहिकोविधिःस्त्रीणां संस्कारोवैदिकःस्मृतः।पतिसेवागुरौवासोगृहार्थोऽग्निपरिक्रिया ६७**

ब्राह्मणक्षत्रियवैश्यानां स्त्रीणां *वैवाहिकोविधिर्वैदिकोमन्त्रेण* संस्कारोद्वितीयजन्मस्मृतम्*पुंसामुपनयनवत् ॥ १ ॥ यथापुंसामुपनीतानां गुरु*कुले सावित्र्यां द्वितीयं जन्मतथा * स्त्रीणां विवाहाद् भर्तृकुले जन्म ॥ २ ॥ यथापुंसां गुरुसेवा*तथास्त्रीणां पतिसेवा*यथापुंसां गुरौवास*स्तथास्त्रीणां गुरौपत्यौ ॥३॥ यथापुंसामध्ययना*र्थस्तथास्त्रीणां गृहार्थो*यथापुंसामग्निचर्य्या * तथाविवाहाग्निपरिक्रियास्त्रीणाम् * स्त्रियोऽप्येवं विवाहाद्द्विजाभवन्ति ॥४॥ इतोऽयमनिष्टां साब्राह्मणक्षत्रिय*वैश्यस्त्रीणां शूद्रावद्भावं वदन्तः*शूद्रास्वतस्त्रीगर्भजातानांपारम*वादिवज्ञावस्थासन्नोद्धान्ते ॥ ५ ॥ ६७ ॥ एवमुक्तमिदानीमुपसंहरति ॥ ६८ ॥

**एषप्रोक्तोद्विजातीनामौपनायनिकोविधिः । उत्पत्तिव्यञ्जकःपुण्यःकर्म्मयोगंनिबोधत॥६८॥**

द्विजातीनामेषऔपनायनिकः*पुंसामुपनयनविधिसहितः*स्त्रीणांवैदिकःसंस्कारो*वैवाहिकोविधिःप्रोक्तः॥१ सखलुतेषांद्विजातीनां*पुण्यउत्पत्ति*व्यञ्जकःप्रोक्तः॥२॥अत्रेदंजिज्ञास्यंकिन्नु*खल्वयमेषद्विजातीनांस्त्रीणां*वैवाहिकोवैदिकोविधिः*पुंसामौपनायनिकोविधिःप्रोक्तः ॥३॥ सकथंतेषामुत्पत्ति*व्यञ्जकउपपद्यते*कार्य्याणांकात्पत्तिःसम*वायिकारणसमवायः ॥४॥ यानिविक्रियमाणानि*यत्कार्यत्वमापद्यन्ते*तानितत्कार्यस्यसम *वायिकारणानिभवन्ति ॥५॥ तद्यथा ॥ यद्दहम्प्रेतापरलोकंगत्वा*ततभोगंभुक्त्वापुनः*कर्म्मवशादिहलोके॥६॥पुंसःस्त्रीसंयोगे *रेतःप्रच्युतंगर्भाशयगत*मार्त्तवसंयुक्तमभवति ॥७॥ सतदार्त्तवरेतोऽन्तः*सन्निविष्टोमातुराहार*जातरसेनप्रपुष्टः । ८ । क्रमेणतदन्नमय *शरीरवानेवजायते*इत्येवंजन्मभवति ॥९॥ नचतथोपनीतोजायते नवा*स्त्रीचोढातथाजाताजायते कथ* मुत्पत्तिव्यञ्जकौविवाहोपनयौ ॥ १० ॥ ब्राह्मणादिजातयोत्पत्तिव्यञ्जकोसातांमन्त्रामन्त्राभ्यांपुंस्त्रियो * जातकर्म्मादिभिर्द्विज * सामान्यातउत्पत्तिः । ११ । अशौचान्तदिनेनाम * करणेन ब्राह्मणादि * विशेषत उत्पत्तिश्च * व्यज्यते व्यर्थमनेनतद्वचनम् ॥ १२ ॥ इति ॥ सत्यमेतदेवमेव * प्रथमंजन्मतथैव*जातस्यपुंसःपुनर्वेदेजन्म*चोपनयनात्स्त्रियास्तु* मन्त्रेणविवाहाद्भवति ॥ १३ ॥ नह्यसदुत्पद्यते *नचसद्विनश्यति*सतोह्यवस्थान्तर*प्राप्तिश्चजन्मोच्यते ॥१४॥ भावःखलु * प्रतिक्षण * मुत्पद्यते *निरुध्यते च ॥१५॥ तत्रप्रतिक्षणमुत्पत्तौकारण*मस्तिमनिरोधेहेतु* रस्तीतराङ्कःसर्व्वप्रत्ययः ॥१६॥ तद्यथा । नितरामत्राकारसायाताद्ये *कारणंनोपलभ्यते *तथाभावानांप्रतिक्षणंनिरोधे *कारणंनोपलभ्यते ॥१७॥ प्रतिक्षणमुत्पत्तौतु*बालानांपोषकमाहाररसादि*कारणमुपलभ्यते ॥१८॥ यदेषबालोगर्भेपि*मातुराहारजरसेनाविरतं *पोष्यमाणःक्रमात्सर्व्वाङ्गसम्पूर्णो*यथाकालमजायत ॥१९॥ सोऽयंजातोबालोयद*भ्यवहरतितदाहार*रसेन युक्तानितरां*तच्छरीरारम्भकाणि*द्रव्यगुणकर्म्माणितु*समवायिकारणानि ॥ २० ॥ तत्रद्रव्येपुगुणकर्म्मभिःपर*

स्वरं संयुक्ताविभज्य * पुनःपुनरावर्त्तमानेषु तत्स्थ* गुणकर्म्माणि चावर्त्तन्ते ॥२१॥ आवर्त्तमानैस्तै द्रव्य*गुण
कर्म्मभिर्निताग स्वभावै * र्दृश्योत्तरोत्तराव *स्थायामारभमाणाया ॥२२॥ द्रव्याणि सजातीयं द्रव्यान्तर*
मारभन्ते गुणा अपि *सजातीयं गुणान्तरं *कर्म्माणि तु सजातीय* विजातीयं कर्म्मान्तरम् ॥ २३ ॥ इत्येवं तेषां
समवायि*कारणानां तत्तत्*कार्य्ये समवायात् सर्व्वा*णि कीकरोतिय ऽसम* वायःसउत्पत्तिर्जन्म ॥२४॥ एवम्
पौत्तरोत्तरावस्थोत्पत्तौ*पूर्व्व पूर्व्वावस्थास्वयमकारणं *प्रतिक्षणं निरुध्यते *इत्याहक्षणात्ये यः ॥२५॥ इत्येवं प्रति
क्षणोत्पत्तिभङ्ग*प्रवन्धोदानन्त्याज्जन्मनांशास्त्रे*ऽस्मिन्व्यवहारप्राप्त्यप्रात्तीश्रित्य ॥ २६ ॥ द्वे जन्मनीअभिहिते भ
वतः*प्रागुपनयनात्पुंसां *द्विजानामप्राप्तत्व*हारत्वादेकं जन्मोक्तं *स्त्रीणां प्राग्विवाहादेकम् ।२७॥ उपनयनात्तु
पुंसां *द्वितीयं जन्मस्त्रीणान्तु* मन्त्रेणविवाहादेव ॥२८॥ शेषाणां जन्मनामत्रै * वान्तर्भावादुच्यते ऽत्र* स्वय
मेवस्वायम्भुवः ॥२९॥ मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजानां श्रुतिचोदनात् ।
इति ॥३०॥ व्यासेनचोक्तं स्वसंहितायां यथा* एवं द्विजातिमापन्नोविमुक्तोवान्यदोषतः । श्रुतिस्मृतिपुराणानां
भवेदध्ययनक्षमः ॥ इति ॥३१॥ शङ्खेनाप्युक्तं तद्यथा*ब्राह्मणाःक्षत्रियावैश्या*स्त्रयोवर्णाद्विजातयः । तेषां
जन्मद्वितीयन्तु विज्ञेयं मौञ्जिबन्धनं ॥ ३२ ॥ आचार्य्यस्तुपिताप्रोक्तःसावित्रीजननीतथा । ब्रह्मक्षत्रविशाञ्चैव
मौञ्जीबन्धनजन्मनि ॥ ३३ ॥ वृषाःशूद्रसमास्तावद्विज्ञेयास्तुविचक्षणैः । यावद्वेदेनजायन्ते द्विजाज्ञेयास्ततः
परम ॥ इति ॥ ३४ ॥ इत्येवं प्राप्तद्विजत्व * रवणाहेतवइह * क्रमेणावश्यान्ते यथाविधिब्रह्म * चर्य्य
वेदाध्ययनस * मावर्त्तनविवाहाः ।३५। अग्निग्रहणपञ्चमहायज्ञादि कर्म्माचरणाञ्चेति * यदियथाविधु
पनीताःप्राप्तद्विजातित्वाअपि * नवेदमधियते ॥ ३६ ॥ तदापुनःशूद्रवद्भाव * मापद्यन्ते वच्यते हि * योऽ
नधीत्यद्विजोवेदमन्यत्रकुरुते श्रमं । सजीवन्नेव शूद्रत्वमाशुगच्छतिसान्वयः ॥ इति ॥ ३७ ॥ यथा विधिचाधी
त्यवेद * मविप्लुतब्रह्मचर्य्याः * समावृत्ता दारान्गृहीत्वा * ग्निग्रहणाधिकारिणा * ऽपि दग्निं नगृह्णन्ति ॥ ३८ ॥
तदापुनःशूद्रवद्भाव*मापद्यन्ते वशिष्ठेनोक्तं*ह्यनग्नयःशूद्रसमानधर्म्माणः इति ॥ ३९ ॥ वैवाहिकाग्निं गृहीत्वापिय
दि*पञ्चमहायज्ञादिकर्म्माणिन*कुर्व्वन्तितदाखधर्म्मत्यागिनःस्युः ॥ ४० ॥ तेयान्यपत्यानिजनयन्तितेतु*वर्णसङ्करा
भवन्तिवच्यतेहि*स्वकर्म्मणाञ्चत्यागेनजायन्तेवर्णसङ्कराः ॥ इति ॥ ४१ ॥ उपनयनेनेनखलु *शूद्रवद्भावापगमा*द्
व्याभिचारादिषु * योग्यत्वगुणआधीयते ॥ ४२ ॥ तदामन्त्रैराधीयमानतद्गुणैः * शरीरारम्भकैस्तैस्तै*द्रव्यगुण
कर्म्मभिरारभ्यतेयदवस्थान्तरम् ॥ ४३ ॥ उपनीतस्यायातदवस्थान्तर * प्राप्तिःसावेदेद्वितीया *जातिर्जन्मतोद्विजः
स्यात् ॥ ४४ ॥ उक्तञ्चवशिष्ठेनस्वसंहितायां *चत्वारोवर्णाब्राह्मण*क्षत्रियवैश्यशूद्राः ॥ एयोवर्णाद्विजातयो*ब्राह्मण
क्षत्रियवैश्याः ॥४५॥ तेषांमातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ॥ तत्रास्यमातासावित्रीपितात्वाचार्य्यउच्यते ॥
वेदप्रदानात्पितेत्याचार्य्यमाचक्षते *अथाप्युदाहरन्ति ४७ इयमिद्द्वैपुरुषस्य*रेतोब्राह्मणस्योर्द्ध्वं नाभे*रर्व्वाची
नंममेध्य ४८ तद्यदूर्द्ध्वं नाभेस्तेनास्यौरसी*प्रजाजायतेयदुप * नयतियत्साधुकरोति ॥ ४९॥ अथयदर्व्वाचीनं *
नाभेस्तेनास्यौरसी*प्रजाजायतेजननाम् ॥ ५० ॥ इतिस्त्रीद्विजातिमन्त्रेणविवाहात्पत्यु*रेकात्मीभूयजायते*द्विज
वर्णस्यैकैकस्य*ब्रह्मणाद्विधापाटित*स्यार्द्धं पुमानर्द्धं चस्त्री ॥ ५१॥ विवाहमन्त्रैरभिस्तु*प्राणैस्तेप्राणान्सन्दधा*
म्यस्थिभिरस्थीनिमांसै* र्मांसं त्वचात्वचमित्या *दिभिःपुमानर्द्धभूतां स्त्रियं सन्धत्ते ॥ ५२ ॥ तेनस्त्रीचार्द्धभतार्द्ध

भूतेन*पत्यासहैकोभूयसम्पूर्णवर्णा*जायतेपुमांश्चसम्पूर्णवर्णःस्यात् ॥ ५३ ॥ गोत्रकारिणोयस्यर्षे* पौत्रप्रभृति प्रपत्येषु*यत्प्रमपत्यंपतिस्त*स्यर्षेस्तत्स्वापत्यंस्त्रीसा* इतिपतिगोत्रापत्नीभवतीति ॥५४॥ अपत्यंपौत्रप्रभृति गोत्रमिति*पाणिनिनासूत्रंकृतम् ५५ तेनानुलोमवर्णजापिनारी*मन्त्रेणविवाहात्पत्येकीभावात्*पतिवर्णगोत्रा द्यापन्नाभवति ५६ अतउक्तंवृहस्पतिना*पाणिग्रहणिकामन्त्राः*पितृगोत्रापहारकाःपतिगोत्रेणकर्त्तव्यास्तस्याः पिण्डोदकक्रियाः इति ५७ लिखितेनाप्यभिहितं*विवाहेचैवनिर्वृत्ते*चतुर्थेऽहनिरात्रिषु । एकत्वंसागताभर्त्तुर्गोत्रे पिण्डेचसूतके ५८ स्वगोत्राद्भ्रश्यतेनारीविवाहात्सप्तमेपदे॥भर्तृगोत्रेणकर्त्तव्यास्तस्याःपिण्डोदकक्रियाइति ॥५९॥ उपनयनाद्द्वितीयेजन्मनि*पुंसस्तुमातासावित्री*पितात्वाचार्यउक्तोयथा ॥ ६० ॥ नतथास्त्रीणांमन्त्रेण* विवाहाद्द्वितीयेजन्मनि*मातापितात्वास्तेषुस्ति*पतिस्त्वात्मसात्कारणात्स्त्रियागुरुः ६१ ॥ श्वश्रूश्वशुरौतुपितरौ*लौकिके मातापितृवत्*नवैदिकमातापितरौभवतः ॥६२॥ इत्यस्त्रपुंसांनारीभिः*सहसावर्ण्यंत्रिविधं*मातृतोजन्मनासावर्ण्यंमन्त्रेण*विवाहात्सावर्ण्यमेव*उभयतश्चसावर्ण्यमिति ॥ ६३ यथाचतुर्णांवर्णानांपुरुषाणां*स्वस्ववर्णस्त्रीभिरनूढाभिःक्रमात्*सवर्णपरोढाभिश्च*सहसावर्ण्यंजन्मना ॥ ६४ ॥ ब्राह्मणस्यमन्त्रेणस्वोढयाक्षत्रियवैश्यकन्ययावैश्यकन्यया*सवर्णपरोढयाच*सहसावर्ण्यंविवाहात् ॥ ६५ ॥ क्षत्रियस्यमन्त्रेणस्वोढयावैश्यकन्ययासवर्णपरो*ढया चसहसावर्ण्यं*विवाहादेवभवति ॥ ६६ ॥ स्वोढयासवर्णयासहोभयतः*सावर्ण्यंपुंसांभवति ॥ ६७ ॥ इत्येवंव्याख्यानमविद्वांसोभ्रान्त्या*व्याचक्षते द्विजातीनां*मेषश्चौपनायनिको*विधिस्तत्पत्तिव्यञ्जकः*पुण्योमयाप्रोक्तइति ६८ तन्नयदिह्यत्रमभिप्रायोऽभविष्यत्तदाखलु*मन्त्रिकातुकार्य्याय * मित्यादिश्लोकद्वयात्पूर्व्व*मेतच्छ्लोकमपिरवक्ष्यत् ॥ ६९ ॥ नचावक्ष्यद्वैवाहिको*विधिःस्त्रीणामित्यादिक*श्लोकाद्दुत्तरमेतच्छ्लोकमिति ७० इत्येवमुपनीतानां* द्विजत्वरक्षणार्थंकर्म्म*योगंमत्तोनिबोधत ॥ * ॥ ७१ ॥ ० ॥ ७२ ॥ ० ॥ अथोपनीतानांद्विजत्वरक्षणे*हेतुकर्म्म योगंवक्तुंप्रथम*माचारमाहोपनीयगुरु रित्यादि ॥ १ ॥ ० ॥ ६९ ॥ ० ॥

**उपनीयगुरुःशिष्यंशिक्षयेच्छौचमादितः । आचारमग्निकार्य्यंचसन्ध्योपासनमेवच ॥६९॥**

गुरुरित्यसमानादिकुलजात * शिष्यमुपनीयादितः * शौचंशिक्षयेत्तच्चैका * लिङ्गेगुदेतिसृइत्या * दिभिरुत्तरंवक्ष्यते ॥ १ ॥ आचारंस्नानाचमनादि अग्निकार्य्यंसायंप्रात * र्होमविधानंसन्ध्योपा * सनञ्चशिक्षयेदिति ॥ २ ॥ नपित्रादिःपुत्रादीनुपनयेत्*श्राद्धभोजिपङ्क्तिदूषकत्वादि* दोषात्तदुक्तंपूर्व्वंविस्तरेण ॥ ३ ॥ एवंसतिगुरुःशिष्य*मुपनीयादितःशौचा* चाराग्निकार्य्यसन्ध्योपासनानि*शिक्षयित्वावेदाध्याय*नारम्भंविधिनाकारयेत् ॥ ४ ॥ एतदुक्तंव्यासेनस्वसंहितायां*उपनीतोगुरुकुले*वसेन्नित्यंसमाहितः । बिभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ५ पुण्येऽह्निगुर्व्वनुज्ञातःकृतमन्त्राहुतिक्रियः । स्मृत्वोङ्कारञ्चगायत्रीमारभेद्वेदमादितः ॥ ६ ॥ ६९ इति ॥ ततोवेदमभ्यस्यमाणःशिष्यो*यथागुरुणाध्यापयित्तु*दाहाध्ययमाणइत्यादि । १ । ० । ७० । ० ।

**अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः । ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासाजितेन्द्रियः ॥ ७० ॥**

**त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥७७॥**

त्रिभ्य एवेत्यादि ॥ ७७ ॥ अथ त्रिभ्य एव वेदेभ्य स्तदित्यृग्वदतीति तत्सवितु * रित्यादिरात्मिकायाश्चास्याः * सावित्र्याः सावित्रीमन्त्र * स्य पादं पादमदूदुहत् ॥ १ ॥ परमेष्ठी प्रजापति * रसौ नारायणो ब्रह्मा * ऋग्वेदात्तत्सवितुर्वरेण्यमित्यादि पादमदूदुहत् ॥ २ ॥ यजुर्वेदाद्भर्गो देवस्य धीमही * ति द्वितीयं पादमदूदुहत् * सामवेदाद्धियो यो नः * प्रचोदयादिति तृतीयं पादमदूदुहदिति ॥३ ॥ ० ॥ ७७ ॥ ० ॥ एतन्मन्त्रजपफलमाह * एतदक्षरमित्यादि ॥ १ ॥ ० ॥ ७८ ॥ ० ॥

**एतदक्षरमेतां च जपन्व्याहृतिपूर्विकाम् । सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥**

एतदोमित्यक्षरं * व्याहृतिपूर्विकामिति * भूर्भुवः स्वरिति महा * व्याहृतिपूर्विकामेतां * तदित्यादि त्रिपदां सावित्रीम् ॥ १ सन्ध्ययोर्वेदविद्विप्र इति * ब्राह्मणः क्षत्रियो वैश्यो * जपन्वेदाध्ययनज * पुण्येन युज्यत इति ॥ २ ॥ वेदविदिति विशेषणेनात्र तूपनीतमात्रस्यापि * धीतवेदस्य गायत्री * जपमात्रेण न वेद पुण्येन योगः स्यादित्युक्तं ॥ ३ ॥ त्रिवर्णे द्विजत्वं * वर्णेषु ... ॥ ४ ॥ यत उक्तं जातमात्रः शूद्रसमः संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं वेदविद्ब्राह्मणः स्मृतः ॥ ५ ॥ इति योगशास्त्रादिषु * वर्णेषु द्विजो विप्रो ब्राह्मणश्च * शब्दैः ... पञ्चभञ्जवत् ... ॥ ६ ॥ सविशेषतया विप्रशब्दो * ब्राह्मणशब्दस्य पर्व * वर्णे वर्त्तते पञ्चवत् ॥ ७ ॥ अविशेषात्तु क्वचित्तद्यथा * जन्मना ब्राह्मणो ज्ञेयः * संस्कारैर्द्विज उच्यते * विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ॥ ८ ॥ इति ॥ ० ॥ ७८ ॥ प्रातःसायं सन्ध्योपासनावसाने * जपफलमुक्त्वान्यत्र * जपविशेषमाह सहस्र * कृत्वस्त्वभ्यस्येत्यादिकम् ॥ १ ॥ ० ॥ ७९ ॥ ० ॥

**सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः । महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ ७९ ॥**

बहिरिति ग्रामादितः त्रिकमिति * प्रणवमहाव्याहृतितदित्यृचं * द्विजो ब्राह्मणः क्षत्रियो वैश्य इति ॥ १ ॥ ० ॥ ७९ ॥ ० ॥ सन्ध्ययोरेतज्जपत्यागे * दोषमाह एतयेत्यादि ॥ १ ॥ ० ॥ ८० ॥

**एतयर्चा विसंयुक्तः काले च क्रियया स्वया । ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥**

एतयेति प्रणवपूर्व्व * व्याहृतिपूर्विकया तदित्यादृचा * ब्रह्मक्षत्रियविड्योनि * रिति ब्रह्मजातिजानन्तरजाः षट् ॥ १ ॥ ० ॥ ८० ॥ नन्वकारादीनि त्रीण्यक्षराणि * पृथक् पृथग्जप्तानि किं पृथगेव * जप्यानीत्यत उच्यते * ओङ्कारपूर्विका इत्यादि ॥ १ ॥ ० ॥ ८१ ॥ ० ॥

**ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ ८१ ॥**

येपाकयज्ञाश्चत्वारः*नित्यहोमः पितृयज्ञ * स्वदस्वर्गे श्रुतदेवाः ॥ १ ॥ तेविविधयज्ञदर्शपौर्णमासादि*समन्विताःस त्वेयज्ञा*जपयज्ञस्यषोडशीं *कलांनार्हन्तीतिश्लोकम् ॥ २ ॥ ० ॥ ८६ ॥ ० ॥ वस्त्रं दिता*तदुच्यते*जपोनैव*त्वि त्यादिकम् ॥ १ ॥ ० ॥ ८७ ॥ ० ॥ ० ॥

जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥८७

ब्राह्मणो ब्राह्मणादिद्विजो जप्येन*सावित्रीमन्त्रेणैव तु * सम्यक्सिद्ध्यन्ति संशयः ॥ १ ॥ ब्राह्मणोजप्यादन्यत् कर्म*कुर्यादथवानकुर्यात्*कस्माद्यतोजपःसावित्रीमन्त्र.*ब्राह्मणमैत्र उच्यते*ब्रह्ममन्त्रयोस्तुल्यं नाम ॥ २ ॥ ०॥ ॥ ८७ ॥ ० ॥ यथाजप्यं जपनसिद्धं *तदुपायमाहेन्द्रि*याणामित्यादिश्लोकं ॥ १ ॥ ० ॥ ८८ ॥ ० ॥

इन्द्रियाणां विचरतां विषयेष्वपहारिषु । संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥८८

विचरतामिन्द्रियाणां*मपहारिषु विषयेषु*संयमे तेषामिन्द्रियाणां निवृत्तौ* विद्वान् वाजिनां यन्तेव * सम्यग्द्य यत्नमातिष्ठेत् ॥ १ ॥ ० ॥ ८८ ॥ ० ॥ कानीन्द्रियाणीतातआह*एकादशे*न्द्रियाणीत्यादि । १ । ० । ८९ ।

एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः । तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः ८९

सार्धोऽयं श्लोकः*तानिनिर्दिशति*श्रोत्रमित्यादिभि*स्त्रिभिर्वश्लोकैः । १ ० । ९० । ९१ ।

श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी । पायूपस्थं हस्तपादं वाक्चैव दशमी स्मृता ॥९०

बुद्धीन्द्रियाणि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः । कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते ॥९१

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम् । यस्मिन्जिते जितावेतौ भवतः पञ्चकौ गणौ ॥ ९२ ॥

एकादशमित्यादि । ९२ । स्वगुणेनसत्त्वरज*स्तमोगुणेनोभयात्मकमिति*सत्त्वगुणेनबुद्धि*हेतुत्वाद्बुद्धीन्द्रियं मतम् । १ । रजसागुणेनप्रवृत्तिहेतुत्वात्*कर्मेन्द्रियञ्चभवति । २ । यस्मिन् मनसिबुद्धीन्द्रिय * कर्मेन्द्रियमध्ये जकेहि*.जिते मतौ तौद्वौपञ्चकौगणौ*बुद्धीन्द्रियपञ्चकक * र्मेन्द्रियपञ्चकौजितौस्तः । ३ । ० । ९२ । ० । तस्मात्मनो जयं पूर्वं कृत्वाऽनन्तरः*परमिन्द्रियजयं च*वस्त्र.दितातआहेन्द्रि*याणां प्रसङ्गेनेत्यादि । ० । ९३ । ० ।

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् । संनियम्य तु तान्येव ततः सिद्धिं प्रयच्छति ॥९३ ॥

एकादशेन्द्रियाणां *कर्मस्वप्रसङ्गेन*सम्यक्त्वाऽसंशयं *बन्धदोषमृच्छति ।१। तस्मात्तानेकादशेन्द्रियाणिसंनि यम्यैवतु कृतोजपः*जपःसिद्धिंप्रयच्छति । २ । ० । ९३ । ० । ननुकस्मादिन्द्रियाणां * प्रसङ्गेनदोषमृच्छ*तीत्यत आहनजातुरित्यादिश्लोकम् । १ । ० । ९४ ।

**नजातुकामःकामानामुपभोगेनशाम्यति। हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते॥ ९४॥**

जातुकदाचिदपिकामानां नित्यं* उपभोगेनापिशिषो * नभवतीत्यतःकामी * नखलुतथाशाम्यति॥ १॥ यथाहविषा कृष्णवर्त्मानिरेव*नशाम्यतिभूयएव*वाञ्छयाभिवर्त्तते॥२॥९४॥ ननुयदिकश्चित्सर्व्वान्* कामान्प्राप्नोति किमर्थं*तान्नोपभुञ्जीतेत्यत*आह यश्चैतानित्यादि॥१॥९५॥

**यश्चैतान्प्राप्नुयात्सर्व्वान्यश्चैतान्केवलांस्त्यजेत्। प्रापणात्सर्व्वकामानांपरित्यागोविशिष्यते॥ ९५॥**

यश्चसर्व्वानेतान्कामान्*प्राप्नुयाद्यश्चतान्केवलान्सर्व्वान्*त्यजेत्तयोर्हि योमध्ये॥१॥ सर्व्वकामानांप्रापणात्*सर्व्वकामानां परित्यागः*विशिष्यते वन्दरीरात्॥२॥ ९५॥ तर्हिकिं कामान्सेवमानएव*सर्व्वेन्द्रियाणि नियन्तुं*शक्नोतीत्यतआह*नतथैतानीत्यादि॥१॥९६॥

**नतथैतानिशक्यन्तेसंनियन्तुमसेवया। विषयेषुप्रजुष्टानियथाज्ञानेननित्यशः॥ ९६॥**

विषयेषुप्रजुष्टानि*खलुतानिसर्व्वेन्द्रियाणिपुंसां*कामानामसेवयाम*नियन्तुंशक्यान्तएव॥ १॥ नित्यशोज्ञानेनैतानि*संनियन्तुं यथाशक्यन्ते*तथैतानिसंनियन्तुं*कामानामसेवयानशक्यन्ते॥२॥ ९६॥ ननुकस्मादेवं भवेदित्यतआह*वेदाइत्यादि॥१॥९७॥

**वेदास्त्यागश्चयज्ञाश्चनियमाश्चतपांसिच। नविप्रदुष्टभावस्यसिद्धिंगच्छन्तिकर्हिचित्॥ ९७॥**

ज्ञानंविनाहिपुंसां*विशेषेणप्रदुष्टः*भावोमनसिभवेत्॥१॥ विप्रदुष्टभावस्यतु*पुंसोवेदादयोनैव*कर्हिचित् सिद्धिंगच्छन्ति॥२॥९७॥ ननुजितेन्द्रियःपुमान्*कथंज्ञायतइत्यत*आहश्रुत्वेत्यादिश्लोकम्॥१॥९८॥

**श्रुत्वास्पृष्ट्वाचदृष्ट्वाचभुक्त्वाघ्रात्वाचयोनरः। नहृष्यतिग्लायतिवासविज्ञेयोजितेन्द्रियः॥९८**

स्पष्टार्थोयंश्लोकः॥ ९८॥ तर्हिचैकेन्द्रियजये* किंजितेन्द्रियो नस्यादि * त्यतआहेन्द्रियाणान्त्वित्यादि॥१॥९९॥

**इन्द्रियाणान्तुसर्व्वेषां यद्येकंक्षरतीन्द्रियम्। तेनास्यक्षरतिप्रज्ञादृतेः पादादिवोदकम्॥ ९९॥**

सर्व्वेषामिन्द्रियाणांमध्ये यद्येकं*मिन्द्रियंक्षरतितेन*प्रज्ञाचास्यक्षरति*दृतेःपादादुदकमिवेति॥१॥ ९९॥ तर्हिकिं कुर्यादित्यतआह*वशेकृत्वेत्यादिश्लोकम॥१॥१००॥

**वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा । सर्व्वान् संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥१००॥**

तस्मादिन्द्रियग्रामं संयमापुमान् * वशीकृत्वा तथा मनश्च* संयम्य वशीकृत्वा च* योगतस्तनुमक्षिण्वन्* सर्व्वानर्थान् साधयेत् ॥१॥१००॥ ब्रह्मचारिणामाचार* मुक्ता सर्व्वेषां सन्ध्योपासनामाह* पूर्व्वां सन्ध्यामित्यादि ॥१॥१०१॥

**पूर्व्वां सन्ध्यां जपंस्तिष्ठन् सावित्रीमार्कदर्शनात् । पश्चिमान्तु समासीनः सम्यगृक्षविभावनात् ॥१०१॥**

आर्कदर्शनादित्यार्कोदयकाल* पर्यन्तं प्रागर्कदर्शनात् पूर्व्वान्तु* प्रातःसन्ध्यामुपास्य तिष्ठ * न्नर्कं पश्यन् सावित्रीं जपेत् ॥१॥ सम्यगृक्षविभावनादित्यसम्य* ङ्नक्षत्रदर्शनकाल* पर्यन्तं प्राक्समाग्नक्ष*त्रोदयकालात् द्विजः ॥२॥ पश्चिमां सायंसन्ध्यामुपासीनः * सम्यङ्नक्षत्राणि पश्यन् * सावित्रीं जपेदिति ॥ ३ ॥ अवस्थाद्वयाभ्यामकर्म्म काभ्यां *योगे कालाधृष्टेरभावात् यां कर्म्म* संज्ञाविधानात्कर्म्मणि* द्वि तीयानाताल्लत संयोगे ॥ ४ ॥ अर्कदर्शन पर्यन्तं हि* प्रातःसन्ध्योपासनोत्तरं * सावित्रीजपकालीन* तत्कालव्यापी योगो यतो जपः ॥५॥ एवं सायंसन्ध्योपासनां * नक्षत्रदर्शनात् पूर्व्वं * कृत्वा सावित्रीजपः कार्यः । ६ । इत्थं च सन्ध्याद्वयोपासनाकाल* मविहाय पूर्व्वां सन्ध्यां पश्चिमामिति* कालाध्वनोरत्यन्त* संयोगे द्वितीयेति । ७ । तत्र मन्वर्थ्दि मह र्षिभिः प्रागर्क* दर्शनात् प्रातःसन्ध्योपा*सना पूर्व्वं गायत्रीजपः ८ प्राक् सम्यक् तारादर्शनात्* सायंसन्ध्योपासनापूर्व्वं *गायत्रीजपकाल उक्तः ।९। तद्यथा विष्णु शास्त्रसंहितायां *उक्तं सन्ध्याद्वयोपासनं पूर्व्वां *सन्ध्यां जपंस्तिष्ठन् पश्चिमामासीनः इति ।१०। हारीतेनचस्व संहिता यामुक्तं पूर्व्वां सन्ध्यां सनक्षत्रा* मुपासीत यथाविधि गायत्रीमभ्यसेत्तावद् यावदादित्यदर्शनात् ११ उपासीत पश्चिमां स न्ध्या*मादित्याच्च यथाविधि । गायत्रीमभ्यसेत्तावद् यावत्ताराणि पश्यतीति १२ संवर्त्तेन च स्वसंहितायामुक्तं *स न्ध्यां प्रातःसनक्षत्रामुपासीत यथाविधि सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्करे १३ तिष्ठन् पूर्व्वां जपं कुर्याद् ब्रह्म चारी समाहितः । आसीनः पश्चिमां सन्ध्यां जपं कुर्यादतन्द्रितः । १४ । इति । इत्यत्र सर्व्वेषां सन्ध्योपासना * पूर्व्वक गायत्रीजपकाल उक्तः* स च कालः मुहूर्त्तमितोऽभिप्रेतः । १५ । योगभाष्ये याज्ञवल्क्येनह्युक्तं * ह्रासवृद्धी तु सततं दिव सानां यथाक्रमम् । सन्ध्या मुहूर्त्तमाख्याता ह्रासे वृद्धौ तु सा स्मृता । इति । १६ । स्मृतिशास्त्रे तेनैवोक्तं * स्नानमप दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः । सूर्य्यस्याप्युपस्थानं गायत्र्याः प्रत्यहं जपः । १७ । गायत्रीं शिरसा सार्द्धं जपेद्व्याहृ तिपूर्व्विकाम् । प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः । १८ । प्राणानायम्य संप्रोक्ष्य त्र्यृचेनाब्दैवतेन तु । जपन्नासीत संतिष्ठन् प्रत्यगाताऽर्कोदयात् ।१९। सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात् । अग्निकार्यं ततः कुर्यात् सन्ध्ययोरुभयोरपि ।२०। कात्यायनेनाप्युक्तं च* अत ऊर्द्ध्वं प्रवक्ष्यामि सन्ध्योपासनकं विधिम् । अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः । २१ । सव्ये पाणौ कुशान् कृत्वा कुर्यादाचमनक्रियाम् । ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः । २२ दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मणि । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ २३ ॥ रक्षयेद्वारिणा त्मानं परिक्षिप्य समन्ततः । शिरसो मार्जनं कुर्यात् कुशैः सोदकबिन्दुभिः ॥ २४ ॥ प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयिका । अब्दैवतं त्र्यृचं चैव चतुर्थमिति मार्जनम् ॥२५॥ भूरादांस्तिस्र एवैता महाव्याहृतयोऽव्ययाः । महर्जनस्तपःसत्यं गायत्री च शिरस्तथा ॥२६॥ आपो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरिति शिरः । प्रतिप्रतीकं प्रणव छन्दोदैवतं शिरसः ॥२७॥ एता एताः सहानेन तथैभिर्दशभिः सह । त्रिर्जपेदायतप्राणः प्राणायामः स उच्यते ॥२८

करे गोकृतास्सलिलं भागमामनन्तरञ्च । जपेद्गायत्रीं सूर्य्याविः सकृद्धात्समर्पणम् ॥ २९ ॥ उत्थायार्कं प्रतिप्रोहेत् त्रिकेण अञ्जलिनाम्भसः । उच्चित्रम् गद्यं नाथचोपतिष्ठेदनन्तरम् ॥ ३० ॥ सन्ध्याद्वये पुष्पस्य नमेत्तदाऽर्कमनो पिगाः । मध्ये त्वन्न उपर्य्यास्य त्रिभ्राडाद्दीर्च्छ्याजपेत् ॥ ३१ ॥ तद्वसंसक्त पार्ष्णिर्वा एकपादर्द्ध पादपि कुर्य्यात्कृताञ्जलिर्व्वापि ऊर्द्ध्वबाहुस्तथापिवा ॥ ३२ ॥ यत्र स्यात्कृच्छ्र भूयस्त्वं श्रेयसोऽपि मनीषिणः । भूयस्त्वं ब्रूवते तत्र कृच्छ्राच्छ्रेयोऽस्यदा यतेः ॥ ३३ ॥ तिष्ठेदुदयनात्पूर्व्वं मध्यमामपिशक्तितः । आसीतोद्गमाच्चान्त्यां सन्ध्यां पूर्व्वत्रिकं जपन् ॥ ३४ ॥ एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्रतिष्ठति । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ ३५ ॥ सन्ध्यालोपाच्चचकितः स्नानशीलश्च सर्व्वदा । तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥ ३६ ॥ इति ॥ अतिगाचम न्ध्याकालातत्रेप्राप*यित्तमुक्तं तद्यथा*सायं प्रातश्चयः सन्ध्यां प्रमादाद्विक्रमेत्सकृत् । गायत्र्यास्तु सहस्रं हि जपेत्स्नात्वा समाहितः ॥ ३७ ॥ इति ॥ १०१ ॥ उभयसन्ध्योपासनाविधिमाह*पूर्व्वां सन्ध्यामित्यादि ॥ १ ॥ १०२ ॥

**पूर्व्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति । पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥ १०२ ॥**

पूर्व्वां सन्ध्यामुपास्य तिष्ठन् जपन्*नैशं रात्रिकृतमेनः*पापं पुमान् दूरीकरोति ॥ १ ॥ सायं सन्ध्यामुपासनम्* मासीनस्तु*गायत्रीं जपन् दिवाकृतं* मलं पापं पुमान् हन्ति ॥ २ ॥ १०२ ॥ सन्ध्याद्वयानुपासने* दोषमाह*नतिष्ठतित्यादि ॥ १ ॥ १०३ ॥

**न तिष्ठति तु यः पूर्व्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्य्यः सर्व्वस्माद्द्विजकर्म्मणः ॥ १०३ ॥**

स्पष्टार्थ एष श्लोकः ॥ १०३ ॥ नित्यं सन्ध्योपासनं यत्र* गायत्रीं जपेत्तत्स्थान* माहापां समीपमित्यादि ॥ १ ॥ १०४ ॥

**अपां समीपे नियतो नैत्यकं विधिमास्थितः । सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ १०४ ॥**

नैत्यकं विधिमास्थितो*द्विजो नियतः सन्नरण्यं*गत्वा समाहितश्च सन्नपां*समीपे नद्यादितीरे*सावित्रीमधीयीतेति*ब्रह्मचारीगृहस्थश्च ॥ १ ॥ १०४ ॥ ननु किं सदैवाधीते तत्राह*वेदोपकरणेत्यादि ॥ १ ॥ १०५ ॥

**वेदोपकरणे चैव स्वाध्याये चैव नैत्यके । नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ १०५ ॥**

वेदानामुपकरणे*शिक्षाकल्पव्याकरण* छन्दोनिरुक्तज्योतिषे*नैत्यके च स्वाध्याये* होममन्त्रेषु चानध्याय*येऽनुरोधो नास्तीति ॥ १ ॥ १०५ ॥ कस्मादिता*तदुच्यते*नैत्यकेना*स्तीत्यादिकम ॥ १ ॥ १०६ ॥

**नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम् । ब्रह्माहुतिहुतं पुण्यमनध्यायवषट्कृतम् ॥ १०६ ॥**

द्विजस्य तन्नैतावत्स्वाध्यायो ब्रह्म * स्वं तस्मान्नैतावत्स्वा * ध्यायेऽनध्यायो नास्ति * यतोऽनध्यायवषट्कृतं * ब्रह्माकृतिकृतं पुण्यम् ॥ १ ॥ १०६ ॥ स्वाध्यायस्य पुण्यत्वाद् यत्फलं तदा * ह यः स्वाध्यायमित्यादि । १ । १०७ ।

यःस्वाध्यायमधीतेऽब्दं विधिनानियतःशुचिः । तस्यनित्यं क्षरत्येषपयोदधिघृतंमधु । १०७ ।

तस्य स्वाध्यायिन एष * स्वाध्यायो नित्यं पयो * दधि घृतं मधु क्षरति ॥ १ ॥ याज्ञवल्क्येनोक्तञ्चेदं * मधुना पयसा चैव स देवांस्तर्पयेद्द्विजः । पितॄंश्च मधुसर्पिर्भ्यामृचोऽधीते तु योऽन्वहम् ॥ २ ॥ यजूंषि शक्तितोऽधीते योऽन्वहं स घृतामृतैः । प्रीणाति देवानाज्येन मधुना च पितॄंस्तथा । ३ । स तु सोमघृतैर्देवांस्तर्पयेद्योऽन्वहं पठेत् । सामानि तृप्तिं कुर्याच्च पितॄणां मधुसर्पिषा । ४ । मेदसा तर्पयेद्देवानथर्वाङ्गिरसं पठन् । पितॄंश्च मधुसर्पिर्भ्यामन्वहं शक्तितो द्विजः ॥ ५ ॥ वाकोवाक्यं पुराणञ्च नाराशंसीश्च गाथिकाः । इतिहासांस्तथा विद्यां योऽधीते शक्तितोऽन्वहम् । ६ मांसक्षीरौदनमधुतर्पणं स दिवौकसाम् । करोति तृप्तिञ्च तथा पितॄणां मधुसर्पिषा । ७ । ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः । यं यं क्रतुमधीयीत तस्य तस्याप्नुयात्फलम् । ८ । त्रिर्वित्तपूर्णपृथिवीदानस्य फलमश्नुते । तपसश्च परस्येह नित्यं स्वाध्यायवान्द्विजः । ९ । इति । १०७ । ब्रह्मचारिणां समावर्त्तनपर्यन्तं * कर्त्तव्यान्याह अग्नीन्धनमित्यादि ॥ १ ॥ १०८ ॥

अग्नीन्धनंभैक्षचर्यामधःशय्यांगुरोर्हितम् । आसमावर्त्तनात्कुर्यात् कृतोपनयनो द्विजः ॥ १०८ ॥

अग्नेर्वैतानिकाग्निस्तस्येन्धनं * सायंप्रातर्दीपनसाकृतिभिः * भैक्षचर्यामधःशय्यां नत्वा गुरोर्हितं भवति * तत्सर्वं कृतोपनयनो * द्विजो ब्राह्मणादिः कुर्यात् । २ । १०८ । अथाध्याप्या * नाह आचार्य * पुत्रस्तया * दिश्लोकं ॥ १ ॥ १०९ ॥

आचार्यपुत्रशुश्रूषुर्ज्ञानदोधार्म्मिकःशुचिः । आप्तःशक्तोऽर्थदःसाधुःस्वोऽध्याप्यादशधर्म्मतः

यश्चाचार्यपुत्रो यश्च * शुश्रूषाकृद् यः किञ्चि * दपरं ज्ञानं ददाति ॥ १ ॥ यो धार्मिको यश्च शुचि * र्यश्चाध्ययनार्थमेतत् * स्वमातापितृलक्षणसमन्वितः * यश्चाध्ययनसमर्थो * ऽर्थदः साधुरात्मीयश्च । १ । एते दश धर्मतोऽध्याप्याश्च * स्वगोत्रः स्वीयार्थः स्वजनकुटुम्ब * प्रभृतिषु ज्ञातिवाची * पुत्रादाध्यापने दोषोक्तिः ॥ २ ॥ १०९ ॥ अनुपनीतांश्च कृतः * ब्रह्मचर्य एते दश * यद्दिन्यायेन किमपि * शास्त्रं पृच्छन्ति तदर्ते । १ । धर्मतोऽध्याप्यत्वे तु अध्याप्य * पदेन ज्ञापितमित्यत्र * स्वाध्यापयितुमाह नापृष्टः * कस्यचिद् ब्रूयादित्यादीनि ॥ २ ॥ ११० ॥

नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेनपृच्छतः । जानन्नपिहिमेधावीजडवल्लोकआचरेत् ॥११०॥

शास्त्रार्थं धर्मे न्यायेनैवं*अन्वयासमित्पाणिः स*नुपसद्याभिमतं पृच्छेदिति ॥ १ ॥ ११० ॥ अपृष्टोऽन्यायेन वापृष्टो यदि*ब्रूयात्तत्र दोषमाह*अधर्मेणेत्यादि ॥ १ ॥ १११ ॥

**अधर्म्मेण च यः प्राह यश्चाधर्म्मेण पृच्छति। तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति। १११।**

अधर्मेणेत्यादि खलु पृष्टो यो ब्रूयात् * दन्यायेन वा यः पृच्छति*तयोस्तयोरन्यतरः*प्रैति म्रियते ऽथवा लोके*विद्वेषमधिगच्छति। १। १११। तर्हि यदि न्यायेन यः कश्चिच्छास्त्रं*पृच्छति स एवाध्याप्यः * किं भवतीत्यत आह*धर्मार्थावित्यादि ॥ १ ॥ ११२ ॥

**धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ११२ ॥**

धर्मार्थावित्यन्वये *इन्द्रत्वेन यत्र धर्मो*न स्यात्दर्थो वा न स्यात् यथावायत्र*शुश्रूषापि तद्विधास्व* स्वाभिमतानभ्यति ॥ १ ॥ तत्र जने विद्योपरे*भूप्रदेशे शुभं बीजं *यथा न वप्तव्या तथा न वक्तव्या ॥ २ ॥ ११२ ॥ ननु यदि तादृशोऽपि शिष्यो नायाति*तर्हि किं यावज्जीवं नाध्यापयेदित्यत आह विद्ययैवेत्यादि। १। ११२।

**विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना। आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत्। ११३।**

ब्रह्मवादिना वेदाध्यापकेन* योग्यशिष्याप्राप्तौ *ऽध्यापनाद्विद्ययैव*सह काम मर्त्तव्यं ॥ १ ॥ घोरायामापद्यपि न*त्वेनां *विद्यामिरिणे तु परभूवा*विवा योग्यजने वपेत् ॥ २ ॥ ११३ ॥ कस्मादित्य * तदुच्यते *विद्याब्राह्मण*मित्यादि ॥ १ ॥ ११४ ॥

**विद्या ब्राह्मणमेत्याह सेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मां मादास्तथा स्यां वीर्यवत्तमा॥ ११४**

ब्राह्मणं वेदविद्यंस *मेत्य विद्या ब्रवीति*तव सेवधिर्निधि*रहमस्मि मां रक्ष ॥१ ॥ असूयकाय जनाय *मां त्वं मादास्तथा सति*वीर्यवत्तमा त्वहं स्याम् ॥२॥११४ कस्मै त्वं देयाभवसीत्यत आह-यमेव तु शुचिमित्यादि ॥१॥११५॥

**यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम्। तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने। ११५।**

त्वं यमेव शुचिं नियतब्रह्म*चारिणं विद्यास्तस्मै निधिपाय* विप्रायाप्रमादिने मां ब्रूहीति ॥ १ ॥ विष्णुसंहितायाञ्चोक्तं*विद्या ह वै ब्राह्मण माजगाम गोपाय मां सेवधिरस्मि तेऽहम्। असूयकायानृजवेऽयतायन मां ब्रूया वीर्यवती तथा स्याम् ॥ २ ॥ यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नं। यस्ते न द्रुह्यात्कतमां च नत्वं तस्मै मां ब्रूयान्निधिपाय ब्रह्मन् ॥३॥११५॥ अथ गुरुणानभ्यनुज्ञातं शास्त्र * मन्यानधीयमानं यो*गृह्णातितत्र पापमाह*ब्रह्मयस्त्वित्यादिना ॥१॥११६॥

**ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ ११६ ॥**

यस्त्वध्यापकेनाननुज्ञातं वेद*मधीयानादपरस्मा*दाप्नुयात्स ब्रह्मस्तेययुक्तः सन्नरकं प्रतिपद्यते ॥१॥११६॥
लौकिकमित्यादि ॥११७॥

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च । आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत् । ११७॥

योजनो लौकिकं ज्ञानं शिल्पविद्यादिषु ज्ञानं * वैदिकं यज्ञादिज्ञानं * माध्यात्मिकं तत्त्वज्ञानं * यतस्मादद्दीत सतं *पूर्व्वमभिवादयेदिति ॥१॥११७॥

सावित्रीमात्रसारोपि वरं विप्रः सुयन्त्रितः । नायन्त्रितस्त्रिवेदोपि सर्व्वाशी सर्व्वविक्रयी । ११८

सावित्रीत्यादि ॥११८॥ यो विप्रादिः सावित्रीमात्रसारः *सावित्रीमात्रं सारं यस्य नान्या विद्यावित्ता * सुयन्त्रितस्तपसा क्लिष्ट *स्वेतरस्मात्परं भवति ॥१॥ योनतपसायन्त्रितः * स त्रिवेदोपि न वरं *यतः सर्व्वाशी सर्व्वविक्रयी समात् *सर्व्वफलमर्व्वत्यागी ॥२॥११८॥

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् । शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ।११९।

शय्येत्यादि ॥११९॥ श्रेयसा जनेन शय्या*सने ऽध्याचरिते न समाविशेत्*स्वयञ्च शय्यासनस्थो वर्त्तते तदेमं श्रेयांसं *प्रत्युत्थायाभिवादयेत् ॥१॥११९॥ वसतः प्रत्युत्थायाभिवादयेदिति*तत्र कारणमुच्यते * ऊर्द्ध्वं प्राणा इत्यादि ॥१॥१२०॥

ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते १२०

स्थविरे वृद्धजने आगच्छति *सति यूनः प्राणाः स्वभावादूर्द्ध्वमुत्*क्रामन्ति उत्क्रमाय वाचरन्ति ॥१॥ युवा प्रत्युत्थानाभिवादाभ्यां पुन*स्तान् प्राणान्प्रतिपद्यते *तस्माच्छय्यासनस्थो युवा*प्रत्युत्थाय श्रेयांसमभिवादयेत् ॥ २॥१२०
अभिवादनफलमाह । अभिवादनेत्यादि ॥१॥१२१॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः । चत्वारि संप्रवर्द्धन्ते आयुर्विद्यायशोबलम् ॥१२१।

स्पष्टार्थोऽयं श्लोकः ॥१२१॥ तत्राभिवादनेप्रत्यभिवादार्थ*माह्वाभिवादादित्यादि ॥१॥१२२॥

अभिवादात्परं विप्रो ज्यायांसमभिवादयन् । असौनामाहमस्मीति स्वं नाम परिकीर्त्तयन् १२२

युवा विप्रादिरभिवादात्परं *ज्यायांसमभिवाद्य*नामाहमसावस्मीति*स्वं नामपरिकीर्त्तयन्*तं प्रत्यभिवादयेदिति ॥१॥ युगपत्स्वनामकीर्त्तन*मभिवादनञ्च कुर्य्या*दभिवादितस्तु सौत*न्नामश्रवणात्प्रत्यभि*वादनं कुर्य्यादिनाया*दोषः श्रूयते तद्यथा ॥२॥ अभिवादितस्तु यो विप्रो नाशिषं कुरुते यदि । श्मशाने जायते वृक्षो गृध्रकङ्कसमावृतः ॥ इति ॥१॥१२२॥

नामधेयस्य ये केचिदभिवादं न जानते । तान्प्राज्ञोऽहमिति ब्रूयात्स्त्रियः सर्व्वास्तथैव च १२३

नामधेयस्येत्यादि ॥१२०॥ ये केचिन्न नामधेयस्याभिवादं न जानन्ति तस्य प्रत्यभिवादं यथा कर्त्तव्यं तन्न जानन्ति ॥१॥ प्राज्ञस्तान् जानीयमोजना न भिवादयन्नहमिति ब्रूयान्न स्वनामब्रूयात् स्त्रीणामभिवादने च तथैव स्वनामनब्रूयादहमिति मात्रं ब्रूयात् ॥२॥ नसंस्कृतानभिज्ञानभिवादयन्नहमिति ब्रूयादिति ॥ यतः संस्कृतमेवाहमिति ॥३॥१२३॥ तर्हि कथमहमिति मात्रं ब्रूयादित्यत आह भो इत्याति ॥१॥१२४॥

**भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने । नाम्नां स्वरूपभावोहि भोभाव ऋषिभिः स्मृतः ॥ १२४ ॥**

नाम्नाभिवादने स्वस्य नाम्नोऽन्ते भोइति शब्दं कीर्त्तयेत् ॥ कस्मात् स्वस्माद्बाम्नां स्वरूपभावं भोभावं ऋषिभिः स्मृतः ॥१॥१२४॥ अभिवादिताऋषयो भोअन्तनामस्व त्वात्तं प्रत्यभिवादयन्ति तद्यथा तद्दर्शयति आयुष्मान् भवेत्यादि ॥१॥१२५॥१२५॥

**आयुष्मान्भवसौम्येतिवाच्योविप्रोभिवादने । अकारश्चास्य नाम्नोन्ते वाच्यः पूर्व्वाक्षरः प्लुतः ॥ १२५ ॥**

अभिवादितेज्यायोभिः युवाविप्रः प्रत्यभिवादने सौम्य आयुष्मान्भवेतिवाच्यःस्यात् ॥ १॥ तत्प्रत...नाम्नोऽन्ते यदाकारोवर्त्तते स्यान्ते वाच्य इनात् पूर्व्वाक्षरोऽच् कारोवर्त्तते स तु प्लुतः कर्त्तव्य इति ॥ २ ॥ तद्यथा ॥ अभिवादयेऽहं देवदत्तो भोः इत्यभिवादितोज्यायांस्तं ब्रूयात् आयुष्मान्भवसौम्य देवदत्त इति ॥ १ ॥ अभिवादयेऽहं यज्ञजित् भोइति सतेनवाच्य आयुष्मान् भवसौम्य यज्ञजिदिति नैवमनाम्नाभिवादने तस्मात्तस्मादहमिति ब्रूयात् ॥४॥१२५॥

**योनवेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥१२६॥**

योनवेत्तीत्यादि ॥१२६॥ स्पष्टार्थोऽयं श्लोकः ॥ १२७ ॥

**ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेवच ॥१२७॥**

ब्राह्मणमित्यादि ॥१ ॥ १२७ ॥ समागम्याभिवादयन्तं ब्राह्मणं प्रत्यभिवाद्य ब्राह्मणः कुशलं पृच्छेत् ॥ १ ॥ क्षत्रियमनामयं पृच्छेत् वैश्यं क्षेमं पृच्छेत् शूद्रं आरोग्यं पृच्छेदिति ॥ २ ॥ १२७ ॥

**अवाच्योदीक्षितोनाम्नायवीयानपियोभवेत् । भोभवत् पूर्व्वकन्त्वेनमभिभाषेत धर्म्मवित् १२८**

अवाच्य इत्यादि ॥१२८॥ यज्ञे दीक्षितोयः ससमवया यवीयानपियदिभवेत् धर्म्मविदेनं दीक्षितं ॥ भोभवत् पूर्व्वकमभिभाषेत ॥१॥१२८॥ अभिभाषणप्रसङ्गादन्यत्रापि परपत्नीत्येत्यादि ॥१॥१२९॥

**परपत्नीतुयास्त्रीस्यादसम्बन्धाचयोनितः । तांब्रूयाद्भवतीत्येवं सुभगे भगिनीतिच ॥ १२९॥**

अतीत्यत्यनन्तरं तत्रादि ॥१७३॥ ब्रह्मचारीव्रते दत्तमद्धा*वेदाध्ययनारम्भे ॥१॥१७३॥

यद्यस्य विहितं चर्म्मं यत् सूत्रं या च मेखला। यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि॥ १७४॥

यद्यस्येत्यादि ॥ १७४ ॥ सत्यार्थं*याव कः ॥१७४॥ व्रतादिषु मनसिध्यते*इतिवद्रुक्तं तदुपनीतस्य* व्रतमादिष्वपि सेवे*तेतादिभिर्वर्ज्यैः ॥१॥१७४॥

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्। संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः॥१७५॥

नियमानुक्तानात्मनः धर्मविधान्*नियमसम्यक्तादिभि ॥ १ ॥ १७५ ॥ तान्नियमानाह* नित्यं स्नात्वेत्यादि* यावत् सर्वधर्मः*परःशास्त्राविति ॥ १ ॥ १७६ ॥

नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनं चैव समिदाधानमेव च॥१७६

समिदाधानं प्रातःसायञ्चहोमं*कुर्यादित्येव योजना ॥ १ ॥ १७६ ॥

वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः। शुक्तानि यानि सर्व्वाणि प्राणिनां चैव हिंसनम् ॥ १७७ ॥

वर्जयेदित्यादिमांसं*मत्स्यञ्च मांसमेवोक्तं*माल्यं पुष्पादिनिर्म्मितं*रसानिक्षुादिरसभूतान्* शुक्तानि यानि कालान्तरेऽम्लानि* ॥ १ ॥ १७७ ॥

अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्। कामं क्रोधं च लोभं च नर्त्तनं गीतवादनम् ॥१७८

अभ्यङ्गमित्यादिवर्ज्जयेदित्यन्ते*नान्यैर्वा नर्त्तनं गीतवादनं*स्वयं कर्त्तुं श्रोतुञ्च वर्ज्जयेदिति ॥ १ ॥ १७८

द्यूतं च जनवादं च परिवादं तथाऽनृतम्। स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९

द्यूतं चेत्यादीनामपि*वर्जयेदित्यनेनान्वयः*स्त्रीणां मैथुनेच्छया*प्रेक्षणालम्भं वर्जयेत् ॥ १ ॥ १७९

एकः शयीत सर्व्वत्र न रेतः स्कन्दयेत् क्वचित्। कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः॥१८०

एकश्चेत्यादि ॥१८०॥ रेतःस्वेच्छया न क्वचित्*स्कन्दयेदिन्द्रियस्यात्कामात्*रेतःस्कन्दयन् ब्रह्मचारी * स्वव्रतं हिनस्तीति ॥ १ ॥ १८० ॥

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्१८१

स्वप्न इत्यादि ॥ १८१ ॥ ब्रह्मचारी द्विजः स्वप्ने*शुक्रमकामतः सिक्त्वा*स्नात्वार्कं मर्च्चयित्वा*मैत्विन्द्रियमित्यृचं जपेत् ॥ १ ॥ १८१ ॥

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्। आहरेद्यावदर्थानि भैक्षं चाहरहश्चरेत् ॥१८२

उदकुम्भमित्यादि ॥ १८२ ॥ यावदर्थं प्रयोजनं तावदुदकुम्भं कलसं पुष्पाणि* गोमयमृत्तिकाकुशान्* सर्व्वान्स्वयमाहरेत्*भैक्षं चाहरहश्चरेत् ॥ १ ॥ १८२ ॥ यत्रभैक्षंचरेत्तदाह*वेदयज्ञै*रित्यादिकम् ॥ १ ॥ १८२

**वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मसु । ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥१८३**

ये गृहस्था ब्राह्मणा वेदेन*यज्ञैश्च न हीनास्तथा ये*स्वकर्म्मसु प्रशस्ता ये*वर्णाश्रमाणामभोज्यान्न * आवेच जातिस्ते भोज्या*येषामेवगृहेभ्यः ॥ १ ॥ ब्रह्मचारी प्रयतःसन्*प्रत्यहं भैक्षं द्विकाल*माहरेत्तत् क्षत्रियवैश्यगृहात् ॥ २ ॥ आपस्तम्बेनोक्तं यतः*ब्राह्मणान्नं सदा भक्ष्यं *क्षत्रियस्यात्परं गिर ॥ वैश्यान्नं यत्नेन भोक्तव्यं शूद्रस्य न कदाचन ॥ ३ ॥ अमृतं ब्राह्मणान्नं क्षत्रियस्य पयः स्मृतं ॥ वैश्यस्य चान्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ॥ ४ ॥ इति ॥ एतद्वचनमविशेषोक्तं पुना*राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम्॥५॥ इत्युक्तं वा सेनचोक्तं*अमृतं ब्राह्मणान्नं दारिद्र्यं क्षत्रियस्य च । वैश्यान्नं तु शूद्रत्वं शूद्रान्नं नरकं व्रजेत्॥ इति॥ ६ ॥एतेनोक्तं वेदयज्ञाभ्यामहीनानां *स्वकर्म्मसु प्रशस्तानां*गृहे भोजनं भैक्षमाहरेत् ॥ इति ॥२ ॥ १८२ ॥ एवं यत्र गृहे भिक्षां *न कुर्यात्तदुच्यते *गुरोः कुले नेत्यादिकम ॥ १ ॥ १८४ ॥

**गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु । अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत्॥१८४**

प्रथमभिक्षां मातृसकाशेत् विधाना*द्गुरोः कुलेषु भिक्षा* प्रतिषिध्यते तद्गापितम ॥१ ॥ नैपितापुत्रस्योपनीयाथ्या पयेत्*न ज्ञाति अज्ञातिबन्धु*र्वन्धु उपनीयाथ्यापयेत् ॥ २ ॥ ज्ञातिकुलेषु सपिण्डेषु न भैक्षं* भिक्षेत न बन्धुषु मातुलादिषु*तेभ्योऽन्यत्राणामलाभे * पूर्व्वं पूर्व्वं विवर्जयेत् ॥३ ॥ एतेन गुरोः कुले तु न कदापि भिक्षेतेति ज्ञापितं स्यात् ॥ ४ ॥ तथा चोक्तं विष्णुनापि*गुरुकुलवर्ज्जं गुणवत्सु भैक्षाचरणमिति ॥ ५ ॥ यदि गुरुकुलज्ञातिकुलबन्धु* व्यतिरिक्तं गेहं भिक्षार्थं*नैव प्राप्नोति किं कुर्या*दित्यत आह सर्व्वमिति ॥ १ ॥ १८४ ॥

**सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे । नियम्य प्रयतो वाचमभिशस्तांस्तु वर्ज्जयेत्॥१८५**

पूर्व्वोक्तानां गुरुकुलज्ञातिकुलबन्धु व्यतिरिक्तानां वेदयज्ञाभ्या*महीनानां स्वकर्मसु*प्रशस्तानामसम्भवे *सर्व्वं वा ग्रामं चरेत्॥ १ ॥तत्र वाचं नियम्य मौनीभूय*प्रयतःसन् भिक्षां चर *न्नभिशस्तान् पापकारि*गृहान् भिक्षार्थं वर्जयेत् ॥ २ ॥ १८५ ॥

**दूरादाहृत्य समिधः सन्निदध्याद्विहायसि । सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः॥१८६**

दूरादित्यादि ॥१८६ दूरादतिसन्निकृष्ट*भिन्नस्थानात् समिध आहृत्य भूमौ *स्थापने विहायस्यन्तरिक्षे सन्निदध्यात् ॥ १ ॥ अतन्द्रितः स्तनालस्य*ताभिः समिद्भिः समिद्ध*मग्निं सायं प्रातश्च जुहुयादिति ॥ २ ॥ १८६ ॥ एतदकरणे प्रायश्चित्तमाह*अकृत्वा भैक्षचरणमित्यादि ॥ १ ॥ १८७ ॥

नित्यं शौचाचारः सर्वं यतत्स्वरा. इन्द्रियाणिः समृग्य* स्वं वीक्षमाणस्तिष्ठेत्॥ १ ॥ गुरुणाज्ञापिता मिताक्षः सन् गुरोः* रभिमुखमेवासीत ॥ २ ॥ १९३ ॥

**हीनान्नवस्त्रवेशःस्यात्सर्व्वदा गुरुसन्निधौ। उत्तिष्ठेत्प्रथमं चास्यचरमं चैव संविशेत् १९४**

हीनान्नेत्यादि॥ १९४ ॥ गुरुसन्निधौ सर्व्वदा* हीनान्नवस्त्रो हीनवस्त्रवेश* हीनवेशश्च शिष्यः स्यात् ॥ १ ॥ अस्य चास्य गुरोः प्रथममग्रे* उत्तिष्ठेत् चरमं पश्चात्* तत्तत्काले संविशेत्* ॥ २ ॥ १९४ ॥

**प्रतिश्रवणसंभाषेशयानोनसमाचरेत्। नासीनोनचभुञ्जानोनतिष्ठन्नपराङ्मुखः॥ १९५ ॥**

प्रतिश्रवणेत्यादि ॥ १९५ ॥ गुरोः प्रतिश्रवणं वाक्यश्रवणं* तत्काले संभाषणंच परस्परं कथनं ॥ १ ॥ शिष्यः शयान आसीनो* भुञ्जानस्तिष्ठन् परा*ङ्मुखोवा न समाचरेत् ॥ २ ॥ १९५ ॥ तर्हि कथं तत्कुर्य्यादित्यत आह आसीनेत्यादि ॥ १ ॥

**आसीनस्यस्थितःकुर्य्यादभिगच्छंस्तुतिष्ठतः। प्रत्युद्गम्यत्वाव्रजतःपश्चाद्धावंस्तुधावतः १९६**

आसीनस्य गुरोः प्रति*श्रवणसंभाषे शिष्यः स्थितः कुर्य्यात्* तिष्ठतस्तु गुरोः प्रति*श्रवणसंभाषे अभिमुखं धावन् ॥ १ आव्रजतस्य गुरोः प्रतिश्रवण*संभाषे शिष्यः प्रत्युद्गम्य कुर्य्यात्* धावतस्तु गुरोः पश्चा*द्धावन् शिष्यः कुर्य्यात् ॥ २ ॥ ॥ १९६ ॥ अपरं च पराङ्मुखस्येत्यादि ॥ १९७ ॥

**पराङ्मुखस्याभिमुखो दूरस्थस्येत्यचान्तिकम्। प्रणम्यतुशयानस्यनिदेशेचैवतिष्ठतः॥ १९७ ॥**

पराङ्मुखस्य गुरोः प्रतिश्रवण*संभाषे शिष्योऽभिमुखः* सन् कुर्य्यात् दूरस्थस्य तु* गुरोरन्तिकमेत्य कुर्य्यात् ॥ १ ॥ शयानस्य गुरोः प्रति* श्रवणसंभाषे शिष्यः* प्रणम्य गुरुं कुर्य्यात् अर्थनिदेशे* आज्ञाकरणे तिष्ठतो* गुरोः सप्रणामं कुर्य्यात् ॥ २ ॥ १९७ ॥

**नीचंशय्यासनञ्चास्यसर्व्वदागुरुसन्निधौ। गुरोस्तुचक्षुर्विषयेनयथेष्टासनोभवेत्। १९८ ॥**

नीचमित्यादि ॥ १९८ ॥ गुरुसन्निधौ सर्व्वदा* शिष्यस्यास्य नीचं शय्यासनं कार्य्यं* गुरोस्तु चक्षुर्विषये* यथेष्टासनो न भवेत् ॥ १ ॥ १९८ ॥

**नोदाहरेदस्यनामपरोक्षमपिकेवलम्। नचैवास्यानुकुर्व्वीतगतिभाषितचेष्टितम्॥१९९॥**

नोदाहरेदित्यादि ॥ १९९ ॥ शिष्यः परोक्षमपास्य* गुरोः केवलं नाम नोदाहरेदिति* भगवच्छब्दपूर्व्वक* न्तूदाहरेदिति ख्यापितम् ॥ १ ॥ तथास्य गुरोर्गतिभाषितचेष्टि* तानुरूपं गतिभाषितचेष्टितं शिष्यो न कुर्य्यात् परोक्षेपि । २ । १९९ ।

गुरोर्यत्रपरीवादोनिन्दावापिप्रवर्त्तते । कर्णौतत्रपिधातव्यौगन्तव्यंवाततोऽन्यतः ॥ २०० ॥

गुरोरित्यादि । २०० । यत्रस्थाने गुरोःपरीवादोनिन्दा* आकर्तश्रिव्यनात प्रवर्त्तते तत्र*कर्णौपाणिभ्यांपिधा तव्यौ*ततोऽन्यत्रगन्तव्यं । १ । २०० । नत्रमिथ्यायद्गुरोः*परीवादादीन्करोति*तदाकिंस्यादित्यत्राहपरी वादीत्यादिश्लोकम् । १ । २०१ ।

परीवादीखरोभवतिश्वावैभवतिनिन्दकः । परिभोक्ताकृमिर्भवतिकीटोभवतिमत्सरी २०१

गुरोःपरीवादीशिष्यो*जन्मान्तरेखरोभवत्येव*निन्दकस्तुश्वाभवति । १ । गुरोः परिभोक्तागुरुधनेनोप* जीवीकृमिर्भवति* गुरोर्मात्सर्यात्कृपः * प्रेत्यापुनःकीटोभवति । २ । २०१ ।

दूरस्थोनार्च्चयेदेनंनक्रुद्धोनान्तिकेस्त्रियाः । यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

दूरस्थइत्यादि । २०२ । दूरस्थःशिष्यःप्रेरितः* वस्त्रादिकंप्रेरयन्नचैनं गुरुमर्च्चयेन्नप्रेरयेत्स्वयमागत्य*क्रुद्धःसन् गुरुमर्च्चयेत । १ । स्त्रियाअन्तिकेस्थित्वा*नगुरुमर्च्चयेद्य * यदिशिष्योयानासनस्थोवर्त्तते *तदागुरुरेतितर्हि *त तोऽवरुह्याभिवादयेत् । १ । २०२ ।

प्रतिवातेऽनुवातेवानासीतगुरुणासह । असंश्रवेचैवगुरोर्नकिंचिदपिकीर्त्तयेत् ॥ २०३ ॥

प्रतिवातइत्यादि ॥२०३॥ यस्यांदिशिगुरुस्तत*आगतोवातः प्रतिवातउच्यते *यस्यांदिशिशिष्यस्ततो*गतो वातोऽनुवातः ॥ १ ॥ तत्रगुरुणासहन * शिष्यआसीतायद्गुरोरसंश्रवे * यत्रगुरुर्नशृणोति * तत्रकिञ्चिन्नकीर्त्त येत् ॥२॥२०३॥

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषुकटेषुच । आसीतगुरुणासार्द्धंशिलाफलकनौषुच ॥ २०४ ॥

गोऽश्वइत्यादि ॥ २०४॥ गोयानेऽश्वयानेचोष्ट्र*यानेचप्रासादेचैव *प्रविस्तीर्णासनेकटेषु*शिलायांफलके दारु*निर्म्मितासनेनौकायां*चगुरुणासहासीत ॥१॥२०४॥

गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत् । नचानिसृष्टोगुरुणास्वान्गुरूनभिवादयेत् ॥२०५

गुरोर्गुरावित्यादि ॥ २०५ ॥ गुरोर्गुरौगुरोःसन्निहितेसति*गुरुवद्वृत्तिमभिवादनादिकां*माचरेद्गुरुकुले च * वसन्गुरुणाऽनिसृष्टः ॥१॥ आचार्य्यणाननुमतः*शिष्यःस्वान्मातापित्रादीन्*गुरून्नाभिवादयेत ॥ २ ॥ विष्णु नाप्युक्तंतद्यथा*अनिर्दिष्टोगुरुणा*स्वान्गुरून्नाभिवादयेत् ॥ इति ॥२०५॥

विद्यागुरुष्वेतदेवंनित्यावृत्तिःस्वयोनिषु । प्रतिषेधत्सुचाधर्म्मान्हितंचोपदिशत्स्वपि२०६

विद्येत्यादि ॥२०६ ॥ गुरौवसन्ब्रह्मचारी*यथाचार्य्याणाननुमतःस्वान्गुरून्नाभिवादयेत्तथैव*गृहीविद्यागुरु

गुरुपत्न्याभ्यञ्जनादीनिनिषिद्धानि* नकार्याणिदोषसम्भवात् ॥ १ ॥ २१२ ॥

**गुरुपत्नीतुयुवतिर्नाभिवाद्येहपादयोः। पूर्णविंशतिवर्षेणगुणदोषौविजानता ॥ २२१ ॥**

गुरुपत्नीतुमिति ॥२१२॥ सवर्णाजासवर्णाजावायुवतिः*गुरुपत्नीपादयोः*शिष्येणनाभिवादयासात्*पूर्णविंशतिवर्षेण*गुणदोषौविजानता ॥ १ ॥ युवतिवचनेनवृद्धानांपादयोस्तु*अभिवादनं*नप्रतिषिध्यते ॥ ४ ॥ विष्णुनाभिहितंचस्वसंहितायां*हीनाहीनवर्णानांगुरुपत्नीनां*दूरादभिवादनंयुवतीनां*नपादोपसंस्पर्शनं॥२गुरुपत्नीनांगात्रोत्सादनाभ्यञ्जन*केशसंयमनपाद*प्रक्षालनानिनकुर्यात् ॥ इति॥४॥अत्रपत्नीनामितियुक्त्या * हीनवर्णजानामितयुक्तं*यस्माद्योगेहिपतुः*स्त्रियांनकारोऽभवतीत्यपि॥५॥ तेनब्राह्मणस्यपत्नी*ब्राह्मणकन्याक्षत्रिय*कन्यावैश्यकन्याचेति ॥ ६ ॥ क्षत्रियस्यपत्नीक्षत्रियदुहिता*वैश्यदुहिताचवैश्यस्यतुपत्नी*वैश्यदुहितैवमन्त्रे * त्रिवाह्यातेषांशूद्रा ॥ ७ ॥ २१२ ॥

**स्वभावएवनारीणांनराणामिहदूषणम्। अतोऽर्थान्नप्रमाद्यन्तिप्रमदासुविपश्चितः ॥ २१३ ॥**

स्वभावएवेत्यादि ॥ २१३ ॥ इहलोकेषुनारीणांनराणांच*एषपरस्परंदूषणस्वभाव* इत्यतोऽर्थाद्धिपश्चितः*प्रमदासुनप्रमाद्यन्ति ॥ १ ॥ २१३ ॥

**अविद्वांसमलंलोकेविद्वांसमपिवापुनः। प्रमदाह्युत्पथंनेतुंकामक्रोधवशानुगम ॥ २१४॥**

अविद्वांसमित्यादि* ॥ २१४ ॥ अविद्वांसंविद्वांसंवापि*पुरुषंयतःकामक्रोध*वशानुगंतस्मादुत्पथं*नेतुंप्रमदाखलुलंस्यात् १ ॥ २१४ ॥ तस्मादिदमुच्यतेमात्रेत्यादि ॥ २१५ ॥

**मात्रास्वस्रादुहित्रावानविविक्तासनोभवेत्। बलवानिन्द्रियग्रामोविद्वांसमपिकर्षति ॥ २१५॥**

मात्रासहस्वस्रासह*दुहित्रावासहपुमान्*विविक्तासनोनभवेत् ॥ १॥ कस्मादित्यतउच्यते*इन्द्रियग्रामोहिबलवान्*विद्वांसमपियोषित्कर्षतीति ॥ २१५ ॥

**कामन्तुगुरुपत्नीनांयुवतीनांयुवाभुवि। विधिवद्वन्दनंकुर्यादसावहमित्यब्रुवन् ॥ २१६ ॥**

कामन्त्वित्यादि ॥ २१६ ॥ युवाशिष्यःकामंयदीच्छतितदा*युवतीनांगुरुपत्नीनांब्राह्मणक्षत्रियवैश्य* कन्यानांतुभुविपत*असावहमितिब्रुवन् ॥ १ ॥ विविधवन्दनंकुर्यात्*नतुपादोपसंस्पर्शनं*कलावन्दनंकुर्यात् ॥ २१७ ॥

**विप्रोष्यपादग्रहणमन्वहंचाभिवादनम। गुरुदारेषुकुर्व्वीतसतांधर्म्ममनुस्मरन् ॥ २१७॥**

विप्रोष्येत्यादि ॥ २१७ ॥ अहस्योद्विजोविप्रोष्य*प्रवासाद्विगृह्यागतः*युवतीवर्ज्जेषुगुरु*दारेषुपादग्रहण*मभिवादनमन्वहंकुर्व्वीत ॥ १ ॥ २१७ ॥

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः। शुचौ देशे जपन् जप्यमुपासीत यथाविधि ॥२२२॥

आचम्येत्यादि ॥ २२२ ॥ स्फुटार्थोऽयं श्लोकः ॥ २२२ ॥

यदि स्त्री यद्यवरजः श्रेयः किञ्चित् समाचरेत्। तत् सर्व्वमाचरेद्युक्तो यत्र चास्य रमेन्मनः ॥२२३॥

यदिस्त्रीत्यादि ॥ २२३ ॥ यदि काचित्स्त्रीपरस्य (दर्शनात् *) यदि शूद्रो वा परस्य (दर्शनात् *) किञ्चिच्छ्रेयः समाचरेत् * तत्सर्व्वं शुभमाचरेत् ॥ १ ॥ यत्रास्य मनः रमेत तत्त्वाचरेत् ॥ २ ॥ २२३ ॥ श्रेयस्त्वाह धर्म्मार्थावित्यादि ॥ २२४ ॥

धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्म्म एव च। अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥२२४॥

द्वौ धर्म्मार्थौ सहतौ * श्रेयः कामार्थौ द्वौ च * श्रेयः एको धर्म्मः श्रेयः * एकोऽर्थ एव वा श्रेयः * न कः कामः त्रिवर्गस्तु श्रेयः ॥ १ ॥ २२४ ॥

आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः। माता पृथिव्या मूर्त्तिस्तु भ्राता स्वो मूर्त्तिरात्मनः ॥ २२५ ॥

आचार्य इत्यादिः स्फुटार्थः ॥ २२५ ॥

आचार्य्यश्च पिता चैव माता भ्राता च पूर्व्वजः। नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥२२६॥

आचार्य इत्यादि ॥ २२६ ॥ आर्त्तेनापि * नापमन्तव्याः चत्वारः * विद्याप्रमत्तताः * विशेषतो ब्राह्मणेन ॥ १ ॥ २२६ ॥ अत्र मतृ कीर्त्तिर्विशेषेण * यं मातापितरावित्यादि ॥ १ ॥ २२७ ॥

यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम्। न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि २२७

नृणां पुत्रादीनां सम्भवे * उत्पत्तौ मातापितरौ * यं क्लेशं सहेते तस्य * निष्कृतिः कर्त्तुं * वर्षशतैरपि शक्या न केनापि ॥ १ ॥ २२७ ॥

तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्व्वदा। तेष्वेव त्रिषु तुष्टेषु तपः सर्व्वं समाप्यते २२८

तयोर्नित्यमित्यादिः स्पष्टार्थः ॥ २२८ ॥

तेषां त्रयाणां शुश्रूषा परमं तप उच्यते। न तैरनभ्यनुज्ञातो धर्म्ममन्यं समाचरेत् ॥ २२९ ॥

तेषामित्यादि ॥ २२९ ॥ तेषां मातापिताचार्य्याणां त्रयाणां शुश्रूषा परमं * तपः * तैरनुज्ञातो * नान्यं धर्म्मं समाचरेत् ॥ १ ॥ २२९ ॥

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः। त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

विषित्यादि ॥ २१७ ॥ एषमातृपितृगुरुभक्तिः साक्षात् प्रत्यादेश परमो धर्मः एतस्माद्धर्मादन्यो धर्मोऽयं वा नूनं उपधर्म उच्यते । १ २१७ । इति क्रियायोगनक्षत्रा विद्यायाः सर्वतो ग्रहणमुच्यते श्रद्दधान इत्यादि । १ । २१८ ।

श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि । २३८

यद्यवरः कनिष्ठः कश्चिच्छुभां विद्यां जानाति तस्मादवरादपि तां शुभां विद्यां श्रद्धयाऽगृह्णीत । १ । यद्यन्त्यजातिः कश्चित् परं धर्मं वेत्ति जानाति तं च परं धर्मं तस्मादन्त्यजादपि च गृह्णीत ।२। यदि दुष्कुले स्त्रीरत्नं गुणान्वितं स्त्री जायते तस्माद्दुष्कुलादपि तां गृह्णीत ॥३॥ । २ २८ ।

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्। अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् २३९

विषादित्यादि । २३९ । यदि विषेऽमृतं वर्त्तते तदा तस्माद्विषादप्यमृतं तद्ग्राह्यं बालादपि सुभाषितं ग्राह्यमेव । १ । यदि कश्चिच्छत्रुः सद्वृत्तं जानाति तस्मादमित्रादपि तत् सद्वृत्तं ग्राह्यं भवति । २ । यद्यमेध्ये पुरीषादौ काञ्चनं पतितं स्यात् तत् काञ्चनं तस्मादमेध्यादपि ग्राह्यं ॥ ३ ॥ २३९ ॥ उपसंहरति स्त्रिय रत्नानीत्यादिना ॥ १ ॥ २४० ॥

स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्। विविधानि च शिल्पानि समादेयानि सर्वतः ॥ २४० ॥

सर्वतः सर्वेभ्यः स्त्रीप्रभृतीनि समादातव्यानि यत्नतः ॥ १ ॥ २४० ॥ ननु सर्वतो यदि विद्या ग्राह्या तदा ब्राह्मणो किमब्राह्मणोऽप्यध्यापको भवतीत्यत आह अब्राह्मणादित्यादि । १ । २४१ ।

अब्राह्मणादध्ययनमापत्काले विधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ २४१ ॥

अब्राह्मणादित्यब्राह्मण उपनीयते अध्यापनं यं ब्राह्मणोऽप्राप्नोति उपनयनकालोऽतीतः स्यात् १ इत्यादापत्काले ब्राह्मणास्तस्माद्ब्राह्मणस्याध्यापनीयो वेदाध्यापनयोगात् तत्क्षत्रियात् तदभावे तादृशाद्वैश्यात् ।२ उपनयनपूर्वकं यथाविधि वेदाध्ययनं शास्त्रे विधीयते तत्र गुरोः शुश्रूषा यावत् अध्ययनसमाप्तिः स्यात् सा गुरोरनुव्रज्यैव ।३। एतेन तदन्तमेव ब्राह्मणः क्षत्रियगात्रैर्गोनबोपनीतोऽध्यापयमानस्तस्य गुरोः पादप्रक्षालनादिनं यात् । ४ । एवं चोक्तं व्यासेनापि मन्त्रदश्च त्रयो विप्रः शुश्रूषाऽनुगमादिना । प्राप्तविद्यो ब्राह्मणस्तु पुनस्तस्य गुरुः स्मृतः । इति ५ । २४१ । ननु तर्हि नैष्ठिकब्रह्मचारीत्वं किमेवं तस्यैव गुरोः कुर्य्यादा वक्ति वसेत् इत्यत आह नाब्राह्मण इत्यादि ॥ १ ॥ २४२ ॥

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत्। ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम् ॥ २४२ ॥

अथ तमां गतिं तर्हि कात्र कृत्यमित्युच्छन्न*मिथ्योत्राह्मणवालक*मात्यन्तिकं य. वक्ष्यैव* वासमब्राह्मणे गुरौ नवसे त् ॥ १ ॥ अननूचानं शरवत्याङ्ग*वेदानधायिनिब्राह्मणे गुरा* वात्यन्तिकं वासं न वसेदिति ॥ २ ॥ २४२ ॥ नतर्हि कस्मिन्गुरौ*वासमात्यन्तिकं वसे*दितत्राह यदीत्यादि ॥ १ ॥ २४३ ॥

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले । युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥२४३॥

यस्तौब्रह्मचारिणे तु *गुरोः कुलेवासमात्यन्तिकमेव*रोचते तं गुरुकुले वासं रोचतामिति*पंतं ऐरयेद् ब्रह्मचारी॥१ ॥ तदातद्ब्रह्मचर्यकर्म्मणियुक्तो*ब्रह्मचारीभाशरीरविमोक्षणा*देनमनूचानं ब्राह्मणं परिचरेत् ॥ २ ॥ २४३ ॥ नवत तः*किंभवतीत्यत्राह*आसमाप्तेरित्यादि ॥ १ ॥ २४४ ॥

आसमाप्तेःशरीरस्य यस्तु शुश्रूषते गुरुम् । सगच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ २४४॥

शरीरस्यसमाप्तिपर्यन्तं यस्तु*गुरुं शुश्रूषते सतु*विप्रोऽञ्जसा ब्रह्मणः शाश्वतं सद्म*मोक्षधाम वगच्छति ॥ १ ॥ दृत्तस्य हितायास्त*स्वीकरोति यद्वावेदं*चरेदेद्व्रतानि च । ब्रह्मचारी भवेत्तावदूर्ध्वं स्नातो भवेद्गृही २॥ द्विविधो ब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः । उपकुर्व्वाणकस्त्वाद्यो द्वितीयो नैष्ठिकः स्मृतः ॥ ३ ॥ यो व्रताय समाश्रित्य ब्रह्मचारी भवेत्पुनः । न यतिर्न वनस्थश्च सर्व्वाश्रमविवर्जितः ॥ ४ ॥ इति ॥ २४४ ॥ नवनैष्ठिकब्रह्मचारीत्वाचार्ये मृते कुत्र वसेदित्यत*आहाचार्यैत्यादि ॥ २४५ ॥

आचार्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते । गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥२४५

गुरुदारे इत्येकवचनमिह*छान्दसं प्रेते त्वाचार्ये नैष्ठिकब्रह्मचारी*गुणान्विते गुरुपुत्रे*गुरुवद्वृत्तिमाचरेत ॥ १ ॥ गुरुपुत्राभावे गुरुदारेषु*तदभावे गुरुसपिण्डे*गुरुवद्वृत्तिमाचरेत् ॥ २ ॥ २४५ ॥

एतेष्वविद्यमानेषु स्थानासनविहारवान् । प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४६

एतेष्वित्यादि ॥ २४६ ॥ गुरुपुत्रादिष्वविद्यमानेषु*गुरोः स्थानासनविहारवानग्नि*शुश्रूषां प्रयुञ्जानए*वात्मनो देहं साधयेत् ॥ १ ॥ २४६ ॥

एवं चरति यो विप्रो ब्रह्मचर्यमविप्लुतः । सगच्छत्युत्तमस्थानं नचेह जायते पुनः ॥ २४७ ॥

एवं चरतीत्यादि ॥ २४७ ॥ एवं प्रकारेण यो विप्रादिरवि*प्लुतः सन्ब्रह्मचर्यं चरति स*उत्तमं स्थानं ब्रह्मणः* सायुज्यमेव गच्छति ॥ १ ॥ २४७ ॥

नपूर्व्वं गुरवे किञ्चिदुपकुर्व्वीत धर्म्मवित् । स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्व्वर्थमाहरेत् ॥२४८

नपूर्व्वमित्यादि ॥ २४८ ॥ समावर्त्तनात्पूर्व्वं ब्रह्मचर्य*काले गुरवे धनादिकं दत्वा*धर्म्मवित्[illegible]किञ्चिदुप[illegible]

ष्ठभ्रातरि*कनिष्ठस्त्वविप्लुतब्रह्मचर्य्यो*दाराग्निग्रहणपूर्व्वं*प्राप्तकालगृहवासोपि।१०।नदारान्गृह्णीयादनग्रज*
ज्यामाव्रजाग्निभोजी ज्येष्ठभ्रातृभ्यो*गृह्णीयादनुज्ञयात् ११। कृतदारे ज्येष्ठभ्रातरिनिरग्नौ*सतिनाग्निं गृह्णीयान्न*पित
रिपितामहे वाजीवति॥१२॥एतदविपरीतपर*कात्यायनादिभिरुक्तं*तदग्निग्रहणे वक्तव्यं*प्रदर्शयिष्यते सर्व्वं ।१३।
विधार्थं लिङ्नैवमर्थोभवति*अविप्लुतब्रह्मचर्य्यस्यगृहस्था*श्रमाकरणे विधुरत्वन्नंहिस्यात्।१४॥कृतदारे ज्येष्ठे च
*सतिकनिष्ठस्यदार*ग्रहणविधिर्भवति ।१५॥ अविप्लुतब्रह्मचर्य्य*इतिकिमर्थं दिप्लुत*ब्रह्मचर्य्यस्याप्रिजाते*गृहाश्र
मावासमतिषेधार्थं ॥१६। योहिब्राह्मणःक्षत्रियो*वैश्योवायथोक्तं विधिनोपनीतो*वेदारम्भसंस्कारे णसंस्कृतो
पि*यदिवेदंनाधीते॥१७॥स्नात्वासमावृत्ताभासः*सन्दारान् गृह्णातिसतु*श्रूद्रवाहदृष्टीभवति ॥१८॥ योऽनधीत्य
द्विजोवेदमन्यत्रकुरुतेश्रमं।सजीवन्नेव शूद्रत्वमाशुगच्छतिसान्वयः।इत्युक्तेः।१९।अनधीतवेदस्यच*कृतदारस्यापिवैवा
हि*काग्निग्रहणानधिकारो*ब्रह्मयज्ञवेदपाठासामर्थ्यात्२०साग्निकस्यपुत्रोज्येष्ठोऽग्रजोवा*नग्निकस्यावरजोवा*पा
विप्लुतब्रह्मचर्य्यः॥२१॥दारग्रहणपूर्व्वक*गृहावासस्यत्वप्राप्त*कालत्वादग्निग्रहणाधिकारा*भावाद्दारान् गृह्णीयान्न*
वैवाहिकाग्निं गृह्णीयादिति ॥२२॥ साग्निकस्यावरजस्तु*अविप्लुतब्रह्मचर्य्यः*प्राप्तकालगृहस्थाश्रमोवासः॥ २३ ॥
दारान्गृहीत्वाग्निमाधायगृहस्था*श्रमोक्तकर्म्मसुयोग्य*इत्यर्थोऽनेनज्ञापितः ॥२४॥२॥ ननुकिमर्थमविप्लुतब्रह्म*
चर्य्यःसन् गृहस्थाश्रम*मावसेदित्यतआह*तं प्रतीतमित्यादि ॥१॥२॥

**तं प्रतीतं स्वधर्म्मेण ब्रह्मदायहरं पितुः । स्रग्विणं तल्पमासीनमर्हयेत् प्रथमं गवा ॥ ३ ॥**

तमविप्लुतब्रह्मचर्य्यं तेनैव*लोके प्रतीतं विख्यातं*स्रग्विणं सुवर्णादिमालाधारिणं ॥१॥ स्वधर्म्मेणपितुस्त
ल्प*मासनमासीनंब्रह्म*दायहरं पितुर्ब्रह्म* स्वात्मकस्यदायस्यहरणशीलं भ्रातृभिःसहपितुर्दायविभाग*काले वि
भागकृतसर्व्वं*जनःप्रथमं ज्यैष्ठोद्धारे णगवा*स्वलङ्कृर्य्येद् योग्यं कुर्य्यात्॥३॥विप्लुतब्रह्मचर्य्यं तु*शूद्रवद्वाक्ये ज्यैष्ठो
द्धारे णगवा*प्रथमं दायहरत्वेनमनार्हयेत् ४वक्ष्यते हि दायभागे*ज्येष्ठस्तुजातोज्येष्ठायां*हरेदृषभषोडशाः॥५॥
तथा । पुत्रःकनिष्ठोज्येष्ठायां कनिष्ठायां चपूर्व्वजः।कथं तत्रविभागःस्यादितिचेत्संशयोभवेत्॥६॥ एकं वृषभमुद्धारं
संहरेतसपूर्व्वजः।ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥७। इति इत्यं वं व्याख्यानमविद्वान्*प्रमादीवाचाष्ट
ब्रवीद्व*दायस्तं हरतीतिब्रह्मदाय*हरःपितृतोऽधीत*वेदं पुत्रमित्युचाते ॥८॥ पितृतोऽध्ययनं ख्यापितु र
भावेऽन्यतोऽध्ययन*मितिप्रमादिव्याख्यान*मसाधुपितरपाङ्क्तेयत्वादिदोषात् ॥९॥२॥ अथैवं प्राप्तकालगृहस्था
श्रमा*वासःकथं गृहस्थाश्र*मावासं कुर्य्यादित्यत*आहगुरुणानुमतइत्यादि ॥१॥४॥

**गुरुणानुमतःस्नात्वासमावृत्तोयथाविधि । उद्वहेतद्विजोभार्य्यां सवर्णां लक्षणान्विताम् ॥ ४ ॥**

योद्विजोब्राह्मणःक्षत्रियोवैश्योवा*यथावदुपनीतःसन्*यथावद्ब्रह्मचर्य्यं च*चरन्वेदान्वेदौवेद*मेकमेकांशाखां
वाधीते ॥१॥अविप्लुतब्रह्मचर्य्यः*प्राप्तकालगृहस्थाश्रमावासः*साग्निकनिरग्न्यन्यतरपित्रमाम्*ज्येष्ठःपुत्रोभवति॥२

योवापितृहीनःसाग्निनिरग्नानां*तरजो्ष्ठभ्रातृमान्स्यात्*पितृज्येष्ठभ्रातृभ्यांवा*हीनोयःस्यात्सयदि* गृहस्था श्रमावासमिच्छेत् ॥३॥ तदागुरुणानुमतः*सन्यथाविध्यभृत*स्नानंकृत्वासमावृत्तो*गुरुकुलात्पितृकुलंपुनःप्राप्तः ॥४॥ सवर्णां लक्षणान्वितां *भार्यांभार्य्यासंज्ञांनारीं *यथाविधिउद्वहेत॥५॥ ननुसमावृत्तैरवाचार्य्यकुलात्*पितृ कुले पुनरागमनंस्यात् * तेनगृहवासोभवेत् ॥ ६ ॥ किमर्थंउद्वहेतेत्युक्तमितिचे* त्तत्रोच्यतेनखलुगृहेवासो* गृहस्थाश्रमावासोऽभिधीयते ॥७॥ गृहिणीतु गृहंतया*सहाश्रमेसम्यग्वासो*गृहस्थाश्रमावासइति*ज्ञापनार्थ मुद्वहेतेति ॥८॥ एतथानान्यत्राप्युक्तं*नगृहंगृहमित्याहुर्गृहिणीगृहमुच्यते । तयाहिसहितःसर्व्वान्पुरुषार्थान् समश्नुते । इति ॥९॥ तथादक्षेणाप्युक्तं*पत्नीमूलंगृहंपुंसांयदिछन्दाऽनुवर्त्तिनी । गृहाश्रमसमंनास्ति यदिभा र्य्यावशानुगा ॥ इति ॥ १०॥ ननुतर्हि समावर्त्तदिनात्पर * दिनमेवकिमुद्वहेत् * दक्षेणापिह्यभिहितं ॥ ११ ॥ अनाश्रमीनतिष्ठेत्तु*दिनमेकमपिद्विजः । आश्रमेणविनातिष्ठन्*प्रायश्चित्तीयतेहिसः ॥१२॥ जपेहोमेतथादाने स्वाध्यायेचरतस्तु यः । नासौतत्फलमाप्नोतिकुर्व्वाणोप्याश्रमाच्च्युतः ॥ इति ॥ १३ ॥ इतिचेत्तत्रोच्यतेकन्याप्राप्ति * कालपर्य्यन्तंप्रतीक्षणेदोषा * भावउक्तो व्यासेनस्वसंहितायां * ॥ १४ ॥ तद्यथा ॥ एवंस्नातकतांप्रा प्तोद्वितीयाश्रमकाङ्क्षया ॥ प्रतीक्षेतविवाहार्थमनिन्द्यान् यसम्भवाम ॥ इति ॥ १५ ॥ कश्चित्संवत्सर कालप्रतीक्षा * कर्त्तव्येत्याहततःपरंप्रायश्चित्तं * कर्त्तव मित्युवाचयथा ॥ १६ ॥ अनाश्रमीसंवत्सरं * प्राजापत्यंकृच्छ्रंचरि * त्वाश्रमसुपे यात् द्वितीये ऽतिकृच्छ्रं * तृतीये कृच्छ्रातिकृच्छ्रं * मतऊर्द्ध्वंचान्द्रायणम् ॥ इति ॥ १७ ॥ तत्रवेदाग दत्ताभार्य्या*प्राग्विवाहाग्निर्यतेऽथ* यत्कर्त्तव्यंतदुक्तंकात्यायनेन ॥ १८॥ यस्यदत्ता भवेत्कन्यावाचासत्येनकेनचित् । सोऽन्त्यांसमिधमाधास्यन्नादधीतैवनान्यथा ॥१९॥अनूढैवतु साकन्यापञ्चत्वंयदिग च्छति ॥ नतयाव्रतलोपोऽस्यतेनैवाल्यांसमुद्वहेत् ॥२०॥अथचेन्नलभेतान्यांयाचमानोपिकन्यकाम् । तमग्निमात्मसा त्कृत्वाक्षिप्रंस्यादुत्तराश्रमीति ॥२१॥ ननुप्रविवाहकालविधिर्गृह*स्थाश्रमोक्तकर्म्माधिकारिणामुक्तः॥ नासौत तफलमाप्नोतिकुर्व्वाणोप्याश्रमाच्च्युतः । इति ॥२२॥ यस्तुद्विजोनिरग्निसाग्निकान्य*तरपितृमानथवा*पितृहीनःकृत दार*ज्येष्ठभ्रातृमानविस्मुतब्रह्मचर्य्यः ॥२३॥ गुरुणानुमतःस्नात्वा*यथाविधिसमावृत्तो*गृहस्थाश्रमोक्तकर्म्मानधिका री*सकिमुद्वहेन्नवाऽथ*कदावाप्युद्वहेतेतिचेत् ॥२४॥ तत्रोच्यतेपृथग्धर्म्मविवृद्धये *इतिवचनात्तेनैकान्नभुजो*भ्रा तरोज्येष्ठभ्रातुः*क्रियया क्रियावन्तःस्युः ॥ २५ ॥ तेषानधिमुतब्रह्म*चर्य्याणांसमावृत्तानां * विवाहेकाल नियमोनास्तिज्येष्ठ*श्चेदपुत्रकोभवति*तदाप्युपयमोद्वहेत ॥ २६ ॥ वक्ष्यतेहिभ्रातृणामेकजातानां*मेकश्चेत् पुत्रवान्भवेत् ॥ सर्व्वांस्तांस्तेनपुत्रेणपुत्रिणोमनुरब्रवीत् ॥ इति ॥ २७ ॥ पृथगन्नास्तुस्वधर्म्म*करणार्थंपूर्व्वोक्त कालेविवहेत्*पितृमांस्तुपितुःक्रियया क्रियावान्*यथाकाममुद्वहेत् ॥२८॥ पितुरनन्तफलदपुत्रोत्पाद*नार्थंवशिष्ठे नोक्तंहि ।२९। पुत्रेणलोकाञ्जयतिपौत्रेणानन्त्यमश्नुते । अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपम् । इति।३०। ननुवि वाहेनकथ*मेवंगृहस्थाश्रमोक्त*धर्म्माधिकारीभवति*कोऽयमस्यविवाह इति*चेत्तत्रोच्यतेश्रूयतां ॥३१॥ उद्वहतेरर्थोलो के*वैदेचप्रसिद्धोवाम*कर्म्मचतुष्टयात्मक*आग्नेयपुराणेऽग्निना*ऽभिहितस्तद्यथादृश्यते।३२।कन्यादानंशचीयागोविवा होऽथचतुर्थिका । विवाहएषकथितोवामकर्म्मचतुष्टयः ॥ इति ।३३। द्विजातीनांपुंसामाश्रमारम्भेतु*प्रथमोब्रह्म चर्य्याश्रमोदक्षिणः*कायवाङ्मनोभिर्मैथुनवर्जनात् ।३४ तद्विपर्य्ययात्तु गृहाश्रमोवाम*स्तत्रैतत्कन्यादानादि*

मपि वर्णे वर्णे वाधर्म्म्योविवाहः ।१४१। तेषांब्राह्मणप्रभृतीनांसम*ब्राह्मणत्वादिरस्त्यार्थ*मिने दाम्निब्राह्मणादुत्कविधि
मो*दाशोयुक्त्यावाव्यवस्थापाः ।१४२। शूद्रवत्तेपितेषां *नमुद्रोक्तविधानेन*विवाहव्यवस्थाकार्या ।१४३।यदिवादावि
देषां पुत्राःकेचित्*प्रायश्चित्तंकृत्वायथावत्संस्कृता*ब्रह्मचर्यं चरन्तीव दमधीता ।१४४। अवियुक्तब्राह्मणगौः*सन्तोऽवी
कृत्वा*ममावसेयु*स्तदर्थं ब्राह्मणप्रभृतीनिरहा ।१४५। ननूक्तेतद्विजोभार्यामिति*कथमपदं नि*हानूशमार्या
भवति ।१४६। नैवं संज्ञाया हिमत्वः*कर्म्मणियत्पत्ययनिष्पन्ना*विवाहाद्विभार्योच्यते ।१४७। अन्योऽसं भा
र्यामितिपाणिनीय*सूत्रं यामसंज्ञायांभ जः*क्यब्विधाना ऽकृलोपा*दितिपूर्वं यसंज्ञाया *अजोणाह्रवतिभार्यास्ति ।१४८
ननुतर्हिकथंकाभार्यास्त्रीति*चेत्तत्रोच्यतेस्वयं य*दत्र वाच्याभेवध्यते ।१४९।शूद्रैवभार्याशूद्रस्यसबस्यायविधश्रूते ।
तेचस्वाचे वराश्चतास्वस्वाचाग्रजन्मनः ।१५०।तेनपूर्व्वं वर्णा जानारीनाधम*वर्णसाभार्यास्य संज्ञा* देवं संज्ञायामेव
भार्याशब्दःशब्दः नापिप्रयोजितः ।१५१ । विन्देतविधिवद्भार्यामसमानार्षगोत्रजामितिगौतमनाम्नैव संज्ञायां*
भार्याशब्दःप्रयोजितः ।१५२। व्यस्त्वःसवर्णां भार्यां विन्देतानन्तरपूर्व्विका*मितो वं भार्याशब्दार्थे *मविधानकस्मि
ह्याचष्टे ।१५३। भार्यात्वस्वरूपसहितविशेषणत्वे *नेतरेतराश्रयोन*उहृ तद्विजोभार्यां* मित्यादौभाविनिभृत*वड
पचारोविज्ञेयः ।१५४। विवाहादनन्तरमेव*भार्यात्वनिष्पन्नेरिति*तत्तु प्रमादादाख्यातम् ।१५५। यतोविन्देतसह
शोभार्या।* मित्यादौभार्याशब्देन*स्वरूपसहितविशेषणं ।१५६। सवर्णामित्यादिविशेषणं या * विशेषितत्वात्सवर्णा*
मितियम्येषांविवाहे *यासवर्णाभवतिताम् ।१५७। नचभाविनिभूतोपचारःस्या*द्भार्यां तिभविष्यतिणादिधाना*न्न
दिभूतेश्चादिभिरसंज्ञापि ।१५८ । ननुतर्हि किं ब्राह्मण*सवर्णां वर्णानां कन्यां* उद्वहेत्तत्क्षत्रियस्त्रयाणां कन्यां*
वैश्योद्वयोस्सुवर्णयोःकन्यादिति ।१५९ । नैतं ततप्रतिषेधार्थं हिसवर्णा*मित्यत्रतर्हि जन्मनासवर्णामिति वसवर्णामि
त्यर्थोसिद्धाति*भार्यं भार्यामितिवचनं ।१६०। नैवं सवर्णामितिमात्रोक्तौहि*जन्मतःसवर्णामितिप्राप्ते *भार्या
मितिवचने नसोऽर्थोव्यवच्छिद्यते ।१६१। याभार्याविवाहात्पत्युःसवर्णा स्यात् * तां सवर्णामित्यर्थोवाऽयते
न*सवर्णामित्येषांविग्रहवाक्यम ।१६२। सापि चशब्दत्वात्समानोऽस्या* पत्युःसमानोवर्णोविवाहेन*सम्भवतिय
स्यास्तांसवर्णां भार्याम् ।१६३ । यथादण्डैःसदण्डैश्च*प्रहृताप्रवृत्तं युद्धं * दण्डादण्डियुद्धमिति*न्यपदार्थे बहुव्रीहिः
।१६४। तथासवर्णामित्यत्र*विवाहेनसम्भवतियस्याइत्यन्यपदार्थे बहुव्रीहिः ।१६५। मन्वे विवाहेनपति*सामर्थ्यस
म्भवोब्राह्मणादुहितुः*क्षत्रियदुहितुर्वैश्यादुहितुश्चभवति ।१६६।नतुशूद्राद्दुहितुर्मन्त्रे विवाह*विधानाभावादिति
।१६७। तथाब्राह्मणोब्राह्मण*क्षत्रियवैश्यकन्याउद्वहेत*क्षत्रियःक्षत्रियवैश्य*कन्ये वैश्योवैश्यकन्याम् ।१६८।नतु
शूद्रकन्यांमन्त्रै*र्विवाहाभावादसावर्ण्या*तत्रजातपुत्रस्यशूद्रत्वदोषात् ।१६९। मन्वेवश्चेत्तर्हि सवर्णामुद्वहेत*तेतां
वमालवचनां* तदर्थःसिद्ध्यतिवार्थं *पुनर्भार्यामितिवचनं ॥१७०॥ नैवं प्रतिलोमजास्तु * क्षत्रियवैश्ययोमन्त्रै*
र्विवाहे नसवर्णाः*स्तासां तद्व्यवच्छेदार्थं भार्यामिति ॥ १७१ ॥ नहिक्षत्रियस्यभार्या*ब्राह्मणदुहितानवा*
वैश्यस्यभार्या क्षत्रिय*ब्राह्मणदुहितरौस्तः* ॥ १७२ ॥ ननुयदिक्षत्रियेणोढाब्राह्मण * दुहिताक्षत्रियाभवे*द्वैश्ये
नोढाक्षत्रियकन्याब्राह्मण*कन्येवैश्येएवस्याताम् ॥१७३॥तर्हि क्षत्रियात्स्वोढायां*ब्राह्मणकन्यायां जातः*क्षत्रियएव
भवतु नतु सूतोभवतु ॥१७४॥ वैश्याच्चस्वोढायां *क्षत्रियकन्यायां* जातोवैश्यएवभवतु * नतु मागधोब्राह्मण
कन्यायांचवैश्यएवनवैदेहः ॥१७५॥ सवर्णाभ्यःसवर्णास्तु*जायन्तेवैसजातयः*इति वं याज्ञवल्क्यादिवचनात् ॥१७६
नैवं यतोब्राह्मणक्षत्रियवैश्यशूद्राः*पूर्व्वंपूर्व्वं गुरवउत्तरोत्तर *लघवइतिलघुत्वात्पूर्व्वोत्तरविवाहाः ॥ १७७ ॥ पूर्व्व
पूर्व्वस्मात्तरोत्तरानारी विवाहेतिभार्यासंज्ञा तत्रयदिक्षत्रियोवैश्योवापूर्व्वां पूर्व्वां मोहादुद्वहेत् ॥ १७८ ॥
तदागुर्व्वी कन्या तद्वहन्स्वमपकर्षाधःपतितापथं सोभवतितस्मात्तस्यपथ्यं सज्जःशूद्रधर्म्मास्यात् ॥ १७९ ॥
वस्मात्ऽब्रह्मयमेवशूद्राणां वर्णधर्म्माणाःसर्व्वेऽपथ्यं सज्जाःस्मृताः ॥ १८० ॥ इतीवमभिप्रेत्याविष्णुनोक्तं च*यथब्रा
ह्मणस्यावर्णात्वक्रमेण चतस्रोभार्याभवन्तितिसृःक्षत्रियस्यद्वेवैश्यस्यैकाशूद्रस्य । इति । १८१ । असवर्णात्वक्रमे

सार्वभौमाग्निहोत्रिका। अग्निं परिगतायाश्च पुनर्भूप्रसवाश्च या॥ १८९ ॥ इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत्। तस्माद्विवाहसम्प्रै तावर्जनीयाः प्रकीर्त्तिताः ॥ १९० ॥ नप्राप्ते पितृद्वेश्म वरेत्वदत्तां * जातं रज स्कान्दहेदिति * वृषली पतिवद्भावात् ॥ १९१ ॥ तदुक्तं यमसंहितायां यथा*सम्प्राप्ते द्वादशेवर्षे यः कन्यां न प्रयच्छति। मासिमासि रजस्तस्याः पिता पिबति शोणितम ॥ १९२ ॥ माताचैव पिताचैव ज्येष्ठ भ्राता तथैव च। त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम ॥ १९३ ॥ यस्तां विवहते कन्यां ब्राह्म णो मदमोहितः। असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥ १९४ ॥ वन्ध्या तु वृषली ज्ञेया वृषली चमृतप्रजा। शूद्री च वृषली ज्ञेया कुमारी च रजस्वला ॥ १९५ ॥ स्वयं यापरित्यज्यान्यद्वर्षे ण वृषस्यति। वृषली सापि नैवैका शूद्री तु वृषली भवेत्। इत्यादि ॥ १९६ ॥ अत्र सम्प्राप्ते द्वादशे वर्षे यः * कन्यां न प्रयच्छतीति*प्रशब्देन प्रकृष्टदान*उक्तं तच्चयोग्यवरे * कन्यादानाद्भवतीति ॥ १९७ ॥ नतु निकृष्टवरे कन्यादानं *प्रकृष्टदानं भवति*सदृश वरालाभे तु ॥ १९८ ॥ कन्यायामदत्तायां रजस्वलायां * नदोषोभवतीति ज्ञापितमेव * मेवचमनुनाप्युच्यते तद्यथा ॥१९९॥ उत्कृष्टायाभिरूपाय*वरायसदृशायच। अप्राप्तकालाश्च तस्मै कन्यां दद्याद्यथाविधि ॥२००॥ काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि। नचैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ २०१ ॥ त्रीणिवर्षाण्युदी क्षेत कुमार्य्यृतुमती सती। ऊर्द्धन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ इति ॥ २०२ ॥ * ॥ नन्वेतावल्लक्षणा माममेवकिं *कन्यायाश्चलक्षणम*थान्यदस्तीत्यपरञ्च*कन्यायाश्चविवाह्यत्वमलक्षणमनोच्यते ॥ १ ॥

**असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ॥५॥**

तत्राचार्य्याणामियं रीतिःशास्त्र*स्योपदेशे त्रिधावाक्यं प्रयुज्यते *विध्यर्थवादानुवादवचन*विनियोगादितिगौतम न्यायेऽतत्रोद्वहेतद्द्विजोभार्य्यां *सवर्णां लक्षणान्विता*मितिविधिविनियोग*वचनं सामान्यतोनियोक्त्राकृतं ॥२॥तद्वि धार्थस्यविशेषज्ञानार्थ*मर्थवादवचनमनुवाद*वचनञ्चनियोक्त्राप्रयुज्यते ॥ ४ ॥ तत्रार्थवादश्चतुर्विधउक्तो*गौतमेन न्यायशास्त्रे*स्तुतिर्निन्दापरकृतिः*पुराकल्पइत्यर्थवाद*इतितन्न्यायसूत्रंच ॥ ५ ॥ विध्यर्थस्यग्राह्यार्थंग्रहणार्थं* स्तुतिःप्रशंसावचनं *वर्जनार्थं निन्दावचनं ॥ ६ ॥ मतान्तरानुमत्यर्थं *स्वमतदार्ढ्यार्थं चपरकृतिःपुराकल्पः ॥७ ॥ संशयच्छेदनार्थं स्फुटार्थं यत्*पुनरुक्तं सोऽनुवादः*इत्येवं क्रमादुच्यते ॥ ८ ॥ तत्रयदविप्लुतब्रह्मचर्य्यो*गुरुणा नुमतःस्नात्वा*यथाविधिसमावृत्तो*द्विजः सवर्णां लक्षणा* न्वितां भार्य्यामुद्वहेत ॥ ९ ॥ इतिसामान्यतोविधि* रुक्तस्तत्किं सर्व्वां सवर्णामन*लोमांसवर्णांद्विज*कन्यामुद्वहेदिति ॥ १० ॥ तत्रस्तुतिनिन्दाभ्यां विवाह्याविवाह्ये* उच्येते असपिण्डाच*यामातुरित्यादिश्लोकैः ॥ ११ ॥ * ॥ ५ ॥ उद्वहेतद्विजोभार्य्यां *सवर्णामित्यनेन*विवाह्या विहिता ॥ १ ॥ ब्राह्मणस्यभार्य्या ब्राह्मणकन्या*क्षत्रियकन्यावैश्यकन्याचतथा*क्षत्रियस्यभार्य्याक्षत्रियकन्या* वैश्यकन्याचवैश्यस्यवैश्यकन्या ॥२॥ यायामातुरसपिण्डाचपितु*रसगोत्राचभवति*साद्विजातीनां दारकर्म्मणिच* मैथुनेचप्रशस्तास्यात् ॥ ३ ॥ दारकर्म्मखलुयथोक्तविधिना*विवाहेगन्धर्वलाभ्याश्चमोक्त*कर्म्मतत्रप्रशस्ताधर्म्या भवति ॥ ४ ॥ मैथुनेचपुत्राद्यपत्योत्पादने *प्रशस्ताभवतिनतु*मातृसपिण्डावापितृ*सगोत्रावाप्रशस्तास्यात् ५॥ इतितस्यामातुरसपिण्डापितु * रसगोत्राविवाह्यास्यात*निन्द्यामातुःसपिण्डा * पितुःसगोत्राविवाहेवर्ज्या

मातुल्यागोत्रीयाध्याये ॥ २७ ॥ अतुल्यगोत्रस्य रजःक्षयान्ते रक्तोविसृष्टं मिथुनीकृतस्य । किंस्यात्सतुल्यात्प्रभवं च षड्भ्योयत्स्त्रीषुगर्भत्वमुपैतिपुंसः ॥ इति ॥ २८ ॥ अत्रस्त्रीष्वितिपत्नीषु* अतुल्यागोत्रस्यपुंस *इत्यर्थस्तदुपपन्नो* मन्त्रैर्हि विवाहे पत्नी*पतिसगोत्राभवति ॥ २९ ॥ तत्रपौर्वस्त्रिकात्तदाहधर्म्म*णातुल्यागोत्रत्वातिज्ञापनम् ३० एवमस्मिन्स्मृतिशास्त्रेपिविष्णुना* स्वसंहितायामभ्युक्तं ॥ ३१ ॥ वह्वभार्याश्चमिश्राश्चसमान*वर्णाश्चकनिष्ठयापि सहधर्मकार्यं ज्येष्ठया ॥ ३२ ॥ समानवर्णाभा * तेत्वनन्तरयै * वापद्यपिचनत्वेवद्विजः शूद्रया ॥ ३३ ॥ इति ॥अत्र मन्त्रैर्विवाहेतु *सवर्णासवर्णाकन्या*पतिवर्णासतीसवर्णाभवति ३४ तत्र.गुर्वस्त्रिकवर्णोपदेशेन*विशेषज्ञापनं नस्यात्*तदर्थमनुरावस्त्रिकसावर्ण्य * धर्म्मेणज्ञापनमिति ॥ ३५ ॥ तथैवातमातुःविवाहात्पूर्व्वा*वस्थयैवसि ज्ञापनं*मातुर्विवाहात्पूर्व्वंयायासपिण्डा* कन्यासासाविवाहेवर्ज्या ॥ ३६ ॥ स्वयमेववक्ष्यतेच*सपिण्डता तुपुरुषेसप्तमेविनिवर्त्तते ॥ इति ॥ ३७ ॥ त्रयाणामुदकंकार्यं त्रिषुपिण्डःप्रवर्त्तते । चतुर्थःसम्प्रदातैषां पञ्चमोनोपपद्यते । इतिच । ३८ ॥ अविपरीतपराभ्यांच*प्रसिद्धत्वादेकविध*वचनंचात्राभिहितम् ॥ ३९ ॥ सपिण्डता तु सर्व्वेषांगोत्रजे साप्तपौरुषी । पिण्डाश्चोदकदानंच शौचाशौचं धनानुगम ॥४० ॥ दायादिच्छेदमाप्नोतिपंचमो ह्यात्मवंशजः । प्राप्नोतिसूतकंगोत्रे चतुर्थे पुरुषेतु मान् ॥ ४१ ॥ चतुर्थे दशरात्रंस्यात्* षण्णिशाःपुंसिपंचमे । षष्ठेचतुरहाच्छुद्धिःसप्तमेतुदिनत्रयम् ॥ ४२ ॥ तथाचमातुलोहत*प्रमातामहस्यचतुर्थः * स्वदादीनांत्रयाणां पिण्डदएव*मातुलादीनांत्रयाणां * पिण्टदस्तस्यप्रपौत्रः ॥ ४३ ॥ वेदेत्रिपिण्डाधिकपिण्डदान * विधानाभावात् पंचमः*पिण्डदोनोपपद्यते ॥ ४४ ॥ तस्मात्पंचमःपुरुषः* प्रथमपुरुषस्यैव*दायादिच्छेदमाप्नोति*नद्वितीयादि पुरुषस्य ॥ ४५ ॥ पूर्व्वपूर्व्वैकैकपुरुषत्यागा*दुत्तरोत्तरैकैकपुरुषस्यहि*धारावाहिपिण्डदत्वं ॥ ४६ ॥ तथाच सप्तमःपुरुषोयेषां*त्रयाणांपिण्डान्ददाति*तेषांमपिण्डःपूर्णाशौचभागीच * दायहरश्चभवति ॥ पंचमोनपिण्ड दायी*नचपूर्णाशौचभागी*नापिदायहरःस्यात् ॥ ४८ ॥ चतुर्थस्तुयेषांत्रयाणांपिण्डान् * ददातितत्पिण्डले पां*स्ततऊर्द्धास्त्रयोभुञ्जते ॥ ४९ ॥ तेनसप्तमस्यापिण्डलेप*भोजित्वसम्बन्धःसाप्तपौरुष* स्तत्रयःप्रथमश्चतुर्थपुरु ष*स्तस्योर्द्धाधस्त्रिभिस्त्रिभिःसापिण्ड्यम ।५०। इत्येवंसपिण्डतातु*गोत्रजेसप्तमेवर्त्तते*चतुर्थादिपुरुषाणां*नतू र्द्धानांत्रयाणाम ॥ तथाचपूर्व्वपूर्व्वैकैकपुरुष * त्यागादुत्तरोत्तरैकैकपुरुष*ग्रहणाद्धाराग्राहिसापिण्ड्यं पिण्ड दायिमध्यवर्त्ति स्यात्साप्तपौरुषम् । ५२ । मार्कण्डेयपुराणोचोक्तंयथा*सपिण्डीकरणादूर्द्धं पितुर्यःप्रपितामहः । सलेपभागितांयातिप्रलुप्तःपितृपिण्डतः । ५३ । तेषामन्यश्चतुर्थोयःपिण्डलेपभुजोनुभुक् । सोपिसम्बन्धतोनू नत्सम्भोगंप्रपद्यते । ५४ । पितापितामहस्चैवतथैवप्रपितामहः । पिण्डसम्बन्धिनोह्येतेविज्ञेयाःपुरुषास्त्रयः । ५५। लेपसम्बन्धिनश्चान्ये पितामहपितामहात् । प्रभृत्यूर्द्धास्त्रयस्तेषां यजमानस्यसप्तमः । ५६ । इत्येषमुनिभिः प्रोक्तःसम्बन्धःसाप्तपौरुषः । ततश्चसप्तमादूर्द्धामनुलेपभुजस्तथा । ५७ । इति । एवमत्स्यपुराणेपिप्रोक्तं *लेप भुजश्चतुर्थाद्याःपित्राद्याःपिण्डभागिनः । पिण्डदःसप्तमस्तेषांसम्बन्धःसाप्तपौरुषः । इति । ५८ । मार्कण्डेय पुराणसदृश्वा*प्रमादीसापिण्ड्यंसाप्तपौरुष*मितिपठतितदसत्*पंचमेपिण्डदत्वाभावात् । ५९ । चतुर्थस्यापि सप्तपौरुषं*सापिण्ड्यःत्रिभिरूर्द्धैस्त्रिभिरधस्तात् * इत्येवंव्याख्यानमविद्वान्प्रमादी * षडूर्द्धाःषडधस्तादितिव्या चष्टे ।६० । तदसाधुनयोदशपौरुषेय*प्रसङ्गात्सापिण्ड्यस्येति ।६१। यथाचप्राङ्मातुर्विवाहात्मातृऊर्द्धा*स्त्रयो

गोत्राणामेषां * स्वसृणां विवाहे तथा * विषदोषो न भवति * नारदेनोक्तं यथा ॥ १२३ ॥ ते पसन्तानिनः सर्वे पतिताः शूद्रतां गताः ॥ इति ॥ १२४ ॥ समानार्षसगोत्रावि * वाहोनैवकर्त्तव्यस्तत् * कृते चाण्डाल त्वदोषात् । अपत्यं पौत्रप्रभृति गोत्रमिति * पाणिनीय सूत्र तस्मिन * गोत्रार्थे तद्धित प्रत्ययन्ता * गार्ग्यो वात्स्य इत्यादयः ॥ १२५ ॥ केचिद्गोत्रकारिणोहि * तनयोर्दर्शितायथा * यमदग्निर्भरद्वाजो विश्वामित्र इति गौतमाः । १२६ । वशिष्ठकाश्यपाद्याश्च तनयोगोत्रकारिणः । एतेषां यान्यपत्यानि तानि गोत्राणि पौत्रतः ॥ इति ॥ १२७ ॥ यच्चवृहन्नारदीये पुराणे * द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ १२८ ॥ इत्या द्युक्त्वा प्रतिषिद्धः * इमान्धर्म्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ इति ॥ १२९ ॥ तत्तु कलौ मायेय ब्राह्मणादीनां * क्रियालोपाद्दुष्टाचारात् * प्रतिषिद्धं न तु क्रियावतामुभयेषामस * वर्णानां पुत्रकन्यानाम् ॥ १३० ॥ नन्वेवं तर्हि पैतृष्वस्रेयीं मातुः स्वस्रीयां चकिं विवहेदिति चेन्नवचनेह्यस्मिन् * वर्जनाभावेपिप्राय * श्चित्ताधिकारे वर्जनोक्तेः १३१ पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेवच । मातुश्चभ्रातुस्तनयां गत्वाचान्द्रायणं चरेत् १३२ एतास्तिस्रस्तु भार्यार्थे नोपगच्छेत्तुबुद्धिमान् । ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः १३३ इति ५ एवं तर्हि सर्व्वस्मिन्नेव कुले * जाताकन्याकिं विवाह्या * तत्राह महान्तीत्यादि । १ । ६ ॥

**महान्त्यपिसमृद्धानिगोऽजाविधनधान्यतः । स्त्रीसम्बन्धे दशैतानिकुलानिपरिवर्ज्जयेत् ॥६॥**

स्त्रीसम्बन्धे विवाहे गोऽजाविधन * धान्यतः समृद्धानि * महान्त्यपि तानिवक्ष्य * माणानिदशकुलानि * परिवर्जयेत्तद्यथा ॥ १ ॥ ६ ॥

**हीनक्रियंनिष्पुरुषंनिश्छन्दोरोमशार्शसम् । क्षयामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानिच ॥७॥**

हीनक्रियमित्यादि * ॥ ७ ॥ हीनक्रियं पञ्चयज्ञादिक्रियाभि * र्हीनमेकंकुलं तथा * निष्पुरुषं पुरुषजन रहितं * स्त्रीजनमात्रं द्वितीयं ॥ १ । निश्छन्दोवेदाध्ययन * हीनं कुलन्तु तृतीयं * रोमशं बहुनिविड * लोमयुक्तो जनोयस्मिन् * कुले जायते तत्कुलं चतुर्थं ॥ २ ॥ अर्शसं यस्मिन्नर्शोऽस्ति * तत्कुलं पञ्चमं यस्मिन् * कुलेपि वोरन्यतरः * क्षयीवाचिरामयावी * वापस्मारीश्वित्रीकुष्ठी * दशैतानिकुलानित्यजेत् । ३ । एभ्योऽन्यस्मात्कुला द्भार्यामुद्वहेत् * इतिनिन्दास्तुतिभ्यामु० विध्यर्थः स्फुटीकृतः ॥ ४ ॥ ७ ॥ नतुलक्षणान्वितामित्युक्तं यत्तत् * किंलक्षणामुद्वहेत * तत्राह नोद्वहेदित्यादि । १ । ८ ।

**नोद्वहेत्कपिलांकन्यांनाधिकाङ्गींनरोगिणीम । नालोमिकां नातिलोमांन वाचाटांनपिङ्गलाम् ॥८॥**

कपिलामीषद्धतपिङ्गलवर्णां * कन्यां नतु कपिलकेशां * कपिलशब्देनकेशा * नभिधानादेवविद्यात् । १ । यमुनां दिलोमायुत * गोमत्यालोम्नि वकृष्णा * कपिलेत्यवमादिरभिधीयते * मातपख्व इवर्णेन । २ । नाधिका ङ्गीं नहीनाङ्गीं * नरोगिणीं नात्यल्पलोमवतीं * नातिलोमवतीमपि । ३ । नवाचाटामतिप्रिय * वाग्भाषिणीं पिङ्गलांचनेत्रेकामुद्वहेत्ता * भ्योऽन्यांलक्षणामुद्वहेत् । ४ । ८ ॥

धर्म्म्याश्चधर्म्मिष्टाज्जोष्ठातस्यास्वजातिषु ॥ २१ ॥ मैथुने सवर्णा सवर्णात्वद्विज* दुहितृषु भार्यात्वत् *पुत्रोत्पादने तु सा त्वं *पितृवर्णत्वाच्चाषां पुत्राणामिति ॥ २२ ॥ २१ ॥ ननु काकस्य भार्येत्यतआह*शूद्रैवशूद्रस्येत्यादि ॥ १ ॥

**शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते । ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ १३ ॥**

शूद्रैव शूद्रस्य भार्या संमतासात्*सा च स्वा चेति द्वे शूद्रा वैश्ये तु * वैश्यस्य भार्ये संमते भवतः ॥ १ ॥ ते च स्वा चैवेति ते शूद्रा वैश्ये *स्वा चेति क्षत्रिये ता व*शूद्रा वैश्या च क्षत्रिया स्तिस्रो* राज्ञो भार्याः संमताः स्युः ॥२॥ ताश्च स्वा ब्राह्मणी चेति चतस्रो*ब्राह्मणस्य भार्याः संमताः ॥ ३ ॥ १३ ॥ ननु तर्हि शूद्राभार्या*विवाहो द्विजानां कथं *नोक्त इत्यत आह*न ब्राह्मणेत्यादिश्लोकं ॥ ३ ॥ १

**न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः । कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥१४॥**

आपद्यपि तिष्ठतोरेव ब्राह्मण*क्षत्रिययोः कस्मिंश्चिदपि वृत्तान्ते *धर्म्मकर्म्मणि मैथुने वा न शूद्रा*भार्योपदिश्यते केरपि ॥ १ ॥ तद्यथा विष्णुनोक्तं हि*अथ ब्राह्मणस्य वर्णानुक्रमेण*चतस्रो भार्या भवन्ति तिस्रः क्षत्रियस्य द्वे *वैश्यस्यैका शूद्रस्य ॥ २ ॥ द्विजस्य भार्या शूद्रा तु धर्म्मार्थे न भवेत् क्वचित् । रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता ॥ ३ ॥ हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः । कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ ४ ॥ दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु । नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति ॥ ५ ॥ याज्ञवल्क्येनाप्युक्तं तत्*यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः । न तन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ ६ ॥ तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् । ब्राह्मणक्षत्रियविशां भार्याः स्वा शूद्रजन्मनः ॥ ७ ॥ इति ॥ व्यासेनोक्तञ्च । न तु शूद्रां द्विजः कश्चिन्नाधमः पूर्ववर्णजाम् ॥

इति ॥ ८ ॥ १४ ॥ ननु किमर्थं ब्राह्मण * क्षत्रिययोः शूद्राभार्या नोपदिश्यते तर्हि किं * वैश्यस्योपदिश्यते इ *त्यत आह हीनेत्यादि ॥ १ ॥ १५ ॥

**हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः । कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥१५॥**

द्विजातयो ब्राह्मणक्षत्रियवैश्याः*हीनजातेः शूद्रस्य स्त्रीं *मोहात्सौन्दर्यादिगुणे* शक्त्तवैकल्याद् उद्वहन्तः* ससन्तानानि कुलानि ॥ १ ॥ आशु शूद्रतां नयन्ति*तस्माद् द्विजातीनां शूद्रा*भार्या नोपदिश्यत इति ॥ २ ॥ प्रमादिनो यावच्छतेसवर्णाम*परिणीय हीनजा*तिस्त्रियं शूद्रां परिणयन्त इति । ३ । तन्न सवर्णापरिणयाद् उत्तरं *तद्दनाविधिमाप्तेः ॥ ४ ॥ १५ ॥ नन्वाशु शूद्रतां नयन्तीति यदुक्तत् * कतिकालेनेत्यत आह * शूद्रावेदीपतती त्यादि ॥ १ ॥ १६ ॥

**शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च । शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ १६ ॥**

शूद्रामविन्दद्यःस शूद्रावेदी* शूद्रावेदनमात्रमे *वात्रेर्मते द्विजः पतति ॥ १ ॥ शौनकस्य तु तथ्यस्य मते *

पुत्रोत्पत्त्या पतति * अगोमते पौत्रापत्यत्वात् पतति ॥ २ ॥ मतभेदाद्दैतत्परमतत्रय * अप्रतिषेधात् अमतं * तदभिप्रायभेदेन * यथार्थमितिकर्त्तव्य ॥ ३ ॥ तत्रायमत्र इतिभिप्रायो * द्विजकन्यामनूढ्वा * शूद्रावेदीशूद्रावेद * समानमेव पतति ॥ ४ ॥ शौनकस्त्वाह द्विजः सवर्णां साद्यां * अनूढ्वा शूद्रावेदी सुतोत्पत्त्या * पततिनवेदनमात्र ॥ ५ ॥ भृगुस्त्वाह सवर्णां तत्वोमजेद * अनूढ्वा तां शूद्रावेदी * पौत्रोत्पत्त्यापततीति ॥ ६ ॥ १६ ॥ नरतेषां ततः किं पापं भवतीत्यत आह शूद्रामित्यादि १ ॥ १७ ॥

**शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिम। जनयित्वासुतंतस्यांब्राह्मण्यादेवहीयते ॥१७॥**

शूद्रां शयनमारोप्य * ब्राह्मणो ऽधोगतिं याति * तस्यां शूद्रायां स्त्रियां * सुतं जनयित्वा ब्राह्मण्यादेव हीयते ॥ १ ॥ अत्रापि प्रमादी तां चष्टे * सवर्णामपरिणीयेति * तच्चासाधु सवर्णापरिणयात् * दुस्तरं शूद्रापरिणयापत्तेः ॥२ ॥ ॥ १७ ॥ अपरश्च दोषमाह दैवेत्यादि ॥ १८ ॥

**दैवपित्र्यातिथेयानितत्प्रधानानियस्यतु। नाश्नन्तिपितृदेवास्तन्नचस्वर्गंसगच्छति ॥ १८ ॥**

दैवं कर्म पित्र्यं कर्म आतिथेयं च * कर्मतद्दैवपित्र्यातिथेयकर्म * यस्य शूद्रावेदिनो देवाः * पितरश्च तन्नाश्नन्ति ॥ १ ॥ १८ ॥ नन्वेषां कृतोनिष्कृतिर्भवतीत्यत आह वृषलीत्यादि ॥ १ ॥ १९ ॥

**वृषलीफेनपीतस्यनिःश्वासोपहतस्यच। तस्यांचैवप्रसूतस्यनिष्कृतिर्नविधीयते ॥ १९ ॥**

वृषलीमुखस्य फेनं * चुम्बनादिना पिबत * स्तस्या निःश्वासोपहतस्य * तस्यां पुत्रोत्पादकस्य * निष्कृतिर्न विधीयते ॥ १ ॥ १९ ॥ ननूढ्वा तद्द्विजो भार्या * मित्यादिभिर्द्विजानां पुंसां * विवाह उक्तः शूद्रैव * भार्या शूद्रस्येत्यनेन शूद्रस्योक्तः ॥ १ ॥ स्त्रीणां विवाहास्तेषां * चतुर्णां वर्णानां कथं * स्यादित्यत आह चतुर्णामित्यादि ॥ २ ॥ २० ॥

**चतुर्णामपिवर्णानांप्रेत्यचेहहिताहितान्। अष्टाविमान्समासेनस्त्रीविवाहान्निबोधत ॥२०॥**

वर्णानां चतुर्णामपि * प्रेत्य चेह च लोके हितानहिता * नपि स्त्रीणामष्टौ विवाहान् * समासेन निबोधत ॥ १ ॥ अत्रापि कश्चित्प्रमादी * व्याचष्टे स्त्रीविवाहानिति * भार्याप्राप्तिहेतून् विवाहान् शृणुतेति ॥ २॥ तदसत् किं द्विधी स्त्रीलाभ * हेतवउपायास्ते पतिलाभहेतवो न भवन्ति ॥ ३ ॥ पुंसां स्त्रीलाभे न हि स्त्रीणां च पति * लाभो भवति व्यर्थं च स्त्रीपदोपादनं विवाहो * ह्यन्यतरेणापि द्वयोः स्त्रीपुंसयोः ॥ ४ ॥ २ ॥ तानष्टौ विवाहान्नामनिर्देशतो ब्राह्म * इत्यादिना श्लोकेन ॥ १ ॥ २१ ॥

**ब्राह्मोदैवस्तथैवार्षःप्राजापत्यस्तथासुरः। गान्धर्वोराक्षसश्चैवपैशाचश्चाष्टमोऽधमः ॥ २१ ॥**

स्पष्टार्थोऽयं श्लोकः ॥२१॥ नन्वष्टधा स्त्रीविवाहे * किं * विशेषो विज्ञेय इत्यत * आह योयस्येत्यादि ॥ १ ॥ २२ ॥

**योयस्यधर्म्म्योवर्णस्यगुणदोषौचयस्ययौ । तद्वःसर्व्वंप्रवक्ष्यामिप्रसवेचगुणागुणान् ॥ २२ ॥**

स्पष्टार्थोऽयं ॥ २२ ॥ तत्रादौ ब्राह्मणादिषु ये * स्त्रीविवाहा धर्म्म्यास्तद् * आह षडानुपूर्व्येत्यादि ॥ १ ॥ २२ ॥

**षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोऽवरान् । विट्छूद्रयोस्तुतानेवविद्याद्धर्म्म्यानराक्षसान् ॥२३**

विप्रस्य पुं सम्भानुपूर्व्या * ब्राह्मादीन् ब्राह्मदैवार्षप्राजापत्या * सुरगान्धर्व्वान् इत्येतान् षट् * स्त्रीविवाहान् धर्म्म्यान् एव विद्यात् ॥ १ ॥ क्षत्रस्यावरानासुरगान्धर्व्व * राक्षसपैशाचान् इति * चतुरः स्त्रीविवाहान् धर्म्म्यान् विद्यात् ॥ २ ॥ विट्शूद्रयोस्त्वराक्षसांस्तानेवासुरगान्धर्व्व * पैशाचान् विवाहान् धर्म्म्यान् विद्यादिति ॥ ३ ॥ २३॥ तत्र प्रशस्ताप्रशस्तभावमाह * चतुरो ब्राह्मणस्येत्यादि ॥ १ ॥

**चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः । राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥ २४ ॥**

तत्राद्यां चतुरो ब्राह्मार्षदैव * प्राजापत्यान् स्त्रीविवाहान् * ब्राह्मणस्य प्रशस्तान् कवयो विदुः * अप्रशस्तौ द्वावासुरान्त्यौ २ क्षत्रियस्य राक्षसमेकं * स्त्रीविवाहं प्रशस्तं विदुः * आसुरगान्धर्व्वपैशाचान् * पुनरप्रशस्तान् विदुः ॥ ३ ॥ वैश्यशूद्रयोः आसुर * मेकं स्त्रीविवाहं प्रशस्तं कवयो * विदुः गान्धर्व्वपैशाचौ * पुनरप्रशस्तौ विदुः ॥ ४ ॥ ॥ २४ ॥ तर्हि किमप्रशस्तान् स्त्री * विवाहान् न कुर्य्यात् किमर्थं * तेषां विधानमुक्तं * मित्यत आह पञ्चानान्त्वित्यादि ॥ १ ॥ २५॥

**पञ्चानान्तुत्रयोधर्म्म्याद्वावधर्म्म्यौस्मृताविह । पैशाचश्चासुरश्चैवनकर्त्तव्यौकदाचन ॥ २५॥**

पञ्चानां प्राजापत्यासुरगान्धर्व्व * राक्षसपैशाचानान्तु * मध्ये त्रयः स्त्रीविवाहाः * प्राजापत्यगान्धर्व्व * राक्षसा धर्म्म्या उक्ताः ॥ १ ॥ तत्र ब्राह्मणस्य प्राजापत्यः * प्रशस्तो धर्म्मो गान्धर्व्व * स्त्वप्रशस्तो धर्म्म्य एव * क्षत्रियधर्म्मोऽयं ब्राह्मणस्य राक्षसः प्रशस्तो धर्म्म्यः ॥ २ ॥ द्वौ चाधर्म्म्यौ ब्राह्मणस्य * अप्रशस्तौ धर्म्म्यावपरावरौ * न कर्त्तव्यः पैशाचस्त्वविहितत्वाद् कर्त्तव्य एव ॥ ३ ॥ २५ ॥ क्षत्रियस्य विहितेषु * चतुर्ष्वासुरादिषु तु * कार्य्याकार्य्य विवाहानाह * पृथक् पृथगित्यादि ॥ १ ॥ २६ ॥

**पृथक्पृथग्वामिश्रौवाविवाहौपूर्व्वचोदितौ । गान्धर्व्वोराक्षसश्चैवधर्म्म्यौक्षत्रस्यतौस्मृतौ॥२६**

यौ गान्धर्व्वराक्षसौ द्वौ * विवाहौ क्षत्रियस्य तु * चोदितौ तौ पृथक् पृथग्वा मिश्रौ वा । १ । पूर्व्वं गान्धर्व्वेण * परिणीय राक्षसेन धर्म्म्यौ कृतौ * पैशाचासुरौ न धर्म्म्यौ ॥ १ ॥ वैश्यशूद्रयोस्तु पूर्व्वं * मनोक्ता राक्षसवर्ज्जं * त्रयः स्त्रीविवाहा आसुरगान्धर्व्व * पैशाचास्तत्रत्वासुरो * धर्म्म्यः शेषौ त्वधर्म्म्यौ ॥ २ ॥ २६ ॥ ननु ब्राह्मधर्म्म्यधर्म्म्या विवाहास्ते च * ब्राह्मादयः किंलक्षणा * इत्यत आह आच्छाद्येत्यादि ॥ १ ॥ २७ ॥

**आच्छाद्यचार्च्चयित्वाचश्रुतशीलवतेस्वयम् । आहूयदानंकन्यायाब्राह्मोधर्म्मःप्रकीर्त्तितः२७**

इच्छयेत्यादि ॥ ३२ ॥ कन्यायाश्चवरस्यचे*च्छयायोऽन्योन्यसंयोगक्रिया*समैथुनयोगा न्धर्व्वोधर्मः*कामसम्भवोविज्ञेयः ॥ १ ॥ ३२ ॥

हत्वाछित्वाचभित्वाचक्रोशन्तींरुदतींगृहात्। प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ ३३

हत्वेत्यादि ॥ ३३ ॥ स्वाभीष्टांकन्यांहत्वाछित्वाच*भित्वाच* क्रोशन्तीञ्चनर्दन्तींरुदतींच गृहादितिब्रूहे नि प्रसह्य ॥ १ ॥ वरेणकन्याहरणं*राक्षसोविधिर्नामस्त्रो*विवाहोबुधैरुच्यते ॥ २ ॥ ३३ ॥

सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति। सपापिष्ठोविवाहानांपैशाचश्चाष्टमोऽधमः ॥ ३४

सुप्तामित्यादि ॥ ३४ ॥ सुप्तांकन्यामथवामत्तांमद्यादि*पानादिनाप्रमत्तांवा*प्रमादेनस्थितांयत्र*पुरुषउपग च्छति ॥ १ ॥ सतेनदूषितात्तस्याः*विवाहःपैशाचोनाम*धर्म्योविवाहानांमध्ये*पापिष्ठोऽधमश्चाष्टमः ॥ २ ॥ कन्यादाताचोक्तोविष्णुना*पितापितामहोभ्राता * सकुल्योमातामहोमाता * चेतिकन्याप्रदाःपूर्व्वाभावे*प्रकृ तिस्थःपरःपरः। इति ॥ ३ ॥ याज्ञवल्क्येनाप्युक्तं*पितापितामहोभ्रातासकुल्योजननीतथा। कन्याप्रदःपूर्व्वनाशेप्र कृतिस्थःपरःपरः। इति ॥ ४ ॥ ३४ ॥ ननुकथंकन्यांप्रदद्या*दित्यतआहाद्भिरित्यादि ॥ ३५ ॥

अद्भिरेवद्विजाग्र्याणांकन्यादानंविशिष्यते। इतरेषान्तुवर्णानामितरेतरकाम्यया ॥ ३५ ॥

द्विजाग्र्याणांब्राह्मणानां*कन्यादानमद्भिरेव*जलंसङ्कल्पंगृहीत्वा* तुभ्यमेतांकन्यांदास्या * मीत्युदकस्प र्शेनकन्या*दानंविशिष्यतेशास्त्रे ॥ १ ॥ इतरेषांक्षत्रियादीनां *वर्णानामितरेतरकाम्यया * कन्यादानंविशि ष्यते ॥ २ ॥ ३५ ॥ अथयस्यविवाहस्य*योगुणदोषोतावाह * योयस्यैषामित्यादि ।१।।३६।

योयस्यैषांविवाहानांमनुनाकीर्त्तितोगुणः। सर्व्वंशृणुतविप्राःसम्यक्कीर्त्तयतोमम ॥ ३६

स्पष्टार्थोऽयंश्लोकोश्च यः॥ १ ॥ ३६ ॥

दशपूर्व्वान्परान्वंश्यानात्मानंचैकविंशकम्। ब्राह्मीपुत्रःसुकृतकृन्मोचयत्येनसःपितॄन् ॥ ३७

तद्यथादशेत्यादि ॥ ३७ ॥ ब्राह्मीपुत्रोब्राह्मधर्म्मेणोढायांजातःपुत्रःसुकृतकृद्भवतीति ॥ १ ॥ सचस्मात् पूर्व्वान्वंश्यान्दश*परान्दशेतिविंशति*पितॄनात्मानञ्चैकविंश *मेनसोमोचयतीति ॥ १ ॥ ३७॥

दैवोढाजःसुतश्चैवसप्तसप्तपरावरान्। आर्षोढाजःसुतस्त्रींस्त्रीन्षट्षट्कायोढजःसुतः॥३८

दैवोढाजइत्यादि * परान्सप्तवंश्यान्सप्त * चावरान्वंश्यान्पुरुषान् * आर्षोढाजस्त्रीन्परांस्त्री* नव रान्वंश्यान्कायोढाजः*प्राजापत्योढाजःस्तथा* षट्षडेनसोमोचयति ॥ १ ॥ ३८ ॥ एषांविधिप्रयुक्तानां* सामान्यगुणमाहब्राह्म्या*दिष्वित्यादिश्लोकौ ॥ १ ॥ ३८ ॥

ब्राह्मादिषुविवाहेषुचतुर्ष्वेवानुपूर्व्वशः । ब्रह्मवर्च्चस्विनःपुत्राजायन्तेशिष्टसम्मताः ॥ ३९

ब्राह्मदैवार्षप्राजापत्येषुचतुर्षुब्राह्मणानांविवाहेषु ॥ १ ॥ ३९ ॥

रूपसत्वगुणोपेताधनवन्तोयशस्विनः । पर्य्याप्तभोगाधर्म्मिष्ठाजीवन्तिचशतंसमाः ॥ ४० ॥

स्पष्टार्थोऽयं ॥ ४० ॥ गुणांवक्त्वादोषानाह*इतरेष्वि*त्यादिश्लोकम् ॥ १ ॥ ४० ॥

इतरेषुतुशिष्टेषुनृशंसानृतवादिनः । जायन्तेदुर्व्विवाहेषुब्रह्मधर्म्मद्विषःसुताः ॥ ४१॥

ब्राह्मणानामितरेषुतु*गान्धर्व्वराक्षसासुरेषु*दुर्व्विवाहेषुब्रह्मधर्म्म*द्विषश्चतास्ताश्चजायन्ते ॥ १ ॥ शिष्टेषुप्राप्तजनेषुच*नृशंसावादिनश्चानृत*वादिनश्चसुताजायन्ते ॥ २ ॥ ४१ ॥ क्षत्रियादीनांतथाविध * विवाहे*कीदृशोगुण*दोषोभवतद्दूत्यत*आहानिन्दितैरित्यादि ॥ १ ॥ ४ ॥

अनिन्दितैःस्त्रीविवाहैरनिन्द्याभवतिप्रजा । निन्दितैर्निन्दितानॄणांतस्मान्निन्द्यान्विवर्जयेत ॥ ४२ ॥

अनिन्दितैःस्त्रीविवाहैः* रितिक्षत्रियस्यगान्धर्व्वराक्षसौ * वैश्यशूद्रयोरासुरः ॥ १ ॥ एतैरनिन्दितैःस्त्रीविवाहैः*रनिन्द्याप्रजाभवति ॥ २ ॥ नृणांक्षत्रियस्यासुर*पैशाचौवैश्यशूद्रयो * गान्धर्व्वपैशाचाविति *निन्दितैःस्त्रीविवाहैः*निन्दिताप्रजाभवति ॥ ३ ॥ तस्माद्ब्राह्मणादिःसर्व्व* एववर्णोनिन्द्यांस्तान् * विवाहान्वर्ज्जयेत् ॥ ४ ॥ नन्वेषविवाहविधिः * किंसवर्णास्वथकिमसवर्णासु * सवर्णासवर्णा स्विति ॥ ५ ॥ उत्तमेतेनैवद्विजानांसवर्णा * सवर्णासुद्विजासु*विवाहविधिरेषइति ॥ ६ ॥ ब्राह्मणायब्राह्मणःक्षत्रियोवैश्यो*ब्राह्म्यादिधर्म्मैःकन्यांदद्यात्*ब्राह्मणस्तेषांकन्यांन*पैशाचराक्षसासुरैः*धर्म्मैर्गृह्णीयादिति ।७। क्षत्रियःक्षत्रियवैश्य*कन्याराक्षसगान्धर्व्वाभ्यांगृह्णीया * न्नासुरपैशाचाभ्यामिति ॥ ८ ॥ वैश्योवैश्यकन्यामासुरधर्म्मेण*गृह्णीयान्नगान्धर्व्व * राक्षसपैशाचैर्धर्म्मैरिति ॥ ९ ॥ एषतुप्रशस्त विवाहविधिः * रप्रशस्तस्तुब्राह्मण*स्यासुरधर्म्मेणासुरधर्म्मेणच ॥ १० ॥ क्षत्रियस्यासुरधर्म्मेण*वैश्यस्यगान्धर्व्वधर्म्मेण * शूद्रस्यचतेनसर्व्वतो * ह्यप्रशस्तःपैशाचेनेति ॥ ११ ॥ ४२ ॥ नन्वतर्हिकथंसवर्णासूद्वहेत्*कथञ्चासवर्णामित्यत*आहपाणिग्रहणमित्यादि ॥ १ ॥ ४२ ॥

पाणिग्रहणसंस्कारःसवर्णासूपदिश्यते । असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्म्मणि ॥ ४३ ॥

सवर्णासुकन्यासुपाणिग्रहणं*संस्कारःकन्यावरयोः*परस्परं पाणिंगृह्णतोःसंस्कार *कार्यउपदिश्यते ।१॥ असवर्णासुखलूद्वाहकर्म्मणि*वक्ष्यमाणोऽयंविधिर्ज्ञेयः ॥ २ ॥ ४३ ॥

शरःक्षत्रिययाग्राह्यःप्रतोदोवैश्यकन्यया । वसनस्यदशाग्राह्याशूद्रयोत्कृष्टवेदने ॥ ४४ ॥

तद्यथामदुक्तादि ॥ ४४ ॥ ब्राह्मणेयोऽद्यमाणयापाणौ * गृहीतयाक्षत्रियया * शरोवाणोग्रा ह्योनतु * वरस्यपाणिग्राह्यःस्यात् ॥ १ ॥ ब्राह्मणेनक्षत्रियेन * वोढुह्यमानायांपाणौ * गृहीतयावैश्या कन्यायांप्रतोदः * पयरस्यदण्डोपाह्यो * नवरस्यपाणिग्राह्यः ॥ २ ॥ ब्राह्मणेनक्षत्रियेण * वैश्येनवोढुह्यमानयापाणौगृहीतयाशूद्र * कन्यायांवरस्यवस * नस्यदशापाह्या नवरस्यपाणिः ॥ ३ ॥ विष्णुनाचैवमेवोक्तं *तासां सवर्णाविदने पाणिर्ग्राह्यो*ऽसवर्णाविदने शरः * क्षत्रियकन्यायांप्रतोदो* वैश्यकन्यायांवसन * दशान्तः शूद्रकन्यया ॥ इति ॥ ४ ॥ याज्ञवल्क्येनाप्युक्तं । पाणिर्ग्राह्यः सवर्णासुगृह्णीयात्क्षत्रियाशरम् । वैश्या प्रतोदमाददीतवेदने त्वग्रजन्मनः । इति । ५ ॥ अग्रजन्मनइतिपूर्व्वपूर्व्वजन्मवर्णस्यवरस्य*एवमेवसर्व्वेरेनां*च नि भिश्चोक्तं द्रष्टव्यम् ॥ ६ ॥ यच्चोक्तंनारदीयपुराणे *समुद्रयात्रास्वीकारःकमण्डलुविधारणम् । द्विजानामसवर्णासुक न्यासूपयमस्तथा ॥ ७ ॥ देवरेणसुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानंतथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥ ८ ॥ दत्तायाश्चैवकन्यायाःपुनर्दानंवरस्यच । दीर्घकालंब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ ९ ॥ महाप्रस्थानगमनं गो मेधश्चतथामखः । इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ १० ॥ इति ॥ एवमप्यादित्यपुराणे यदुक्तं* दीर्घकालंब्रह्मचर्यं धारणञ्चकमण्डलोः । देवरेणसुतोत्पत्तिर्दत्तकन्याप्रदानकम् ॥ ११ ॥ कन्यानामसवर्णानां विवाहश्चद्विजातिभिः । आततायिद्विजाग्र्याणां धर्म्मयुद्धेपिहिंसनम् ॥ १२ ॥ वानप्रस्थाश्रमस्यापिप्रवेशोविधि दे मतः । वृत्तस्वाध्यायसापेक्षमघसङ्कोचनंतथा ॥ १३ ॥ प्रायश्चित्तविधानञ्च विप्राणांमरणान्तिकं । संसर्ग दोषःपापेषुमधुपर्के पशोर्वधः ॥ १४ ॥ दत्तौरसेतरेषान्तुपुत्रत्वेनपरिग्रहः । शूद्रेषुदासगोपालकुलमित्रार्द्धसी रिणाम् ॥ १४ ॥ भोज्यान्नताग्रहस्थस्यतीर्थसेवातिदूरतः । ब्राह्मणादिषुशूद्रस्यपक्वतादिक्रियापिच ॥ १५ ॥ भृग्व ग्निमरणंचैववृद्धादिमरणंतथा । एतानिलोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥ १७ ॥ निवर्त्तितानिकर्म्माणि व्यवस्थापूर्व्वकंबुधैः । समयश्चापिसाधूनांप्रमाणंवेदवद्भवेत् ॥ १७ ॥ इति ॥ एतत्सर्व्वं यच्छास्त्रे विहितंतत् प्रतिषिद्धंमुनिभिःकलौनृणां*असमार्थ्यदर्शनात्*कृतौनतुसमर्थानां ॥ १८ ॥ श्रूयतेहिभारतेव्यासेनैव* प्रचोदितोधृतराष्ट्रोवानप्रस्थो*बभूवविधवाचकुन्ती*शूद्रश्चविदुरइति ॥ १९ ॥ युधिष्ठिरश्चाश्वमेधेनायजत्*जन मेजयश्चव्यासादीनामेव*व्यवस्थयाऽष्टश्रुत* जनमेजयेनव्यासः ॥ २० ॥ कलौकश्चिदश्वमेधेनयक्ष्यति*नवेतिप्र श्नेवाचकलौ*गौतमवंशजःकश्चि*दश्वमेधेनयक्ष्यति*कश्चिच्चराजसूयेनेति ॥ २० ॥ कलिधर्म्मवक्तापराशरोपि* ब्रह्महत्याप्रायश्चित्तमुवाच*स्वसंहितायांतदपिदर्श्यते ॥ २१॥ रामचन्द्रसमादिष्टनलसञ्चयसञ्चितम् । सेतुंदृष्ट्वा समुद्रस्यब्रह्महत्यांव्यपोहति । यजेतवाजिमेधेनराजातुपृथिवीपतिः ॥२२॥ महाप्रस्थानंचयुधिष्ठिरःसह*भ्रात्र भिःभार्य्ययाचकृतःवान् ॥२३ ॥इत्येवंसमर्थस्यानतेषांप्रति*षिद्धस्तथाचसतासवर्णानांच* विवाहप्रतिषेधःप्रायोभि प्रायः ॥ २४ ॥ यस्तुक्रियावानग्निमान्वेदेऽधीती*कृतब्रह्मचर्य्यस्य*एवन्निर्व्वेदाग्निपञ्चयज्ञादि*हीनस्यासवर्णास ॥ २५ ॥ कन्यांनोद्वहेदितियौतुनतुल्यौ*साग्निवेदौसक्रियौ* तयोर्द्वयोरसवर्णयोः*पत्नीकन्ययोर्विवाहःप्रतिषि द्ध एवकृतः ॥ २६ ॥ नवासवेदयोःसक्रिययोर्द्वयो*स्तस्मान्नसर्व्वस्योऽसवर्णाविवाह* प्रतिषिद्धस्तैःकृतइतिमन्तव्यम् ॥ २७ ॥ एवंचेन्नमन्यतेतदा*स्मृतिवक्तॄणांसर्व्वेषां*मतविरुद्धत्वात्पुराणवचन* मप्रमाणंव्यासवचनात् ॥ २८ ॥ श्रुतिस्मृतिपुराणानांविरोधोयत्रदृश्यते । तत्रश्रौतंप्रमाणंस्याद्द्वयोर्द्वैधेस्मृतिर्वरा ॥ इति ॥ २९ ॥ विवाहार्थ

रजस्विताग्नौघृं लज्जितान्तर्गृहे वसेत्। एकाम्बरा कृशा दीना स्नानालङ्कारवर्जिता॥ ४ ॥मौनिन्यधोमुखी चक्षुष्पाणिपद्भिरचञ्चला। अश्नीयात्केवलं भक्तं नक्तं मृण्मयभाजने ॥ ५ ॥ स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम्। स्नायीत सा त्रिरात्रान्ते सचेलमुदिते रवौ। विलोक्य भर्तुर्वदनं शुद्धा भवति धर्मतः। कृतशौचा पुनः कर्म पूर्ववच्च समाचरेत् ॥७॥ रजोदर्शनतो याः स्यू रात्रयः षोडशर्त्तवः। तत्र पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥ ८ ॥ चतस्रश्चादिमा रात्रीः पर्ववच्च विवर्जयेत्। गच्छेद्युग्मासु रात्रीषु पौष्णापित्र्यर्क्षराक्षसैः ॥ ९ ॥ प्रच्छादितादित्यपथे पुमान्गच्छेत्स्वयोषितः। क्षामालङ्कृतवान्मोति पुत्रं पूजितलक्षणम ॥ १० ॥ इति ॥ आपस्तम्बेनचोक्तं यथा*स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते। वृत्ते रजसि गम्या स्त्री नानिवृत्ते कथञ्चन ॥ ११ ॥ रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्त्तते। अशुद्धा न तु तेनैव तासां वैकारिकं हितत् ॥ १२ ॥ साध्वाचारा न सा तावद्रजो यावत् प्रवर्त्तते। वृत्ते रजसि साध्वी स्याद्गृहकर्मणि चेन्द्रिये ॥ १३ ॥ प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी। तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ इति ॥ १४ ॥ चरकेनोक्तं हि यथा * ततश्चतुर्थेऽहन्येना * मुत्सादा सशिरस्कां स्नां * परिधाय शुक्लानि वासांसि * स्याच्छादयेत् पुरुषञ्च ॥ १८ ॥ ततः शुक्लवाससौ * स्रग्विणौ सुमनसौ * चान्योऽन्यमभिकामौ * संवसेतामितिब्रूयात् ॥ १९ ॥ इति ॥ सुश्रुतेनचयथोक्तं * तत्र प्रथमे दिवसे * ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति ॥ २० ॥ यश्च तत्राधीयते *गर्भः सप्रसवमा * त्रं प्राणैर्विमुच्यते ॥ २१ ॥ द्वितीयेप्येवं सूतिकागृहे वा * तृतीयेप्येवमसंपूर्णाङ्गोऽल्पायुर्भवति * चतुर्थे तु सम्पूर्णाङ्गो * दीर्घायुश्च भवतीति ॥ २२ ॥ ४७ ॥ तत्र षष्ठ्यादिरात्रिषु * भार्योपगमने फलं * विशेषमाह युग्मास्वित्यादिश्लोकं ॥ १ ॥ ४८ ॥

**युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु। तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम्॥ ४८ ॥**

निन्दिताभ्योऽन्यासु युग्मासु रात्रिषु * षष्ठ्यादिषु तौ भार्योपगमनात् * पुत्रा जायन्ते ऽयुग्मासु * रात्रिषु स्त्रियो जायन्ते ॥१ तस्मात्पुत्रार्थी पुरुष * आर्त्तवे युग्मासु रात्रिषु * षष्ठ्यादिषु स्वां स्त्रियं संवसेदिति ॥२॥ चरकेणाप्युक्तमेवं * स्नानात् प्रभृति युग्मे * ष्वहःसु संवसेतां * पुत्रकामावयुग्मे * षु दुहितृकामौ ॥ इति ॥ ३ ॥ सुश्रुतेनाप्युक्तमेवमविकल्पेन चतुर्थ्यां * षष्ठ्यामष्टम्यां दशम्यां * द्वादश्यां चोपेयादिति पुत्रकामः ॥ ४ ॥ एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च। प्रजासौभाग्यमैश्वर्यं बलञ्च दिवसेषु वै ॥ ५ ॥ अतः परं पञ्चम्यां * सप्तम्यां नवम्यामे * कादश्यां च स्त्रीकाम * स्त्रयोदश्यादा अनिन्द्याः ॥ ६॥४८॥एतेन चतुर्थ्यां रात्रौ * मध्यमपुत्रोत्पत्तिमभि * प्रेतगमनिन्द्यत्वमुक्तं ॥४९॥ कथं एवमेवं विदित नविशेषे किं * पुत्रकन्या जायन्ते इ * त्यत आह पुमानित्यादि ॥ ४९ ॥

**पुमान्पुंसोऽधिके बीजे स्त्री भवत्यधिके स्त्रियाः। समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः॥ ४९ ॥**

पुंसो बीजेऽधिके पुमान् * स्त्रिया बीजेऽधिके स्त्री भवति समे * पुंस्त्रीयोर्बीजे त्वपुमान् * नपुंसकं भवतीति ॥ १ क्षीणेऽल्पे च पुंस्त्रियोर्बीजे * विपर्यये गर्भोत्पत्तिर्न * भवतीति शेषः ॥ २ ॥ ४९ ॥ गृहाश्रमेऽपि पुरुषो * वसन्ब्रह्मचर्यफलं यथा * लभेत तदाह निन्द्यास्वित्यादि ॥ १ ॥ ५० ॥

**निन्द्यास्वष्टासुचान्यासुस्त्रियोरात्रिषुवर्जयन्। ब्रह्मचार्येवभवतियत्रतत्राश्रमेवसन् ॥ ५० ॥**

ऋतोर्निन्द्यासुषट्सुरात्रिषु*ताभ्योऽन्यासुअनिन्द्यासुदशसु *रात्रिषुमध्येऽष्टासुच* याःकाश्चिद्रात्रिषु ॥ १ ॥ पञ्चयुग्मायुग्मासुस्त्रियोवर्जयन्*द्वयोर्ऋतुरात्र्योःस्त्रियं*गच्छन्नाश्रमेप्रकरणाद्गृहस्थाश्रमेवसन्नपिपुमान् ॥ २॥ यत्रतत्रस्ववासेवा*प्रवासेवास्थितोब्रह्मचारीभव*तीतिउच्यतेधर्मविद्भिः ॥ ३ ॥ भ्रान्तास्तुयत्रतत्राश्रयेवसं* स्थितियोजनांकृत्वास*भार्यांवनाश्रमगम * नाभिमायेनेदमितरा*दाने कथाप्रलपन्ति ॥ ४ ॥ ५० ॥ अथकन्याशुल्कग्रहणेदोष*माहनकन्याया इत्यादि ॥ १ ॥ ५१ ॥

**नकन्यायाःपिताविद्वान् गृह्णीयाच्छुल्कमण्वपि। गृह्णन्शुल्कंहिलोभेनस्यान्नरोऽपत्यविक्रयी। ५१।**

विद्वान्शास्त्रज्ञः कन्यायाः*शुल्कग्रहणदोषज्ञः*खल्वणुपिस्वल्पमपि*कन्यायाःशुल्कंपितानगृह्णीयात् ॥१॥ हियस्मात्कन्यायाःशुल्कं*लोभेनगृह्णन्नरोऽपत्यविक्रयी*स्यात्तच्छुल्कंकन्याधनं ॥ २ ॥ ५१ ॥ स्त्रीधनग्रहणेदोषमाहस्त्री* धनानित्वित्यादिश्लोकम् ॥ १ ॥ ५२ ॥

**स्त्रीधनानितुयेमोहादुपजीवन्तिबान्धवाः। नारीयानानिवस्त्रंवातेपापायान्त्यधोगतिम्। ५२।**

येबान्धवाःस्त्रीधनानि * मोहादुपजीवन्तितथा*नारीणांयानानिवस्त्रं* वोपजीवन्तितेबान्धवाः *पापाअधोगतिंयान्ति ॥ १ ॥ ५२ ॥ ननुतर्हिचार्षेयद्गोग्रहणंतत् * कस्माद्विधीयतइत्य*तआहार्षइत्यादि ॥ १ ॥ ५३॥

**आर्षेगोमिथुनंशुल्कंकेचिदाहुर्मृषैवतत्। अल्पोप्येवंमहान्वापिविक्रयस्तावदेवसः ॥ ५३**

आर्षेविवाहेयद्गोमिथुन* ग्रहणंविहितंतच्छुल्कं*मृषैवेतिकेचिदाहु*स्तदसाधुवचःकस्मात् ॥१॥ एवंप्रकारेणाल्पोपि*महान्वापियःसखलु* तावद्विक्रयएवस्यात् ॥ २ ॥ तर्हिकिमार्षविवाह * लक्षणंयद्गोमिथुन*ग्रहणमुक्तंतदसाधु ॥ ३ ॥ नैवंयस्माद्धियत्प्रसिद्धंलक्षणं*शास्त्रेतदुपदिश्यते * गुणदोषौचोपदिश्यतेयथार्षश्चविवाहः ॥ ४ ॥ तत्रकश्चिदाहमनोस्तुमतं*नेदंगोमिथुनग्रहण*शास्त्रोक्तंचरूपंशुल्कं ॥ ५ ॥ यत्तुशास्त्रनियमित*जातिसङ्ख्याकंग्रहणं*तन्नशुल्करूपंभवति ॥ ६ ॥ यस्माद्धिवस्तुनोयन्मूल्यंभवति * तदेवतस्यशुल्कंस्यात्*नतथाकन्यामूल्यंगोमिथुनंभवतीत्य*तउक्तमार्षधर्मतइति ॥ ७ ॥ तेननलोभेनगोमिथुन *ग्रहणंलोभेनहिशुल्क*ग्राहीस्यात्सएवापत्य* विक्रयीभवतीत्याह ॥ ८ ॥ ५३ ॥ ननुतर्हिकन्याया भूषणानियानि*पत्यादिभिर्विवाहकालेदीयन्तेतैरपिकिं* मपत्यविक्रयीस्यादि * त्यतआहयासामित्यादि ॥ १ ॥ ५४ ॥

**यासांनाददतेशुल्कंज्ञातयोनसविक्रयः। अर्हणंतत्कुमारीणामानृशंस्यञ्चकेवलम् ॥ ५४ ॥**

यासां कन्यानां च शुल्कं न * ज्ञातयो गृह्णन्ति ता*वरेभ्यो ददतिन च * तासां विक्रयः स्यात् ॥ १ ॥ कुमारीणां तत्र यदर्हणं पतत्या* दिभिर्भूषणादिकं दीयते तत्तु * सर्वं मानृशंस्यं भवति ॥ २ ॥ ५४ ॥ कन्यादानधर्मं सांगतत् सर्वं भव* तीत्यत्राह पितृभि*रित्यादिश्लोकपञ्चक ॥ १ ॥ १ ॥ ५५ ॥

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा। पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥५५॥
यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः। यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ५३ ॥
शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम्। न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥ ५७ ॥
जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः। तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥ ५८ ॥
तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः। भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥५९॥

तथाशब्दे न श्वशुरादिभिरिति * पूज्याः सत्कार्या एवेति ॥ १ ॥ ५५ ॥ यत्रेत्यादि ॥ ५६ ॥ रमन्ते क्रीडन्ति तेषां * स्त्रीजनासत्कारिणां * क्रिया अफलाः स्युः ॥ १ ॥ ५६ ॥ शोचन्तीत्यादि ॥ ५७ ॥ जामिः स्वसा कुलस्त्री वा * यत्र स्वसारः कुलस्त्रियो वा सत्* काराभावे न शोचन्ति* तत्कुलमाशु नश्यति ॥ १ ॥ यत्रैता जामयो नैव * शोचन्ति सत्कारात्तस्य * तत्कुलं हि सर्व्वदा वर्द्धत इति ॥ २ ॥ ५७ ॥ जामय इत्यादि ॥ ५८ ॥ जामयो यानि गृहाणि गेहस्थै * रप्रतिपूजिताः सत्यः * शपन्ति शापं कुर्व्वन्ति * तानि समन्ततः कृत्या * दोषेणाहतानीव नश्यन्ति ॥ १ ॥ ५८ ॥ तस्मादित्यादि ॥ ५९ ॥ तस्मादुक्तदोषान्नरै रेता जामयो भूषणा * दिभिः सदा पूज्या भूतिकामैर्नरैः * उत्सवेषु च सत्कारैः * नित्यं पूज्या भवन्तीति । १ । ५९ । अथ भार्यासन्तोषासन्तोषगुण * दोषावाह सन्तुष्ट इत्यादि श्लोकत्रयम् । १ । ६ ।

सन्तुष्टो भार्यया भर्त्ता भर्त्रा भार्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥६०॥
यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत्। अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्त्तते ॥ ३१ ॥
स्त्रियां तु रोचमानायां सर्व्वं तद्रोचते कुलं। तस्यां त्वरोचमानायां सर्व्वमेव न रोचते ॥ ६२ ॥

यस्मिन् कुले भार्यया सह भर्त्ता * सन्तुष्टो भर्त्रा सह भार्या सन्तुष्टा * तत्र कुले नित्यं कल्याणं ध्रुवं स्यात् ॥ १ । ६ । यदि हीत्यादि । ६१ । हि यस्मात् स्त्री भार्या पत्ये * न रोचेत पुमांसं च * पतिं सा स्त्री न प्रमोदयेत्* तदा पुंसोऽप्रमोदान्न * प्रजननमपत्योत्पादनं प्रवर्त्तते । १ । ६१ । स्त्रियामित्यादि । ६२ । स्त्रियां भार्यायां पत्ये रोचमानायां * सर्व्वं कुलं तद्रोचते * ततोऽन्यथा न रोचते । १ । ६२ ।

कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च। कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ६३ ॥

विमोक्षणम्। श्मशानिकं भेगदेहं भाषाकल्पं न वजायते ॥ ७६२ ॥ तत्रास्य यातनाघोराः शीतवातातपोद्भवाः। ततःसपिण्डीकरणे बान्धवैः स्वकृतेनरः ॥ ७६३ ॥ पूर्णे संवत्सरे देहमितोऽन्यं प्रतिपद्यते। ततःसनरकं याति स्वर्गं वास्वेनकर्मणा इति।७६४। अत्रपूर्णे संवत्सरे देहमितोऽन्यमिति *पितृदेहभावापन्न*देहं प्रतिपद्यते इति ॥ ७६५ ॥ यत्तुतत्रैव विष्णुधर्मोत्तरे *कृतेसपिण्डीकरणेनरःसंवत्सरात्परम्। प्रेतदेहं परित्यज्यभोगदेहं प्रपद्यते ॥ इति ॥ ७६६ ॥ अस्यापिसएवार्थःसपिण्डीकरणे यद्यतद्यकृते*नरःसंवत्सरात्परं ॥ ७६७ प्रेतदेहं पिशाचदेहं * परित्यज्यभोगदेहं * पितृदेहभावापन्नं * देहं प्रपद्यते इति ॥ ७६८ ॥ विष्णुसंहितायाञ्च शोकापनोदे * बान्धवानामशौचेन * स्थितिं प्रेतोनविन्दति। अतस्तस्मैतिलानेवपिण्डतोयप्रदायिनः ॥ ७६९ ॥ अर्वाक्सपिण्डीकरणात्प्रेतोभवतियोयतः। प्रेतलोकात्ततस्तस्मैसोदकुम्भं प्रयच्छति॥७७० पितृलोकगतस्यान्नं श्राद्धे भुङ्क्तेस्वधामयम्॥ पितृलोकगतस्यास्य *तस्माच्छ्राद्धं प्रयच्छति ॥ ७७१ ॥ देवत्वे यातनास्थाने तिर्यग्योनौतथैव च। मानुष्येचतथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥ ७७२ ॥ प्रेतस्यश्राद्धकर्त्तुश्च पुष्टिःश्राद्धे कृते ध्रुवम्। तस्माच्छ्राद्धं सदाकार्यं शोकं त्यक्त्वानिरर्थकम् ॥ ७७३ ॥ इति ॥ एवमप्यर्वाक्संवत्सरात्मानव*भावे मध्याह्ने मनुष्याणांभोजन*काले सपिण्डीकरणात्प्रमेको* द्दिष्टं देवलेनोक्तं ॥ ७७४ ॥ पूर्वाह्णे दैविकं श्राद्धमपराह्णेतुपैतृकम्। एकोद्दिष्टन्तुमध्याह्ने प्रातर्वृद्धिनिमित्तकम्। इति।७७५। सौरदिनमानं* त्रिधाविभज्य पूर्वाह्ण*मध्याह्नापराह्णभेदे *मध्याह्ने एकोद्दिष्टानां *सपिण्डीकरणान्तानां *विधिर्देवलेनयउक्तः ॥ ७७६ ॥ मत्स्यपुराणेसौराह्नं*पञ्चधाविभज्यकाल*उक्तस्तद्द्वयादर्शयते ॥ ७७७ ॥ प्रातःकालं मुहूर्त्तांस्त्रीन् सङ्गवं तावतोविदुः। मध्याह्नं त्रीन्मुहूर्त्तांश्च अपराह्णं ततःपरं ॥ ७७८ ॥ सायाह्नस्त्रिमुहूर्त्तःस्याच्छ्राद्धं तत्रनचाचरेत्। राक्षसीनाम सावेलागर्हितासर्व्वकर्मसु ॥ ७७९ ॥ अह्नोमुहूर्त्ताविख्यातादशपञ्चचसर्व्वदा। तत्राष्टमोमुहूर्त्तोयःसकालःकुतपःस्मृतः ॥ ७८० ॥नवमोरौहिणःप्रोक्तोरौहिणोदैवतोहिसः। गौतमेनतत्रैकोद्दिष्ट*श्राद्धविधिरुक्तोयथा ॥ ७८१ आरभ्यकुतपेश्राद्धं कुर्य्यादारौहिणं बुधः। विधिज्ञोविधिमास्थायरौहिणान्तुनलङ्घयेदिति ॥ ७८२ ॥ इत्यष्टमनवममुहूर्त्तावेको*द्दिष्टश्राद्धे मध्याह्ने प्रशस्तावुक्तौ*वायुपुराणेतत्रविशेषउक्तः ॥ ७८३ ॥ शुक्लपक्षस्यपूर्व्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः। कृष्णपक्षेऽपराह्णे तुरौहिणन्तुनलङ्घयेदिति ॥ ७८४ ॥ अत्रसौराहं द्विधाविभज्यपूर्व्व*मर्द्धं दिनपूर्व्वाह्णःशेषमर्द्धं*दिनमपराह्ण इति*कृत्वोक्तं तेनैवं शेयं ॥ ७८५ ॥ सार्द्धसप्तमुहूर्त्तपर्य्यन्तं शुक्ल*पक्षे पूर्व्वाह्णस्तत्र*यावान्कालोमध्याह्नतयाख्यायते * तावतिकाले शुक्लपक्षे ॥ ७८६ ॥ एकोद्दिष्टं श्राद्धं कुर्यात्*सार्द्धसप्तमुहूर्त्तात्परं यावान्* कालोमध्याह्नस्तत्र ॥ ७८७। कृष्णपक्षे एकोद्दिष्टं*श्राद्धं रौहिणपर्य्यन्तं * कुर्य्यात्तत्ररौहिणं *लङ्घयेदित्यविरोधः ॥ ७८८ ॥ मनुनापिदिनं द्विधाविभज्य*पूर्व्वाह्णापराह्णावुक्तौ॥७८९ ॥ यथाचैवापरःपक्षःपूर्व्वपक्षाद्विशिष्यते। तथाश्राद्धस्यपूर्व्वाह्णादपराह्णोविशिष्यते। इति ॥ ७९० ॥ इति मनुष्याभावेमध्याह्ने एकोद्दिष्टं श्राद्धं यदविहितं *ततःसपिण्डीकरणा*दूर्द्धं प्रतिसंवत्सरं *पितृदेहभावेऽपराह्ने।७९१ ॥ नहिमातापिबान्धिकश्राद्ध*मेकोद्दिष्टमेकोद्दिष्ट*विधिनाविहितत्वात् ॥ ७९२ ॥ यस्मात्साम्वत्सरिकं वात्स्यायोपितृपक्षे वा*कृतस्तत्रपार्व्वणविधिनाब्दिक*श्राद्धविधानादेकोद्दिष्टत्वाभावात् ॥ ७९३ ॥ एतदविद्वान्स्मार्तो*साम्वत्सरिकश्राद्धम*प्येकोद्दिष्टं श्राद्धं मत्वा*कुतपरौहिणं कार्य्य*मितिवाक्यापयतितदसाधु ॥ ७९४॥ नहिप्रत्याब्दिकं श्राद्धं*

मानवं पित्र्यं श्राद्धं *दैवपित्र्यं श्राद्धलात् ॥ ७९५ ॥ दैवपित्र्यं श्राद्धन्तु पराह्णे *कार्यमित्युक्तं ब्रह्मपुराणे ॥ ७९६ ॥
पूर्व्वाह्णे मासिकं श्राद्धमपराह्णे तु पार्व्वणम् । एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति ॥ ७९७ ॥ मनुनोक्तं
तद्यथा *पित्रादिनामपत्नीषु *योजा मातृषु वह्निजैः । स्त्रीणामेव तु तत्साम्याम् श्राद्धमिष्यते ॥ इति ॥ ७९८
तत्रापराह्णे *पित्र्यं श्राद्धं *मत्स्यवचनं मत्स्यपुराणे ॥ ७९९ ॥ ऊर्द्ध्वं मुहूर्त्तात् कुतपो *यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं वापि स्वधाभवनमिष्यते ॥ ८०० ॥ अष्टमो मुहूर्त्तो विख्यातो दशपञ्चदश मतः । तत्राष्टमो मुहूर्त्तो यः
स कालः कुतपः स्मृतः ॥ ८०१ ॥ अपराह्णे तु सम्प्राप्ते अभिजिद्रौहिणोदये । यद्यत्प्रदीयते जन्तोस्तदक्षयमुदाहृ
तम् ॥ इति ॥ ८०२ । तेन कुतपादष्टममुहूर्त्तादूर्द्ध्वं ये रौहिणादय *श्चत्वारः पञ्चमो मुहूर्त्ता अस्ति कालाः *स्वधाभवनं
भवन्ति ॥ ८०३ ॥ तत्रापराह्णे द्विधा विभक्तस्याह्नः *शेषादूर्द्ध्वंऽष्टममुहूर्त्तादूर्द्ध्वं रौहिणादिकाले *यद्दीयते
तदक्षयं भवतीति ॥ ८०४ ॥ तस्माद्रौहिणन्तु न लङ्घयेदिति *वचनमेकोद्दिष्टश्राद्ध *विषयं मत्वैकोद्दिष्टविधिक
प्रत्याब्दिकविषयं ज्ञेयम् ॥ ८०५ ॥ इह रौहिणादिषु *पञ्चसु मुहूर्त्तेषु *पराह्णे तु पार्व्वणं *मितियदुक्तं तथा ॥ ८०६
एकोद्दिष्टन्तु मध्याह्ने *इतियदुक्तं तयोर* पवादे तूक्तं प्रातर्वृद्धिनिमित्तकमिति ॥ ८०७ ॥ वृद्धिनिमित्तकं यत् *
पार्व्वणविधिकं श्राद्धं *यच्च सपिण्डीकरणान्तं श्राद्धं तत् *सर्व्वं पूर्व्वाह्णे कर्त्तव्यं *नापराह्णे न मध्याह्ने ॥ ८०८ ॥
ननु यत्रोभयदिने श्राद्धकाल *व्यापिनी तिथिर्भवति *तत्र कस्मिन् दिने श्राद्धं *कर्त्तव्यं तत्रोवाच सुमन्तुऋषिः ॥ ८०९
साह्णव्यापिनी चेत्तु नताह्णस्या वयातिथिः । पूर्व्वस्मिन्निर्व्वपेत् पिण्डमित्याङ्गिरसभाषितम् ॥ ८१० ॥ ब्रह्मापरि
शिष्टे प्रोक्तं *यद्यास्तं सविता याति पितरस्तामुपासते । तिथिस्ते भ्योऽपराह्णे पिस्वयं दत्ता स्वयम्भुवा ॥ ८११ ॥ भवि
ष्यपुराणे प्रोक्तं *व्रतोपवासनियमे घटिकैका यदा भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकीति ॥ ८१२ ॥
अत्र व्रतोपवासनियमे यदि *घटिकामात्रकालापि *तिथिः पूर्व्वाह्णे वर्त्तते *तदा सा तद्व्रतादिषु *ग्राह्या भवतिनात्र ।
८१३ ॥ या तिथिरापराह्णिकी पौर्व्वाह्णिकी भवतु वा *नवाचेदपराह्णव्यापिनी स्यात् *तदापित्र्यर्थे सा तिथि *र्ग्राह्या
भवतीति ज्ञेयम् ॥ ८१४ । अथ लिखितादिभिर्यदुक्तं च *वर्षे वर्षे च कर्त्तव्यं मातापित्रोस्तु सन्ततं । अदैवं भोज
येच्छ्राद्धं पिण्डमेकन्तु निर्व्वपेत् । ८१५ । अमावास्यां व्यतीपाते प्रेतपक्षेऽथवा यदि । सपिण्डीकरणादूर्द्ध्वं तस्योक्तः
पार्व्वणो विधिरिति । ८१६ । एतत्तु निरग्निकर्त्तव्यं *प्रताब्दमुक्तं साग्निककर्त्तव्यन्तु *प्रताब्दं सर्व्वं पार्व्वणविधि
नैव । ८१७ । उशनसाप्युक्तं यथा *प्रताब्दं दशवर्क्षाद्यं साग्निः कुर्व्वीत वै द्विजः । एकोद्दिष्टं सदा कुर्य्यान्निरग्निः
श्राद्धदः स्वतः ॥ इति ॥ ८१८ ॥ कात्यायनेनाप्युक्तं * सपिण्डीकरणादूर्द्ध्वं पित्रोरेव हि पार्व्वणम् । पितृव्य
भ्रातृमातृणामेकोद्दिष्टं सदैव हि ॥ इति ॥ ८१९ ॥ मत्स्यपुराणे चोक्तं *यत्र यत्र प्रदातव्यं सपिण्डीकरणात्परम् ।
पार्व्वणेन विधानेन देयमग्निमता सदा ॥ इति ॥ ८२० ॥ तेन निरग्निविषयं *लिखितादीनां वचनं *यस्याभावा
स्याग्नि प्रेत *पक्षे वा न लभ्यते *तस्य पार्व्वणविधिना * निरग्निरपि श्राद्धं कुर्य्यात् ॥ ८२१ ॥ अन्यत्र मरणे त्वे
को*द्दिष्टविधिना निरग्निः *प्रताब्दं कुर्य्यात् साग्निकः* सर्व्वत्र तिथौ मरणे *पार्व्वणविधिनेति ज्ञेयम् ॥ ८२२ ॥ ननु
लिखितेनतूक्तं *एकादशाहे प्रेतस्य * यस्याचोत्सृज्यते वृषः । मुच्यते प्रेतलोकात्तु पितृलोकं स गच्छति ॥ ८२३ ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ८२४ ॥ लोहितो यस्तु नी
लो वा मुखपुच्छे च पाण्डुरः । लाङ्गलशिरसोश्चैव स वै नीलवृषः स्मृतः ॥ ८२५ ॥ इति ॥ विष्णुसंहितायां चोक्तं *

हस *योगवद्द्विनिष्ठ एव ॥ ६२४ ॥ तस्मात्पुत्रस्य द्वितीयादि*विशाहे पिपितैर्वद्धिं * कुर्यान्नतुपुत्रः ॥ ६२५ ॥ त्रपितृभ्यः पितादद्यात्तत्संस्कारकर्मवत् । पिण्डानुद्वहनान्ते पितृत्रस्ताः स्व*संस्कारकर्मस्वित्वाभावाच्च ॥६२६॥ पत्रस्भावेपिपितुः पित्रादिभ्यो * दद्यान्नतु संकार्यः स्वपितृभ्यः पिण्डान्दद्यात् ॥ ६२७ ॥ कामात्त्वावृद्धिश्राद्धं गौत्रयो*कुमीलवादीनां जातकर्मणि * वृद्धिश्राद्धकरणप्रवणाभावात् ॥ ६२८ ॥ कश्चित्प्रमादीत्वे तद्वचनमेव मादादत्रवर्ण*ततसंस्कारानपिपितैवकुर्यां*दितिमनसितु कृत्वा ॥ ९२९ ॥ अवरकालजार्षं*वचनं मत्वा माणो*करिष्यन्तीतियातु यां*माश्रित्य श्लोकमेकं रचितवान् ॥ ९३० ॥ अष्टौ संस्कारकर्माणि*गर्भाधानमिव वयम् । पिताकुर्यात्तदन्योवातदभावेपितृक्रमात् ॥ इति ॥ ९३१ ॥ इत्यनार्षं श्लोकं प्रमाणीकृत्य धु*निकाः पि पुत्रस्य संस्कारं कुर्या*दितिव्यवस्थाप्य धर्मलोपं कुर्वन्ति*तदसाधु यतोऽनेनवचनेनोक्तं ॥ ९३२ ॥ उद्वहनान्ते त*संस्कारकर्मवद्वृद्धि*कर्तापितेति नोद्वहनान्तेषु*ततसंस्कारकर्तापिताभवितुमर्हति ॥ ९३३ ॥ कथ ष्टानां ततसंस्कारकर्मणां*कर्तापिताभवति ॥ ९३४ ॥ तत्रापिवैतण्डिकाश्राद्ध*नैतद्वचनं छान्दोग्य*परिशि वचनत्वापितं द्य*गवैतद्विषयवचन*मितिकसर्पं स्तन्नाङ्गः ॥ ९३५ ॥ संस्कारप्रकरणेऽस्यवचनस्य*वह्वोदो दर्शिता*स्तस्मादयुक्तत्वादनार्षं ॥ ९३६ ॥ कश्चित्तु स्वपितृभ्योऽन्नोदद्या*दितात्रस्वपितृभ्यःपिता * दद्या इतिपठति ॥ ९३७ ॥ तद्गर्भाधानसंस्कारे*कथमुपपद्यते*प्रागपत्योत्पत्तेर्हि*पितृत्वं नसम्भवति * तत्रापत्या भवतीतिचरकोक्तेः ॥ ९३८ ॥ तत्राङ्गवैतण्डिकाः सत्यमेतत्*गर्भाधानसंस्कारोहि* भविष्यतःपुत्रस्यतस्योत्पा दने*हेतुरस्यानार्याःपतिरेवनान्यः ॥ ९३९ ॥ इत्यवधारणादिहापि*भाविगर्भस्यपितेति* मन्वानउक्त निति ॥ ९४० ॥ जातकर्मादिषुबहुषुपितृत्वा*मापराग्निच्छत्रिणोगच्छन्तीतिवत्* सचप्रयोगः साधुरितिचेन्न*ह योगयात्वे पिसंस्कारेह्यसाधुः ॥ ९४१ ॥ उपनयनकर्तुःपितुः*पुत्राचार्यत्वादप्य*क्तं यत्वादिदोषात् ॥ ९४२ ॥ मात्पुत्रस्यसंस्कारकर्मवत्*गर्भाधानादिषूद्वहनान्तेषु* पिताह्विज्ञिं कुर्यादृयाजकः*संस्कारान्कुर्यादिति ॥ ९४३ पितुरभावेतत्प्रतिनिधिःकश्चि*त्तस्यैवततस्यपितुः* पितृपितामहप्रपितामहानां * त्रीन्पिण्डान्नैवदद्यात् ९६४ ॥ तदभावेपितृक्रम*इत्युक्ते*नसंस्कार्यस्यपित्रादीनांत्रयाणां* ततसंस्कारकर्मस्वि*त्युक्तेः स्व*सं काररकर्मस्वित्युक्ताभावाच्च ॥ ९४५ ॥ एतद्वचनेनैवप्रमादिभिः*मातुःपितुर्वामरणे*देहायनेजायायाश्चमर ॥ ९४६ ॥ अनाश्रमीनतिष्ठेतु दिनमेकमपिद्विजः । आश्रमेणविनातिष्ठन्प्रायश्चित्तीयतेहिसः ॥ ९४७ ॥ तिदक्षवचनान्मातुःपित्रुर्वा*सपिण्डीकरणं कृत्वाहृद्धिं कृत्वा*पुनरुद्वाहं कर्तुमर्हतीतिय*दुच्यतेतन्नसङ्गच्छ ॥ ९४८ ॥ स्वसंस्कारकर्मणिवृद्धिकरणे*स्वस्यविधानाभावात्*तदभावेचतत्क्रम * इत्युक्त्याहि संस्कार्य *पितृःपितृणां श्राद्धविधिः ॥ ९४९ ॥ नतु स्वसंस्कारकर्मणिस्वस्य*पित्रादीनां श्राद्धविधिः* रनाश्रमीनति तु दिनमेकमपिद्विजइतित ॥ ९५० ॥ साग्निकविषयवचनं दृष्ट्वा* तद्वचनानन्तरञ्च*तत्रदोषएवउक्तः ।९५१ पेहोमेतथादाने स्वाध्यायेचरतस्तुयः । नासौतत्फलमाप्नोतिकुर्वाणोऽप्यनाश्रमी ॥ इति ॥ ९५२ ॥ मिर सुसदारस्याप्यनाश्रमी*नाश्रमःपञ्चयज्ञाधिकाराभावात् *सर्वदैवप्रायश्चित्तमर्हति*क्रियालोपात्किं पुनर्दार हीनस्य ॥ ९५३ ॥ नन्वेवं वैदिके कस्य*कःश्राद्धाधिकारीस्यात् * कस्याभावेचकोभवेत्*तत्रोक्तं कात्यायनेन ९५४ ॥ सपितुःपितृकृत्येषुह्यधिकारोनविद्यते । नजीवन्तमतिक्रम्यकिञ्चिद्दद्यादितिश्रुतिः ॥ ९५५ ॥ पिता

मद्दे ध्रियति चपितुः प्रेतस्य निर्वपेत्। पितुस्तस्य च तस्य जीवेच्च तु प्रपितामहः ॥ २१७ ॥ पितुः पितुः पितुश्चैव तत्पितुः पितुरेव च। कुर्यात् पिण्डत्रयं यस्य संस्थितः प्रपितामहः ॥ २५१ ॥ जीवन्तमतिदद्याद्वा प्रेताया न्नोदकं द्विजः। पितुः पितृभ्यो वा दद्यात् सपितेत्यपरा श्रुतिः ॥ २५८। पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोडशं ॥ २५९ ॥ नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः। पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम्। २६०। इति। विष्णुनाप्युक्तं तद्यथा * पितरि जीवति यः श्राद्धं कुर्य्यात् स * येषां पितामहः कुर्य्यात् तेषां कुर्य्यात्। २६१। पितरि पितामहे च जीवति येषां पितामहः कुर्य्यात् तेषां कुर्य्यात् * त्रिषु जीवत्सु नैव कुर्य्यात्। २६२। यस्य पिता प्रेतः स्यात् स * पित्रे पिण्डं निधाय * पितामहात् पराभ्यां द्वाभ्यां दद्यात्। २६३। यस्य पितापितामहश्च प्रेतौ स्यातां * स ताभ्यां पिण्डौ दत्त्वा * पितामहपितामहाय दद्यात्। २६४। यस्य पितामहः प्रेतः स्यात् * स तस्मै पिण्डं निधाय * प्रपितामहात् पराभ्यां द्वाभ्यां दद्यात्। २६५। यस्य पिताप्रपितामहश्च प्रेतौ * स्यातां स पित्रे पिण्डं निधाय पिता * महात् परं द्वाभ्यां दद्यात्। २६६। मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः। मन्त्रोहेन यथान्यायं * शेषाणां मन्त्रवर्जितम्। इति। २६७। इति श्राद्धाधिकारी पुत्रः पित्र * र्थाय दत्त्वा तत्र ज्येष्ठ एव पुत्रः * श्राद्धाधिकारी भवति ज्येष्ठे सति * शेषाणां श्राद्धाधिकाराभावात्। २६८। उक्तं हारीतसंहितायां यथा * नान्ये यः परिविन्दन्ति न वेदान्तपासि च। न च श्राद्धं कनिष्ठं वै विना चैवाभ्यनुज्ञया। इति। २६९। स चौरस एव ज्येष्ठपुत्रोऽन्य यः * औरसपुत्रो हि प्रथमं दाय * हरः पिण्डोदकदाता २१० दायानुगत्वात् पिण्डोदकदान * शावाशौचानामपि * पराभ्यां प्राप्तं च। २११। पिण्डस्योदकदानञ्च शावाशौचं धनानुगम्। इति ॥ पुत्रश्चौरसो वक्ष्यते स्वयं। २१२। स्वक्षेत्रे संस्कृतायामित्यादिना * सवर्णाजानुलोमजपत्नीजाता * स्त्वग्रजो ज्येष्ठो हि पुत्रो धर्म्म्या * स्तदन्ये पुत्राः कामजाः। २१३। पौत्रः पुत्रस्तु ज्येष्ठोऽपि * न श्राद्धाधिकारी सवर्णत्वाभावात् * मन्त्रे विवाहाभावाच्च * शूद्रानपत्यासहैकात्म्यो भवति। २१४। तस्माच्छूद्रापुत्रः शूद्रो * ब्राह्मणस्य पारशवस्संज्ञकः * स पारयन्नेव शव * इत्यतः पारशवः। २१५। क्षत्रियस्य शौद्रः पुत्र उपसंज्ञो * वैश्यस्याकरणसंज्ञो * दशमाध्याये वक्ष्यते २१६ यस्यौरसपुत्रे मृते * तत्पुत्रो वर्त्तते च तत्राऽपि पुत्रवद्वर्त्तते तस्य स पौत्रो धनभाक् * पिण्डदश्च भवतीति ॥ २११ ॥ तदभावे तस्य पौत्रस्य पुत्रो * धनभाक् पिण्डदश्च स्यात् * तदभावे पुत्रिकातत्पुत्रपौत्राः ॥ २१८ ॥ तदभावे क्षेत्रजपुत्रपौत्र * प्रपौत्रादयः क्रमेण यौरसवत्ज पुत्र * पौत्रप्रपौत्राः धनभाजः पिण्डदाः ॥ २१९॥ तदभावे त्वेकजातभ्रातृपुत्र * पौत्रप्रपौत्रा धनभाजः पिण्डदा * स्तदभावे [illegible] ॥ २८० ॥ तदभावे दत्तकादिः पुत्रश्च * क्रमेण दश पुत्रपर्य्यन्ता * ततो भ्रातरस्ततोऽनेकजभ्रातृ * पुत्रस्ततः शिष्यादयः ॥ २८१ ॥ लघुहारीतेऽप्येवं धनाधिकारात् * पिण्डदाता क्रमेणोक्ता * स्तद्यथा प्रदर्श्यन्ते ॥ २८२ ॥ पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। पुत्राभावे तथा नेऽपि भ्रातृपुत्रादयस्स्वयं ॥ २८३ ॥ भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा। सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः ॥ २८४ ॥ इत्यत्र पुनर्भ्रातृपुत्रग्रहणं * पूर्व्वमेकजातभ्रातृ * पुत्रज्ञापनार्थमन्य. द्विवचन * दर्शनादेव बोद्धव्यम् ॥ २८५ ॥ आदिपदेनतज्ज्ञातृ * पौत्रादयोऽन्त्यान्त * [illegible] ॥ २८७ ॥ तत्रैव तु प्रमादेन * एकजातभ्रातृपुत्रस्य सर्व्वं * भ्रातृपुत्रत्ववचनं ॥ २८१ ॥ तत् सर्व्वे तु पुत्रान्तरकरणे * तस्यैव तत्पुत्रकरणार्थं तथा * पुन्नामत्राणार्थञ्चेति वदन्ति ॥ २८८ ॥ तदस्यापि विस्तरेण * दायभागप्रकरणे * व्याख्याने हि दोषाः प्रदर्शयिष्यन्ते ॥ २८९। इत्येवं द्वादशपुत्र * पौत्रप्रपौत्राभावे स * त्वेकमातापितृजातभ्रातृपुत्रो * दायहरः पिण्डदायी २९०

तदाग्रयेऽग्निमादध्यादग्निमानग्रजो यदि ॥ १०२३ ॥ दाराधिगमनाधाने यः कुर्यादग्रजाग्रतः। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ १०२४ ॥ परिवेत्तृपरिवित्ती गच्छतो नरकं ध्रुवम्। अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥ १०२५ ॥ देशान्तरस्थक्लीबैकवृषणानसहोदरान्। वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः ॥१०२६॥ जडमूकान्धबधिरकुब्जवामनकुण्ठकान्। अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ १०२७ ॥ धनवृद्धिप्रसक्तांश्च कामतःकारिणस्तथा। कुलटोन्मत्तचौरांश्च परिविन्दन्न दुष्यति ॥ १०२८ ॥ धनवार्धुषिकं राजसेवकं कार्मुकं तथा प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ १०२९ ॥ प्रोषितं यद्यशृण्वानमब्दादूर्द्ध्वं समाचरेत्। आगते तु पुनस्तस्मिन्पादं तच्छुद्धये चरेत् ॥ १०३० ॥ इति ॥ अत्रासति पितरि पितामहे च * यदि ज्येष्ठो भ्राता पृथग्गतोऽग्निमान्भवति ॥ १०३१ ॥ तदाधानकालोऽयं * सन्नग्नियोनावग्रजश्च * समग्निमादध्यादिति ॥ १०३२ अग्नियोनयस्तु खलु रणि * ब्रह्मं विद्यादृ वदाश्वादिर्वे तितत * कात्यायनेनोक्तं यथा ॥१०३३॥ यद्याग्निरग्निना नो न भवेदाहितः क्वचित्। अन्नये विविचयदिति जुहुयाद्वाहुताङ्गतिम् ॥ १०३४ ॥ अन्नयेऽनुमते चैव जुहुयाद्द्विजोत्तमः चेत्। अन्नये शुचये चैव जुहुयाच्च द्वाग्निना ॥ १०३५ ॥ एकदाहाग्निनाग्निस्तु यश्च संस्कारमर्हति द्विजः। द्वाग्निनाचसंसर्गं हृदयं यदि तपति ॥ १०३६ ॥ नखेऽग्न्यावनाहोमः स्यान्मुक्त्वैकां समिदाहुतिम्। सगर्भः सन् क्रियार्थी स्वयावमासो प्रजायते ॥ १०३७ ॥ अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिकः। नहि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥ १०३८ ॥ इति ॥ अग्निश्चयथा गृह्णीया * तदुक्तं गोभिलेन तु * यथा तत्प्रदर्श्यते ॥ १०३९। तथा तिथिनक्षत्रपर्व्वसमवाये * दर्शे वा पौर्णमासे वा * ऽग्निसमाधानं कुर्व्वीत ॥ १०४० ॥ वैश्याकुलाद्वाम्बरीषाद्वा * ग्निमाहृत्याभ्यादध्यात् * द्विपित्रा वज्ञयाजिन * एवागाराद्वाग्निमाहरेत् वा ॥ १०४१ ॥ राजन्यस्य वा वैश्यस्य वाऽपि वा * ऽरणिं मथित्वाभ्यादध्यात् * पुण्यस्त्वे तावानाहुको भवतीति ॥ १०४२ ॥ तत्र वैश्याकुलाद्वाम्बरीषादिति * वैश्यानां लाजादिभर्ज्जनपात्रात् * साग्निकस्य वज्ञयाजिब्राह्मणस्य * साग्निकस्य राजन्यस्य वैश्यस्य वा ॥ १०४३ ॥ अरणिं मथित्वा यथाग्निं गृह्णीया * त्तदुक्तं कात्यायनेन * स्वसंहितायां तद्यथा ॥ १०४४ ॥ अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः। तस्य या प्राङ्मुखी शाखा वोदीची वोर्द्ध्वगापि वा ॥ १०४५ ॥ अरणिस्तन्मयी प्रोक्ता तन्मयी वोत्तरारणिः। सारवद्दारवं चत्रमोविलीचप्रशस्यते ॥ १०४६ ॥ संसक्तमूलो यः शम्याः सशमीगर्भ उच्यते। अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः ॥ १०४७ ॥ चतुर्विंशतिरङ्गुष्ठदैर्घ्यं षडपि पार्थवम्। चत्वार उच्छ्रये मानमरण्योः परिकीर्त्तितम् ॥ १०४८ ॥ अष्टाङ्गुलप्रमन्थः स्याच्चत्रं स्याद्द्वादशाङ्गुलम्। ओविलीद्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ १०४९ ॥ अङ्गुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते। तत्र तत्र वृहत्पर्व्वग्रन्थिभिर्मिनुयात् सदा ॥ १०५० ॥ गोवालैः शणसंमिश्रैस्त्रिवृद्वृत्तममलात्मकम्। व्याममप्रमाणं नेत्रं स्यात्प्रमथ्यस्तेन पावकः ॥ १०५१ ॥ मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी। अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुलं वक्त्र उच्यते ॥ १०५२ ॥ अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम्। एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्तिर्द्वौ च गुह्यकम् ॥ १०५३ ॥ ऊरुजङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम्। अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः ॥ १०५४ ॥ यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते। तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ १०५५ ॥ अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः। प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥ १०५६ ॥ उत्तरारणिनिष्पन्नः प्रमन्थः सर्व्वदा भवेत्। योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥१०५७॥

आर्द्रासगुविराचैव षण्णाम्मीपाटितातथा। नहितायजमानानामरणिश्चोत्तरारणिः॥ १०५८॥ परिधायाह तं वासः प्रावृत्य च यथाविधि। बिभृयात् प्राङ्मुखो यत्नमाहृतावह्यमाणया॥ १०५९॥ चत्वरार्धे समन्यागं गाढं कृत्वा विचक्षणः। कृत्वोत्तराग्रामरणिं तद्बुध्नपरिन्यसेत्॥ १०६०॥ चत्वाधःकीलकस्थानमोविलीलदपगाम्। विष्टभ्याद्धारयेद्यत्नं निष्कम्प प्रयतः शुचिः॥ १०६१॥ तिरद्दे ष्टायने त्रिणा चत्वं पत्नीगोऽहता शुकाः। पूर्व्वं मथन्त्यरणीं ताः प्राचाग्नि ऽस्याद् यथाचुतिः॥ १०६२॥ नैकयापि विनाकार्य्यमाधानं भार्य्यया द्विजैः। अकृतं तं विजानीयात् सर्व्वं यावारभन्ति यत्॥ १०६३॥ वर्णज्यैष्ठ्येन बह्वीभिः सवर्णाभिश्च जन्मतः। कार्य्यमग्निच्युतेराभिः साध्वीभिर्मथनं पुनः॥ १०६४॥ नात्तशूद्रीं प्रयुञ्जीत नद्रोहद्वेषकारिणीम्। नचाव्रतस्थां नैवान्यपुंसा च सह सङ्गताम्॥ १०६५॥ ततः शक्ततरा पश्चादासामन्यतरापि वा। उपेतानामन्यतमामन्त्ये दग्निं निकामतः॥ १०६६॥ जातमग्नं लक्षणं कृत्वा तं प्रणीय समीध्य च। आधाय समिधश्चैव ब्राह्मणं चोपवेशयेत्॥ १०६७॥ ततः पूर्णाहुतिं हुत्वा सर्व्वमन्त्रसमन्विताम्। गां दद्याद् यज्ञवानन्ते ब्राह्मणे वाससी तथा॥ १०६८॥ इति॥ अतएव नैकयापि विनाकार्य्य *माधानं भार्य्यया द्विजैरिति* यदुक्तं तेन ख्यापितं * सभार्य्योऽग्नि नादध्यादिति। १०६९। एकभार्य्यस्तु तयैव * सवर्णजया ऽनुलोमद्विजजया * वैकया * सहारणिं मथित्वाग्निं * यथावद्द्विजो गृह्णीयात्। १०७०। बहुभार्य्यास्तु सवर्णा * जानुलोमजाश्च सत्वोषु * याभिः सहारणिं मन्थ्य * मटुक्तं वर्णज्यैष्ठ्येन तादिमा। १०७१। यस्य सवर्णाजाश्चानुलोमजाश्च * बह्वीभार्य्याः सन्ति ताभि * विवाहतः सवर्णाभि * र्जन्मतः सवर्णाभिश्च * साध्वीभिराभिः भार्य्याभि। १०७२। सहवर्णज्यैष्ठ्येनहेतु नाग्नि * च्युतेर्हेतोररणिमथनं तु * द्विजेनकार्य्यं नात्तशूद्रीं भार्य्यां * प्रयुञ्जीत वर्णज्यैष्ठ्याभावात्। १०७३। यद्विवर्णज्येष्ठत्वेन * सवर्णाजानुलोमजा * नोच्यन्ते सवर्णजा एवोच्यन्ते * तदा शूद्रीवर्जनमनर्थकं स्यात्। १०७४। वर्णज्येष्ठापि द्रोहद्वेषकारिणी * मव्रतस्थामन्यपुरुषसङ्गतां * भार्य्यामरणिमथने प्रयुञ्जीत॥ १०७५॥ तथा च ब्राह्मणो ब्राह्मणकन्या * क्षत्रियकन्या वैश्यकन्याभिर्भार्य्याभिः * सहारणिमथनं कुर्यात्॥ १०७६॥ क्षत्रियः क्षत्रियकन्या * वैश्यकन्याभिर्भार्य्याभिः * सहारणिमथनं कुर्यात्॥ १०७७॥ वैश्यो वैश्यकन्याभिर्भार्य्याभिः स * हारणिमथनं कुर्य्या * देव गृहीताग्निर्यथावर्त्तेत * तदुक्तं कात्यायनेन॥ १०७८॥ अरणीः स्वयनागाग्निदाहे षूग्निं समाहितः। पालयेदुपशान्ते ऽस्मिन् पुनराधानमिष्यते॥ ज्येष्ठा चेद्बहुभार्य्यस्य अभिचारेण गच्छति। पुनराधानमेतेन्द्रू च्छन्ति न तु गौतम। १०७९। दाहयित्वाग्निभिर्भार्य्यां सदृशीं पूर्व्वसंस्थिताम्। पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः। १०८०। एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्व्वमारिणीं। दाहयेदग्निहोत्रेण यज्ञपात्रैः स्वधर्म्मवित्। १०८१। द्वितीयाञ्चैव यः पत्नीं दहेद्वैतानिकाग्निभिः। जीवन्त्यां प्रथमायान्तु ब्रह्मघ्नेन समं हि तत्। १०८२। मृतायान्तु द्वितीयायां योऽग्निहोत्रं समुत्सृजेत्। ब्रह्मघ्नं तं विजानीयात् यश्च कामात् समुत्सृजेत्। १०८३। मृतायामपि भार्य्यायां वैदिकाग्निं नहि त्यजेत्। उपाधिनापि तत्कर्म्म यावज्जीवं समाचरेत्। १०८४। पूर्वैर्वयोनिः पूर्व्वास्तु पुनराधानमेव च। विधिपौत्रायुजस्थानमाज्याहुत्याष्टकं तयाः। १०८५। कृत्वा वाहुतिहोमान्तमुपतिष्ठेत पावकम्। अधीयः केन लागे यः कस्ते जामिवमानसः। १०८६। अग्निमीडे अग्न आयाहि वीतये। त्वमग्ने ऽग्निर्ज्योतिरिति अग्निं दूतमग्ने सृजेति च। १०८७। इत्याद्यावाहुतीर्हुत्वा यथाविधानपूर्व्वशः। विनष्टं तु कृतुं व गुणं प्रताकं स्थलदर्शिधिपि। १०८८।

२५ ॥ तेनयस्तु शालाग्निः*स्मार्त्तिकाग्निर्वैवाहिकाग्निरेवोक्तो*नतु प्रोक्तोलौकिकाग्निस्तस्मिन्*पकं हि द्रव्याप[वि]त्रं स्यात् ॥२६॥ पञ्चसूनापापविनाशार्थञ्चेदं* मनुनोक्तंनतु वैदिक*काग्निपाकःप्रतिषिद्धः ॥ २७ ॥ पञ्चयज्ञवि[ध]ानं यदर्थं क्लृप्तं*तदाह पञ्चेत्यादिकं ॥ १ ॥ २८ ॥

[प]ञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ ६८ ॥

[प]ञ्च स्थानं सूना गृहस्थस्य पञ्च*चुल्ली पेषणी पेषणं*शिला उपस्करः कुण्डसम्मार्ज्जनी* प्रभृति गृहोपकरणम् ॥ १ ॥ [क]ण्डनी तण्डुलादिकण्डनद्रव्यं *उपलोलूखलादिक*उदकुम्भो जलाधारः ॥ २ ॥ ६८॥

[त]ासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः। पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥६९

[त]ासामित्यादि ॥ ६९ ॥ एषु पञ्चस्थानेषु*हिंसास्थानेषु प्राणिनो* येकर्म्मसु क्रियमाणे षु नश्यन्ति* तासामस्थान[ता]ः कृतानां *पञ्चानां सूनानां निष्कृत्यर्थम् ॥ १ ॥ गृहमेधिनां गृहिणां *क्रमेण पञ्च महायज्ञाः प्रत्यहं* कर्त्तव्यतया म[ह]र्षिभिः*क्लृप्ताः स्ते चायवच्छान्ते ॥ २ ॥ ६९ ॥

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ७० ॥

अध्यापनमित्यादि ॥ ७० ॥ अध्यापनं नियमेन*नित्यं वेदाध्यापनं ब्रह्मयज्ञो*ब्रह्मयज्ञो हि द्विविध*स्तस्यै[क] अध्यापनं दं वचनं [ज]पम् ॥ १ ॥ द्वितीयःस्वाध्यायो जपो * ऽहुतमित्यनेनवच्यते *कात्यायनेनचोक्तं ॥ २ ॥ अ[ध्य]ापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं। यच्च श्रुतिजयः प्रोक्तो ब्रह्मयज्ञः सवोच्यते ॥ इति ॥ ३ ॥ दक्षेणोक्तस्तु पञ्च[म]ा स्वाध्यायः। द्वितीयेचतथाभागेवेदाभ्यासोविधीयते। वेदाभ्यासोहिविप्राणां परमं तपउच्यते ॥ ४ ॥ ब्र[ह्म]यज्ञः सविस्त्रयः षडङ्गसहितस्तु सः। वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः ॥ ५ ॥ ततोदानञ्च शिष्येभ्यो वे[द]ाभ्यासोहि पञ्चधा ॥ इति ॥ पञ्चधाविविधोभ्यासः*प्रथमाश्रमेभवति गृहाश्रमे तु जपः शिष्येभ्यो दानं *तच्छिष्ये[भ्य]ो दानमिदं*मध्यापनमुक्तमिति ॥ ६ ॥ हारीतेनोक्तमध्यापनं त्रिविधं* अध्यापनञ्च त्रिविधं धर्म्मार्थं स्वकथका[र]णम्। शुश्रूषाकारणञ्चेति त्रिविधं परिकीर्त्तितं ॥ ७ ॥ पितृयज्ञस्तुतर्पणमिति*त्रिविधः पितृयज्ञस्तर्पणं *नि[त्य]श्राद्धमन्नदान*ञ्चेत्युक्तं कात्यायनेन ॥ ८ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। श्राद्धं वापितृयज्ञः स्यात् [पि]त्र्योबलिरथापिवा ॥ इति ॥ ९ ॥ तत्तर्पणमन्नित्य * करणे दोषाभावा* मत्तविष्ण्वादिभिरुक्तं । १० । [प्र]तिदिनं श्राद्धकरणे मैथुन*प्रतिषेधात्प्रजोत्पादनासम्भवा*द्विकल्पविधानमावश्यकं स्यात् । ११ । तद्विकल्या[भि]प्रायेण*शङ्खेनोक्तं*होमोदैवोबलिर्भौतः* पित्र्यःपिण्डक्रियास्मृतः । इति । १२ । याज्ञवल्क्येनापिविकल्याभि[प्र]ायात्*बलिकर्म्मस्वधाहोम*स्वाध्यायातिथिसत्क्रियाइत्युक्तं । १३ । अत्रस्वधेतिपदमुक्तं* तर्पणेपिस्वधास्ति [श्र]ाद्धेपिस्वधा*स्यान्नदानेपिस्वधास्ति । १४ । तत्रान्नदानेतर्पणे चमैथुन * प्रतिषेधोनास्तितत्वेदं*तर्पणं

पितृभ्य उदकप्रदानम् । १५ । होमोऽग्निहोत्रं सायं प्रातर्यं जुहोति स दैवयज्ञः । बलिर्भौतो यज्ञो नृयज्ञः । पञ्चमोऽतिथिपूजनम् । १६ । ७० । एतत्पञ्चयज्ञकरणफलमाह पञ्चैतानित्यादि । १ । ७१ ।

**पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते ॥ ७१ ॥**

शक्तितो व्याधिपीडाद्यापद्दोऽन्यत्र यः एतान् पञ्चमहायज्ञान्नित्यं न जहाति यद्वा स्वस्त्विजं वा न कदापि हापयति ॥ २ स खलु गृहेऽपि वसन् तीर्थादिक्रमणं विना सूनादोषैर्विलिप्यते । १ । ७१ । एषामकरणे निन्दामाह देवतातिथिभृत्यानामित्यादि । १ । ७२ ।

**देवतातिथिभृत्यानां पितॄणामात्मनश्च यः । न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ७२ ॥**

यो देवतादीनामात्मनश्चान्नानि न निर्वपति स श्वासोच्छ्वासाभ्यां प्राणापानाभ्यां श्वसन्नपि न जीवति मृतवत् । १ । ७२ । कस्मादित्यत आह अहुतं चेत्यादि । ७३ ।

**अहुतं च हुतं चैव तथा प्रहुतमेव च । ब्राह्म्यं हुतं प्राशितं च पञ्चयज्ञान्प्रचक्षते ॥ ७३ ॥**

यस्मादृषयो ब्रह्मयज्ञादीन् पञ्चयज्ञान् अहुतादीन् प्रचक्षते । १ । ७२ । कं यज्ञं कं प्रचक्षत इत्यत आह जपोऽहुत इत्यादि । १ । ७४ ।

**जपोऽहुतो हुतो होमः प्रहुतो भौतिको बलिः । ब्राह्म्यं हुतं द्विजाग्र्यार्चा प्राशितं पितृतर्पणम् ॥ ८४ ॥**

वेदानां जपस्त्रिविधः पूर्वमुक्तः स तु ब्रह्मयज्ञो नहुतः अहुतक्रियोणामेव तद्यजनं तृप्तिकृत्स्यात्तेषामभावहारात् ॥ १ ॥ हुतो होमो देवानामभावहार्यत्वात् । भौतिको बलिः सर्वदेवानां बलिरभावहार्यत्वात् । प्रहुतो द्विजाग्र्यार्चनमातिथ्यं ब्राह्म्यं हुतं स्यात् ॥ २ ॥ प्राशितं तत्साक्षाच्छ्राद्धे ब्राह्मणभोजनं पितृतर्पणं तृप्तिकरत्वात् पितॄणाम् ॥ ३ ॥ ७४ ॥ स्वाध्यायहोमयोर्गुणमाह स्वाध्याय इत्यादि ॥ १ ॥ ७५ ॥

**स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्मणि । दैवकर्मणि युक्तो हि बिभर्तीदं चराचरम् ॥ ७५ ॥**

स्वाध्यायः स्वस्य वेदाध्ययनमध्यापनेनापि स्वस्य चाध्ययनं भवति ॥ १ ॥ तेनाध्ययनाध्यापनान्यतरस्मिन् नित्ययुक्तः स्यादिह च दैवकर्मण्यग्निहोत्रहोमे नित्ययुक्तश्च स्यात् ॥ २ ॥ कस्मादित्यत आह दैवकर्मणीत्यादि हि यस्माद्दैवे कर्मणि युक्तः पुरुष इदं चराचरं बिभर्ति ॥ २ ॥ ७५ ॥ कथं चराचरं बिभर्ति इत्यत आह अग्नावित्यादि ॥ १ ॥ ७६ ॥

**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ७६**

अग्निहोत्रे याग्नौ प्रक्षिप्ता*याहुतिः सा खल्वादित्य*मुपतिष्ठति तस्यास्तु*तोपस्थितौ सत्यामादित्याद्*वृष्टिर्भवति ततस्तु*वृष्टेः प्रजाश्चान्नाः भवन्ति ॥ १ ॥ तत्सायं प्रातर्होमकालमुक्तः*कात्यायनेन तद्यथा ॥ २ ॥ सूर्य्योऽस्तं यो समप्राप्ते षट्त्रिंशद्भिः सदाङ्गुलैः। प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शनात् ॥ ३ ॥ हस्तादूर्द्ध्वं रविर्य्यावद्गिरिं हित्वा न गच्छति। तावद्धोमविधिः पुण्यो नान्योऽभ्युदितहोमिनाम् ॥ ४ ॥ यावत्सम्यग् न भाव्यन्ते नभस्यृक्षाणि सर्व्वतः। न च लौहित्यमपैति तावत्सायञ्च हूयते ॥ ५ ॥ रजोनीहारधूमाद्यैश्छायापान्तरिते रवौ। सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते ॥ ६ ॥ न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम् ॥ ७६ ॥ तत्र च ज्येष्ठत्वमाह यथेत्यादि ॥ ७७ ॥

**यथा वायुं समाश्रित्य वर्त्तन्ते सर्व्वजन्तवः। तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व्व आश्रमाः॥७७**

सर्व्व आश्रमाश्चत्वार*एवाश्रमा गृहस्थमेव*वाश्रित्य वर्त्तन्ते यथा*वायुं समाश्रित्य सर्व्व*जन्तवो जीवन्तो वर्त्तन्ते ॥ १ ॥ ॥ ७७ ॥ ननु गृहस्थो गृहस्थ नाश्रित्य* जीवति कथमन्येऽङ्गत्यतआह*यस्मादित्यादिकश्लोकं ॥ १ ॥ ७८ ॥

**यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्। गृहस्थेनैव धार्य्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥७८**

त्रयोऽपरे ब्रह्मचार्य्या* दयआश्रमिणोऽन्वहं * गृहस्थेनैव ज्ञानेन* वेदाध्यापनज्ञानेन * दत्तान्नेन च धार्य्यन्ते ॥ १॥ तस्माद्गृही गृहस्थ एवाश्रमो*ज्येष्ठाश्रमोऽभिधीयते*न तु ज्येष्ठाश्रमी यस्येति* परत्र स संधार्य्य इत्यर्थः ॥ २ ॥ ७८ ॥

**स संधार्य्यः प्रयत्नेन स्वर्गमक्षयमिच्छता। सुखं चेहेच्छता नित्यं योऽधार्य्यो दुर्ब्बलेन्द्रियैः॥७९**

स संधार्य्य इत्यादिः ॥ ७९ ॥ इह योज्येष्ठो यो गृहस्थाश्रमो*दुर्ब्बलेन्द्रियैरजितेन्द्रियैर्जनै*रधार्य्यो धारयितुमशक्य एव ॥ १ ॥ स खलु ज्येष्ठो गृहस्थाश्रमः*प्रेत्याक्षयं स्वर्गमिच्छता नित्या*मिहचसुखमिच्छता*जनेन प्रयत्नेनधार्य्यः ॥ २ ॥ ७९ ॥ अपरञ्च ऋषय इत्यादि ॥ ८० ॥

**ऋषयः पितरो देवा भूतान्यतिथयस्तथा। आशासते कुटुम्बिभ्यस्तेभ्यः कार्य्यं विजानता॥८०**

तेभ्यः कुटुम्बिभ्यो गृहस्थाश्रमिभ्यः* पञ्चभिर्ब्रह्मयज्ञादिभिरिष्टा*ऋष्यादयः पञ्च यत आशासते ॥ १ ॥ तस्माज्जानता शास्त्रविधानज्ञेन * विधानं कार्य्यमनुष्ठेयं ॥ २ ॥ ८० ॥ ननु केन केन इज्यन्ते तत्राह * स्वाध्यायेनेत्यादिश्लोकं ॥ १ ॥ ८१ ॥

**स्वाध्यायेनार्च्चयेतर्षीन् होमैर्देवान् यथाविधि। पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्म्मणा॥८१**

स्वाध्यायेन वेदाध्यापनजप्य*ऋषीनर्च्चयेत्*होमैरग्निहोत्रहोमै*र्देवान्यथाविध्यर्च्चयेत ॥ १ ॥ पितॄन् श्राद्धैस्तर्पणश्राद्धानान्तरैरर्च्चयेत्नॄनतिथीनन्नैर्वलि*कर्म्मणा भूतानार्च्चयेत् गृहस्थः ॥ २ ॥ ८१ ॥ तत्र यज्ञयथाक्रमं कुर्य्यात्तदाह*कुर्य्यादित्यादि ॥ १ ॥ ८२ ॥

कुर्य्यादहरहःश्राद्धमन्नाद्येनोदकेनवा। पयोमूलफलैर्वापिपितृभ्यःप्रीतिमावहन्॥ ८२॥

अहरहःप्रत्यहमन्नादिना*श्राद्धं कुर्य्यादुदकेन* वातर्पणं श्राद्धं कुर्य्यात्॥ १॥ पितृभ्यःपितृबुद्धिभ्य*पयोमूल फलैर्वापि*प्रीतिमावहन्श्राद्धं कुर्य्यात्॥ २॥ ८२॥

एकमप्याशयेद्विप्रं पित्रर्थे पाञ्चयज्ञिके। नचैवात्राशयेत्किञ्चिद्वैश्वदेवं प्रतिद्विजम्॥ ८३॥

एकमपीत्यादि॥ ८३॥श्राद्धे पाञ्चयज्ञिकेयद्यशक्तःस्यात्तत्*ब्राह्मणभोजने*तदैकमपिब्राह्मणं*भोजयेन्नतु ब्राह्मण*भोजनाच्छ्राद्धं भवति॥ १॥ अत्रपाञ्चयज्ञिकेवैश्वदेवं प्रति*भूतयज्ञेतु किञ्चिदपि * द्विजं नैवाशयेदि ति॥ २॥ ८३॥ ननुतर्हि कथंवैश्वदेवंकुर्य्या*दित्यतआहवैश्वेत्यादि॥ १॥ ८४॥

वैश्वदेवस्यसिद्धस्यगृह्येऽग्नौविधिपूर्व्वकम्। आभ्यःकुर्य्याद्देवताभ्योब्राह्मणोहोममन्वहम्॥ ८४॥

विश्वदेवानामिदंसिद्धमन्न * मितिवैश्वदेवंसिद्धम्॥ १॥ यथाविधिवैवाहिकेग्नौसिद्धस्यपक्वस्यवैश्वदेव स्यान्नस्य*होममन्वहंब्राह्मण*आभ्यदेवताभ्योगृह्ये*वैवाहिकेऽग्नौकुर्य्यादिति॥ २॥८४॥ ननुकाभ्योदेवताभ्यो* होमंकुर्य्यादितातआ*हाग्नेरित्यादीद्वौश्लोकौ॥ १॥ ८५॥

अग्नेःसोमस्यचैवादौतयोश्चैवसमस्तयोः। विश्वेभ्यश्चैवदेवेभ्योधन्वन्तरयएवच॥ ८५॥
कुह्वैचैवानुमत्यैचप्रजापतयएवच। सहद्यावापृथिव्योश्चतथास्विष्टकृतेऽन्ततः॥ ८६॥

स्वाहान्तेनादावग्नेर्होमंकुर्य्यात् *इदमग्नयेस्वाहेति*ततःसोमस्यहोमंकुर्य्यात्* इदंसोमायस्वाहेति * । १। ततस्तयोःसमस्तयोःहोमंकुर्य्या*दिदमग्नीषोमाभ्यांस्वाहेति।॥ २॥ ततोविश्वेभ्योदेवेभ्यः*स्वा हेत्याय*धन्वन्तरयेस्वाहेति*॥ ३॥ ८५॥ ततःकुह्वैस्वाहाततो*ऽनुमत्यैस्वाहेति*ततः*प्रजापतयेस्वाहेति* ततःसहैवद्यावा*पृथिवीर्होमंकुर्य्यात्॥ १॥ द्यावापृथिवीभ्यांस्वाहा*ततःस्विष्टकृतेस्वाहेति*होमंकुर्य्यादि तिक्रमः।॥ २॥ ८६॥

एवंसम्यग्घविर्हुत्वासर्व्वदिक्षुप्रदक्षिणम्। इन्द्रान्तकाप्पतीन्दुभ्यःसानुगेभ्योवलिंहरेत्॥ ८७

एवमित्यादि॥ ८७॥ एवमनेनप्रकारेणसम्यगग्न्यादिभ्योहविर्हुत्वा * सर्व्वदिक्षुप्रदक्षिणं*दक्षिणावर्त्तेन. सानु*गेभ्यइन्द्रादिभ्योवलिंहरेत्॥ १॥ तद्यथाप्राच्यामिन्द्राय*नमइन्द्रानुगेभ्योनमो*दक्षिणस्यांयमायन मो*यमानुगेभ्योनमः॥ २॥ प्रतीच्यांवरुणायनमो*वरुणानुगेभ्योनमः*उत्तरस्यांसोमायनमः * सोमानुगे भ्योनमः॥ ३॥ ८७॥

मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि। वनस्पतिभ्य इत्येवं मुषलोलूखले हरेत्॥ ८८॥

मरुद्भ्य इत्यादि॥ ८८॥ मरुद्भ्यो नम इति द्वारे बलिं * हरेदद्भ्यो नम इत्यप्सु * क्षिपेन्मुषलोलूखले * वनस्पतिभ्यो नम इति॥ १॥ ८८॥

उच्छीर्षके श्रियै कुर्याद्भद्रकाल्यै च पादतः। ब्रह्मवास्तोष्पतिभ्यां च वास्तुमध्ये बलिं हरेत्॥ ८९

उच्छीर्षक इत्यादि॥ ८९॥ वास्तुपुरुषस्य शिर * उच्छीर्षकं तत्पूर्वोत्तरस्या * मैशान्यस्तु दिशि श्रियै * नम इति बलिं हरेत्॥ १॥ वास्तुपुरुषस्य पादतस्तु * दक्षिणपश्चिमस्यां नैरृत्यां * दिशि भद्रकाल्यै नम * इति बलिं हरेदिति॥ २॥ केचिदाहुरुच्छीर्षके * गृहिपुरुषस्य शयनस्थाने तु * शिरःस्थाने देशे श्रियै * नम इति बलिं हरेत्॥ ३॥ पादत इति यस्यां दिशि तस्य * पादौ वर्त्तेते तस्यां दिशि * भद्रकाल्यै नम इति बलिं हरेत्॥ ४॥ वास्तुमध्ये ब्रह्मणे नमो वास्तोष्पतये * नम इति बलिं हरेत्॥ ५॥ ८९॥

विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्। दिवाचरेभ्यो भूतेभ्यो नक्तंचारिभ्य एव च॥ ९०

विश्वेभ्य इत्यादि॥ ९०॥ विश्वेभ्यो देवेभ्यो नम * इत्याकाशे बलिमुत्क्षिपेत् * दिवाचरेभ्यो भूतेभ्यो * नम इति चाकाशे * नक्तंचरेभ्यो भूतेभ्यः * इति चाकाशे बलिं हरेत्॥ १॥ ९०॥

पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये। पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत्॥ ९१॥

पृष्ठवास्तुनीत्यादि॥ ९१॥ पृष्ठवास्तुनीति वास्तु * पृष्ठे सर्वात्मभूतये * नम इति बलिं कुर्वीत॥ १॥ सर्वं बलिशेषं स्वस्य * दक्षिणाभिमुखः प्राचीनावीती च * सन् दक्षिणस्यां दिशि * पितृभ्यः स्वधेति बलिं हरेत्॥ २॥

शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्। वायसानां कृमीणाञ्च शनकैर्निर्वपेद्भुवि॥ ९२॥

शुनामित्यादि॥ ९२॥ अथान्नादन्नं पात्रे समुद्धृत्य * शनकैः क्रमेण श्वभ्यो * नमः पतितेभ्यो नमः * श्वपचेभ्यो नमः पापरोगिभ्यो नमः॥ १॥ वायसेभ्यो नमः क्रिमिभ्यो नम * इति भुवि धूलिहीन * भूभागे बलिं निर्वपेत्॥ २॥
॥ * ॥ ९२॥

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति। स गच्छति परं स्थानं तेजोमूर्त्तिः पथर्जुना॥ ९३॥

एवं य इत्यादिनास्य फलमाह॥ ९३॥ यो ब्राह्मणो ब्रह्मविदं मधीते य * इति ब्राह्मणः क्षत्रियो * वैश्यश्च य एवं सर्वं * भूतानि नित्यमर्चति *॥ १॥ स तेजोमूर्त्तिः सन्नृजुना पथा * परं स्थानं ब्रह्मलोकं * गच्छतीति वेदितव्यम्॥ २॥ * ॥ ९३॥ अथ नृयज्ञविधानमाह कृत्वै * तद्बलिकर्मेत्यादि॥ १॥ ९४॥

कृत्वैतद्बलिकर्मैवमतिथिं पूर्वमाशयेत्। भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे॥ ९४॥

एवमनेनप्रकारेण *गीतवृत्तिकर्म्मगत्वा*पूर्व्वमतिथिमाश्रयेत् ॥ १ ॥ वक्ष्यतेऽत्रातिथिलक्षण*मुक्तं विष्णुना* एकरात्रिं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्याहि स्थितिर्यस्मात्तस्मादतिथिरुच्यते । इति ॥ २ ॥ ९१ ॥

भिक्षवे पञ्च विधाय*ब्रह्मचारिणोऽवि शेषार्थं *पृथग्वचनाद्विविध * इयस्यायादन्नाधिक्यमस्ति*तस्मै तेन विधिनाभिक्षां दद्यात् ॥ ३ ॥ भिक्षुःषड्विध उक्तोऽत्रिणा * ब्रह्मचारीयतिश्चैव विद्यार्थीगुरुपोषकः । अध्वगःक्षीणवृत्तिश्च षडेते भिक्षुकाःस्मृताः । इति ॥ ७ ॥ ॥ ९४ ॥ भिक्षुब्रह्मचारिभावत*भिक्षादानफलमाह*यत्पुण्यफलमित्यादि ॥ १ ॥ ९५ ॥

यत्पुण्यफलमाप्नोतिगांदत्वाविधिवद्गुरोः । तत्पुण्यफलमाप्नोतिभिक्षांदत्वाद्विजोगृही९५

स्पष्टार्थोऽयं श्लोकः ॥ ९५ ॥

भिक्षामप्युदपात्रं वासत्कृत्यविधिपूर्व्वकम् । वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥९६

भिक्षामपीत्यादि ॥ ९६ ॥ वेदतत्त्वार्थविदुषे * चतुर्थाश्रमिणे ब्रह्म * चारिणे वाब्राह्मणाय*भिक्षामुदकपात्रं वा*विधिवच्च सत्कृत्योपपादयेत् ॥ ९६ ॥ दानप्रसङ्गान्मूर्खेदाना*दानमाह*नश्यन्तीत्यादिकश्लोकं ॥ १ ॥ ९७ ॥

नश्यन्तिहव्यकव्यानिनराणामविजानताम् । भस्मीभूतेषुविप्रेषुमोहाद्दत्तानिदातृभिः ॥९७

भस्मीभूतेषुविप्रेषु*वेदाध्ययनतदर्थतत्त्वज्ञाना *ग्निशून्येषुब्राह्मणेषु*हव्यकव्यदानफलमजानतां ॥ १ ॥ नराणां मध्ये दातृभिर्मोहात्*भस्मीभूतेषुब्राह्मणेषु*दैवपित्र्ये हव्य*कव्यानिदत्तानितेषां नश्यन्तीति ॥ २ एतेनैतदुक्तं भवति * नातिथिभोजनं दैवो *द्देशेननवापित्र्योद्देशेनतेन * भस्मीभूतातिथिविप्र*भोजने दोषोनास्तीति ॥ २ ॥ ९७ ॥ विद्वद्ब्राह्मण*भोजन*फलमाहविद्येत्यादि ॥ १ ॥ ९८ ॥

विद्यातपःसमृद्धेषुहुतंविप्रमुखाग्निषु । निस्तारयतिदुर्गाच्चमहतश्चैवकिल्बिषात् ॥ ९८ ॥

विप्रमुखानामग्नय इव*तेषुविद्यातपःसमृद्धेषुहुतं * हुतमिवदत्तमन्नं * महादुर्गंकिल्बिषान्निस्तारयति ॥ १ ॥ ९८ ॥ अतिथिपूजायथाकर्त्तव्यातत*दाहसंप्राप्तायेत्यादि ॥ १ ॥ ९९ ॥

संप्राप्तायत्वतिथयेप्रदद्यादासनोदके । अन्नंचैवयथाशक्तिसत्कृत्यविधिपूर्व्वकम् ॥ ९९॥

स्वंगृहं प्राप्तायातिथये प्रथम*मासनोदके उपवेशनार्थं*मासनं पादधौतार्थं* मुदकं प्रदद्यादित्य ॥ १ ॥ विधिपूर्व्वकं सत्कृत्य*यथाशक्तिभोजनार्थं*मन्नञ्चैवप्रदद्यादिति ॥ २ ॥ ९९ ॥ गृहेऽतिथ्युपवासे * दोषमाहशिलानित्यादि ॥ १ ॥ १०० ॥

**शिलानप्युञ्छतो नित्यं पञ्चाग्नीनपि जुह्वतः। सर्व्वं सुकृतमादत्ते ब्राह्मणोऽनर्च्चितो वसन्॥१००**

क्षेत्रे शिलाधान्यं छिलाग्रहीतां* तत्रपतितं यदवशिष्टं *वास शिलइत्युच्यते *तानुञ्छतो ब्राह्मणस्य ॥ १ ॥ पञ्चाग्नीनपि जुह्वतो* गृहमागतो ब्राह्मणोऽतिथिरेव* यद्यासनोदकाद्यै रनर्च्चितःसन् वसति ॥ २ ॥ तदा तस्मा*द्गृहस्थात् स*सर्व्वं सुकृ*तमादत्ते ॥ ३ ॥ १०० । अतिथेरागतस्यार्च्चनहेतो*र्वस्तुनोऽभावेऽकस्यापि गृहे नास्तीत्यत आह तृणानि भूमिरित्यादि ॥ १ ॥ १०१ ॥

**तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥ १०१॥**

सतां सज्जनानां दरिद्राणामपि*गृहे आसनार्थं तृणानि वर्त्तन्ते *तदभावेपि भूमिर्वर्त्तत एव ॥ १ ॥ पादधौतार्थं पानार्थञ्चोदकं *वर्त्तत एव चतुर्थी तु सूनृता*समादरपूर्व्वकप्रियवाक्चास्त्येव* ॥ २ ॥ एतानि चत्वारि कदापि सतां वर्त्तमानानां क्वापि *गृहे नोच्छिद्यन्ते सर्व्वदा सन्त्येव ॥ ३ ॥ सर्व्वाभावे एतैरेव चतुर्भिरतिथिपूजा*समग्रेव निष्पद्यते ॥ ४ ॥ १०१ ॥ ननु कः पुनरतिथि*रुच्यते इत्यत आह*एकरात्रमित्यादि ॥ १ ॥ १०२ ॥

**एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः। अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥१०२**

यो ब्राह्मणो गृहमागत*एकरात्रं निवसति* स ब्राह्मणोऽतिथिः स्मृतः ॥ १ ॥ तत्रातिथि*शब्दस्यार्थ*माह अनित्य*मित्यादिकम् ॥ २ ॥ नित्यं न स्थितिर्यस्य ब्राह्मणस्य स * ब्राह्मण एवातिथिरुच्यते इति * स्थः किमनुस्थ इत्यतो गणादिकस्तिथिः ॥ ३ ॥ १०२ ॥ स चातिथिर्यादृशो ब्राह्मणो नोच्यते त*दाह नैकेत्यादिकम् ॥ १ ॥ १०२

**नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा। उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा ॥१०३**

यस्मिन् गृहे भार्या वर्त्तते पञ्चवा*पञ्चाग्नयो वैतानिकाग्नयो वा ह्निकाग्निगृह्याग्नि* रावसथ्याग्निः सभ्याग्नि*श्चेति पञ्चाग्नय इत्याहाग्नीन् विद्वान् ॥ १ ॥ तत्र पञ्चाग्नयो हि वैतानिकाग्नि* वै वाह्निकाग्नि*र्वै द्वुताग्निगृह्याग्निर्दावाग्निश्चेति ॥ २ ॥ तस्मिन् गृहे वैश्वदेव * काले उपस्थितमेक * ग्रामीणं विप्रं गृहीनातिथिं विद्यात् ॥ ३ ॥ भिन्न ग्रामादागतञ्च*साङ्गतिकं धनवन्तं *विप्रमतिथिं न विद्यात् ॥ ४ ॥ गृहस्थस्य परगृहे *वासदोषमाह उपा* सत इत्यादिकश्लोकम् ॥ १ ॥ १०४ ॥

**उपासते ये गृहस्थाः परपाकमबुद्धयः। तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ १०४ ॥**

ये गृहस्थाः सन्तो पाबुद्धयः खलु * परपाकमुपासते*ते प्रेत्य पुनर्जन्मनि ॥ १ ॥ तेन परपाकोपासनेन तेषा*मन्नादिदायिनां गृहे *पशुतां श्वमार्जारादि* पशुतां व्रजन्तीति ॥ २ ॥ १०४ ॥ ननु तर्हि एवं वैश्वदेवकाले किमतिथिसेवनं नान्यकाल इत्यत * तत्राहाप्रणोद इत्यादि ॥ १ ॥ १०५० ॥

**अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना । काले प्राप्तस्त्वकाले वा नास्यानश्नन्गृहे वसेत् ॥ १०५ ॥**

गृहमेधिना सायं सूर्योढः * सूर्येणास्तं गतेन गृहं * प्रापितोऽतिथिः कथञ्चिदप्रणोद्यो भवति ॥ १ ॥ केनापि प्रकारेण * तमतिथिं प्रणुदेत् स * चातिथिः क्षुधाकालेऽथ * वाक्षुधायामकालेऽस्य * गृहस्थस्य गृहं प्राप्तोऽनश्नन्नास्य गृहे वसेत् ॥ २ ॥ अवश्यमेव किञ्चिद् * प्राशित्वा तस्य गृहे * वसेदिति शेषः ॥ ३ ॥ १०५ ॥

**न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत् । धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् ॥ १०६ ॥**

न वा द्रव्यादि यद् घृतं गृही गृहागतमतिथिं न भोजयेत् * तद् घृतं स्वयं नैवाश्नीयात् ॥ १ ॥ इत्येवमतिथिपूजनं * धन्यं यशस्यमायुष्यं * स्वर्ग्यञ्च भवति ॥ २ ॥ १०६ ॥

**आसनावसथौ शय्यामनुव्रज्यामुपासनाम् । उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ १०७ ॥**

आसनेत्यादि ॥ १०७ ॥ गृहस्थः स्वगृहमागते * तिथावुत्तमे खलु आसन * मावसथ शय्यानुव्रज्योपासन * मुत्तमं कुर्यात् स्वसमे तु * हीने हीनं समे समं ॥ १ ॥ १०७ ॥

**वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥ १०८ ॥**

वैश्वदेवे त्वित्यादि ॥ १०८ ॥ वैश्वदेवं तदेव दमनादिकं भोज्यं * यत् किञ्च भूतबलिनृयज्ञपरि * वारादिभोजनार्थं तत् * सर्वं वैश्वदेवमाह ॥ १ ॥ तस्मिन्नन्ने सर्वं प्राप्ते तेषां भोजनसमाप्त्या निर्वृत्ते * सत्यवशेषे चास्मिन् यद्यन्योऽतिथिरागच्छेत् ॥ २ ॥ तदा तस्याप्यतिथेरर्थं * यथाशक्ति पुनरन्नादि * मन्नं पक्त्वा प्रदद्यात् ॥ ३ ॥ तेनान्नेन * पुनर्बलिं पूर्ववन्न हरेदिति ॥ ४ ॥ १०८ ॥ ननु यदि कश्चिद्विप्रो भिन्नग्राम * वासी चासङ्गतिकश्च * कश्चिदर्थायागच्छन् * स्वस्य कुलं गोत्रं वा कि * मतिथिः सन्नभ्यागात् ॥ १ ॥ तत्राह न * भोजनार्थं * स्वे विप्र * इत्यादि श्लोकं ॥ १ ॥ १०९ ॥

**न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् । भोजनार्थं हि ते शंसन्वान्ताशीत्युच्यते बुधैः ॥ १०९ ॥**

स्वस्य भोजनार्थं विप्रः * स्वं कुलं गोत्रं वा नैव * निवेदयेत् तत् स्वं कुल * गोत्रं स्वस्य भोजनार्थं * शंसन्विप्रो * वान्ताशीत्युच्यते बुधैः ॥ १ ॥ ननु ब्राह्मण एव किमतिथि * रुच्यते नान्य इत्यत * आह न ब्राह्मणेत्यादि ॥ १ ॥ ११० ॥

**न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते । वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥ ११० ॥**

ब्राह्मणस्य गृह उपस्थितो यदि * क्षत्रियो भवति सोऽतिथिर्नोच्यते * तथा वैश्यशूद्रश्च * नातिथिरुच्यते इति ॥ १ ॥ यदि ब्राह्मणस्य गृहे * तस्य सखा ब्राह्मणश्चे * दुपस्थितो ज्ञातयो वा * गुरुर्वा न चातिथिरुच्यते ॥ २ ॥ नैषां पूजनेनातिथिपूजनं * सिध्यतीति वेदितव्यं ॥ ३ ॥ ११० ॥ ननु तर्हि किं गृहागतांस्तान् विप्रो * न भोजयेदित्यत आह * यदि त्वतिथीत्यादि ॥ १ ॥ १११ ॥

यदित्वतिथिधर्म्मेणक्षत्रियोगृहमाव्रजेत्। भुक्तवत्सु चविप्रेषुकामंतमपिभोजयेत् ॥ १११ ॥

अतिथिधर्म्मेणयदि*क्षत्रियोगृहमागच्छेत् *तदाविप्रेषुभुक्तवत्सुसत्स्वथ*काममिच्छातस्तमपि*क्षत्रियंभोजयेदिति ॥ १ ॥ १११ ॥ वैश्यशूद्रौकिन्तर्हि न*भोजयेदित्यतआह*वैश्यशूद्रावपीत्यादि ॥ १ ॥ ११२ ॥

वैश्यशूद्रावपिप्राप्तौकुटुम्बेऽतिथिधर्म्मिणौ। भोजयेत्सहभृत्यैस्तावानृशंस्यंप्रयोजयन् ११२॥

यदिवैश्यशूद्रौकुटुम्बे * ब्राह्मणगृहेऽतिथि * धर्म्ममाश्रित्यप्राप्तौस्त * स्तदाभृत्यैःस्वसत्यपोष्यैः * भृत्यादिभिःसहसमकालं भोजयेत् ॥ १ ॥ तथाचाग्रेऽतिथिंविप्रं * भोजयित्वाऽतिथिधर्म्माणंक्षत्रियं * भोजयित्वास्वजनभोजनकाले * वैश्यशूद्रौचभोजयेत् ॥ २ ॥ अत्यशब्दार्थानभिज्ञस्तु * दासभोजनकालेप्रा * गृहस्पतिभोजनादत्र* कल्पमाश्रयन्वैश्य*शूद्रौभोजयेदित्याह ॥ ३ ॥ तदसाधुनहिवैश्योऽभ्यागतस्य* शूद्रोदासवद्भवति ॥ ४ ॥ ११२ ॥

इतरानपिसख्यादीन्संप्रीत्यागृहमागतान्। सत्कृत्यान्नंयथाशक्तिभोजयेत्सहभार्यया११३

इतरानित्यादि॥११३॥ संप्रीत्यागृहमागता*उक्तेभ्यइतरान्जनान्*सख्यौप्रभृतीन्स्त्री*लोकानपिसत्कृत्यभार्यया*सहसमकाले*यथाशक्तिभोजयेत्॥१॥ भ्रान्तस्तुसखिस्त्वाधर्म्यायिप्रभृतीन्*सख्यादीनाहतदसत्*भृत्यशब्देनैवतेषां*पूर्व्वमेवतत्संग्रहात् । २ । नहितत्प्रमादुक्तदासभोजनात्*पश्चात्सहाधर्म्यायिमित्रादेर्भोजनं*साधूपपद्यतेलोके ॥ ३ ॥ यएवभार्य्यायाभोजनकालः * सएवस्वस्यापितर्हि * किमर्थंभार्य्ययासहेत्युक्तंनखात्मनेति ॥ ४ ॥ तस्मात्स्त्रीलोकभोजन*कालोभार्य्याभोजनकाल*एवेतिज्ञापनार्थंभार्य्ययेत्युक्तं ॥ ५ ॥ ११३ ॥

सुवासिनीःकुमारांश्चरोगिणोगर्भिणीस्तथा। अतिथिभ्योऽग्रएवैतान्भोजयेदविचारयन्११४

सुवासिनीरित्यादि ॥ ११४ ॥ सुवासिनीनववधूः*कुमारान्*नुपनीतान् ॥ १ ॥ ११४ ॥

अदत्त्वातुयएतेभ्यःपूर्व्वंभुङ्क्तेऽविचक्षणः। सभुञ्जानोनजानातिश्वगृध्रैर्जग्धिमात्मनः ११५॥

अदत्त्वेत्यादि ॥११५॥ श्वगृध्रैरात्मानोजग्धिं*परत्रभक्षणंस*नजानातीति ॥ १ ११५ ॥ अथगृहस्थस्यात्मनो*भोजनकालउच्यते*भुक्तवत्स्वथेत्यादि ॥ १ ॥ ११६ ॥

भुक्तवत्स्वथविप्रेषुस्वेषुभृत्येषुचैवहि। भुञ्जीयातांततःपश्चादवशिष्टन्तुदम्पती ॥ ११६ ॥

भुक्तवत्सुविप्रेष्वतिथिभिक्षुक* प्रभृतिषुसत्स्वथक्षत्रियादिषु*स्वेषुआत्मीयेषुचसखी * समाधर्म्यायिभ्रात्रादिषु* भृत्येषुपोष्यवर्गेषु । १ । भुक्तवत्सुसत्सुततः* पश्चादवशिष्टमन्नं*यत्तद्दम्पतीभुञ्जीयातामिति ॥ २ ॥ अत्रकश्चिद्भ्रान्तःप्रमादीचभृत्य*शब्देनदासान्व्याचष्टे*स्वशब्देनज्ञातीनाह ॥ ३॥ सतुप्रमादीपूर्व्वंन*ज्ञातिभोजनकालंव्याख्यातवान्*कथमिहतदुपसं*हारजपपद्यते ततस्तदसत् ॥ ४ ॥ ११६॥ नन्वेषदम्पतिभोजनस्यकाल*

उक्तस्तर्हि किं सखीप्रभृतीनां च * भार्यया सह भोजन*विधानं तत् ॥ १ ॥ भार्याभोजनसमकालमेव*सख्यादिस्त्रीलोकं भोजयेदिति*तत्राह देवानित्यादिश्लोकम ॥ २ ॥ ११७ ॥

**देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः । पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥११७॥**

गृहस्थः शेषभुग्भवेदित्यनेन हि ख्यापितं *पूर्वं सख्यादीन् भोजयित्वा दम्पती *पश्चात् भुञ्जीयातामिति ॥२॥११७॥ एतद्व्यतिक्रमेण भोजने दोषं *तथाक्रमेण भोजने *गुणमाहाघं स इत्यादि ॥ १ ॥ ११८ ॥

**अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् । यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते ॥११८॥**

एवमुक्तरूपेण भोजनार्थं योऽन्नं पक्त्वा केवलमात्मकारणात्*पचति स खलु अघं पाप*जनकं तदन्नं भुङ्क्ते ॥ १ ॥ एतदुक्तरूपेण पक्वं* यज्ञशिष्टाशनं सता*मन्नं भोजनं विधीयते ॥ २ ॥ ११८ ॥ एवं गृहमागतानां*राजादीनामर्चनेव*विशेषयोग्यतामाह*राजर्त्विक्स्नातकेत्यादि ॥ १ ॥ ११९ ॥

**राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् । अर्हयेन्मधुपर्केण परिसंवत्सरात्पुनः ११९**

संवत्सरात्परं राजादीन् गृहस्थः* स्वगृहमागतान् मधुपर्केण तु*पूजयित्वमर्हयेत् * चार्वाक् संवत्सरात् पुनः ॥१॥ व्यासेनाप्येवमेवोक्तं *विवाहस्नातकक्ष्माभृदाचार्यसुहृदृत्विजः । अर्घ्या भवन्ति धर्मेण प्रतिवर्षं गृहागताः ॥ इति ॥१९॥ अर्वागपि संवत्सरात्*मधुपर्केण पूजार्हा*वाह राजा चेत्यादि ॥ १ ॥ १२० ॥

**राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ । मधुपर्केण संपूज्यौ न त्वयज्ञ इति स्थितिः ॥ १२० ॥**

राजा मूर्द्धाभिषिक्तः क्षत्रियो नृपः*श्रोत्रियश्छन्दोऽधीते यः ॥ १ ॥ एतौ द्वौ यज्ञकर्मणि *क्रियमाणे यदि संवत्सरादर्वाक्*पुनरुपस्थितौ स्यातां*॥२॥ तदा मधुपर्केण तौ*सम्पूज्यौ भवतो न त्वयज्ञे पुनः*सम्पूज्यौ मधुपर्केण ॥३॥ पूर्वं राजर्त्विगित्यादिना यदुक्तं *तस्यायं विशेषः उक्तः*ऋत्विगादिषु यः श्रोत्रियः ॥ ४ ॥ स संवत्सरादर्वागपि यज्ञकर्मणि*पुनरागतोऽपि मधु * पर्केण संपूज्य इति*स्थितिर्व्यवस्था विज्ञेया ॥ ५ ॥ १२० ॥ ननु यदि सायमतिथिरागच्छेत्*तदा किं कुर्यात् यदि नागच्छेत्तदा*गार्हस्थ्यार्थं । किं कुर्यादित्यत आह सायन्त्वित्यादि ॥१॥१२१॥

**सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् । वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥१२१॥**

सायन्तु रात्रावर्वाक् प्रहरात्*पत्नी वैवाहिकेऽग्नौ*सिद्धस्य पक्वस्यान्नस्य*बलिं प्रागुक्तममन्त्रं हरेत् ॥१॥ हि यस्मात् सायं प्रातर्वैश्वदेवनामैतद्दीदृशं विधीयते* विष्णुनाप्येवमेवोक्तं ॥ २ ॥ सायं प्रातस्त्वतिथये प्रदद्यादासनोदकम् ॥ अन्नञ्चैव यथाशक्त्या*सत्कृत्य विधिपूर्वकम् ॥ ३ ॥ प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम् । प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम् ॥ इति ॥ ४॥ नन्वेवं विधमतिथिपूजनं *ब्राह्मणस्यैव नितरामुपपद्यते* नित्यभोज्यान्नवत्त्वात्*क्षत्रियवैश्ययोर्नित्य*भोज्यान्नत्वाभावादिति ॥१॥ यत उक्तमङ्गिरसा*ब्राह्मणस्य सदा भुङ्क्ते*क्षत्रियस्य च

पर्शणि । वैश्यस्यापतृभुञ्जीतनशूद्रस्यकदाचन ॥ २ ॥ ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुभवेत । वैश्या न्नेनतुशूद्रत्वं शूद्रान्ने नरकंध्रुवम् ॥३॥ दुष्कृतं हिमनुष्याणामन्नमाश्रित्यतिष्ठति । योयस्यान्नंसमश्नातिसतस्याश्नाति किल्बिषम ॥ ४ ॥ इति । व्यासेनाप्युक्तमेवमेव *अमृतं ब्राह्मणान्नेन *दारिद्रं क्षत्रियस्य च । वैश्यान्नेनतुशूद्रत्वं शूद्रान्नान्नरकं व्रजेदिति ॥ ५ ॥ आपस्तम्बेनाप्युक्तञ्च*ब्राह्मणस्य सदाभुङ्क्ते क्षत्रियस्य तुपर्वणि । वैश्यस्य यज्ञदीक्षायां शूद्रस्य नकदाचन ॥ ५ ॥ राजान्नं तेजआदत्ते *शूद्रान्नं ब्रह्मवर्चसम् ॥ असंस्कृतन्तुयोभुङ्क्ते सभुङ्क्ते पृथिवीमलम् ॥ इति ॥ ५ ॥ सत्यमेवैतदप्युक्तं *तद्वैश्वदेवादिभ्योऽन्यत्रतत्र* दत्तस्य भोजनेफलं ॥ ६ ॥ उक्तमङ्गिरसैवतत्र*अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयःस्मृतम् । वैश्यस्यचान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् । ॥ ७ ॥ एतदन्नादिकथनं* वैश्वदेवाद्यभिप्रायेण*तदुक्तमत्रिणा॥ ८॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयःसमम् ॥ वैश्यस्यचान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् ॥ ९ ॥ एतत्सर्वं समाख्यातं याज्ञवल्क्येसम्प्रतिष्ठितें । वैश्वदेवेचहोमेचदेवताभ्यर्चनेजपे ॥ १० ॥ अमृतं तेनविप्रान्नमृग्यजुःसामसंस्कृतम् । व्यवहारानुपूर्व्या यधर्म्या णावलिभिर्जितम् । क्षत्रियान्नं पयस्तेनवैश्यान्नंयज्ञपालने ॥ ११ ॥ अतश्चाह्निककालेनित्यं*म पिवगृह्य विहितं *तेनतर्पणेपिपित्ः*यज्ञकृते वैश्वदेवादिकरणात् ॥ १२ ॥ ब्राह्मणक्षत्रियवैश्यानामन्नं *नित्यममृतं पयोऽन्नं भवति*नतेषांदुष्कृतमाश्नतीति ॥ १३ ॥ इति ॥ अथैवं गृहस्थानां दिनकृत्यानि * विष्णुनाप्युक्तानियथा* ॥ १ ॥ गृह्याश्मौ वैवाहिकाग्नौ* पाकयज्ञान्कुर्यात्सायं * प्रातश्चाग्निहोत्रम् ॥ १ ॥ चन्द्रार्कसन्निकर्ष*विप्रकर्षयोर्दर्श*पौर्णमासाभ्यां यजेत*प्रत्ययनं पशुना ॥ २ ॥ शरद्ग्रीष्मयोश्चाग्रयणेन*व्रीहियवयोर्वापाकेवै वार्षिका*भाधिकान्नं प्रत्यब्दं सोमेन*वित्ताभावे इष्ट्यावैश्वानर्या ॥ ३ ॥ शूद्रान्नं चापरिहरेत्* यज्ञार्थं भिक्षितमवाप्तमर्थं सकलमेवनवितरेत् ॥ ४ ॥ सायं प्रातर्वैश्वदेवं जुहुया * द्भिक्षाञ्चभिक्षवेदद्या*दर्च्चित भिक्षादानेगो*दानफलमवाप्नोति ॥ ५ ॥ भिक्षुभावे तन्मात्रं गवांदद्यात् * वह्नौवाप्रक्षिपेद्भुक्ते * पात्रे विद्यमाने तु न* भिक्षुकं प्रत्याचक्षीत ॥ ६ ॥ कण्डणीपेषणीचुल्ली*कुम्भउपस्करइति*पञ्चसूनागृहस्थस्य ॥ ७ ॥ तन्निष्कृत्यर्थञ्च ब्रह्मदेवभूत*पितृनरयज्ञान् कुर्यात् ॥ ८ ॥ स्वाध्यायोब्रह्मयज्ञो*होमोदैवोबलिभौत *पितृतर्पणं पित्र्योनृ*यज्ञस्तिथिपूजनम् ॥ ९ ॥ देवतातिथिभृत्यानां पितृणामात्मनस्तथा ॥ ननिर्वपतिपञ्चानामुच्छ्वसन्नसजीवति ॥ १० ॥ ब्रह्मचारीयतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात् । तस्मादभ्यागतानेतान् गृहस्थोनावमानयेत् ॥ ११ ॥ गृहस्थएवयजते गृहस्थस्तप्यते तपः ॥ ददातिचगृहस्थस्तुतस्माज्ज्येष्ठोगृहाश्रमी ॥ १२ ॥ ऋषयःपितरोदेवाभूतान्यतिथयस्तथा । आशासते कुटुम्बिभ्यःस्तस्माज्ज्येष्ठोगृहाश्रमी ॥ १३ ॥ त्रिवर्गसेवां सततान्नदानं सुरार्चनं ब्राह्मणपूजनञ्च । स्वाध्यायसेवां पितृतर्पणञ्चकृत्वागृहीशक्रपदं प्रयाति ॥ १४॥ इति ॥ एवमेववशिष्ठादिभिःसर्व्वैः *पञ्चयज्ञविधानादि *दिनकृत्यानिप्रायेण*तुल्यानिसर्व्वाण्युक्तानिः ॥ १५ ॥ यद्यपीहदिवसस्य*कालनियमोमनुना*नोक्तस्तत्रापिदक्षादि*भाषितकालोऽत्रनेयः ॥ १६ ॥ तद्यथादक्षसंहितायां तेनोक्तं* दिवसस्याद्यभागेतु* कृत्यंतस्योपदिश्यते । द्वितीयेचतृतीयेचचतुर्थेपञ्चमेतथा । ४ ॥ षष्ठेचसप्तमेचैवअष्टमेचपृथक् पृथक् । विभागेष्वेषुयत्कर्म्म*तत्प्रवक्ष्याम्यशेषत ॥ ५ ॥ उषःकाले तुसंप्राप्ते शौचं कृत्वायथार्थवत् । ततःस्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम् ॥ ६ ॥ अत्यन्तमलिनःकायोनवच्छिद्रसमन्वितः । स्रवत्येषदिवारात्रौप्रातःस्नानं विशोधनम ॥

॥ ७ ॥ क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च। अङ्गानि समतां यान्ति उत्तमान्यधमैः सह ॥ ८ ॥ नानाकुत्समाकीर्णः शयनादुत्थितः पुमान्। अस्नात्वा नाचरेत् कर्म जपहोमादि किञ्चन ॥ ९ ॥ प्रातरुत्थाय यो विप्रः प्रातःस्नायी भवेत् सदा। समस्तजन्मजं पापं त्रिभिर्वर्षैर्व्यपोहति ॥ १० ॥ उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ। प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥ ११ ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम्। सर्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम् ॥ १२ ॥ स्नानादनन्तरं तावदुपस्पर्शनमुच्यते। अनेन तु विधानेन आचान्तः शुचितामियात् ॥ १३ ॥ प्रक्षाल्य पादौ हस्तौ च त्रिःपिबेदम्बुवीक्षितम्। द्विरात्र्यैरभिराचमनं तथा ॥ १४ ॥ सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः ॥ सन्ध्यामुपासीत यो न ब्राह्मणस्तु विशेषतः ॥ १५ ॥ सजीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते। सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ १६ ॥ यदन्यत् कुरुते कर्म न तस्य फलमश्नुते। सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ॥ १७ ॥ स्वयं होमे फलं यत्तु तदन्येन न जायते। ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ॥ १८ ॥ एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि। देवकार्यं ततः कृत्वा गुरुमङ्गलवीक्षणम् ॥ १९ ॥ देवकार्याणि पूर्वाह्णे मनुष्याणाञ्च मध्यमे। पितॄणामपराह्णे च कार्याण्येतानि यत्नतः ॥ २० ॥ पौर्वाह्णिकन्तु यत् कर्म यदि तत् सायमाचरेत्। न तस्य फलमाप्नोति वन्ध्यास्त्रीमैथुनं यथा ॥ २१ ॥ एतेन तद्दर्शितं *यत् पौर्वाह्णिकं कर्म तत्* खलु मध्याह्नात् कर्त्तुमर्हतीति ॥ २२ ॥ दिवसस्याद्यभागे तु सर्वमेतद्विधीयते। द्वितीये च तथा भागे वेदाभ्यासो विधीयते ॥ २३ ॥ वेदाभ्यासो हि विप्राणां परमं तप उच्यते। ब्रह्मयज्ञः स विज्ञेयः षडङ्गसहितस्तु सः ॥ २४ ॥ वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। ततो दानञ्च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा। २५ । तत्पूर्वं प्रथमाश्रमे *वेदस्वीकरणादिविद्या* गृहाश्रमे तु जपो वेदस्य* शिष्येभ्यश्च प्रदानञ्चेति द्विधा ॥ २६ ॥ समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥ तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम् ॥ २७ ॥ पितामाता गुरुर्भार्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥ २८ ॥ ज्ञातिर्बन्धुजनः क्षीणस्तथानाथः समाश्रितः। अन्योऽप्यधनयुक्तश्च पोष्यवर्ग उदाहृतः २९ ॥ भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्। नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत् । ३० । सार्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः। ज्ञानवद्भिः प्रदातव्यमन्यथा नरकं व्रजेत् ॥ ३१ ॥ सजीवति य एवैको बहुभिश्चोपजीव्यते। जीवन्तो मृतकाश्चान्ये य आत्मम्भरयो नराः ॥ ३२ ॥ बहर्थे जीव्यते कश्चित् कुटुम्बार्थे तथापरैः। आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः ॥ ३३ दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता। अदत्तदाना जायन्ते परभाग्योपजीविनः ॥ ३४ ॥ यद्ददाति विशिष्टेभ्यो यच्चजुहोति दिने दिने। तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥ ३५ ॥ चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्। तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥ ३६ ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते तेषां मध्ये तु यन्नित्यं तत् पुनर्भिद्यते त्रिधा ॥ ३७ ॥ मलापहरणं पश्चान्मन्त्रवत्तु जले स्मृतम्। सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्त्तिताः ॥ ३८ ॥ मार्ज्जनं जलमध्ये तु प्राणायामो यतस्ततः। उपस्थानं ततः पश्चात् सावित्र्या जप उच्यते ॥ ३९ ॥ सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः ॥ विश्वामित्रऋषिश्छन्दो गायत्री सा विशिष्यते ॥४०॥ पञ्चमे च तथा भागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते ॥ ४१ ॥ देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते। गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही ॥ ४२ ॥ त्रयाणामाश्रमाणान्तु गृहस्थो

योनिरुच्यते । तेन वसीदमानेन सीदन्तीह तरे त्रयः ॥ ४३ ॥ मूलं प्राणो भवेत् स्कन्दः स्कन्धाच्छाखाः सपल्लवाः । मूलेन वै विनष्टेन सर्व्वमेतद्विनश्यति ॥ ४४ ॥ तस्मात् सर्व्वप्रयत्नेन रक्षितव्यो गृहाश्रमी । राज्ञा चान्यैस्त्रिभिः पूज्यो मान्यो यशस्वी च सर्व्वदा ॥४५॥ गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी। न चैव पुत्रदारेण स्वकर्म्मपरिवर्जितः ॥४६॥ अस्नात्वा चाप्यहुत्वा चाजप्त्वाऽदत्त्वा च मानवः । देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ॥ ४७ ॥ एक एव हि भुङ्क्तेऽन्नमपरान्नैव भोजयेत् । न भुज्यते स एवैको यो भुङ्क्तेऽन्नं स साक्षिकः ॥४८॥ विभागशीलो यो नित्यं क्षमायुक्तो दयापरः । देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः ॥ ४९ ॥ दयालज्जाक्षमाश्रद्धाप्रज्ञायोगः कृतज्ञता । एते यस्य गुणाः सन्ति स गृही मुख्य उच्यते ॥ ५० ॥ संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥ भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ॥ ५१ ॥ इतिहासपुराणाद्यैः षष्ठं च सप्तमं नयेत् ॥ अष्टमे लोकयात्रा तु बहिःसन्ध्या ततः पुनः ॥ ५२ ॥ होमो भोजनकं चैव यच्चान्यद्गृहकृत्यकम् । कृत्वा चैव ततः पश्चात् स्वाध्यायं किञ्चिदाचरेत् ॥ ५३ ॥ प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥ ५४ ॥ सर्व्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् । भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥५५॥ इति विप्राणां प्रातःकालमारभ्य*सार्द्धप्रहरद्वयाभ्यन्तरेऽहनि*प्रथमभोजनं सर्व्वैरभिहितम् ॥ ५६ ॥ पुनस्तदवधि सार्द्धप्रहरद्वयाभ्यन्तरे रात्रौ प्रथमप्रहराभ्यन्तरे वा द्वितीयभोजनम् । इति ॥ ५७ ॥ एतदुक्तं कात्यायनेनापि यथा*मुनिभिर्द्विरशनं प्रोक्तं*विप्राणां मर्त्यवासिनां नित्यम् । अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः ॥ इति ॥ ५८ ॥ अत्र भ्रान्ता व्याचक्षते *सार्द्धप्रहरयामान्त*रिति सार्द्धप्रहरश्च यामश्चेति*तयोरन्तरिति सार्द्धयाम*द्वयाभ्यन्तरेऽहनि कम् ॥५९॥ तमस्विन्यां पुनः सार्द्ध*प्रहरयामान्तरिति*अर्द्धप्रहरेण सह याम इति ॥ ६० ॥ सार्द्धप्रहरयामस्तस्यान्तरिति*सार्द्धप्रहररात्र्यभ्यन्तरे च*द्वितीयमशनमित्यसद्व्याख्यानं ॥ ६१ ॥ प्रहररात्रेरूर्द्ध्वं महानिशायां* द्वितीयाशनं विधाय*नरान् पापे योजयन्ति ॥ ६२ ॥ तदसाधु दक्षवचन*विरुद्धत्वान्महानिशात्वा* च्चेत्यवमन्तव्यम् ॥ ६३ ॥ प्रयोगासाधुत्वापत्तेश्च* रात्रिभोजनपक्षे पक्ष*द्वयेऽपि तुल्यार्थवारणा*प्रकाशत्वाच्च तदसदेव ॥ ६४ ॥ तथा चैवं रात्रौ यामा*भ्यन्तरे पुनर्भुक्त्वाधीत्य*मध्यमप्रहरद्वयं*सुप्त्वा पश्चिमे यामे तूत्तिष्ठे*दित्युवाच व्यासो यथा ॥ ६५ ॥ नित्यं नैमित्तिकं काम्यमिति कर्म्म त्रिधा मतम् । त्रिविधं तच्च वक्ष्यामि गृहस्थस्यावधार्य्यताम् ॥ ६६ ॥ यामिन्याः पश्चिमे यामे त्यक्त्वा निद्रां हरिं स्मरेत् । आलोक्य मङ्गलद्रव्यं कर्म्मावश्यकमाचरेत् ॥६७॥ कृतशौचो निषेव्याग्निं दन्तान् प्रक्षाल्य वारिणा । स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत् ॥ ६८॥ वेदवेदाङ्गशास्त्राणि*सेतिहासानि चाभ्यसेत् । अध्यापयेच्च सच्छिष्यान् सद्विप्रांश्च द्विजोत्तमः ॥ ६९ ॥ अलब्धं प्रापयेल्लब्धं क्षणमात्रं समापयेत् । समर्थो हि समर्थेन नाविज्ञातः क्वचिद्वसेत् ॥ ७० ॥ सरित्सरःसु वापीषु गर्त्तप्रस्रवणादिषु । स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा ॥ ७१ ॥ तीर्थाभावे त्वशक्त्या वा स्नायात्तोयैः समाहृतैः । गृहाङ्गनगतस्तत्र यावदम्बरपीडनम् ॥७२ ॥ स्नानमब्दैवतैः कुर्य्यात् पावनैश्चापि मार्जनम् । मन्त्रैः प्राणांस्त्रिरायम्य सौरैश्चार्कं विलोकयेत् ॥ ७३ ॥ तिष्ठन् स्मृत्वा च गायत्रीं ततः स्वाध्यायमारभेत् । ऋचाश्च यजुषां साम्नामथर्व्वाङ्गिरसामपि ॥ ७४ ॥ इतिहासपुराणानां वेदोपनिषदां द्विजः । शक्त्या सम्यक् पठेन्नित्यमल्पमप्यासमापनात् ॥ ७५ ॥ स यज्ञदानतपसामखिलं फलमाप्नुयात् । तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः ॥ ७६ ॥ धर्म्मशास्त्रेतिहासादि सर्व्वेषां शक्तितः

पठेत्। कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः ॥ ७७ ॥ जान्वा न्यस्य दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः। एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतिकः ॥ ७८ ॥ समजानुद्वयो ब्रह्मसूत्रहारवदुदङ्मुखः। तिर्यग्दर्भं च वामाग्रैर्यवैस्तिलविमिश्रितैः ॥ ७९ ॥ अद्भिरभिरुत्तरमुखः कनिष्ठामूलनिर्गतैः। द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तर्पयेत्ततः ॥ ८० ॥ दक्षिणाभिमुखः सव्यं जान्वाच्य द्विगुणैः कुशैः। तिलैर्जलैश्च सद्भिन्नाग्रमूलदर्भाद्भिनिःसृतैः ॥ ८१ ॥ दक्षिणांसोपवीतः स्यात्क्रमेणाञ्जलिभिस्त्रिभिः। सन्तर्पयेद्दिव्यपितॄन् तत्परांश्च पितॄन् स्वकान् ॥ ८२ ॥ पिता पितामहाद्यांश्च मौनेनैव हि त्रिभिस्त्रिभिः। मातामहादीन्ये चान्ये गोत्रिणो दाहवर्जिताः ॥ ८३ ॥ तानेकाञ्जलिदानेन तर्पयेच्च पृथक् पृथक्। असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः ॥ ८४ ॥ वस्त्रनिष्पीडनाम्भोभिस्तेषामाप्यायनं भवेत्। अतर्पितेषु पितृषु वस्त्रं निष्पीडयेन्न यः ॥ ८५ ॥ निराशाः पितरस्तस्य भवन्ति सुरमानुषैः। पयो दर्भस्वधाकारगोत्रनामतिलैर्भवेत् ॥ ८६ ॥ सुदत्तं तत्पुनस्तेषां मेकेनापि वृथा विना ॥ अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम्। अनासनस्थितेनापि तज्जलं रुधिरायते ॥ ८७ ॥ एवं सन्तर्पिताः कामैस्तर्पकांस्तर्पयन्ति ते ॥ ८८ ॥ ब्रह्मविष्णुशिवादित्यमित्रावरुणनामभिः। पूजयेल्लक्षितैर्मन्त्रैर्जलमन्त्रोक्तदेवताः ॥ ८९ ॥ उपस्थायरवेः कुर्यात् पूजयित्वा च देवताः। ब्रह्माग्नीन्द्रौषधीजीवविष्णुनामरुद्रान् ॥ ९० ॥ अपां पत्ये तिसत्कारं नमस्कारैः स्वनामभिः। कृत्वा मुखं समालभ्य स्नानमेवं समाचरेत् इति ॥ ९१ ॥ इति मध्याह्नस्नानविधिमुक्त्वोवाच* ततः प्रविश्य भवनमावसथ्ये हुताशने। पाकयज्ञांश्च चतुरो विदध्याद्विधिवद्द्विजः ॥ ९२ ॥ अनाहिताग्निरावसथ्यं गृह्य दायान्नं घृतप्लुतम्। शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ॥ ९३ ॥ व्यस्ताभिर्व्याहृतिभिश्च समस्ताभिस्ततः परम्। षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम् ॥ ९४ ॥ प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः। ओङ्कारपूर्वैः स्वाहान्तैस्त्यागः स्विष्टविधानतः ॥ ९५ ॥ भूविदर्भान् समास्तीर्य बलिकर्म समाचरेत्। विश्वेभ्यो देवेभ्य इति सर्वेभ्यो भूतेभ्य एव च ॥ ९६ ॥ भूतानां पतये चेति नमस्कारेण शास्त्रवित्। दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः ॥ ९७ ॥ पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ॥ उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम् ॥ ९८ ॥ इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत्। गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ॥ ९९ ॥ षड्भ्योऽन्नमन्वहं दद्यात्पितृयज्ञविधानतः। वेदादीनां पठेत्किञ्चिदल्पं ब्रह्ममखान्तरे ॥ १०० ॥ ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः। काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च ॥ १०१ ॥ उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्त्तकम्। अप्रमत्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः ॥ १०२ ॥ आगतं दूरतः श्रान्तं भोक्तुकाममकिञ्चनम्। दृष्ट्वा सम्मुखमभ्येत्य सत्कृत्य प्रश्रयार्चनैः ॥ १०३ ॥ पादधावनसम्मानाभ्यञ्जनादिभिरर्चितः। त्रिदिवं प्रापयेत् सद्यो यज्ञसम्भाराधिकोऽतिथिः ॥ १०४ ॥ कालागतोऽतिथिर्दृष्टवेदपारो गृहागतः। द्वावेतौ पूजितौ स्वर्गं नयतोऽधस्त्वपूजितौ ॥ १०५ ॥ गृहागताय सत्कृत्य श्रोत्रियाय यथाविधि। भक्त्योपकल्पयेदेकं महाभागं विसर्जयेत् ॥ १०६ ॥ विसर्जयेदनुव्रज्य सत्यमपि विप्रातिथीन्। मित्रमातुलसम्बन्धिबान्धवान् समुपागतान् ॥ १०७ ॥ भोजयेद्गृहिणी भिक्षां सत्कृत्य भिक्षुकोऽर्हति। स्वादन्नमप्यन्नस्वादु ददद्गच्छत्यधोगतिम् ॥ १०८ ॥ गर्भिण्यातुरभृत्येषु बालवृद्धातुरादिषु। बुभुक्षितेषु भुञ्जानो गृहस्थोऽश्नाति किल्बिषम् ॥ १०९ ॥ इति ॥ एवं हारीतेनापि*गृहस्थधर्मा उक्ताः*स्तद्यथा तद्दर्शिते ॥ ११० ॥ अप्र

कालेसन्ध्यायकृतशौचोयथाविधि । खदेपश्चाद्धिते नित्यं भवत्यप्रयतोनरः ।१११। तस्मात्कुर्य्यात्समथार्द्रं वाभक्ष्यं द
न्तकाष्ठकम् । कारञ्जं खदिरं वापिकादम्बं कौटजं तथा ॥११२॥ सप्तपर्णं पृश्निपर्णीं जम्बूं निम्बं तथैव च । अपामार्ग
ञ्चबिल्वञ्चापार्कौडुम्बरमेव च ॥ ११३ ॥ एते प्रशस्ताःकथितादन्तधावनकर्म्मणि । सर्व्वे कण्टकिनःपुण्याःक्षीरिणश्च
यशस्विनः॥११४॥ दन्तकाष्ठस्यभक्षश्च समासेनप्रकीर्त्तितः । अष्टाङ्गुलेनमानेनदन्तकाष्ठमिहोच्यते ॥११५॥ प्रादे
शमात्रमथवातेनदन्तान् विशोधयेत् । प्रतिपत्पर्व्वषष्ठीषुनवम्याञ्चैवसत्तमाः॥ ११६ । दन्तानांकाष्ठसंयोगोदहत्या
सप्तमंकुलं । अभावेदन्तकाष्ठानांप्रतिषिद्धदिनेषुच॥११७॥ अपांद्वादशगण्डूषैर्मुखशुद्धिंसमाचरेत्। स्नात्वामन्त्रवदाच
म्यपुनराचमनंचरेत् ॥ ११८ ॥ मन्त्रवत्प्रोक्ष्यचात्मानं प्रक्षिपेदुदकाञ्जलिं । आदित्येन सहप्रातर्मन्देहानाम
राक्षसाः॥११९॥ युध्यन्तिवरदानेनब्रह्मणोऽव्यक्तजन्मनः । उदकाञ्जलिनिक्षेपाद्गायत्र्याचाभिमन्त्रिताः । १२०।
निघ्नन्तिराक्षसान् सर्व्वान्मन्देहाख्यान्द्विजेरिताः ॥ ततःप्रयातिसविता ब्राह्मणैरभिरक्षितः ॥ १२१ ॥
मरीच्याद्यैर्महाभागैःसनकाद्यैश्चयोगिभिः । तस्मान्नलङ्घयेत्सन्ध्यांसायंप्रातःसमाहितः । १२२ ॥ उल्लङ्घयति
योमोहात्सयातिनरकंध्रुवम् । सायंमन्त्रवदाचम्यप्रोक्ष्यसूर्य्यस्यचाञ्जलिं ।१२३॥ दत्वाप्रदक्षिणंकुर्य्याज्जलं
स्पृष्ट्वाविशुध्यति । पूर्व्वांसन्ध्यांसनक्षत्रां उपासीतयथाविधि । १२४ ॥ गायत्रीमभ्यसेत्तावद्यावदादित्यद
र्शनात् । उपास्यपश्चिमां सन्ध्यामादित्यञ्चयथा विधि । १२५ । गायत्रीमभ्यसेत्तावद्यावत्ताराणिपश्यति ।
ततश्चावसथंप्राप्यकृत्वाहोमंस्वयंबुधः । १२६ । सञ्चिन्त्यपोष्यवर्गस्यभरणार्थंविचक्षणः । ततःशिष्यहितार्थाय
स्वाध्यायंकिञ्चिदाचरेत् । १२७ । ईश्वरञ्चैवकार्य्यार्थमभिगच्छेद्द्विजोत्तमः । कुशपुष्पाद्यतादीनिगत्वादूरंसमा
हरेत् ।१२८। ततोमाध्याह्निकंकुर्य्याच्छुचौदेशेमनोरमे । विधिंतस्यप्रवक्ष्यामिसमासात्पापनाशनम् । १२९ ।
स्नात्वानेनविधानेनमुच्यतेसर्व्वकिल्बिषात् । स्नानार्थंमृदमानीयशुद्धाक्षततिलैःसह ॥ १३० । सुमनाश्चततोगच्छेन्न
दींशुद्धजलाधिकाम् । नद्यान्तुविद्यमानायां नस्नायादन्यवारिणि । १३१। नस्नायादल्पतोयेषुविद्यमानेबहूदके
सरिद्वरंनदीस्नानंप्रतिस्रोतःस्थितश्चरेत् । १३२ । तडागादिषु तोयेषुस्नायाच्चतदभावतः । शुचिदेशंसमभ्युक्ष्य
स्थापयेत्सकलाम्बरम् । १३३ । मृत्तोयेनस्वकंदेहंलिम्पेत्प्रक्षाल्ययत्नतः । स्नानादिकञ्चारम्भ्यकुर्य्यादाचमनं
बुधः । १३४ । सोऽन्तर्जलं प्रविश्याथवाग्यतोनियमेनहि । हरिंसंस्मृत्यमनसामज्जयेच्चाघमर्षणे । १३५ ।
ततस्तीरंसमासाद्य आचम्यापःसमन्ततः । प्रोक्षयेद्वारुणैर्मन्त्रैःपावमानीभिरेवच । १३६ । कुशाग्रकृततोयेन
प्रोक्ष्यात्मानंप्रयत्नतः । स्योनापृथिवीतिमृद्गात्रेइदंविष्णुरितिद्विजाः । १३७ । ततोनारायणंदेवंसंस्मरेत्प्रति
मज्जने । निमज्ज्यान्तर्जलेसम्यक्क्रियतेचाघमर्षणम् ।१३८ । स्नात्वाक्षततिलैस्तद्वद्देवर्षिपितृभिःसह । तर्प
यित्वाजलंतस्मान्निष्पीड्यचसमाहितः। १३९। जलात्तटंसमासाद्यतत्रशुक्ले चवाससी । परिधायोत्तरीयञ्चकुर्य्यात्
केशान्नधूनयेत् । १४० । नरक्तमुल्बणंवासोननीलञ्चप्रशस्यते । मलाक्तं गन्धहीनञ्चवर्ज्जयेदम्बरंबुधः ॥ १४१
ततःप्रक्षालयेत्पादौमृत्तोयेनविचक्षणः । दक्षिणन्तुकरंकृत्वागोकर्णाकृतिवत्पुनः ॥ १४२ ॥ इत्यादिभिराचमन
क्रमःपूर्व्वं *हारीतोक्तःप्रदर्शित *स्त्रिविधश्चजपविधिः ॥ १४३ ॥ छन्दऋष्यादिविज्ञायजपेन्मन्त्रमतन्द्रितः । जपे
दहरहर्ज्ञात्वागायत्रीं मनसाद्विजः ॥ १४४ ॥ सहस्रपरमां देवीं शतमध्यां दशावराम् । गायत्रीं योजपेन्नित्यं
नसपापेनलिप्यते । १४५ । अथपुष्पाञ्जलिंकृत्वाभानवेचोर्द्ध्ववाहुकः । उदुत्यंचजपेत्सूक्तं तच्चक्षुरितिचापरम् ।

प्रदक्षिणमुपावृत्य नमस्कुर्याद्दिवाकरम् ॥ ततस्तीर्थेन देवादीनद्भिः सन्तर्पयेद्द्विजः ॥ १४५ ॥ स्नानवस्त्रन्तु निष्पीड्य पुनराचमनं चरेत् । तद्रक्तजनसंस्नान दानं प्रकीर्त्तितम् ॥ १४६॥ दर्भासीनो दर्भपाणिर्ब्रह्मयज्ञविधानतः । प्राङ्मुखो ब्रह्मयज्ञन्तु कुर्याच्छ्रद्धासमन्वितः ॥ १४७ ॥ ततोऽर्घ्यं भानवे दद्यात् तिलपुष्पाक्षतान्वितम् । उत्थाय मूर्द्धपर्यन्तं हंस शुचिषदित्यृचा ॥ १४८ ॥ ततो देवं नमस्कृत्य गृहं गच्छेत्ततः पुनः । विधिना पुरुषसूक्तस्य गत्वा विष्णुं समर्चयेत् ॥ १४९ ॥ वैश्वदेवं ततः कुर्याद्बलिकर्मविधानतः । गोदोहमात्रमाकाङ्क्षेदतिथिं प्रतिवै स्वयी ॥ १५० ॥ अदृष्टपूर्व्वमज्ञातमतिथिं प्राप्तमर्च्चयेत् । स्वागतासनदानेन प्रत्युत्थानेन चाम्बुना ॥ १५१ ॥ स्वागतेनाग्नयस्तुष्टा भवन्ति गृहमेधिनः । आसनेन तु दत्तेन प्रीतो भवति देवराट् ॥ १५२ ॥ पादशौचेन पितरः प्रीतिमायान्ति दुर्लभाम् ॥ अन्नदानेन युक्तेन तृप्यते हि प्रजापतिः ॥ १५३ ॥ तस्मादतिथये कार्य्यं पूजनं गृहमेधिना । भक्त्या च शक्तितो नित्यं विष्णोरर्च्चानन्तरम् ॥ १५४ ॥ भिक्षाञ्च भिक्षवे दद्यात् परिव्राड्ब्रह्मचारिणे ॥ अकल्पितान्नादुद्धृत्य सव्यञ्जनसमन्विताम् ॥ १५५ ॥ अकृते वैश्वदेवेऽपि भिक्षौ च गृहमागते । उद्धृत्य वैश्वदेवार्थं भिक्षां दत्वा विसर्जयेत् ॥ १५६ ॥ वैश्वदेवाकृतान् दोषान् शक्तो भिक्षुर्व्यपोहितुम् ॥ न हि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥ १५७ ॥ तस्मात्प्राप्ताय यतये भिक्षां दद्यात् समाहितः । विष्णुरेव यतिश्छायमिति निश्चित्य भावयेत् ॥ १५८॥ सुवासिनीः कुमारांश्च भोजयित्वा नरानपि । बालवृद्धांस्ततः शेषं स्वयं भुञ्जीत वा गृही ॥ १५९ ॥ प्राङ्मुखो वोदङ्मुखो वा मौनी च मितभाषकः । अन्नमादौ नमस्कृत्य प्रहृष्टेनान्तरात्मना ॥ १६० ॥ एवं प्राणाहुतिं कुर्य्यान्मन्त्रेण च पृथक् पृथक् ॥ ततः स्वादुकरान्नञ्च भुञ्जीत सुसमाहितः ॥ १६१ ॥ आचम्य देवतामिष्टां संस्मरन्नुदरं स्पृशेत् । इतिहासपुराणाभ्यां कञ्चित्कालं नयेद्बुधः ॥ १६२ ॥ ततः सन्ध्यामुपासीत बहिर्गत्वा विधानतः । कृतहोमस्तु भुञ्जीत रात्रौ चातिथिपूजनम् ॥ १६३ ॥ सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥ १६४ ॥ इति कात्यायनेनाप्युक्तं *पञ्चानामथ सत्राणां महतामुच्यते विधिः । यैरिष्ट्वा सततं विप्रः प्राप्नुयात् सद्म शाश्वतम् ॥ १६५ ॥ देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् । महासत्राणि जानीयात् तएवेह महामखाः ॥ १६६ ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ १६७ ॥ श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो बलिरथापि वा । यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स वोच्यते ॥ १६८ ॥ अवश्रुतिजयो जनो वेदानां *स चार्व्वाक्तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः । वैश्वदेवावसाने वा नान्यत्रतो निमित्तकात् ॥ १६९ ॥ अप्येकमाशयेद्विप्रं पित्रर्थं यज्ञार्थसिद्धये । अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा १७० ॥ अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि । पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः ॥ १७१ ॥ पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत् । हन्तकारं मनुष्येभ्यस्तदर्द्धं निनयेदपः ॥ १७२ ॥ सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिरेव च । अनश्नताऽपि सततमन्यथा किल्विषी भवेत् ॥ १७३ ॥ अमुष्मै नम इत्येवं बलिदानं विधीयते । बलिदानप्रदानार्थं नमस्कारः कृतो यतः ॥ १७४ ॥ स्वाहाकारवषट्कारनमस्कारा दिवौकसाम् ॥ स्वधाकारः पितॄणाञ्च हन्तकारो नृणां कृतः ॥ १७५ ॥ स्वधाकारेण निनयेत् पित्र्यं बलिमतः सदा । तदर्धं केन मस्कारं कुर्व्वते मे ति गौतमः ॥ १७६ ॥ अथ तद्विनाशोऽद्भि*पिण्डानिर्वान्तरा स्वतुरोदलीन *निदध्यात् पृथिव्यै वायवे ॥ १७७ ॥ विश्वेभ्यो देवेभ्यः प्रजापतय* इति स्वयतएतेषा*मेकैकम् मद्भ्य ओषधि*वनस्पतिभ्य आकाश ॥ १७८ ॥ कामाय तातेषा

मपि*मनाञ्ज्ञइन्द्राग्रवाँश्चाग्रन्नम्*प्राइ्गतं षामपि ॥ १७८ ॥ रन्नोजनं भाइतिमर्व्वेषां*दक्षिणतःपितृभा इति*यतद्दद्ध्यनितात्राग्रगम्प्रभृतयःकामाः ॥ १८० ॥ सर्व्वेषामभयतः*परिषेकःपिण्डः*च*पश्चिमाप्रतिपत्तिः ॥ १८१ ॥ नयाताकामासमाराजुहोतिबलिकर्म्मणो। पूर्व्वंनिताविप्रप्रोक्तं जुहोतिबलिकर्म्मन्‌ः ॥१८२॥ अथकातायनेनोक्तं*प्रातःसन्ध्योपासनायां*गायत्रीजपानन्तरं ॥ १८३ ॥ वेदमादितआरभ्यशक्तितोऽह रहर्जपेत्। उपतिष्ठेत्तनोऽक्रमर्म्मागतं दिकाजपात्॥ १८४ ॥ अथाद्भिस्तर्पयेद्देवान्‌सतिलाभिःपितृनपि। नमोऽन्ते तर्पयामीतिआद्यावोमितिचब्रुवन्‌ ॥ १८५ ॥ ब्रह्माणं विष्णुं रुद्रं प्रजापतिं*वेदान्‌देवां छन्दांसृषीन्‌ पुराण*नाचार्याण्गन्धर्व्वानितरान्‌मासं ॥ १८६ ॥ संवत्सरं सावयवं*देवीरप्सरसोदेवानुगान्नागान्‌*सागरान्पर्व्वतान्सरितोदिव्यान्‌मनुष्यानितरान्मनुष्यान्‌ ॥ १८७ ॥ यक्षान्‌रक्षांसि पिशाचान्‌*पिशाचानुपर्यथौमो ष*धीःपशून्‌वनस्पतीन्‌*भूतग्रामं चतुर्विधं*मितापवीतायप्राचीनावीती ॥ १८८ ॥ यमं यमपुरुषान्‌*कव्य वाह*नलं सोमं यममर्य्यमाणमग्नि*ष्वात्तान्‌सोमपीथान्‌वर्हिषदोऽथ ॥ १८९ ॥ स्वान्पितृन्सक्रतुसक*मातामहां यो निरतिपुरुमप्रयात्‌ ॥ १९० ॥ जोऽस्माकंकुलेजाता*पितृवामातुलायं*पितरं ममाक्वयौ*येचान्ये मत्त उदकं*मइन्तितांस्तर्पयामी * तायमवशानाञ्जलिः ॥ १९१ ॥ अथश्लोकाः ॥ छायायथेच्छं च्छरदातपात्तःपयःपिपासुःक्षुधितोऽन्नमन्नम्‌। बालोजनित्रीं जननीचवाञ्छेद्योषित्पुमांसं पुरुषस्रयोषाम्‌ ॥ १९२ ॥ तथासर्व्वाणिभूतानिस्थावराणिचराणि च। विप्रादुदकमिच्छन्ति सर्व्वाभ्युदयकाङ्क्षिणः ॥ १९३ ॥ तस्मात्सदैव कर्त्तव्यमकुर्व्वन्महतैनसा। युज्यते ब्राह्मणःकुर्व्वन्विश्वमेतद्विभर्त्तिहि ॥ १९४ । अल्पत्वाद्धोमकालस्यबहुत्वात्स्नान कर्मणः। प्रातर्नतनुयात्स्नानं होमलोपोहिगर्हितः ॥ १९५ ॥ इति ॥ अथविष्णुनावैश्वदेवविधानं*यदुक्तं तत्प्रद र्श्यते ॥१९६॥अथाग्निं परिसमुह्य*पर्युक्ष्यपरिस्तीर्य्य*रिषिच्य सर्व्वतःपाका*दग्रमुद्धृत्यजुहुयात्‌ ॥१९७ ॥ वासुदेवायसङ्कर्षणायप्रद्युम्ना*यानिरुद्धायपुरु*षायसत्यायाच्युताय ॥१९८॥अथाग्नये सोमायमित्राय*वरुणायेन्द्राये न्द्राग्निभ्यां*विश्वेभ्योदेवेभ्यः ॥१९९॥प्रजापतयेऽनुमत्यै* धन्वन्तरये वास्तोष्पत*ये ऽग्नये स्विष्टिकृतेच ॥२००॥ ततोऽन्नशेषेणचबलिमुपहरेत्*इत्याभव्याभ्यामभितःपूर्व्वेणाग्नेः ॥ अरानामासीतिललानामासीति ॥ २०१ ॥ नितन्नी नामासीति दक्षिणका*नांसासीतिसर्व्वासाम्‌ ॥२०२॥ नन्दिनिसुभगेसुमङ्गलिभद्र*कालीतिस्वस्थि*पुभिप्रदक्षिणाम्‌ ॥ २०३ ॥ स्थूणायां ध्रुवायां श्रियै*हिरण्यकेश्यै वनस्पतिभ्योधर्म्मा*धर्म्मयोर्द्वारे ध्रुवायै च ॥ २०४॥ उदपानेवरुणा य*विष्णवइत्युलूखले*मरुद्भ्यइतिदृषदि ॥ २०५ ॥ उपरिशरणेवैश्र*वणायराज्ञेभूतेभ्यः*स्येन्द्रायेन्द्रपुरुषेभ्यः ॥ २०६ ॥इतिपूर्व्वाङ्गे। यमाययमपुरुषेभ्यइतिदक्षिणाङ्गे।वरुणायवरुणपुरुषेभ्यइतिपश्चाङ्गे सोमायसोमपुरुषेभ्यइ त्युत्तराङ्गे ॥ ब्रह्मणेब्रह्मपुरुषेभ्यइतिमध्ये। ऊर्द्ध्वमाकाशायदिवाचरेभ्योभूतेभ्यइतिस्थण्डिले। नक्तञ्चरेभ्यइति नक्तं ॥ २०८ ॥ ततोदक्षिणाग्रेषुदर्भेषु*पित्रे पितामहायप्रपितामहाय*मात्रे पितामह्यै प्रपितामह्यै । २०९ ॥ स्वनामगोत्राभ्याञ्च*पिण्डनिर्व्वपणं कुर्य्यात्‌*पिण्डानाञ्चानुलेपन*पुष्पधूप नैवेद्यादिदद्यादिति ॥२१०॥उदककलसमुपनिधाय*स्वस्तिवचनं वाचयेत्‌ ॥ श्वकाकश्वपचानां बलिं भुविनिर्व्वपेत्‌ ॥ २११ ॥ भिक्षाञ्चभिक्षवेदद्यात्‌ * दतिथिपूजनेच*परं कालमधितिष्ठेत्‌ ॥ २१२ ॥ सायमतिथिं प्राप्तं*प्रयत्नेनैवार्चयेत्‌ *दनधिनमतिथिं *गृहेनैवा सयेत्‌ ॥ २१३ ॥ यथावर्णानां ब्राह्मणः*प्रभुर्यथास्त्रीणां भर्त्ता*तथागृहस्थस्यातिथि*स्तत्पूजाया स्वर्गमाप्नोति

॥ २१४ ॥ अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते । तस्मात्सुकृतमादाय दुष्कृतन्तु प्रयच्छति ॥ २१५ ॥ एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः ॥ अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥ २१६ ॥ नैकग्रामीणमतिथि* मित्यादिकानि मनूक्तवचनानि* सर्व्वाणि विष्णुनाप्युक्तानि ॥ २१७ ॥ ॥ * ॥ इत्येवं तपसा युक्त* देवाद्विष्णुर्यावान्प्रकारविशेष * ऋषिभिर्वक्तव्यावानेव *धर्म्मस्य प्रकारविशेषो ज्ञातव्यः ॥ २१८ ॥ श्रुतिद्वैधं हि यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ । यथा सन्ध्योपासनाया विशेषो विदभेदतः ॥ २१९ ॥ कात्यायनेन चोक्तं *विरोधो यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् । तुल्यप्रमाणकत्वे तु न्याय एष प्रकीर्त्तितः । इति ॥ २२० ॥ ० ॥ २२१ ॥ अथ यत्पूर्व्वमुद्दिष्टं * महायज्ञविधानञ्च *श्राद्धकल्पञ्च शाश्वत* मिति तन्महायज्ञविधानोत्तरम् । शाश्वतं नित्यं श्राद्धकल्पमाह*पितृयज्ञन्त्वित्यादि ॥ १ ॥ १२२ ॥

**पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् । पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ १२२ ॥**

अग्निमानित्यधिकारो* यानत्पञ्चमाध्यायसमाप्तिं स्यात्* पितुः सपिण्डीकरणा*दह्वं गृहीतवैवाहिकाग्निरं ही ॥ १ ॥ विप्रादिश्चन्द्रक्षयेऽमावास्यानाम* यातिथिर्भवति तस्यां * पितृयज्ञं पञ्चमहा*यज्ञेषु मध्ये यन्नितं *श्राद्धं तत्पिण्डदानान्तं ॥ २ ॥ निर्व्वर्त्त्य निष्पाद्य प्रागुक्तदेवा*न्मासानुमासिकं मासा* इनुमासं भवं प्रतिमासं पिण्डान्वाहार्यकं श्राद्धं कुर्यात् ॥ ३ ॥ उक्तञ्च कात्यायनेन * पितुःसपिण्डनं कृत्वा* कुर्यान्मासानुमासिकमितितेन * पितुःसपिण्डीकरणश्राद्धादूर्द्ध्वं ॥ ४ ॥ वैवाहिकाग्निं गृहीत्वा मासानु*मासिकं कुर्यादत्र एतच्छ्राद्ध* मग्निमतैव कर्त्तव्यमुक्तं ॥ ५ ॥ ० ॥ १२२ ॥ ननु कथमिदं श्राद्ध * पिण्डान्वाहार्यकमित्याचाते इति* तत्राह पितॄणामित्यादि ॥ १ ॥ ० ॥ १२३ ॥ ० ॥

**पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः । तच्चामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः । १२३ ॥**

पूतस्यामनुष्यास्यामासस्थितिस्य * तिथ्यात्मकस्तत्र भवं मासिकं *पितॄणामह्निकृष्णपक्षे स्वतिथौ ॥ १ ॥ नित्यश्राद्धपिण्डादेव*पितृभिराहार्यं भोज्यं * यत्तत्पिण्डादन्वाहार्यं श्राद्धं विदुः ॥ २ ॥ तच्च मासिमासामिषामावास्यायां तिथौ* प्रशस्तेनामिषेण प्रयत्नेन* हरिणादिमांसेन निवाहाग्नौ * पक्वेनाग्निमता प्रयत्नात्कर्त्तव्यं ॥ ३ ॥ ननु बृहन्नारदीये *मांसदानं तथा श्राद्धे *इत्यादिना कलियुगे* मांसश्राद्धं वर्ज्यमुक्तं *कथमिदं श्राद्धं कलौ कर्त्तव्यं स्यात् ॥ ४ ॥ तत्राह प्रमादी नेदं *कलौ कर्त्तव्यानयामनुनोक्तं *कृते तु मानवो धर्म्म* इति पराशरवचनात् ॥ ५ ॥ तत्र प्रायेणाग्निकलौ निरग्नयो* द्विजास्तन्निरग्निकर्त्तव्यतया* वर्जनमुक्तं नाग्निमत इति ॥ ६ ॥ ० ॥ १२३ ॥ ० ॥ तत्रविधि*माह तत्र*ये भोजनी*या इत्यादि ॥ १ ॥ ० ॥ १२४ ॥

**तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः । यावन्तश्चैव यैश्चान्नैस्तान्प्रवक्ष्याम्यशेषतः । १२४ ।**

तत्र श्राद्धे ये द्विजोत्तमा ब्राह्मणाः* पात्रान्नं भोजनीयाः स्युः* ये च वर्ज्जनीयास्तथा * ॥ १ ॥ यावन्तो ब्राह्मणा यैश्चान्नैः श्राद्धे *ऽर्च्चनीया भवन्ति तांस्तु* सर्व्वानशेषतो युष्मा*नहं प्रवक्ष्यामीति ॥ २ ॥ ० ॥ १२४ ॥ यावन्तस्तिथइत्युक्तं तदपि म*वक्ष्यति द्वौ दैव इत्यादि ॥ १ ॥ ० ॥ १२५ ॥ ० ॥

द्वौ दैवे पितृकार्य्ये त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ १२५ ॥

सुसमृद्धोऽपीतिवचने* नैतद्धममावास्यायां *श्राद्धे दैवे देवार्थे* द्वौ ब्राह्मणौ वन्निमान् भोजयेत् ॥ १ ॥ पितृकार्य्ये त्री न्भोजयेत् *एकं हि पितुरर्थे* पितामहस्यैकं प्रपितामहस्य* चैकमित्येवं त्रीनिति* पञ्च ब्राह्मणान् भोजयेत् ॥ २ ॥ अग्निमता कर्त्तव्योऽस्मिन् मातामह * पक्षे श्राद्धं न विधेय * मिति ज्ञापयन्नाहैकै * कमुभयत्र वेति ॥ ३ ॥ उभयत्र दैवे पित्र्ये * कार्य्ये चैकैकं वाग्निमान् * ब्राह्मणं भोजयेत्तथा च ब्राह्मणं * मेकं दैवे पित्रादिषु * त्रिष्वेकं ब्राह्मणं भोजयेत् ॥ ४ ॥ श्राद्धे वर्जनीयं यद्यद्वा तत्तत् *सर्व्वं वर्ज्जयित्वा वैश्वदेविकाग्नौ* पक्वान्नमग्निमान् ब्राह्मणान् भोजयेत् *तथा भोजनमन्नं ब्राह्मणान् भोजयेत् ॥ ५ ॥ दैवार्थं त्वाहृता *देवालये स्थापयेद्वा *पित्र्ये ब्राह्मणमेकं भोजयेदिति *वशिष्ठेनाप्युक्तं स्वसंहितायां ॥ ६ ॥ द्वौ दैवे पितृकार्य्ये त्रीन्* एकैकमुभयत्र वा* भोजयेत्सुसमृद्धोऽपि* न प्रसज्जेत विस्तरे ॥ ७ ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः । पञ्चैतान्विस्तरो हन्ति तस्मात्तं परिवर्जयेत् ॥ ८ ॥ अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम् । शुभशीलोपसम्पन्नं सर्व्वलक्षणलक्षितम् ॥ ९ ॥ यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् । अन्नं पात्रे समुद्धृत्य सर्व्वस्य प्रकृतस्य तु ॥ १० ॥ देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् । प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥ ११ ॥ इति वशिष्ठोक्तं वेद*पारगशुभशीलोप*पन्नसर्व्वलक्षणयुक्तैकब्राह्मण*भोजनविधानं पितृ*कार्य एव न तु दैवे ॥ १२ ॥ दैवपक्षस्यान्नं पात्रे* उद्धृत्य देवगृहे तु*नीत्वा स्थापयित्वा तमेकं ब्राह्मणं *श्राद्धविधिना भोजयित्वा*तदन्नं वह्नौ क्षिपेदिति ॥ १३ ॥ एष वेदपारगैक*ब्राह्मणभोजनश्राद्ध*विधिः श्रद्धायुक्तः पूर्व्वं *द्वौ दैव इत्याद्युक्तैव ॥ १४ ॥ वेदपारगब्राह्मण*उक्तो व्यासेन तद्यथा* मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद्वेदपारगः इति ॥ १५ ॥ एवं याज्ञवल्क्येन*युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च । परिस्रुते शुचौ देशे दक्षिणाप्लवने तथा ॥ १६ ॥ इत्यग्निमता कर्त्तव्यः *पार्व्वणश्राद्धे विधिरुक्तस्ततः*परस्मोके न द्वौ दैवे* प्राक्त्रयः पित्र्य इत्यनेन ॥ १७ ॥ यो विधिरुक्तः स निरग्निकर्त्तव्यः * विधिर्लिखितर्षिवाक्येन कार्थत्वात् * इत्यथा पुनरुक्तिदोषो भवति ॥ १८ ॥ अनग्निकप्रकरणे * तद्वचनदर्शयिष्यते*गोभिलेनाप्येवमुक्तं ॥ १९ ॥ अथ श्राद्धममावास्यायां पितृभ्यो * दद्यात्पञ्चमीप्रभृति * वापरपक्षस्य यदहः * रुपपद्येत तदहः ॥ २० ॥इति ॥ अत्राग्निमानित्यधिकारादत्र* हस्तं घृयं तेन पितृभ्य इति * पितृपितामहप्रपितामहेभ्यः २१ ॥ नवपितृपितामहप्रपितामहमातामहप्रमाता * महवृद्धप्रमातामहेभ्य एकैं * कमुभयत्रेत्युक्तः ॥ २२ ॥ एतत्साग्निककर्त्तव्यमभिप्रेतं * यज्ञेनाप्युक्तं यथा ॥ २३ ॥ द्वौ दैवे प्राङ्मुखौ त्रींस्तु*पित्र्ये चोदङ्मुखांस्तथा । भोजयेद्विविधान्विप्रा* नेकैकमुभयत्र वा ॥ २४ ॥ भोजयेदथवाप्येकं ब्राह्मणं वेदपारगम् ॥ देवे कृत्वा च नैवेद्यं पश्चाद्वह्नौ तु तत्क्षिपेत् ॥ इति ॥ २५ ॥ अत्र देशे देवायतने देशे * वाशिष्ठवचनदर्शनात्* तेनोभयोस्तुल्याकारता भवतीति ॥ २६ ॥ गौतमेनाप्युक्तं यथा* अथ श्राद्धममावास्यायां पितृभ्यो* दद्यात्पञ्चमीप्रभृति* वाऽपरपक्षस्य यथाश्रद्धं ॥ २७ ॥ नवावरान्भोजयेदयुजो यथोत्*साहं वा ब्राह्मणान् श्रोत्रियानिति ॥ २८ ॥ अत्र नवावरानिति*द्वौ दैवे पित्रादिषु त्रि*ष्वेकैकस्मिन्स्त्रीनित्येवं *नव ब्राह्मणान् पित्र्ये भोजयेत् ॥ २९ ॥ अयुजो वा दैव एकं पित्रादिषु त्रिष्वेकैकं ब्राह्मणम् ॥ ३० ॥ ० ॥ विष्णुनाप्येवमेवोक्तं *द्वौ दैवे प्राङ्मु

ोऽस्य * पित्रा कार्यां उदङ् मुखान्*एकं कत्तभयत्र वा ॥ इति ॥ २१ ॥ आश्वलायनस्य हि च * दैवएकं पितादि
मात्रकै * कर्त्ता कैकमेकं वा * नत्वेवचैकं सर्व्वेषाम् ॥ इति ॥ २२ ॥ अत्रपित्रादित्रयस्यैकैकस्येति*
पितरेकं पिता*महस्यैकं प्रपितामह * शेषत्रयं पित्रादित्रयस्यैकैकम् ॥ २३ ॥ दैवएकं पित्रादित्रयस्यैकं
नत्वेकं सर्व्वेषां दैव*पित्रादित्रयाणामिति ॥ २४ ॥ सर्व्वेषामितिवचनात्*दैवपित्र्याणामेकं.* ब्राह्म
णभोजयेदिति ॥ २५ ॥ तेनदैवार्थं द्रव्यमुद्धृत्यदेवे*स्थापयित्वापित्रादिषु *कब्राह्मणोनप्रतिषिद्धः ॥ २६ ॥
वशिष्ठोक्तं नविरुध्यते*दैवद्रव्यमात्रतस्यौ*प्रक्षेपणवचनात् ॥ २७ ॥ इत्याग्निमतांकर्त्तव्या * पार्व्वणे विधिसङ्ग्रान*
कार्यं सुक्तं लिखितेनयथा ॥ २८ ॥ अनग्निकोयदाविप्रःश्राद्धंकरोतिपार्व्वणम् । तत्रमातामहानाञ्चकर्त्तव्यं
यंसदा इति ॥ ३९ ॥ एवमेवाश्वलायनोक्तं यथा*दैवेप्राक्त्रयःपित्र्ये उदगेकैकमेवच । मातामहा
मप्येवं तन्त्रं वावैश्वदेविकमिति ॥ ४० ॥ गोभिलेनापानग्निनाक्रियमाणे * पार्व्वणे वाक्यमुक्तं ॥ ४१ ॥ पितृ
पितामहेभ्यः*प्रपितामहेभ्योमाता*महेभ्यःप्रमातामहेभ्यो* वृद्धप्रमातामहेभ्यःस्वधोच्यतामिति ॥ ४२ ॥
शौनकलेनोक्तं *पितरोयत्रपूज्यन्ते *तत्रमातामहादयः । अविशेषेणपूज्याःस्युरविशेषान्नरकं व्रजेत् ॥ इति
॥ ३ ॥ मार्कण्डेयपुराणे च * पितृणामयुजश्चाम युग्मान्दैवेद्विजोत्तमान् । एकैकं वापितृणांचदेवानाञ्चस्व
क्तितः ॥ ४४ ॥ तथामातामहादीनां तुल्यं वावैश्वदेविकम् । पृथक्तयोस्तथाचान्येकेचिदिच्छन्तिमानवाः ॥ ४५ ॥
ङ्मुखौदैवसङ्ख्यौपित्र्यान् कुर्यादुदङ् मुखान् ॥ तथामातामहादीनां विधिरुक्तोमणीषिभिः ॥ इति ॥४६॥
नपुराणे चप्रोक्तं * स्नातान्शुचीन्ब्राह्मणान्द्वौ * प्राङ् मखौदैवकर्म्मणि । उपवेश्यत्रीन्पित्र्ये स्मैकैकमुभयत्र
॥ ४७ ॥ एवमातामहादीनां श्राद्धं रपिचकारयेत् ॥ इति ॥ एतेनानग्निकोपिश्राद्धे भोजामे * वान्नं ब्राह्म
नभोजयेत्*नत्वभक्ष्यामन्नं भोजयत् ॥ ४८ ॥ अभोज्यं ह्यन्नमग्नौ वाह्निकाग्नौ * पक्वं तेनान्नेनपञ्चयज्ञादि*गृह्य
विधानस्य* भावेनवृथापाकत्वात् ॥ ४९ ॥ तदुक्तं मनुनायथा*योऽगृहीत्वाविवाहाग्निं गृहस्थइतिमन्यते ।
न्नं तस्यनभोक्तव्यं वृथापाकोहिसस्मृतः ॥ ५० ॥ स्वयम्भाभक्तं वक्ष्यते * अनर्चितं वृथापाकमवीरायाश्चयोषित
त ॥ ५१ ॥ अङ्गिराअप्युवाच*दुष्कृतं हिमनुष्याणामन्नमाश्रित्यतिष्ठति । योयस्यान्नं समश्नातिसतस्याश्ना
ति किल्बिषमिति ॥ ५२ ॥ तर्हिपङ्क्तिपावननिरग्निकस्यान्नं नभुङ्क्तेकथं * तेनश्राद्धं कर्त्तव्यं सा * दितिचेत्
क्तं प्रचेतसायथा ॥ ५३ ॥ आपद्यनग्नौतीर्थेषुचन्द्रसूर्यग्रहे तथा । आमश्राद्धंद्विजैःकार्यं शूद्रेणापसदैव
ोति ॥ ५४ ॥ उशनसाप्युक्तं । निरग्निरध्वगोवापितथैववासनान्वितः । आमश्राद्धंद्विजःकुर्याद्वृषलस्तुसदै
हि ॥ ५५ ॥ तत्रापिब्राह्मणाभावे*कुशमयं ब्राह्मणं तु* श्राद्धमामान्नेनकुर्यात्*तद्दर्शितं प्राक् ॥ ५६॥ १२९ ।
नुकस्माद्ब्राह्मणानां *विस्तरेसुसम्भवेपि*नप्रसजतेतत्राह* सत्क्रियेत्यादिश्लोकम् ॥ १ ॥ ० ॥ १२६ ॥ ० ॥

**। सत्क्रियादेशकालौचशौचंब्राह्मणसम्पदः। पञ्चैताविस्तरोहन्तितस्मान्नेहेतविस्तरम्।१२६।**

श्राद्धे ब्राह्मणसम्पदो*वैगुण्याभावाद्धिसत्*क्रियाचदेशस्कालस्च*शौचञ्चेताः पञ्चयस्मात्॥ १ ॥ब्राह्मणा
ां विस्तरोहन्ति*तस्माद्ब्राह्मणानां विस्तरं *सम्भवेपिनेहेत ॥ २ ॥ तत्रसत्सेजना क्रिया* स्वजातिविहितं कर्म्म*
गोऽलेपवत्त्वमार्गः*कालःश्राद्धकालःशौचं शुचिभावः ॥ ३ ॥ सम्पद्नितब्राह्मणानां * विस्तरस्याप्राप्तिरेषथा *

कष्टाय वै देयानि स्युः ॥ १ ॥ न तु ज्ञाननिष्ठाय * ब्राह्मणाय देयानि स्युः * पापमोक्षार्थं कर्त्तव्ये * कर्म्मणि ब्राह्मणं कस्मै च * पूजनान्तरं दद्यादिति * न त्वधार्म्मिकपूजनात् । २ ॥ तत्र दृष्टान्तमाह न हीत्यादि * हि यस्मादसृग्दिग्धौ हस्तौ न * रुधिरेणाशुद्धौ शोधयितुं शक्यौ तथा ॥ ३ । ० ॥ १२२ । ० । ननु यद्यब्राह्मणाः किं न धार्म्मिका * इत्यत आह यावत * इत्यादिकमेकं श्लोकम् ॥ १ ॥ ० ॥ १३२ ॥

यावतो ग्रसते ग्रासान् हव्यकव्येष्वमन्त्रवित् । तावतो ग्रसते प्रेत्य दीप्तशूलर्ष्ट्ययोगुडान् ॥ १३३॥

अमन्त्रविद्ब्राह्मणो हव्यकव्येषु * यावतो ग्रासान् ग्रसते ॥ १ ॥ तममन्त्रविदं विप्रं * हव्यकव्ये भोजितवान् * प्रेत्य परलोके दीप्त * शूलर्ष्टि नामकास्त्राणि * सुतप्तानयोगुडान् ग्रसते इति ॥ २ ॥ ० ॥ १३३ ॥ ० । ननु तर्हि किं ज्ञानी तत्कष्टाय वै * ब्राह्मणाय हव्यकव्यानि देयानि * नानेकभोब्राह्मणेभ्यः * तत्राह ज्ञाननेत्यादि ॥ १ ॥ १३४ ॥

ज्ञाननिष्ठा द्विजाः केचित्तपोनिष्ठास्तथापरे । तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथापरे ॥ १३४ ॥

बहुविधा ब्राह्मणाः सन्ति तत्र * ज्ञाननिष्ठादयश्चतुर्विधा * ब्राह्मणा हव्यकव्यार्हाः ॥ १ ॥ ० ॥ १३४ ॥ तत्र कस्य किं देयमित्यत आह * ज्ञाननिष्ठेष्वित्यादि ॥ १ ॥ ० ॥ १३५ ॥

ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः । हव्यानि तु यथान्यायं सर्व्वेष्वेव चतुर्ष्वपि ॥ १३५ ॥

तेषां मध्ये ज्ञाननिष्ठेषु विप्रेषु । * । कव्यानि पितृदैवदेयद्रव्याणि * प्रतिष्ठाप्यानि भवन्ति * न तु तपोनिष्ठादिषु ॥ १ ॥ हव्यानि तु देवदेयानि द्रव्याणि * यथान्यायं समानरूपेणैव * चतुर्ष्वेतेषु सर्व्वेषु प्रतिष्ठाप्यानि ॥ २ ॥ ० ॥ ३५ ॥ ० ॥ अत्र संशयस्तथापा * सिद्धान्तमाह श्लोकद्वयेन * अश्रोत्रियेत्यादि ॥ १ ॥ ० ॥ १३६ ॥

अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः । अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥ १३६ ॥
ज्यायांसमनयोर्विद्याद्यस्य स्याच्छ्रोत्रियः पिता । मन्त्रसम्पूजनार्थं तु सत्कारमितरोऽर्हति । १३७ ।

यस्य पिता न श्रोत्रियो * वेदपारगो न भवति * पुत्रो वेदपारगः स्यात् ॥ १ ॥ यस्य पुत्रो न श्रोत्रियो * वेदपारगो न च स्यात् * तस्य पिता वेदपारगो भवति * तयोः को हव्यकव्यार्हः * इति संशये सत्यात ॥ १ ॥ ० ॥ १३६ ॥ ० ॥ तत्राह ज्यायांसमित्यादि ॥ १३७ ॥ अनयोरश्रोत्रियपितृकवेद * पारगवेदपारग * पितृकाश्रोत्रिययोस्तु * मध्ये तं ज्यायांसं विद्यात् * यस्य पिता श्रोत्रियः स्यात् ॥ १ ॥ तर्हि किं स हव्यकव्यार्हो भवति * इत्यत आह मन्त्रेत्यादि ॥ २ ॥ श्राद्धमन्त्रेणास्य पूजनार्थन्तु * तस्मादितरोऽश्रोत्रिय * पितृको वेदपारगः * सत्कारमर्हतीत्येवेति ॥ ३ ॥ तस्मात्तस्मै हव्यकव्यानि देयानि * न त्वश्रोत्रियायाश्रोत्रियपुत्राय * मन्त्रसम्पूजनार्हत्वाभावादिति ॥ ४ ॥ ० ॥ १३७ ॥ ० ॥ ननु ज्ञाननिष्ठो मित्रं दिव्यस्तु * तर्हि तस्मै देयानि न * वेत्यत आह नेत्यादि ॥ १ ॥ ० १३८ ॥

न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः । नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम् ॥ १३८ ।

श्राद्धे श्रोत्रियं मित्रं न * भोजयेदितिवं यान्तरजातं *सुहृज्जनं नभोजयेत् ॥ १ ॥ सचेदुपस्थितोवर्त्तते*तदा धनैरस्य तं ग्रहोमित्रतो * रक्षणीयोभवतीति ॥ १ ॥ तर्हि किं यःश्चत् श्रोत्रिय*स्तं भोजयेदित्यतआह *नारिं नमित्रमित्यादि ॥ २ ॥ यं श्रोत्रियं नारिं नच*मित्रं विद्यात्तं ब्राह्मणं * श्राद्धे भोजयेदितिशेषम् ॥ ३ ॥ ० ॥ १३८ ॥ ० ॥ ननुमित्रश्रोत्रियभोजनेश्राद्धे * कादोषस्तत्रातआह *यस्यमित्रेत्यादिश्लोकेन । १ ॥ १३८ ॥

**यस्यमित्रप्रधानानिश्राद्धानिचहवींषिच । तस्यप्रेत्यफलंनास्तिश्राद्धेषुचहविःषुच ॥१३९**

यस्यश्राद्धानिकर्म्माणि * पित्र्यदैवानिद्रव्याणि*हवींषि दैवेयानि*मित्रप्रधानानिभवन्ति ॥ २ ॥ गुणवद्ब्राह्मणेष्वधिका*मित्रश्रोत्रियाश्चल्पेऽमी * त्रिषुवाब्राह्मणेषुद्वौ* मित्रश्रोत्रियौस्याताम् ॥ ३ ॥ तस्यप्रेत्यामुत्रापर*लोके तेषु*श्राद्धेषुकव्येषुहविःषुचफलंनभवति ॥ ४ ० ॥ १३९ ॥ तर्हिचोर्ध्वमित्राणिकिं*कर्त्तव्यानिभवन्तीत्य * तआहयइत्यादि ॥ १ ॥ ० ॥ १४० ॥

**यःसङ्गतानिकुरुतेमोहाच्छ्राद्धेनमानवः । सस्वर्गाच्च्यवतेलोकाच्छ्राद्धमित्रोद्विजाधमः ॥१४०॥**

यःश्राद्धकृन्मानवोमोहात्*श्राद्धेनकर्त्तानद्रव्येण * मित्राणिसङ्गतानिकुरुते*सस्वर्गात्लोकात्तच्यवते ॥ १ ॥ सखलुश्राद्धमित्रो * द्विजाधमोभवति*यस्माच्छ्राद्धंद्रव्यं मित्रार्थं यस्यास*श्राद्धमित्रइत्युच्यते*तस्मात्सद्विजानामधमः । २ ॥ ० ॥१४० ॥ ० ॥ ननुकस्माद्धेतोःसद्विजाधमइ*त्यतआहसम्भोजनीत्यादि ॥ ३ ॥ १४१ ॥

**सम्भोजनीसाभिहितापैशाचीदक्षिणाद्विजैः । इहैवास्तेतुसालोकेगौरन्धेवैकवेश्मनि ॥१४१॥**

श्राद्धेमित्राणिभोजयित्वा*यादक्षिणादीयतेसा*दक्षिणापैशाचीद्विजै* रभिहिताकस्माद्यतः*सम्भोजनीभोजनेन*समंभुज्यतेतेनैव ॥ १ ॥ इहैवलोकेसादक्षिणानतु*परलोकेफलदा* यथैकवेश्मन्यन्धागौः ॥ २ ॥ ० ॥ १४१ ॥नन्वनृचांसहस्राणां*सहस्रब्राह्मणभोजनसमानं*मन्त्रविदेकब्राह्मण*भोजनफलंभवति ॥१॥तर्हिकिमनृचांसहस्राणां*सहस्रब्राह्मणानांश्राद्धेतु * भोजनंविहितंभव* तीत्यतआहयथेत्यादि ॥ २ ॥ ० ॥ १४२ ॥ ० ॥

**यथेरिणेबीजमुप्त्वानवप्तालभतेफलम् । तथानृचेहविर्दत्त्वानदातालभतेफलम् ॥ १४२ ॥**

ईरिणे मूषरभूमि*स्तत्रवप्तावीजमुप्त्वा*यथाफलंनलभते* तथानृचेब्राह्मणाय * दाताहविर्दत्त्वाफलंनलभते ॥ ३ ॥ ० ॥१४२ ॥ ० ॥ श्रोत्रियायश्राद्धेभोजयित्वादत्त * दक्षिणाफलमाह * दातॄनित्यादिश्लोकम् ॥ ३ ॥ ० ॥ १४३ ॥

**दातॄन्प्रतिग्रहीतॄंश्चकुरुतेफलभागिनः । विदुषेदक्षिणांदत्त्वाविधिवत्प्रेत्यचेहच ॥१४३॥**

श्राद्धेभोजयित्वाविदुषेविधिव*द्दत्तादक्षिणादातॄन्नन्*प्रतिग्रहीतॄंश्चप्रेत्य*परलोकेचेहलोके* फलभागिनःकुरुते। १ ॥ ० ॥ १४३ ॥ ननुरिंश्राद्धेभोजयित्वाकिंफल*माप्नोतीत्यतआह*कामंश्राद्धइत्यादि ॥ १ ॥ ० ॥ १४४ ॥ ० ॥

**कामंश्राद्धेऽर्च्चयेन्मित्रंनाभिरूपमपित्वरिम् । द्विषताहिहविर्भुक्तंभवतिप्रेत्यनिष्फलम् ॥१४४**

श्राद्धे कामं यथासात्तथा*प्रतिषिद्धं मित्रमपि* कदाचिद्द्वेष्यं तथापि*भिक्षमपि अरिं नार्चयेत् ॥ १ ॥ कस्मात् हि यस्माद्द्विषता*शत्रुणा भुक्तं हविः प्रेत्य * परलोकं गतस्य निष्फलं भवेत्*मित्रभोजनादधिकनिष्फलं स्यात् । २ ॥ ॥ १४४ ॥ तर्हि कं दाचिन्मित्रं श्राद्धे भोजयितुमर्हतीत्याशङ्क्याह*यत्नेनेत्यादिकं ॥ ३ ॥ ० ॥ १४५ ॥

**यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्। शाखान्तगमथाध्वर्युं छन्दोगन्तु समाप्तिकम् १४५**

श्राद्धे बह्वृचमधीतैकशाखं*यत्नेन भोजयेद्यतो*विनैकशाखाध्ययनं *न बह्वृचत्वं स्यात्*विपुलतब्रह्मचर्यं स्यात् ॥ १॥ वेदपारगं यत्नेन*भोजयेत्तल्लक्षणन्तु* व्यासेनाभिहितं यथा ॥ २ ॥ मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद्वेदपारगः ॥ इति ॥ ३ ॥ शाखान्तगमध्वर्युं यजुर्वेदस्य* सम्पूर्णशाखाध्यायी यो* अध्वर्युः कर्म्मकर्त्ता भवति * तञ्च यत्नेन भोजयेत् ॥ ४ ॥ एतेन तदुक्तम्भवति एकशाखा * ध्यायी चाद्विसुत ब्रह्मचर्यो भवति ततः स * बह्वृचाग्र्यमाह्नः स्यादिति ॥ ॥ ५ ॥ समाप्तिकं छन्दोगन्तु * सम्पूर्णसामवेदाध्यायिनं श्राद्धे * यत्नेन भोजयेदिति ॥ ६ ॥ एतद्विद्वान् प्रमादीत् व्याचष्टे * बह्वृचं मन्त्रब्राह्मण*एकशाखाध्यायिनं ॥ ७ ॥ तथाविधमेव यजुर्वेदिनं* वेदपारगं शाखायाश्चान्तगं * ब्राह्मणं यत्नेन श्राद्धे भोजयेत् ॥ ८ ॥ समाप्तिकः सर्वैरेव मन्त्रैर्मन्त्र * ब्राह्मणात्मकत्वम्*शाखाध्येताभिहितः ॥ इति ॥ ९ ॥ तदसद्वित्तब्रह्मचर्य्यबालेन सदोषत्वाद्बह्वृचम् वेनसदोषत्वात् ॥ १० ॥ ० ॥ १४५ ॥ ० ॥ एषां श्राद्धभोजने गुणमाह* एषामन्यतमेत्यादि ॥ १ ॥ ० ॥ १४६ ॥

**एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्च्चितः। पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी १४६**

एषां सम्पूर्णर्ग्वेदाध्यायि*वेदपारगशाखान्तगा * ध्वर्युसमाप्तिकच्छन्दोगा*इति चतुर्णामन्यतमः ॥ १ ॥ यस्य पितॄणां श्राद्धं हव्यकव्य*मर्च्चितः सन् भुञ्जीत तस्य पितॄणां साप्तपौरुषी * तृप्तिः शाश्वती स्यादिति*प्रानियमेनोक्तिरेता । २ । तेनैतेभ्योऽन्यथा * विधाब्राह्मणा न श्राद्धे *भोजनीयाः स्युरित्युक्तं ॥ ३ ॥ १४६ ॥

**एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः। अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः। १४७।**

एष इत्यादि ॥ १४७ ॥ एष बह्वृचादिचतुर्विधाय * ब्राह्मणाय हव्यकव्ययोः प्रदाने * कल्पः प्रथमः श्रेष्ठो वेदितव्यः । १ । अस्याकल्पस्यानुकल्पोऽल्पकल्प * स्त्वयं वक्ष्यमाणः सदा*सद्भिरनुष्ठितो ज्ञेयः ॥ २ ॥ १४७ ॥ स चानुकल्प उच्यते*मातामह*मित्यादिकं ॥ ३ ॥ १४८ ॥

**मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम्। दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् १४८**

न श्राद्धे भोजयेन्मित्र *मिति सामान्यतो यो मित्रभोजन*प्रतिषेधः पूर्व्वं कृतः । १ । तस्यापवादेऽनुकल्पान्*मित्रविशेषान् मातामहादीन् बह्वृ*चादिचतुष्कानन्तरम् विधानम् श्राद्धे * भोजयेत्त्वमन्त्रवित्तदः । २ । विट्पतिर्जामाता बन्धु *र्मातृस्वस्रीयपितृस्वस्रीयादिर्न*मित्रसामान्याः पुरुषः ॥ ३ ॥ १४८ ॥ ननु श्राद्धे दैवे पित्र्ये *कीदृशा ब्राह्मणा वर्ज्या*इत्यत्राह नेत्यादि ॥ १ ॥ १४९ ॥

**नब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित्। पित्र्ये कर्म्मणि तु प्राप्ते परीक्षेत प्रयत्नतः। १४९।**

वक्ष्यन्ते स्वयं बहुविधा ब्राह्मणाः* सर्ब्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु * आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते। इति। १। ब्राह्मणेनोढासु ब्राह्मणादन्य* क्षत्रियदुहितृवैश्यदुहितृषु पत्नीषु मन्त्रैर्विवाहिता* तुल्यासु पुनर्भूषु च। २। नियुक्तास्वनियुक्तासु सधवासु * यदपरब्राह्मणात् सम्भूता ये * पुत्राः कुण्डाः विधवासु गोलकाः। २। तथा पौनर्भवाश्च ये * ते पुत्रा जाता न एव * ब्राह्मणवर्णा एवेति। ३। ब्राह्मणात् स्वोढायां पत्न्यां * ब्राह्मणकन्यायां सम्भूता ये पुत्राः * ब्राह्मणात् स्वोढायां पत्न्यां * क्षत्रियकन्यायां सम्भूताः। ४। ते पुत्रा मूर्द्धाभिषिक्ताः* सवर्णा कभिपजो* ब्राह्मणात् स्वोढायां वैश्यकन्यायां पत्न्यां सम्भूता* ये पुत्रा अम्बष्ठास्ते च * सर्ब्वे जाता ब्राह्मणा एव। ५। ब्राह्मणादनुलोमायां * क्षत्रियकन्यायां वैश्यकन्यायाञ्चानूढायां * सम्भूताः पुत्राः कानीना * ये न्यायादयस्ते जाता ब्राह्मणाः इति। ६। एषां बहुविधानां कुण्डगोलक* पौनर्भवादीनां मध्ये * ये योग्या ज्ञाननिष्ठास्तपो* निष्ठास्तपःस्वाध्याय* निष्ठाः क्रियानिष्ठा वा सन्। ७। बहूचो वेदपारगः* शाखान्तगाध्वर्युरथ* समाप्तिकछन्दोगो वा* मित्रामित्रवर्ज्जं तं तं ब्राह्मणं॥ ८॥ मित्रेषु तथाविधं मातामहादिं *ब्राह्मणं दैवे कर्म्मणि* वक्ष्यमाणास्तेनादिरूपेण न *धर्म्मवित् नः परीक्षेत॥९॥ ज्ञाननिष्ठादिकं बहूचादिकञ्च *भवति तद्दैवतं तं *दैवे कर्म्मणि भोजयेत्॥१०॥ श्राद्धप्रकरणे प्रस्तुते सति श्राद्धे दैवे पक्षे इति* प्राप्ते कर्म्मणीति यदुक्तं तेनैवं *ज्ञापितमिह भवति॥११॥ श्राद्धादन्यस्मिन् दैवे* निखिलेकर्म्मणि उक्तविध ब्राह्मणं *भोजयेन्न तु स्तेनादि* रूपेण वर्ज्ज्यं परीक्षेत॥१२। पित्र्ये तु कर्म्मणि प्राप्ते *ज्ञाननिष्ठादिकं बहूचादिं माता* महादिस्वब्राह्मणं* स्तेनादिरूपेण वर्ज्ज्यं परीक्षेत॥ १३॥ प्रमादीतएतान् विगर्हितान् चोरानपाङ्क्तेयान् द्विजाधमान्। द्विजातिप्रवरो विद्वानुभयत्र विवर्जयेत्॥ १४॥ इति॥ वक्ष्यमाणं विस्तरत आचष्टे * धर्म्मज्ञो दैवे श्राद्धे भोजनार्थं न* ब्राह्मणं यत्नतः परीक्षेत्॥ १५॥ लोकप्रसिद्धमात्रेणासौ* साधुतया भोजयितव्यः *परीक्षा तत्र नास्ति ॥ १६॥ पित्र्ये पुनः कर्म्मण्युपस्थिते सति* पितापितामहादिभि* जनपरीक्षा कर्त्तव्येति॥ १७॥ तान् श्राद्धे न भोजयेदिति न दैवे* यत्रोभयत्र निषेधो* मनोरभिमतस्तत्र* हव्यकव्यग्रहणं वा करोतीति॥ १८॥ तदसस्कृच्छ्राद्धे हि दैव* पक्ष पितृपक्षाविति* द्वयमेव पित्र्यं कर्म्म। १९॥ एकाय पित्र्ये * दैवे कर्म्मणि न परीक्षेतेत्युक्तं * तेन पक्षत्वे दैवे* परीक्षणमुपपद्यते॥ २०॥ तस्माद् द्वयव श्राद्धे इत्युक्तं तत्रापि * दैवपित्र्योभयत्रेति * स्वयं श्राद्धे दैवपक्षे * पजनमपि हिश्राद्धं * ॥ २१॥ पङ्क्तियोग्यकादिगर्भे दत्तोपवेशनो* पाकस्य भोजनात्तत्र * पङ्क्तिदूषणं स्यादपाङ्क्तेयेनेति ॥ २२॥ १४९॥ परीक्षायाः प्राह *भोजने वर्ज्ज्यान्* ब्राह्मणानाह* ये स्तेनेत्यादि॥ १॥ १५०॥

**ये स्तेनपतितक्लीवा ये च नास्तिकवृत्तयः। तान् हव्यकव्ययोर्विप्राननर्हान् मनुरब्रवीत्॥ १५०॥**

स्तेनश्चौरः पतितो * महापापवान् क्लीवः *नपुंसको आदोप्रवान्॥ १॥ नास्तिकवृत्तयो नास्तिकसमीपे *ये ब्राह्मणास्तु नास्तिका* वादं स्थापयित्वा तांश्च * तोषयित्वार्थं लब्ध्वा जीवन्ति ते॥ २॥ हव्यकव्ययोर्देव* पितृपक्षयोर्द्दाने* एनर्हान् मनुरब्रवीत्॥ ३॥ १५०॥

**जटिलञ्चानधीयानं दुर्ब्बलं कितवं तथा। याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्॥ १५१॥**

जटिलमित्यादि ॥ १५१ ॥ जटिलोब्रह्मचारिवेदमध्यनच* वेदमधीतेतं विप्रं *दुर्ब्बलं गमनयक्ति* भोजनयक्तिवि हीनं क्रितबोधूर्त्तःसर्व्व द* १ येद्रानृवहूनृयाजयन्ति*पूगःकथकाश्चन्दयोरि*ताभिधानं लोके ॥ २ ॥ श्राद्धे दैवेपि त्वाचन * तान्भोजयेदितिशेषः ॥ ३ ॥ १५१ ॥

**चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा । विपणेनचजीवन्तोवर्ज्याःस्युर्हव्यकव्ययोः॥१५२**

चिकित्सकानित्यादि ॥ १५२ ॥ देवलकसाहचर्यात्*देवं यापिनं यथैव*धर्मार्थं ये देवान्सेवन्ति*तेदेवलानस दोषाः ॥ १ ॥ तथाधर्मार्थं येब्राह्मणाः*चिकित्सन्ति तेचधर्म्मार्था*चिकित्सावृत्त्याचिकित्सन्त * उपजीवन्तितेचा दोषाः ॥ २ ॥ यथाचदेवकार्योपजीविनः*कुत्सितादेवलादेवलका *स्तेदोषवन्तःसन्तस्तथा*त्वधर्म्माचिकित्सकाःस दोषाः ॥ ३ ॥ धर्म्मशास्त्रविहितविकित्सामाहत्ति*मन्तरेणयेब्राह्मणा* श्चिकित्सन्तउपजीवन्ति* ते श्राद्धभोजनेवर्ज्याः ॥ ४ ॥ कुत्सितार्थेकन्देवलकइति*देवलमहर्षिणोक्तं * देवकार्योपजीवीच*नाम्नादेवलकोभवेत् ॥ ५ ॥ उत्पन्न मात्रन्तुब्राह्मणाभिषक्*गम्बष्ठानां धर्म्म नैव*चिकित्साहत्तिर्विहिता ॥ ६ ॥ तद्यथोशनसःसंहितायामुक्तं * विधिना ब्राह्मणात्प्राप्य्वैश्यायान्तुसमन्वकः । जातःसुवर्णइत्युक्तःसोऽनुलोमद्विजःस्मृतः ॥ ७ ॥ अथर्वणक्रियां कुर्व्वन्नि त्यानैमित्तिकक्रियां । अश्वं रथं हस्तिनं वावाहयेद्वानृपाज्ञया ॥८ ॥ सैनापत्यञ्चभैषजं कृत्वाजीवेत्तुवृत्तिषु । नृपा यां विप्रतश्चैवायात्तुयोजातःसभिषक्स्मृतः ॥ ९ ॥ अभिषिक्तनृपस्याज्ञां परिपालयेत्वैद्यकम् । आयुर्वेदमथाष्टा ङ्गं तन्त्रोक्तं धर्म्ममाचरेत् ॥ १० ॥ ज्योतिषं गणितं वापिकायिकीं वृत्तिमाचरेत् । वैश्यायां विधिनाविप्राज्जातोह्यम्ब ष्ठउच्यते ॥ ११ ॥ कृष्याजीवीभवेत्तस्य तथैवाग्नेयवृत्तिकः । ध्वजिनीजीविकाचापिचिकित्साशास्त्रजीविनः ॥ १२ स्वयम्बमनुनाप्युक्तं * मम्बष्ठे चचिकित्सित*मिति ॥ १३ ॥ तथाचधर्म्माचिकित्साहत्तित्वात्* सुवर्णकभि षगम्बष्ठानांश्राद्धे *वर्ज्जानवाधर्म्मार्थं चिकित्सकाः ॥ १४ ॥ यथाकृष्णात्रेयपुनर्वसुस्तस्य*शिष्याग्निवेशभेल* जतूकर्णपराशर*हारीतक्षारपाणय*श्चरकादयश्च पर ॥ १५ ॥ तेसर्व्वधर्म्मार्थं चिकित्सकास्तु *चिकित्सोपजी विनांन*तस्मात्श्राद्धेनवर्ज्याःस्युः ॥ १६ ॥ एभ्योन्येचिकित्साजीविनोब्राह्मणाः*श्राद्धेवर्ज्याभवन्तीति ॥१७॥ मांसविक्रयिणश्चब्राह्मणाःश्राद्धे *वर्ज्यानतुधर्मार्थं ये *मांसोपार्जकायथा*गस्त्यादयोमहर्षयः ॥ १८ ॥ हव्य कव्ययोरितिदैवे पित्र्ये च*पात्रान्नभोजनेवर्ज्याः ॥ १९ ॥ १५२ ॥

**प्रेष्यग्रामस्यराज्ञश्चकुनखीश्यावदन्तकः । प्रतिरोद्धागुरोश्चैवत्यक्ताग्निर्वार्द्धुषिस्तथा ॥ १५३**

प्रेष्यइत्यादि ॥ १५३ ॥ ग्रामस्यराज्ञश्चप्रेष्यो*नेतग्रहणानन्वयः * सम्म स्यात्कद्योब्राह्मणाः*कुनखीकुनखाखारो गयान्वायः ॥ १ ॥ श्यावदन्तोयस्य*गुरोश्चप्रतिरोद्धायो*गुरुप्रतिकूलाचरणकारीस्यात् ॥ २ ॥ त्यक्ताग्निनिर ग्निर्ब्राह्मणाःसच*यश्चवार्द्धुषिकृत्तमर्णाःमन्दत*धनवृद्ध्युपजीवीस*श्राद्धे हव्यकव्ययोर्वर्ज्याः ॥ ३ ॥ १५३ ॥

**यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः । ब्रह्मद्विट्परिवित्तिश्चगणाभ्यन्तरएवच ॥ १५४ ॥**

यक्ष्मीत्यादि ॥ १५४ ॥ यक्ष्मीयक्ष्मरोगवान*पशुपालोविक्रयेण* जीविकार्थं छागमेषं * महिष्यादिपोषकः ॥ १ ॥ परिवेत्तापरिवित्तिश्चोर्द्धमतो*वक्ष्यते निराकृतिस्तु* पञ्चमहायज्ञानुष्ठानत्यागेन * देवादीनां निराकर्त्ता ॥ २ ॥ छन्दोगपरिशिष्टे चोक्तं *निराकर्त्तामरादीनां सविज्ञेयोनिराकृतिः ॥ इति ॥ ३ ॥ ब्रह्मद्विट्ब्राह्मणद्वेष्टा*

**आगारदाहीगरदःकुण्डाशीसोमविक्रयी। समुद्रयायीवन्दीचतैलिकःकूटकारकः॥ १५८॥**

आगारेत्यादि॥ १५८॥ द्वेषिणयःपरस्यगृहदाहकृत्*गरदप्रभृत्यर्थः*मारणार्थसंयोग* विषभक्षणा यद्दात्। १। कुण्डाशीपारिभाषिकोनयौगिक*उक्तंहिदेवलेनच। २। अमृतेजारजःकुण्डोमृतेभर्त्तरिगोलकः। यस्तयोरन्नमश्नातिसकुण्डाशीतिकथ्यते। इति। ३। यस्सोमंविक्रीणाति * यःसमुद्रपथेनगच्छतिवन्दी * स्तुतिपाठकोयस्तैलिक*स्तिलादिस्नेहविक्रयी। ४। यःकूटकारकःसाक्षी * साक्ष्यकथनेकूटस्य*मिथ्यावचनस्य कर्त्ता। ५॥ १५८॥

**पित्राविवदमानश्चकितवोमद्यपस्तथा। पापरोगभिशस्तश्चदाम्भिकोरसविक्रयी॥ १५९॥**

पित्रेत्यादि॥ १५९॥ पित्रासहधनाद्यर्थं*योविवदतेयोधूर्त्तो*योमद्यपोयःकुष्ठादिपापरोगी*यश्चाभिशस्तः सर्व्वाभि*शङ्कीयश्चापिदाम्भिकः॥ १॥ रसविक्रयीगोमहिषादिदुग्ध*विक्रयीचयेब्राह्मणाः॥ २॥ १५९॥

**धनुःशराणांकर्त्ताचयश्चापिदिधिषूपतिः। मित्रध्रुक्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच॥ १६०॥**

धनुःशराणामित्यादि। १६०। योब्राह्मणोधनुःशराणांकर्त्ता*यश्चापिदिधिषूपति* रितिज्येष्ठायांभगिन्या मनूढायांसत्यांयदि। १। कनिष्ठाभगिनीपूर्व्वमूढासातृसा* पोदिधिषूःकथिदुक्ता। २। ज्येष्ठायांयद्यनूढा मनूढायांसत्यांयदि... याकन्यायामुह्यतेऽनुजा। साग्रेदिधिषूर्ज्ञेयापूर्व्वादिधिषूःस्मृता॥ ३॥ तन्नमतनाहिस्वयं*वक्ष्यतेऽस्यो कादिधिषू*पतिलक्षणमन्यथा*तल्लक्षणकथनेनास्तिसङ्गतिः। ४। वक्ष्यतेहि। भ्रातुर्मृतस्यभार्यायां*योऽनु रज्येतकामतः। धर्म्मेणापिनियुक्तायांसज्ञेयोदिधिषूपतिरिति। ५। तस्मृतज्येष्ठकनिष्ठभ्रातु*र्भार्यायांयःकामतो ऽनुरज्यतेस*दिधिषूपतिर्विधवा*भ्रातृभार्याहिदिधिषूः। ६। मित्रध्रुग्योमित्रद्रोही*द्यूतवृत्तिरक्षक्रीडा* लब्धार्थोपजीवीयःस्यात्। ७। पुत्राचार्यःपुत्रस्ययो*गर्भाधानादिसंस्कारं * कर्म्मकरोतिसएको * गुरुराचार्य उच्यते। ८। यउपनीयवेदमध्यापयति * सद्वितीयआचार्यइतिद्विविधा*नात्रआचार्योमोहाद्यःपुत्रस्य* भवतिसपुत्राचार्यइहोच्यते। ९। एतद्विद्वान्प्रमादी * धर्म्मव्यवस्थाव्यतिक्रमी * पितापुत्रस्यसंस्कारंकुर्या दिति*संस्कारकर्तृत्वंपितु * र्मुख्यमितिमत्वाभ्रान्त्या। १०। पुत्रआचार्योऽध्यापको *यस्यसपुत्राचार्यः* पुत्रेणाध्यापितःपितेतिव्याचष्टे। ११। पिताहिपुत्रस्यकर्त्ता* सर्व्वार्थकरणेसत*संस्कारमृत्विगादिना * कुर्या न्नतुस्वयंबहुदोषदर्शनात्। १२। मातुःसकाशेप्रथमभिधानात * पपत्तारीयेवहवो*दोषाःपूर्व्वप्रदर्शिता*आचा र्यशब्देनाध्यापकाभिधानाभावाच्च॥ १३॥ १६०॥

**भ्रामरीगण्डमालीचश्वित्र्यथोपिशुनस्तथा। उन्मत्तोऽन्धश्चवर्ज्याःस्युर्वेदनिन्दकएवच॥ १६१**

भ्रामरीत्यादि॥ १६१॥ भ्रामरीत्यपस्माररोगी*पिशुनःखलएतेसर्व्वे*ब्राह्मणावर्ज्याःस्युः॥ १॥ १६१॥

**हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति । पक्षिणां पोषको यश्च युद्धाचार्यस्तथैव च ॥ १६२ ॥**

हस्तीत्यादि ॥ १६१ ॥ हस्त्यादीनां दमकः शासको * नक्षत्रजीवी जीतिष्मात्री * पजीवीपक्षिपोषण * जीवी युद्धशिक्षाजीवी ॥ १ ॥ १६२ ॥ स्रोतसामित्यादि ॥ १६३ ॥

**स्रोतसां भेदको यश्च तेषां चावरणे रतः । गृहसंवेशको दूतो वृक्षारोपक एव च ॥ १६३ ॥**

स्रोतसामनम्रपथेन * नगनेप्रवर्त्तकोयः * सस्रोतसां भेदको * यस्तेषां स्रोतसामावरणे * रणे बोधे रतोभवति ॥ १ ॥ यश्चगृहसंवेशकोवास्तुविद्योपजीवीस्यात् * दूतोदौत्यकर्म्मजीवी * यश्चवृक्षारोपणजीवी ॥ २ ॥ १६३ । श्वक्रीडी त्यादि ॥ १६४ ॥

**श्वक्रीडी श्येनजीवी च कन्यादूषक एव च । हिंस्रो वृषलवृत्तिश्च गणानां चैव याजकः ॥ १६४ ॥**

शुनाक्रीडाशीलोयःस्यात् * श्येनपक्षिणापरपक्षिघातेन * योजीविकां करोति ॥ १ ॥ कन्यादूषकोयस्तु नूढाया * योनावङ्गुल्यादिप्रवेशनात् * कन्यात्वधर्म्मलोपकृत् * हिंस्रोवृषलवृत्तिश्च ॥ २ ॥ गणानां याजकोनव * ग्रहा दीनां गणादीनां यागकृत् * समस्तश्चश्राद्धे वर्ज्यः ॥ ३ ॥ १६४ ॥ आचारहीनेत्यादि ॥ १६५ ॥

**आचारहीनः क्लीवश्च नित्यं याचनकस्तथा । कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥ १६५ ॥**

यश्चाचारहीनोयश्चक्लीवश्चत्रिविधपुंस्त्व * हीनश्चरेतोण्डाभ्या * म्यत्वारिके वानीतिवी * जीपघाताद्ध्वजभङ्गा * ज्जरा याः पञ्चधा ॥ १ ॥ इति ॥ नित्यं याचनकृत् श्लीपदी * कृषिजीवी सज्जनैर्योलोकेनिन्दितोभवति ॥ २ ॥ १६५ ॥

**औरभ्रिको माहिषिकः परपूर्व्वापतिस्तथा । प्रेतनिर्हारकश्चैव वर्ज्जनीयाः प्रयत्नतः ॥ १६६ ॥**

औरभ्रिकइत्यादि ॥ १६६ ॥ मेषजीवीयश्चमहिषजीवीयश्च * परपूर्व्वायाः अन्यपूर्व्वायाःपतिः * यःप्रेतहारकतयो पजीवति ॥ १ ॥ १६६ ॥ उपसंहरत्येतानित्यादि ॥ १६७ ॥

**एतान् विगर्हिताचारान पाङ्क्तेयान् द्विजाधमान् । द्विजातिप्रवरो विद्वानुभयत्र विवर्ज्जयेत् ॥ १६७ ॥**

अपाङ्क्तेयान् श्राद्धभोजि * ब्राह्मणपङ्क्तिदूषकान् * द्विजातिप्रवरोब्राह्मणोयोविद्वान् * सश्राद्धे उभयत्र * दैवेपित्र्ये चवर्ज्जयेत् ॥ १ ॥ १६५ ॥ अत्रानुक्ताननान्यमहर्षिभि * रुक्तान् श्राद्धे वर्ज्यान्ब्राह्मणा नपि * वर्ज्जयेदित्यत्र मतमभिधास्ये ॥ २ ॥ तानिह विष्णु ाद्युक्तान्श्राद्धे विवर्ज्यान् * ब्राह्मणान्प्रदर्शयामि ॥ ३ ॥ तद्यथा विष्णुसंहितायाम् ॥ दैवेकर्म्मणिब्राह्मणं * नपरीक्षेतयत्नात् * पित्र्ये परीक्षेत ॥ १ ॥ हीनाधिकाङ्गान्विवर्ज्जयेत् * विकर्म्मस्थांश्चवैडालव्रतिकान्वृथालिङ्गिनो * नक्षत्रजीविनोदेवलकांश्च ॥ २ ॥ चिकि त्सकाननूढापुत्रांस्तत्पुत्रान् * बहुयाजिनोग्रामयाजिनः शूद्र * याजिनोऽयाज्ययाजिनो * व्रात्यांस्तद्याजिनश्च

॥ ८ ॥ इति ॥ अथयमड्गोनोक्तञ्च*ब्राह्मणानपरीक्षेतदैवेकर्म्मणिधर्म्मवित्। पित्र्ये कर्म्मणिसम्प्राप्ते सूक्ष्ममार्गे पविचक्षणम् ॥१॥ ब्राह्मणाश्चविकर्म्मस्थावैडालव्रतिकाःशठाः। हीनाङ्गाअतिरिक्ताङ्गाब्राह्मणाःपङ्क्तिदूषकाः॥२॥ गुरूणांप्रतिकूलश्चअनग्नृतपातिनश्चये। गुरूणांत्यागिनश्चैवब्राह्मणाःपङ्क्तिदूषकाः ॥ ३ ॥ अनध्यायेष्वधीयानाः शौचाचारविवर्जिताः। शूद्रान्नरससंपुष्टाश्चब्राह्मणाःपङ्क्तिदूषकाः ॥४॥ षडङ्गवेदवेत्तारोवह्वृचश्चसामगाः। त्रिणाचिकेताःपञ्चाग्निब्राह्मणाःपङ्क्तिपावनाः ॥ ५ ॥ ऋग्यजुःपारगोयश्चसाम्नांयश्चापिपारगः। अथर्वाङ्गिरसाधीताब्राह्मणाःपङ्क्तिपावनाः ॥ ६ ॥ नित्यंयोगरतोविद्वान्समलोष्टाश्मकाञ्चनः। ध्यानशीलोयतिर्विद्वान्ब्राह्मणाःपङ्क्तिपावनाः ॥ ७ ॥ इति ॥ अथगौतमसंहितायां*नभोजयेत्स्तेनक्लीब* पतितनास्तिकतद्वृत्तिवीरहा* ऽग्रेदिधिषूपतीन् ॥ १ ॥ स्त्रीग्रामयाजकाजपा*लोत्सृष्टाग्निमद्यपकुचरकूट*साक्षिप्रातिहारिकान् ॥ २ ॥ उपपतिर्यस्यचकुण्डाशीसोम*विक्रय्यागारदाहीच। ३। गरदावकीर्णिगण*प्रेष्यागम्यागामिहिंस्र* परिवित्तिपरिवेत्तृ*पर्याहितपर्याधातृ*त्यक्तात्यक्तृदुर्बलाः। ४। कुनखीश्यावदन्तःश्वित्रि*पौनर्भवकितवराजप्रेष्य * राजप्रेष्यप्राति रूपक*शूद्रापतिनिराकृतिश्च। ५। किलासिकुसीदवणिक्*शिल्पोपजीविज्यावादित्र*तालनृत्यगीतशीलान्*पित्राचार्य्येर्नविभक्तान्शिष्यांश्चकेचिदेतांश्च ॥ ६। अथवेदानधीयान * ब्राह्मणभोजनफल * माह ब्राह्मणस्त्वित्यादि। १। १६८।

**ब्राह्मणस्त्वनधीयानस्तृणाग्निरिवशाम्यति। तस्मैहव्यंनदातव्यंनहिभस्मनिहूयते ॥ १६८ ॥**

अनधीयानोब्राह्मण*स्तृणाग्निरिवशाम्यति*यथातृणाग्निर्द्दीप्ति * दत्त्वा शाम्यतिनिर्व्वाणंप्राप्नोति। १। तस्मात्तस्मैवेदमनधीयानाय*ब्राह्मणायहव्यंनदातव्यंकस्मात्हियस्मात्भस्मनिनहूयते * तृणाग्निर्हिभस्मैव। २। । १६८। ननूक्तभोक्तॄणांयेभोक्तव्या*कवाहानिःकिंभवती*त्यतआहापाङ्क्तेत्यादि। १। १६।

**अपाङ्क्तदानेयोदातुर्भवत्यूर्द्ध्वंफलोदयः। दैवेहविषिपित्र्येवातंप्रवक्ष्याम्यशेषतः ॥ १६९**

अपाङ्क्ताब्राह्मणभोजनंयस्य*तस्यापाङ्क्तदानेदैवे*पित्र्येवाहविषिदातुः* ऊर्द्ध्वंयःफलोदयो *भवतितंप्रवक्ष्यामि। १। १६९। अव्रतैरित्यादि। १७०।

**अव्रतैर्यद्द्विजैर्भुक्तंपरिवेत्रादिभिस्तथा। अपाङ्क्तेयैर्यदन्यैश्चतद्वैरक्षांसिभुञ्जते ॥ १७०**

उपनीतस्यवेदग्रहणादूर्द्ध्वं* यद्व्रतंविहितंतेन* व्रतेनहीनैर्ब्राह्मणैः* परिवेत्त्रादिभिश्चब्राह्मणैः। अन्यैश्चापाङ्क्तेयैर्ब्राह्मणैः*श्राद्धेदत्तंभक्तंभवति * तद्धव्यंकव्यंचरक्षांसिभुञ्जते * नतद्देवाःपितरश्च। २। । १७०। ननुकेपरिवेत्त्रादयइत्यत*आहदाराग्निहोत्रेत्यादि। १। ०। १७१।

**दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते। परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्व्वजः ॥ १७१**

यस्तु अग्रजे कुब्जवामनादिभिन्ने * भ्रातरि स्थिते दूतोऽकृतदारे * दारसंयोगं विवाहं कुरुते ।१। अथवाकृतदारेऽपि * नावग्निहोत्रसंयोगं कुरुते * स कनिष्ठो भ्राता परि * वेत्तोच्यते तस्य पूर्व * जस्तु भ्राता परिवित्तिः २ । यमात् वतस्यापजस्या भानुग्रानात् * कुब्जवामनादिभिन्न * ज्येष्ठभ्रातुरनुमत्या * कनिष्ठस्य दारसंयोगे दोषो न ३ कुब्जवामनादौ ज्येष्ठे * विनाव व्रत्चनदोष * उक्तं स्मृत्यन्तरेण । ४। कुब्जवामनखञ्जेषु * गद्गदेषु जडेषु च । जात्यन्धे बधिरे मूके न दोषः परिवेदने । ५ । क्लीबे देशान्तरस्थे च पतिते व्रजिते पिता । योगशास्त्राभियुक्ते च न दोषः परिवेदने । ६ । पितृव्यपुत्रे सापत्ने परनारी सुते तथा । दाराग्निहोत्रसंयोगे न दोषः परिवेदने । इति ॥ ७ ॥ उक्तं चान्यसंहितायां * पितापितामहो यस्य अग्रजो वास्ति कस्यचित् । नाग्निहोत्राधिकारोऽस्य न दोषः परिवेदने । २ । नाग्नयः परिविन्दन्ति न वेदा न तपांसि च । न च श्राद्धं कनिष्ठं वै विना चैवाभ्यनुज्ञया । ४ । भार्यामरणपक्षे वा देशान्तरगते पिता । अधिकारी भवेत् पुत्रस्तथा पातकसंयुते । ५ । ज्येष्ठो भ्राता यदा तिष्ठेन्नितां योगसमन्वितः । अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा । ६ । कुब्जवामनखञ्जेषु गद्गदेषु जडेषु च । जात्यन्धे बधिरे मूके न दोषः परिवेदने । ७ । क्लीबे देशान्तरस्थे च पतिते व्रजिते पिता । योगशास्त्राभियुक्ते च न दोष परिवेदने ॥ ८ ॥ इति ॥ तथा च पितरि जीवति * पितामहे च वर्त्तमाने * ज्येष्ठे च भ्रातरि जीवति ॥ ९ ॥ अग्निहोत्रग्रहणेऽधिकारो नास्ति * पुत्रपौत्रकनिष्ठभ्रातॄणां दार * ग्रहणे त्वधिकारोऽस्ति * गृहीतदारे त्वग्रजे ॥ १० ॥ योगयुक्तकुब्जादान्यतमे त्वकृत * दारेऽप्यजे कनिष्ठस्तु * तस्य भ्रातुरनु ज्ञया * ग्रहणमर्हति दोषाभावात् ॥ ११ ॥ न त्वनुज्ञां विनाग्निहोत्रमर्हति * एवमग्रजेऽनुपनीते * गृहीतवेदे जीवति । १२ । कनिष्ठो भ्राता तूपन * यनं वेदाध्ययन * मग्निं तं पश्चनार्हति ॥ १३ ॥ उपनीते गृहीतवेदे कृत * दारे चाग्रजे जीवति कनिष्ठो नस्यावकरणेऽधिकारी भवति ॥ १४ ॥ एतद्व्याख्यानमविदो * न नग्निरग्निग्रहणं * विधानानभिज्ञो वा चष्टे ॥ १५ ॥ यः सहोदरो ज्येष्ठे भ्रातरि स्थिते * इतराकृतदारे सति * दारसंयोगं कुरुते । १६ । अथवाग्निहोत्रसंयोगं कुरुते * स तु परिवेत्ता तस्य * ज्येष्ठश्च परिवित्तिः स्यात् ॥ इति ॥ १७ ॥ तदसाधु योगान्वित * कुब्जवामनाद्यग्रजा * ननुज्ञया कनिष्ठस्योद्वाहविधानात् ॥ १७ ॥ १७१ ॥

**परिवित्तिःपरिवेत्तायया चपरिविद्यते । सर्व्वेतेनरकंयान्तिदातृयाजकपञ्चमाः ॥ १७२ ॥**

तत्र दोषमाह । परिवित्तिरित्यादिकं ॥ १ ॥ १७२ ॥ ययेति कर्त्तृपदं ॥ परिवेदनलाभः स्त्रियापि पुंस * उपपद्यते नोद्वाहः ॥ १ ॥ १७२ ॥ नरकोऽसौ दिधिषूपति * यस्तु दिधिषूपतिः स्यात् * वर्जनीयत्वमुक्तमित्यत * आह भ्रातुर्मृतस्येत्यादि ॥ १ ॥ १७३ ॥

**भ्रातुर्मृतस्यभार्य्यायांयोऽनुरज्येतकामतः । धर्म्मेणापिनियुक्तायांसज्ञेयोदिधिषूपतिः ॥ १७३**

भ्रातुरग्रजस्यावरजातस्य वा * मृतस्य भार्यायां धर्म्मे * णापि नियुक्तायामनियुक्तायां वा ॥ १ ॥ यः कामतोऽनुरज्येत * सम्भोगं करोति स दिधिषूपति * र्ज्ञेयो द्विविधो ज्येष्ठानु * जातभ्रातृभार्याभेदात् ॥ २ ॥ तेनयाविधवाज्येष्ठभ्रा तृभार्या * कामतो देवरेणोप * भुक्ता सैका दिधिषूः स्यात् ॥ ३ ॥ या त्ववरजभ्रातृभार्याविधवा * कामतो देवरेणोप * भुक्ता सापरा दिधिषू * स्तयोस्तौ द्वौ देवरौ पती दिधिषू * पतीत्यपाङ्क्तौ चाविति ॥ ४ यस्तु देवरेणोक्तोऽयथा * ज्येष्ठायां

विद्यमानायां कन्यायामूढ़ाऽनुजा। साचाग्रेदिधिषूर्या पूर्वा तु दिधिषूः स्मृतादूति॥५॥तयोःपतीअतप्रायश्चित्तौना पाङ्क्तौ यौस्यातां *नात्वदिधिषूपतिर्विवक्षितः* स्वयंदिधिषूपतिरेत*त्नद्दाणस्योक्तत्वादिति। ६। मनुक्तौपुनस्तौकु ण्डगोलकौयौ*आह वर्जयेद्ब्राह्मणपू*क्तावितातयाह्परेतयादि॥ १ ॥ १७४ ॥

**परदारेषुजायेतेद्वौसुतौकुण्डगोलकौ। पत्यौजीवतिकुण्डःस्यान्मृतेभर्त्तरिगोलकः॥१७४**

पत्यौजीवतिपरदारेषुजातः*पुत्रःकुण्डःस्यान्मृतेभर्त्तरितु*परदारेषुजातःपुत्रोगोलकः* ॥ १ ॥ तत्रब्राह्मण पत्नीषु*परदारेषुब्राह्मणा* ज्जातौब्राह्मणौकुण्डगोलकौवर्ज्योः ॥ २ ॥ १७४ ॥ तत्रहव्यकव्यदाने *विशेषफलस्य चाह*तौतुजातावित्यादि ॥ १ ॥ १७५ ॥

**तौतुजातौपरक्षेत्रे प्राणिनौप्रेत्यचेहच। दत्तानिहव्यकव्यानिनाशयेतेप्रदायिनाम्॥१७५**

तौकुण्डगोलकौहव्य*कव्यानियं सुदत्तानि* तेषांहव्यकव्यप्रदायिनांप्रेत्य * चेहचफलतोनाशयेते ॥ १७५ ॥ तर्हिचापाङ्क्तागोभोदत्तानि*हव्यकव्यानिचेत्तदाकिंस्यादित्यत*आह अपाङ्क्तइत्यादि ॥ १ ॥ १७६ ॥

**अपाङ्क्त्योयावतःपाङ्क्त्यान्भुञ्जानाननुपश्यति। तावतांनफलंतत्रदाताप्राप्नोतिबालिशः॥१७**

अपाङ्क्त्योब्राह्मणस्तत्र*भुञ्जानोऽथवानभुञ्जान*यावतःपाङ्क्त्यान्भुञ्जानान्संपश्यतोऽनुपश्यति॥१॥ तावतांपाङ्क्त्यानांतद्भोजनफलं* बालिशोमूर्खोदातान * तस्मात्तद्दानेनाप्नोति ॥ २ ॥ १७६ ॥ तत्रापाङ्क्तावि शेषस्य*दर्शनेफलमाह*वीक्ष्यान्धइत्यादिश्लोकं ॥ १ ॥ १७७ ॥

**वीक्ष्यान्धोनवतेःकाणःषष्टेःश्वित्रीशतस्यतु। पापरोगीसहस्रस्यदातुर्नाशयतेफलम्॥१७७**

अपाङ्क्तोह्यन्धोब्राह्मणःपाङ्क्त्यानांश्राद्धेभुञ्जानानांनवतेः*फलंदातुर्नाशयते ॥१॥ ईक्षणमन्धस्यदर्शनासम्भ वात्*पारिभाषिकोऽत्रापित * स्तत्साहचर्यात्काणस्य ॥ २ ॥ काणःपाङ्क्त्यानांभुञ्जानानां षष्टेःफलंदातुर्ना शयतेइत्येवंकश्चिद्व्याचष्टे॥३॥ श्रुतिस्मृतिहीनोब्राह्मणोऽन्धःकाण*स्त्वन्यतरहीनउक्तः*स्वसंहितायामत्रिणा॥४॥ श्रुतिःस्मृतिश्चविप्राणांनयनेद्वेप्रकीर्त्तिते। काणःस्यादेकहीनस्तुद्वाभ्यामन्धःप्रकीर्त्तितः॥इति॥५॥ श्वित्रिपाङ्क्त्या नांभुञ्जानानांशतस्य * फलंदातुर्नाशयते ॥ ६ ॥ कुष्ठादिपापरोगीतु* पाङ्क्त्यानांसहस्रस्यतु * फलंदा तुर्नाशयते ॥ * ॥ १७७ ॥ श्राद्धेपाङ्क्त्याभोभोजनं*दानप्रसङ्गादपाङ्क्त्य*स्पृष्टब्राह्मणभोदानफलमाह* यावतइत्यादिश्लोकम् ॥ १७८ ॥

**यावतःसंस्पृशेदङ्गैर्ब्राह्मणान्शूद्रयाजकः। तावतांनभवेद्दातुःफलंदानस्यपौर्त्तिकम्॥१७८**

शूद्रयाजकोब्राह्मणो*पाङ्क्त्यान्यावतोब्राह्मणा*नङ्गैःस्पृशेत्तावतांब्राह्मणानां*पूर्त्तस्यदानस्यपौर्त्तिकं*फलं दातुर्नभवेत् ॥ १ ॥ पूर्त्तशब्दमत्रिणायथा*वापीकूपतडागादिदेवतायतनानिच *अन्नप्रदानमारामाःपूर्त्तमित्यभि धीयते ॥ २ ॥ इति ॥ १७८ ॥ वेदविदित्यादि ॥ १७८ ॥

वेदविद्यापिविप्रोऽस्यलोभात्कृत्वाप्रतिग्रहम्। विनाशंव्रजतिक्षिप्रमामपात्रमिवाम्भसि॥१७९॥

अस्यां दुर्याजकस्य*प्रतिग्रहं कृत्वावेद*विद्यापिविप्रःक्षिप्रं विनाशं याति*यथाऽऽमपात्र*मम्भसिविनाशं याति॥१॥१७९॥ प्रसङ्गाच्च दुर्याजकस्यदोष*उक्त्वाप्रकृतार्थं पुन*राहसोमेत्यादिश्लोकम्॥१॥१८०॥

सोमविक्रयिणेविष्ठाभिषजेपूयशोणितम्। नष्टंदेवलकेदत्तमप्रतिष्ठन्तुवार्द्धुषौ॥१८०॥

सोमविक्रयिणे दत्तं*हव्यकव्यं विष्ठेवस्यात्*भिषजे चायम्माचिकित्सां कुर्व्वते*ब्राह्मणायदत्तं हव्य*कव्यं पूयशोणितमिवस्यात्॥१॥ देवलकेदत्तं हव्य* कव्यं नष्टं भवतिवार्द्धुषौदत्तं* हव्यकव्यमप्रतिष्ठं* असम्पूर्णं भवति॥२॥१८०॥ यत्त्वित्यादि॥१८१॥

यत्तुवाणिजकेदत्तंनेहनामुत्रतद्भवेत्। भस्मनी[illegible]द्विजे॥१८१॥

वाणिजकेवाणिजकद्ब्राह्मणे*दत्तं हव्यकव्यं नेहन तु परत्र [illegible] भवति।१। पौनर्भवेद्विजे[illegible]दत्तं*हव्यं कव्यं चभस्मनि*हुतं हव्यमिवभवतिनोपकारकम्॥१८१॥ *इतरेष्वित्यादि॥१८२॥ ॥ मन्वतर्हि

इतरेषुत्वपाङ्क्तेषु यथोद्दिष्टेष्वसाधुषु। मेदोऽसृङ्मांसमज्जास्थिवदन्त्यन्नंमनीषिणः॥१८२॥

उक्तेभ्यइतरेषु पाङ्क्तोद्दिष्टे*ष्वसाधुब्राह्मणेषु श्राद्धेदत्तमन्नंमेदोमांसपितरःपूर्वदेवताः॥१८२॥ ॥१॥१८२॥ ननुयदिश्राद्धे कश्चित्*पङ्क्तिदूषकोब्राह्मणो* भुङ्क्ते कश्चित्पङ्क्तिपावनेनसभुङ्क्ते* तत्किं श्राद्धं विफलं*स्यादित्यत्रआहापाङ्क्त्येत्यादि।१।१८३।

अपाङ्क्त्योपहतापङ्क्तिःपाव्यतेयैर्द्विजोत्तमैः। तान्निबोधतकार्त्स्न्येनद्विजाग्र्यान्पङ्क्तिपावनान्॥१८३॥

एकपङ्क्तौश्राद्धेऽपाङ्क्त्येनासीनेन*भोजमानेनोपहता*पङ्क्तिर्यैर्ब्राह्मणैःपाव्यतेतान्द्विजान्*कार्त्स्न्येन निबोधत।१।१८३। तान्पङ्क्तिपावनान्ब्राह्मणानाह*अग्र्याःसर्व्वेष्वित्यादि।१।१८४।

अग्र्याःसर्व्वेषुवेदेषुसर्व्वप्रवचनेषुच। श्रोत्रियान्वयजाश्चैवविज्ञेयाःपङ्क्तिपावनाः॥१८४॥

तेब्राह्मणाःसर्व्वेषुवेदेषुसर्व्व* प्रवचनेषुसर्व्व* व्याख्यानेषुचाग्र्याः*श्रेष्ठाःसन्तिश्रोत्रियान्वयेजाताःतेऽ ।१। तेब्राह्मणाःपङ्क्तिपावनाविज्ञेयाः*पङ्क्तिदूषकसहित*भोजनेपङ्क्तिदोषघ्नाः।२ अत्रियाचोक्तंतदुक्तं या*अथचेन्मन्त्रविद्युक्तःशारीरैःपङ्क्तिदूषणैः। अदूष्यंतंयमःप्राहपङ्क्तिपावनएवसः।इति।२।१८४। अपरंपङ्क्तिपावनलक्षणमाह*त्रिणाचिकेतेत्यादि।१।१८५।

त्रिणाचिकेतःपञ्चाग्निस्त्रिसुपर्णःषडङ्गवित्। ब्राह्मदेयात्मसन्तानोज्येष्ठसामगएवच॥१८५॥

**निमन्त्रितान्हि पितर उपतिष्ठन्ति तान्द्विजान्। वायुवच्चानुगच्छन्ति तथासीनानुपासते॥१८९॥**

हि यस्मात् पित्र्ये निमन्त्रितांस्तान्द्विजान्*पितर उपतिष्ठन्ति ॥ १ ॥ उपतिष्ठन्तश्च पितरो* निमन्त्रितांस्ता न्ब्राह्मणान्*गच्छतो वायुवदनुगच्छन्ति*तथासीनांस्तान्ब्राह्मणान्*उपसमीपमासते ॥ २ ॥ १८९ ॥ ननु यदि ब्राह्मणः*श्राद्धे भुङ्क्ते तदा किं स्यादित्यत आह केतित इत्यादि ॥ १ ॥ १९० ॥

**केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः। कथञ्चिदप्यतिक्रामन्पापः शूकरतां व्रजेत्॥१९०॥**

केतितस्तु पूर्व्वेद्युरपरेद्युर्वा*श्राद्धे भोजनार्थं यः केतितः स तु *द्विजोत्तमः कथञ्चिच्च *तद्भोजनमतिक्रामेत् ॥ १॥ ततः स तदा पापः सन्*मृतः पुनर्जन्मनि तु *शूकरतां व्रजेदिति ॥ २ ॥ १९० ॥ ननु नियतात्केतितश्चेत्तत्र*स्त्रीसम्भोगे किं स्यादित्यत*आह निमन्त्रित इत्यादि ॥ १ ॥ १९१ ॥

**निमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते। दातुर्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते॥१९१॥**

वृषल्येत्यतिशय*दोषख्यापनार्थमुक्तं*तेनोपलक्षणात्स्त्रि*यैतिवेदितव्यं स्यात् ॥ १ ॥ १९१ ॥ ननु तर्हि पितरश्चे*त्तानुगच्छतोऽनुगच्छन्ति*तानासीनानुपासते ॥ १ ॥ ते कस्मादेतानिमन्त्रितान् * न वहन्त्यरित्यत आह*क्रोधनादित्यादि ॥ २ ॥ १९२ ॥

**अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः। न्यस्तशस्त्रा महाभागाः पितरः पूर्व्वदेवताः॥१९२॥**

पितरो हि पूर्व्वदेवता*न यः श्राद्धं करोतीति तस्य *पित्रादयः केऽपि ॥ १ ॥ ते चाक्रोधना न्यस्तशस्त्राः*कथं क्रोधं हिंसतः*दातुः पापं प्रपद्यते ॥ २ ॥ ते हि शौचपराः सततं *ब्रह्मचारिणो महाभागा * स्तेषां समीपे वर्त्तमाना* दातुः कर्त्तव्यश्राद्धं नश्येत् ॥ ३ ॥ तच्छ्राद्धविनाशे दातु*र्यत्पापं तत्ते ब्राह्मणाः * स्वकृतदोषात्प्रतिपद्यन्त इति ॥४ ॥ १९२ ॥ ननु पितरः पूर्व्वदेवता इति * यदुक्तं तत्कथमुपपद्यते * मनुष्याणां पितर इति*तत्र हि यस्मा दित्यादि ॥ १ ॥

**यस्मादुत्पत्तिरेतेषां सर्व्वेषामप्यशेषतः। ये च यैरुपचर्य्याः स्युर्नियमैस्तान्निबोधत ॥१९३॥**

एतेषां सर्व्वेषां पितॄणां *यस्मादयं सोत्पत्तिर्ये च*यैर्नियमैरुपचर्य्याः * स्तानशेषतो निबोधत॥१॥१९३॥ मनोरित्यादि ॥ १९४ ॥

**मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः। तेषामृषीणां सर्व्वेषां पुत्राः पितृगणाः स्मृताः॥१९४॥**

हैरण्यगर्भस्य स्वायम्भुवस्य * मनोः सुता ये मरीच्यादयस्तेषा * मृषीणां पुत्राः सर्व्वेषां *पितृगणाः सर्व्वे स्मृताः ॥ १ ॥ १९४ ॥ ननु के ते पितृगणा इत्यत*आह विराट् सुता इत्यादि ॥ १ ॥ १९५ ॥

**विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः। अग्निष्वात्ताश्च देवानां मारीचा लोकविश्रुताः॥१९५॥**

ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः । देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः॥२०१॥

स्थावरोऽयं । २०१ । राजतैरित्यादि । २०२ ।

राजतैर्भाजनैरेषामथवा राजतान्वितैः । वार्यपि श्रद्धया दत्तमक्षयायोपकल्पते ॥ २०२ ॥

एषां पितृणामन्नवारिच* राजतैर्भाजनैः राजत* युक्तैर्वाभाजनैः श्रद्धया * दत्तमक्षयाय स्यात् ॥ १ ॥ नचैतावतानान्यपात्र * प्रतिषिध्यते विशिष्ट * फलत्वात् विशेषणामम् ॥ १ । ० ॥ २०२ । ० ॥ दैवेत्यादि ॥ २०३ ॥

दैवकार्याद्द्विजातीनां पितृकार्यं विशिष्यते । दैवं हि पितृकार्यस्य पूर्वमाप्यायनं स्मृतम्॥२०३

द्विजातीनां पितृकार्यं *दैवकार्याद्विशिष्ट स्यात्* हियस्माद्दैवं कार्यं पितृकार्यस्य * पूर्वमाप्यायनं पुष्टि* करणं स्यादितिस्मृतम् ॥ १ । ० । २०३ । ० ॥ ननुकिमर्थं पूर्वं * दैवं कुर्यादित्यत*आह तेषामित्यादि । १ । । ० । २०४ ।

तेषामारक्षभूतन्तु पूर्वं दैवं नियोजयेत् । रक्षांसि हि विलुम्पन्ति श्राद्धमारक्षवर्जितम्॥ २०४॥

तेषां पितृकार्याणां*मारक्षभूतं दैवं *तत्पूर्वं नियोजयेत् । १ । कस्माद्धियस्मादारक्ष* वर्जितं श्राद्धं रक्षांसि* विलुम्पन्ति लुप्तं कुर्वन्ति । २ । ० । २०४ । ननु तर्हि किं पित्र्याणां* मारक्षभूतं दैवं * पूर्वमेव कर्तव्यमिति न्नेत्यत * आह दैवाद्यन्तमित्यादि । १ ।

दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत् । पित्राद्यन्तं त्वीहमानः क्षिप्रं नश्यति सान्वयः॥२०५

दैवकर्माद्यन्तयोर्यस्य तत् * पित्र्यब्राह्मणनिमन्त्रणात्पूर्वं दैवब्राह्मणनिमन्त्रणं कुर्यात् । २ । तथापित्र्यार्चनात्पूर्वं दैवब्राह्मणार्चनं कुर्यात्तथा*पितृणामन्नादिदानात्* पूर्वं देवानामन्नादिदानं कुर्यात् । २ । विसर्जनन्तु देवानां * पितृविसर्जनसमान्ते * कुर्यादितिवं दैवाद्यन्तं * तच्छ्राद्धं कर्तुमीहेत ॥ ४ ॥ देवलेनाप्युक्तं *यत्तत्क्रियते कर्म्म*पैतृके ब्राह्मणान्प्रति । तत्सर्वं तत्रकर्त्तव्यं वैश्वदेविकपूर्वकमिति ॥ ५ ॥ नतु पित्राद्यन्तं तच्छ्राद्धं भवेत् * पित्राद्यन्तश्राद्धदोष * माह पित्र्येत्यादि ॥ ६ ॥ पित्राद्यन्तं श्राद्धमीहमानः क्षिप्रं * सान्वयो नश्यतीति ॥ ७ ॥ २०५ ॥ शुचिमित्यादि ॥ २०६ ॥

शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् । दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥ २०६ ॥

विविक्तं निर्जनमपाङ्क्तेयादादृश्य*जनहीनं शुचिं देशं*नखादामेध्यरहितं *देशं गोमयेनोपलेपयेत् ॥ १ ॥ तं देशं दक्षिणाप्रवणमेवच*प्रयत्नेनोपपादयेत्* स्रोपवेशनस्थानतो* दक्षिणस्यां दिशियथा*जलादिकं प्रयाति ॥ २ ॥ तत्र वावनतं कुर्यात्* न्नतयनब्राह्मणाउपविष्टाःस्तत्रावनतं विदध्यात् ॥ ३ ॥ २०६ ॥ ननुकिमर्थं मीदृशं *स्थानमुपपादयेदित्यत*आह*वकाशेष्वित्यादिश्लोकम् ॥ १ ॥ २०७ ॥

अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥ २०७ ॥

अवकाशेषु बह्ववकाशभाग* युक्तेषु चोक्षेषु स्वभावादेव* शुचिषु वनादिषु प्रदेशेषु ॥ १ ॥ तथा नदीतीरेषु च विविक्तेषु* दत्तेनान्नादिना सदा* पितरो गणास्तुष्यन्ति ॥ २ ॥ २०७ ॥ आसनेष्वित्यादि ॥ २०८ ॥

आसनेषूपकॢप्तेषु बर्हिष्मत्सु पृथक्पृथक् । उपस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् ॥ २०८ ॥

अथ तत्र ब्राह्मणाना* उपवेशनार्थं पृथक* पृथगुपकॢप्तेष्वासनेषु बर्हि *मत्सु तत्र विश्वदेवा* समीदं प्राङ् मुखं न्यस्येत् ॥ १ ॥ तत पश्चिमायां दिशि* कुशौ विन्यस्य देवासि* त्रकमथ पित्र्यासने* षु एकैकं कुशं दक्षिणाग्रं* विन्यस्यति सोदकेन प्रोक्षयेत् ॥ २ ॥ एवमेव देवलेनोक्तं तद्यथा* दैवात्मविश्वदेवाना* विप्राः पूर्वं निमन्त्रिताः । प्राङ्मुखा न्यासनान्येषां त्रिदर्भोपहितानि च ॥ ३ ॥ दक्षिणामुखयुक्तानि पितॄणामासनानि च । दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥ ४ ॥ इति ॥ तेष्वासनेषु तान् निमन्त्रितान् विप्रान्* उपस्पृष्टोदकान् सम्यक्* आचमनं कृतवत* उपवेशयेदिति ॥ ५ ॥ २०८ ॥ उपवेश्येत्यादि ॥ २०९ ॥

उपवेश्य तु तान्विप्रानासनेष्वजुगुप्सितान् । गन्धमाल्यैः सुरभिभिरर्च्चयेद्दैवपूर्व्वकम् ॥ २०९ ॥

अजुगुप्सितांस्तान् विप्रा* नासनेषूपवेश्य तु* गन्धैर्भिर्गन्धमाल्यैः पुष्पमाल्यैः* दैवपूर्व्वकं पाद्यादिभिरर्च्चयेत् ॥ १ ॥ २०९ ॥ तेषामित्यादि ॥ २१० ॥

तेषामुदकमानीय सपवित्रांस्तिलानपि । अग्नौ कुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह ॥ २१० ॥

तेषां दैवपूर्व्वकं दत्ताघार्घ्या* मर्घ्योदकमानीय सपवित्रा* स्तिलांश्चानीय संमिश्रितं कृत्वा ॥ १ ॥ तैर्निमन्त्रितैर्ब्राह्मणैः* सह आज्ञया ब्राह्मणः* स्वगृह्योक्तानुसारेण ॥ २ ॥ अग्नौ करवाणीत्येवं* प्रार्थितेन त्वं जानीहि* ष्वेतैरनुज्ञातोऽग्नौ* वक्ष्यमाणविधानेन होमं कुर्य्यात् ॥ ३ ॥ २१० ॥ अग्नेरित्यादि ॥ २११ ॥

अग्नेः सोमयमाभ्यां च कृत्वाप्यायनमादितः । हविर्दानेन विधिवत्पश्चात्सन्तर्पयेत्पितॄन् ॥ २११ ॥

ततः परमादितः सोमयमाभ्यां *सहाग्नेर्विधिवत्पर्युक्षणादिकं *कृत्वा हविर्दानेनाप्यायनं कृत्वा ॥ १ ॥ पश्चादन्न*पानादिभिः*पितॄन्सन्त * र्पयेदिति ॥ २ ॥ २११ ॥ नन्वेवमग्निमत एव श्राद्धं * कर्त्तुरग्नौकरणं सम्भवति* निरग्निस्तु कथमग्नौ*करणं कुर्य्यादित्यत*आह अग्न्यभावे त्वित्यादि ॥ २१२ ॥

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् । यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ॥ २१२ ॥

आहिताग्न्यभावे तु*तस्य कस्यचिद्विप्रस्य* पाणौ तदग्नौकरणं * माङ्गतित्वयतुपपादयेदेव ॥ १ ॥ कस्मादग्न्यभावे विप्रपाणा * वित्यत आह योहीत्यादि ॥१॥ य एवाग्निः स एव द्विज * इति मन्त्रदर्शिभिर्विप्रैः * सर्व्वैरेवोच्यते ॥ २ ॥ २१२ ॥

सर्व्वमन्नं सव्यञ्जनं नातोष्णं स्यात् * तेषु ब्राह्मणा वाग्यताः * सन्तस्तदन्नं भुञ्जीरन् । १ । दातारश्चैव नान् पृष्टा भुञ्जाना * ब्राह्मणा हविर्गुणान् स्वा * इदं स्वादु भावान् न ब्रूयुः । २ । २३६ । किमर्थं नातोष्णमित्य मित्यत * आह यावदित्यादिकम् । १ । २३७ ।

यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ २३७ ॥

यद्धि सर्व्वमन्नं सव्यञ्जनमेव * यावत्कालं नातोष्णं वर्त्तते याव * द्ब्राह्मणा वाग्यता मौनाः सन्तोऽश्नन्ति । १ । यावच्चैव ब्राह्मणैस्तु * हविर्गुणा उक्ता न स्युः * तावत्पितरस्तदश्नन्ति * तेषां विमाणां मुखेन । २ । २३७ । यद्वे ष्टिताह । २३८ ।

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः । सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥ २३८ ॥

वस्त्रादिना वेष्टितशिराः सन् श्राद्धे * यद्भुङ्क्ते दक्षिणामुखः * सन् यद्भुङ्क्ते यदपि * सोपानत्को भुङ्क्ते तथा * तदन्नं रक्षांसि भुञ्जते । १ । २३८ । चाण्डालश्चेत्यादि । २३९ ।

चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च । रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान् ॥ २३९ ॥

श्राद्धेऽश्नतो ब्राह्मणान् चाण्डालादयो * यथा न पश्येरंस्तथैव * विविक्ते श्राद्धं कुर्व्वीत । १ । २३९ । कस्मादेव * मित्यत आह * होम इत्यादि श्लोकं । १ । २४० ।

होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते । दैवे कर्म्मणि पित्र्ये वा तद्गच्छत्ययथातथम् ॥ २४० ॥

एभिश्चाण्डालादिभिर्होमादौ यदभि * वीक्ष्यते तदयथा * तथं गच्छतीति ॥ १ । २४० । कथमित्यत * आह घ्राणेनेत्या * दिकश्लोकं । १ । २४१ ।

घ्राणेन सूकरो हन्ति पक्षवातेन कुक्कुटः । श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः ॥ २४१ ॥

अवरवर्णजश्चाण्डा * लादिः सर्व्व एव शूद्र * धर्म्मास्पर्शेन तद्घ्नन्ति । १ । २४१ । खञ्ज इत्यादि । २४२ ।

खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत् । हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः ॥ २४२ ॥

दातुः प्रेष्योऽन्यो वा यदि * खञ्जः काणो वा वर्त्तते * हीनातिरिक्तगात्रो वा * वर्त्तते तदा तं ततः * श्राद्धस्थानादपनयेत् । २४२ । ब्राह्मणमित्यादि । २४३ ।

ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितम् । ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् ॥ २४३ ॥

श्राद्धकाले भोजनार्थं * ब्राह्मणोऽन्यो भिक्षुको वा * यद्युपस्थितो भवति । १ । तदा श्राद्धे भुञ्जानैः * ब्राह्मणैः

मीत्यभिरम्यतामिति तज्जानीयात्*प्रत्याचमनं कुर्यात् ॥ २ ॥ २५१ ॥ततो ब्राह्मणायदन्नं तु * स्तदा स्वधास्त्विति व
ब्रूयुरित्यादिकं ॥ १ ॥ २५२ ॥

**स्वधास्त्विति वक्तव्यं ब्रूयुर्ब्राह्मणास्तदनन्तरम्। स्वधाकारः परा ह्याशीः सर्व्वेषु पितृकर्म्मसु ॥२५२॥**

भुक्तवन्तस्तृप्तास्ते ब्राह्मणाः भुक्तवन्तं तं जनं स्वधास्त्विति वद ब्रूयुः * कस्मात् स्वधेति ब्रूयुरिति तत्राह ॥ १ ॥
सर्व्वेषु पितृकर्म्मसु*हि यस्मात्परा श्रेष्ठा आशीः * स्वधाकारो वेदे प्रोक्तः ॥ २ ॥ २५२ स्वधाकारानन्तरं यत्कर्त्तव्यं तदाह
ततइत्यादि ॥ १ ॥ २५३ ॥

**ततो भुक्तवतां तेषामन्नशेषं निवेदयेत्। यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्ततो द्विजैः ॥ २५३ ॥**

ततः स्वधावाचनानन्तरं तेषां * भुक्तवतां ब्राह्मणानां * शेषमन्नमस्तीति वं * निवेदयेच्छ्राद्धकृत ॥ १ ॥
ततोऽनन्तरं तैर्द्विजैर्यथा ब्रूयुः*तैरनुज्ञातः सं स्तथा कुर्यात् ॥ २ ॥ २५३ ॥ प्रसङ्गादन्यदपि यत्कर्त्तव्यं त*दाह पित्र्य
इत्यादि ॥ १ ॥ २५४ ॥

**पित्र्ये स्वदितमित्येव वाच्यं गोष्ठेषु सुश्रुतम। सम्पन्नमित्यभ्युदये दैवे रुचितमित्यपि॥२५४॥**

पित्र्ये पितृपक्षे मातामहपक्षे *स्वदितमित्येव वाच्यं * नतु निरपेक्षपित्र* मातृदेवताकएकोद्दिष्टश्राद्धे इत्य
र्थः ॥ १ ॥ इहपार्व्वणश्राद्धेहि*स्वदितमित्येव इष्टं *तत्र नास्ति ह्यत्र निरपेक्षत्वं ॥ २ ॥ गोष्ठे गोष्ठिनां श्राद्धे
सुश्रुतमित्येव * वाच्यं सम्पन्नमित्याभ्यु* दयिके श्राद्धे वाच्यं स्यात् ॥ ३ ॥ दैवे श्राद्धे दैवपक्षे रुचित * मित्येव
वाच्यं भवति ॥ ४ ॥ २५४ ॥ अथश्राद्धादिसम्पदश्चाहापरा*ह्नस्तथादर्भ इत्यादि॥ १ ॥२५५॥

**अपराह्नस्तथा दर्भा वास्तुसम्पादनं तिलाः। सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्म्मसु सम्पदः॥२५५**

अपराह्णो दिवसस्य* त्रिधा विभक्तस्य यस्तृतीयो भागो*दर्भाः कुशा वास्तुसम्पादनमिति* विविक्तशुचिप्रदेशः॥ १ ॥
तिलाः साधवः सृष्टिः श्राद्धद्रव्य*दानेषु कार्पण्यत्यागशीलता * मृष्टिरन्नादिशुद्धता * ब्राह्मणाः पङ्क्तिपावनाः ॥
॥ २५५ ॥ दर्भा इत्यादि ॥२५६ ॥

**दर्भाः पवित्रं पूर्व्वाह्णो हविष्याणि च सर्व्वशः। पवित्रं यच्च पूर्व्वोक्तं विज्ञेया हव्यसम्पदः ॥ २५६॥**

दर्भाः कुशाः पवित्रं मेध्यं पूर्व्वाह्णः*कालो हविष्याण्यन्नानि पानानि च *यच्च पूर्व्वोक्तं पवित्रं *कृतपादित्यसर्व्वं *ह
व्यसम्पदो विज्ञेयाः ॥ १ ॥ २५६ ॥

**मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥ २५७॥**

मुन्यन्नानीत्यादि ॥ २५७ ॥ मुनीनामन्नानि शालियवादीनि*पयो गव्यादि दुग्धं सोमश्चोषधि* विशेषो यच्च मां
सम् * अनुपस्कृतमविकृतं ॥ अक्षारलवणं क्षार*वर्ज्जं सैन्धवादिकं तत्*सर्व्वं प्रकृत्या हविरुच्यते तज्ज्ञैः ॥ २॥२५७॥
ततो यत्कर्त्तव्यं तदाह विसृज्य *ब्राह्मणांस्तानित्यादि ॥ १ ॥ २५८ ॥

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः। दक्षिणां दिशमाकाङ्क्षन्याचेतेमान्वरान्पितॄन्॥ २५८॥

श्राद्धकर्त्ता ब्राह्मणांस्तु * विसृज्य पूर्वं पितृपक्षब्राह्मणान् * विसृज्य ततो दैवपक्ष * ब्राह्मणान्विसृज्य पश्चात् ॥ १

ततः शुचिर्नियतो वाग्यतः सन् * दक्षिणां दिशं पितॄनिमान्वरा * नाकाङ्क्षन्याचेत ॥ २ ॥ २५८ ॥

दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्विति॥ २५९॥

वरानाह दातार इत्यादि ॥ २५९ ॥ सन्ततिः पुत्रपौत्रादिसन्तानः * श्रद्धा पितृदेवतादिषु ॥ १ ॥ २५९ ॥

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम्। गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत्॥ २६०॥

एवमित्यादि ॥ २६० ॥ स्पष्टार्थोऽयं श्लोकः। २६० ॥

पिण्डनिर्वपणं केचित्परस्तादेव कुर्वते। वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु वा॥ २६१॥

पिण्डेत्यादि ॥ २६१ ॥ केचिन्महर्षयो विश्वामित्रादयः पिण्ड * निर्वपणं पिण्डदानं * परस्ताद् ब्राह्मणभोजनादनन्तरं * कुर्वन्ति कुर्वते ॥ १ ॥ पिण्डाग्रभागं च्युते * तान्ब्राह्मणान्प्राशयेयुः * अन्ये पिण्डान्वयोभिः खादयन्ति * अन्येऽनलेऽप्सु वा क्षिपन्ति ॥ २ ॥ २६१ ॥

पतिव्रता धर्मपत्नी पितृपूजनतत्परा। मध्यमन्तु ततः पिण्डमद्यात्सम्यक्सुतार्थिनी। २६२।

पतिव्रतेत्यादि ॥ २६२ ॥ पतिव्रता धर्मपत्नी * पितृपूजनतत्परा * या नारी सुतार्थिनी स्यात् * सा ततो मध्यमं पिण्डमद्यात् ॥ १ ॥ २६२ ॥ तत्पिण्डाशने तस्याः पुत्रः स्यात् * तथा स्पष्टमाहायुरित्यादि ॥ १ ॥ २६३ ॥

आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्। धनवन्तं प्रजावन्तं सात्त्विकं धार्मिकं तथा॥ २६३॥

आयुष्मन्तमित्यादिः स्पष्टार्थकः ॥ २६३ ॥ श्राद्धावसाने यत्कुर्याच्चदाह * प्रक्षाल्य हस्तावित्यादि। १। २६४।

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत्। ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि भोजयेत्॥ २६४॥

हस्तौ प्रक्षाल्य ज्ञातिप्रायं प्रकल्पयेत् * ज्ञातिबहुलं जनं भोजनार्थं प्र* कल्पयेत् तत्र ज्ञातिभ्यः * सत्कृतं धनं दद्यात्। १।

दत्त्वा बान्धवान् सम्भोजयेत् * ज्ञातिभ्यः सत्कारं धनं दद्यात् * भोजयेदित्यादिरिति। २। २६४।

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः। ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः॥ २६५

उच्छेषणमित्यादि। २६५। यावत्कालं ब्राह्मणा विसर्जिताः स्युः * तावदुच्छेषणमुच्छिष्टं तिष्ठेत् * ततो गृहबलिं वैश्व * देवकर्मादिकं कुर्यात्। १। श्राद्धभुग्ब्राह्मणविसर्जनात्परं * तदुच्छिष्टं मार्जयित्वा * श्राद्धार्थं पक्वमन्नादि * यदवशिष्यते तद् * ज्ञातिबान्धवान् भोजयेत् ॥ २ ॥ श्राद्धार्थं यत्पृथक्पक्व * मन्नादि तन्नवै * वेत्

...तिथिसपिवारादिकानां *भोजनं निर्वर्तयेत्* तथोक्तं मत्स्यपुराणे ॥ ३ ॥ निर्वर्त्य प्रणिपत्याग्रयुक्तः ...वित् । वैश्वदेवं प्रकुर्वीत तनं तां विधिमेव च ॥ इति ॥ ४ ॥ २६५ ॥ अथ श्राद्धे दत्तद्रव्यविशेषाणां *तृप्तिकाल*विशेषं वक्तुं प्रतिजानीते हविरित्यादिश्लोकेन । १ ॥

हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते । पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः ॥ २६६ ॥

स्पष्टार्थोऽयं श्लोकः ॥ २६६ ॥

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा । दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥ २६७ ॥

तिलैरित्यादि । २६७ । तिलादीनामन्यतमेन श्राद्धे विधिवद्दत्तेन नृणां पितरो* मासं व्याप्य प्रीयन्ते । १ । २६७

द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु । औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ २६८ ॥

द्वावित्यादि । २६८ । मत्स्यानां मांसादनेन मांसेन श्राद्धे *विधिवद्दत्तेन नृणां* पितरो द्वौ मासौ प्रीयन्ते । १ । कश्चित्प्रमादो वाचष्टे *पाठीनादिमत्स्यानां मांसेनेति* तदसाधु मत्स्येनेत्युक्ते वतत्सिद्धेः* मांसवचनानर्थकात् ॥ २ ॥ हारिणेन मांसेन* श्राद्धे विधिवद्दत्तेन* नृणां पितरस्त्रीन्मासान्* व्याप्य प्रीयन्ते इत्यादि* मांसविशेषस्य फलम् । ३ ॥ औरभ्रेणमेषस्य मांसेन श्राद्धे *विधिवद्दत्तेन नृणां *पितरश्चतुरो मासान्* शाकुनेन पक्षि*मांसेन पञ्च मासान् प्रीयन्ते । ४ २६८

षण्मासान् छागमांसेन पार्षतेन च सप्त वै । अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥ २६९ ॥

षण्मासानित्यादि ॥ पार्षतेन पृषतां च क्षुद्रहरिण*जातीनां मांसेन श्राद्धे *विधिवद्दत्तेन नृणां * पितरः सप्त मासान् वै प्रीयन्ते ॥ १॥ एणस्य कृष्णसारस्य* मांसेन श्राद्धे विधिवद्दत्तेन नृणां पितरोऽष्टावेव मासान् प्रीयन्ते ॥ २ ॥ रौरवेण रुरोर्विचित्रहरिणस्य * मांसेन श्राद्धे विधिव * द्दत्तेन नृणां पितरो * नवमासान् प्रीयन्ते ॥ ३ ॥ २६९ ॥

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः । शशककूर्म्म मांसेन मासानेकादशैव तु ॥ २७० ॥

दशेत्यादि ॥ २७० ॥ वराहमहिषयोरामिषैः * श्राद्धे विधिवद्दत्तैर्नृणां * पितरो दशमासान् * तृप्तिं गच्छन्ति ॥ १ ॥ शशकस्य कूर्म्मस्य च* मांसेन श्राद्धे विधिवद्दत्तेन * नृणां पितर एकादश* मासान् तृप्यन्ति ॥ २ ॥ २७०

संवत्सरं तु गव्येन पयसा पायसेन च । वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ २७१ ॥

संवत्सरमित्यादि ॥ २७१ ॥ गव्येन गोमांसेन पयसा च* गव्येन पायसेन च * श्राद्धे विधिवद्दत्तेन * नृणां पितरः संवत्सरं* तु कालं व्याप्य तृप्यन्ति ॥ १ ॥ वार्ध्रीणसस्य ...छागस्य* मांसेन पितॄणां तृप्तिं* द्वादशवार्षिकीं...

स्यात् ॥ ३ ॥ वार्ध्रीणसस्य चैतस्य निगमे* त्रिपिबन्त्विन्द्रियक्षीणं *श्वेतं वृद्धमजापतिम् । वार्ध्रीणसन्तु तं प्राहु*र्याज्ञिकाः पितृकर्मणि ॥ इति ॥ ४ ॥ २७१ ॥

कालशाकं महाशल्काः खड्गलोहामिषं मधु । आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः ॥ २७२ ॥

कालशाकमित्यादि ॥ २७२ ॥ कालशाकं सुशाकं *महाशल्काः इहच्छल्कमत्स्याः* खड्गो गण्डारो लोहश्च* लोहितवर्णश्छागलः ॥ १ ॥ उक्तं हि पैठीनसिना * छागेन सर्वलोहेन दत्तेनानन्त्यमश्नुते ॥ इति ॥ २ ॥ मधु क्षौद्रं सर्वमोचनान्नानि* शालिनीवारश्यामाकादीनि मुन्य * गर्मीधान्यादीनि चाहु * दत्तान्यानन्त्याय कल्प्यन्ते ॥ ३ ॥ २७२ ॥ अथ कालविशेषे श्राद्धदत्तानां *द्रव्याणां फलमाह*यत्किञ्चिदित्यादि ॥ २७३ ॥

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्याद्वर्षासु च मघासु च ॥ २७३ ॥

वर्षासु च मघासु चेति चकारौ *वितरेतरयोगार्थौ *न तु समुच्चयार्थकौ ॥ १ ॥ तेन ऋतुनक्षत्रतिथीनां परस्परच्छायायोगेन*मधुमिश्रितद्रव्यमात्रस्य श्राद्धे *दानमक्षयफलं स्यात् ॥ २ ॥ समुच्चये तु त्रयोदशीषु*वर्षासु च मघासु चेत्येव प्रयोगैर्विधिर्भवतीति न समुच्चयः ॥ ३ ॥ २७३ ॥ मघात्रयोदश्यां मधुमिश्रद्रव्यमात्रदानफलमुक्त्वा *गजच्छाया*योगे मधुघृताक्तस्य ॥ १ ॥ पायसस्य दानफलं *वक्तुं पितृगाथामाह*अपि नः स इत्यादि ॥ २ ॥ २७४ ॥

अपि नः स कुले जायाद्यो नो दद्यात्त्रयोदशीम् । पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥ २७४ ॥

प्रमादी त्वेवमाचष्टे पूर्वार्द्धेन मघा * युक्ता वर्षासु या त्रयोदशी सैव* पुनरत्र विवक्षिता* ग्रन्थवचनदर्शनात् ॥ १ ॥ तद्वचनं प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥ इति ॥ २ ॥ तत्र श्राद्धे न हि मधुना*युक्तद्रव्यमात्रं श्राद्धे *मधुहीनपायसेन च*श्राद्धं मघात्रयोदश्यां कार्यमुक्तं ॥ ३ ॥ इदन्तु मधुसर्पिर्भ्यां *युक्तपायसेन त्रयो*दश्यां गजच्छायायोगे श्राद्धस्य* विधायकवचनं * न मघात्रयोदश्यां ॥ ४ ॥ तत्र मधुयुक्तद्रव्यमात्रेण*श्राद्धं पूर्ववचनेन*सिद्धौ पौनरुक्त्यं हि स्यात् ॥ ५ ॥ गजच्छायायोगस्तु मघायां चन्द्रो*हस्तायां रविस्तदा त्रयोदश्यां * यदा वर्त्तेत तदा भवतीत्याह ॥ ६ ॥ तद्यथा ॥ नभस्यस्यापरे पक्षे मघास्थिन्दुः करे रविः । यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते ॥ इति ॥ अत्र करे हस्तानक्षत्रे रविः ॥ तथान्यत्र चोक्तं यथा *योगो मघात्रयोदश्यां *कुञ्जरच्छायसंज्ञितः । भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते ॥ इति ॥ ८ ॥ तत्र यदा पूर्वदिनेऽपराह्णे *मघायुक्तत्रयोदशी*न च हस्तायां रविः स्यात् ॥ ९ ॥ परदिने चापराह्णे *मघायुक्तत्रयोदशी*हस्तायां च रवि भवति*तदा पूर्वदिने मधु*मिश्रद्रव्येण मघाश्राद्धं कुर्यात् ॥ १० ॥ परदिने च मधुसर्पिर्भ्यां युक्तं *पायसं कुञ्जर*छायाश्राद्धे दद्यादिति ॥ ११ ॥ इदन्तु न युक्तं क्वचित्*प्रमादी दूषयति च*मघात्रयोदशीनिमित्तकश्राद्धे *कुञ्जरच्छाया*श्राद्धविधानमित्याह ॥ १२ ॥ तत्र मघात्रयोदशी*श्राद्धविधानाद्भिन्नं हि*कुञ्जरच्छायाश्राद्धविधा

मिद*मवगनाभिहित मध*सर्पियुक्तपायसेन। १३। अत्रपिण्डदानप्रतिषेधोज्येष्ठपुत्र* वतोदेवीपुराणे व*दुर्गा भक्तिप्रसङ्गेन*वतस्तद्वचनं यथा। १४। भौजङ्गीतिथिमासाद्यावच्चन्द्रार्कसङ्गमम्। तत्रापिमहतीपूजाकर्त्तव्या पितृदैवते। ऋते पिण्डप्रदानन्तुज्येष्ठपुत्रीविवर्ज्जयेत्। इति। १५। ननुगजच्छायायोगे * मघास्विन्दुरिति तथा*मघायां संस्थे चन्द्रमिनीतिपदं*वाच्यं सम्पूर्णे हिमघा*नक्षत्रं चन्द्रस्योभोगयम्। १६। पूर्व्ववचने मघास्वेति* सप्तमीनिर्द्देशेनख्यापितं*श्राद्धकालेत्वपराह्ने*मघास्थितिश्चेद्भवति। १७। तदामघात्रयोदश्यौ* भवतिनतुम वावुक्ता*त्रयोदशीमात्रमिति। १८। सत्यमेतन्नचखलु*श्राद्धकालःकेवलोह्यपराह्णःकिन्तर्हि पूर्व्वाह्णमध्याह्ना* वपराह्णस्तत्कालोमनुनापुराक्तो। १९। तथाश्राद्धस्यपूर्व्वाह्णादपराह्णोविशिष्यते। इति। तेनमध्याह्नपर्यन्तं* यदामघानक्षत्रं स्यात्। १२०। तदापिमघात्रयोदश्योस्यात्तत्र* मघाश्राद्धमपराह्णादल्पफल*मपिकर्त्तव्यमितितु* मनुनाख्यापितमेव। २१। तेनयदापूर्व्वाह्णपर्यन्तं मघा * स्थितरकोनहस्ता * यामपराह्णव्यापिनीतु* त्रयोदशीतदारवि*हस्तायां वैवर्त्तते। २२। तदागजच्छायायोगो*नभवतीत्यर्थ मघा* स्विन्दुरित्युक्तश्राद्ध* कालेमघास्थितार्थश्च। २३। यदिपूर्व्वाह्णमध्याह्णवामघाच*हस्तायामर्कस्तत्रयो*दशीचतदापराह्णादल्पफल* गजच्छायायोगोहिस्यात्। २४। त्रयोदशीमितिकालवचनत्वात्*कर्म्मणि च्छायायां द्वितीया। २५। प्रमादीत्वेहणापरो त्सवाद्याहारा*दीक्षिततमत्वत्रिवच्छायां वा*तन्नसाधुसूत्रविस्मरणात्। ॥ २६ ॥ २७४ ॥

**यद्यद्ददातिविधिवत्सम्यक्श्रद्धासमन्वितः। तत्तत्पितॄणां भवतिपरत्रानन्तमक्षयम् ॥२७५॥**

यद्यदितयादि ॥ २७५ ॥ सम्यक्श्रद्धयैवश्राद्धे*विहितमविहितञ्च* द्रव्यं पितॄणांयद्ददाति*तत्परत्रलोकेऽनन्त*मक्षयञ्चभवतीति ॥ १ ॥ २७५ ॥

**कृष्णपक्षे दशमयाद्यावर्जयित्वाचतुर्द्दशीम्। श्राद्धे प्रशस्तातिथयोयथैतानतथेतरः ॥ २७६॥**

कृष्णपक्षइत्यादि ॥ २७६ ॥ कृष्णपक्षे चतुर्द्दशीं वर्जयित्वा*यादशम्याद्यास्तिथय* स्ताःश्राद्धे यथैव*प्रशस्तास्तथे तरा:*कृष्णपक्षे तिथयःखाः ॥ १॥ननुकापुनस्तिथिरुच्यतेइति*तत्रोच्यतेचन्द्रस्ययाः*षोडशकलास्ताएव* वृद्धिक्षयाभ्यां निर्दिष्टः* तिथयोभवन्तीत्यर्थः ॥ २॥ प्रभासखण्डे यथा ॥ अमेन्दोःषोडशोभागोदेविप्रोक्तामहाकला। संस्थितापरमामायादेहिनां देहधारिणी। अमादिपौर्णमास्यान्तायाएवशशिनःकलाः। तिथयस्ताःसमाख्याता षोडशैववरानने ॥ इति ॥ इन्दोर्याषोडशभागैकभागःसा* खलुमानामसहाकलानित्या वा*सतरू मसहामायाविव भूव ॥ १ ॥यानिविद्याविद्यात्मकानिपञ्चचा*सतानितद्वन्तर्येपञ्चैवब्रह्मस्वरूपाः॥२॥ऋगतिद्यजुर्वेदसामवेदा* अन्वेदवेदान्तरूपसदा*शिवाख्यास्तेरजस्थातउच्यन्ते ॥३॥ते वै धावै धकर्म्मभि*र्लोकेदिष्टरूपेणैव*परिणामभूतास्तितु वसन्ते ॥४॥लोकेकृतकर्म्मणोऽविरतं लोका*म्रियन्तेजायन्तेच* येम्रियन्तेतेषां देहात्*दिष्टपुरुषोभास्वर*रूपः सन्नेवोत्तिष्ठते ॥ ५ ॥ सधूमादिक्रमेणचान्द्रमसं*लोकं गत्वाव्रतं भूत्वा*तस्याममायां कलायां *संयुज्यमानं चन्द्रस्य*पञ्चदशकलाःक्रमात्पुष्टाः ॥ ६ ॥ इतरेवममादिपौर्ण * मासान्ताःषोडशकलाः * स्ताभ्यां क्षीणायाश्चमायाः*प्रतीपगविपरीतां वृद्धिं * यत्प्रदातेयाकलासा*प्रतिपत्तिर्द्दिरुच्यते ॥ ७ ॥एवमपरस्वर्वर्द्धमानाकला*द्वितीयादिपञ्चदश*तिथयोद्वादशस्थायां दशः ॥ ८ ॥ तादेवताश्चमादयःपञ्चदश*क्रमेणभवन्तीति*प्रथमापदमासायां*

रसा तस्या कलाया या * या कलातिष्ठति सैव ॥ ९ ॥ साचाक्रलाप्रतिपदादितिथिः स्यात् * तत्रचन्द्रे : प्रतिविपरीत
त्व पञ्चायां : * शेषा याकलातिष्ठति * साप्रतिपत्तिथिरुक्ता ॥ १० ॥ तद्द्वितीयादिकलातद्वितीयादिरिति * पञ्चदशतिथ
यः * सयावस्थायाम स्यांहि * निशिप्रथम तमःस्या * दितातःकृष्णपक्षोऽयम् ॥ ११ ॥ इत्यवस्थायां निशि * प्रथमं ज्यो
त्स्नाभवति * तस्मात्स्वल्पमस्तमः ॥ १२ ॥ इत्येवमविद्वान्कश्चि * दाहप्रथमकलाक्रियाप्रतिपत् * द्वितीयादितिविर
पेरा ॥ १३ ॥ तदसाधुप्रथमाकलाह्रासमाना * सोक्तातदमादिकला * क्रियानप्रतिपदादिः ॥ १४ ॥ चन्द्रस्य द्विती
यादीनां * कलानाञ्चतत्पत्तिरुक्ता * बृहदारण्यकेयथा ॥ १५ ॥ सयावज्जीवतोयदाम्रियते * अथैनमग्नयेहर
न्ति * तस्याग्निरेवाग्निर्भवति * समित्समित्धूमोधूमो * ऽर्चिरर्चिरङ्गाराअङ्गाराः ॥ १६ ॥ विस्फुलिङ्गाविस्फुलिङ्गा *
स्तस्मिन्नेतस्मिन्नग्नौदेवाः * प्रेतं पुरुषं जुह्वति ॥ १७ ॥ तस्याआहुतायादिष्टपुरुषएव * भास्वरवर्णःसम्भवतिसधूमम
भिसम्भवति ॥ १८ ॥ धूमाद्रात्रिं रात्रेरपक्षीयमाणं * पक्षमपक्षीयमाणात् * पश्चाद्यान्षण्मासान्दक्षिणादित्यएति
॥ १९ ॥ मासेभ्यः पितृलोकं * पितृलोकादाकाशं * सचन्द्रं प्राप्यैवान्नं * सोमोराजाभवति ॥ २० ॥ तं तत्रदेवाभक्षय
न्ति * यथासोममाप्यायस्वाप * क्षीयस्वचसोमइति ॥ २१ ॥ येचदेवाःक्रमेणतं भक्षयन्ति * तेचोक्तादेवीपुराणे ॥ २२ ॥
कलाःषोडशसोमस्य शुक्ले वर्द्धयते रविः । अमृतेनामृतं कृष्णे पीयतेदेवतैः क्रमात् । २३ । प्रथमां पिवतेवह्नि र्द्वितीयां
तपनःकलाम् । विश्वदेवास्तृतीयान्तुचतुर्थीन्तुप्रजापतिः । २४ । पञ्चमीं वरुणश्चापिषष्ठीं पिवन्तिवायवः । सप्तमीञ्च
पर्य्यादिवाश्रावसवोऽष्टौतथाष्टमीं । २५। नवमीं कृष्णपक्षस्यपिवतीन्द्रःकलामपि । दशमीं मरुतश्चापिरुद्राएकादशीं
कलाम् । २६। द्वादशीन्तुकलां विष्णुर्धनदश्चत्रयोदशीम् । चतुर्द्दशीं पशुपतिःकलां पिवतिनित्यशः । २७ततःपञ्चदशी
ञ्चैवपिवन्तिपितरःकलाम् । कलावशिष्टानिष्पीताप्रविष्टासूर्य्यमण्डलम् । २८ अमायावसतेरश्मावमावास्याततःस्मृ
ता । पूर्व्वाह्णे प्रविशत्यर्कं मध्याह्ने तुवनस्पतिम् । २९ । अपराह्णे विशत्यम्बु सयोनिं वारिसम्भवः । अपःप्रविष्टःसे
मस्तुशेषायाकलयैकया । ३०। वृक्षगुल्मलताश्चान्निष्प्यादयतिचौषधीः। तमोषधिस्थितं गावश्चरन्तोऽपःपिवन्तिच ३१
तरङ्गानुगतं पायःक्षीरत्वमधिगच्छति । तत्क्षीरममृतीभूतं चन्द्रभूतं द्विजातयः । ३२ । स्वाहाकारैर्वषट्कारैर्जु
तिविधिवत्क्रमात् । हुतमग्निषुदेवाश्चपुनःसोमं विवर्द्धयेत् । ३३ । एवं सक्षीयतेसोमःक्षीणश्चाप्यायतेपुनः । तस्मात्स
र्व्वाःशशाङ्कस्यसदैवविधौभुः । ३४ । भक्षार्थं सर्व्वदेवानां सोमःसृष्टःस्वयम्भुवा । ततस्यममृतं चापिसम्भूतं प्रजा
तेजसा ।३५। राहोरपामृतेभागःपुरासृष्टःस्वयम्भुवा । तस्मात्तद्राहुरागत्यपातुमिच्छतिपर्व्वसु ।३६ । उद्धृत्यपार्थि
वीं छाया निराकारां तमोमयीम् । पातुमिच्छंस्ततश्चन्द्रं माच्छादयतिछायया । ३७ ॥एकोह्यिचन्द्रमभ्येतिमध्या
पञ्चगाभास्करम् । सूर्य्यं मण्डलसंस्थन्तुचन्द्रमेवजिघांसति । इति । ३८ । इत्येवममावास्यायां चन्द्रस्यार्क * मण्डले
प्रवेशमविद्वान्कश्चन * गोभिलसूत्रं व्याचष्टे * निजबुद्ध्याकल्पनया ॥ ३९ ॥ सूर्य्याचन्द्रमसोयःपरः * सन्निकर्षःसा
मावास्येति * यद्गोभिलेनोक्तम् ॥ ४० ॥ तेनचन्द्रार्कयोरुपर्य्यधोभावा * पन्नयोःसमसूत्रपातनामायो * राश्यकार
च्छे देनाव * स्थानममावास्येत्युक्तं ॥ ४१ ॥ तदसाधु देवीपुराणे प्रोक्तं हि * कलावशिष्टोनिष्पीतः * प्रविष्टःसूर्य्यमण्डले
मित्याद्युक्तं स्तेनाश्चातत्वात्॥४२॥सूर्य्यसिद्धान्ते चतिथिरुक्तायथा * अर्काद्विनिःसृतःप्राचीं यद्यात्यहरहःशशी।र
चान्द्रमानमंश स्तुद्वादशभिस्तिथिः॥४३॥इत्यातद्वचनस्यशेषाद्ध कश्चि * दनयथापठतियथा।भागैर्द्वादशभिस्ततस्य
तिथिश्चान्द्रमसं दिनमिति॥४४तत्तिथिःसाचान्द्रमसं दिनमिति * नतुज्यतं दिनं हिकालविशेषो * नचतिथिःकालविशे

युक्षु कुर्व्वन्दिनर्क्षेषु सर्व्वान्कामान्समश्नुते । अयुक्षु तु पितॄन् सर्व्वान् प्रजांप्राप्नोतिपुष्कलाम् ॥ २७७ ॥

दिनानिचर्क्षाणिच*तेषु दिनर्क्षेषुतत्र*दिनं चान्द्रं तिथेर्भोगकालएव ॥ १ ॥कृष्णपक्षेयुक्षु युग्मतिथिभोग*काले युग्मनक्षत्रस्य*भोगकालेचमिलिते ॥ २ ॥ पितॄन्श्राद्धेनप्रान्कुर्व्वन्नरः*सर्व्वान्कामान्समश्नुते* युग्मतिथिद्वितीयाचतुर्थ्यादि*युग्मनक्षत्रं भरण्यादि ॥ ३ ॥ अयुक्षुदिनर्क्षेषु*प्रतिपत्तृतीयादितिथीनां भोग* कालेचेद्युग्मनक्षत्राश्विन्यादेर्भोगकालोभवति ॥ ४ ॥ तदापितॄन्श्राद्धेनप्रान्कुर्व्वन् * नरःपुष्कलां धनविद्यागुणादि*पुष्टां प्रजां प्राप्नोतीति ॥ ५ ॥ अत्रकृष्णपक्षइत्यनुवर्त्तते * यतःकृष्णपक्षेदशम्यादावृति* दिनर्क्षेष्वितरस्यैकदेशेदिनं ॥ ६ ॥ दशम्यादितिथिरभेदाऽन्यथा*तु पक्षेस्तिथिर्हि चान्द्रीकला*तद्भोगकालश्चान्द्रं दिनमुच्यते ॥ ७ ॥ दिनर्क्षेष्वितीतरेतरयोगे*द्वन्द्वसमासान्नयुग्मतिथिदिने*नयुग्मनक्षत्रभोग*कालेष्वेयकश्राद्धविधिरिति ॥ ८ ॥ यद्यपितिथिनक्षत्रयोगे*चायोगे चतद्यातिथिर्यत्र* नक्षत्रंतत्तत्फलदंतत्रचतत् * भवत्यत्रभवतीतिनालसोऽर्थः ॥ ९ ॥ २७७ ॥

अथश्राद्धेप्रशस्तकालमाह*यथाचैवेत्यादिश्लोकम् ॥ १ ॥ २७८ ॥

यथाचैवापरःपक्षःपूर्व्वपक्षाद्विशिष्यते । तथाश्राद्धस्यपूर्व्वाह्णादपराह्णोविशिष्यते ॥२७८॥

यथाश्राद्धस्यापरःकृष्णःपक्षः * पूर्व्वपक्षाच्छुक्लपक्षाद्विशिष्यते * तथाश्राद्धस्यपूर्व्वाह्णा * दपराह्णोविशिष्यते ॥ १ ॥ एतावताशुक्लपक्षःपूर्व्वाह्णश्च * कालःकृष्णपक्षादपराह्णाच्चनविशिष्टः किन्तुनप्रतिषिद्धःफलत * स्तारतम्यमितिज्ञापितं भवति ॥ २ ॥ २७८ ॥

प्राचीनवीतिनासम्यगपसव्यमतन्द्रिणा । पित्र्यमानिधनात्कार्यं विधिवद्दर्भपाणिना ॥२७९॥

प्राचीनवीतिनेत्यादि ॥ २७९ ॥ अतन्द्रिणातन्द्राविहीनेनापि * पुरुषेणानिधनादि* त्याजीवनात्पित्र्यं कार्यं*मपसव्यं सव्यस्कन्धा * दुत्तरीयवस्त्रमप ॥ १ ॥ अपसृतं कृत्वाप्राचीनवीतिना * दर्भपाणिनाचभूत्वा*विधिवत्सम्यक्कार्यम् ॥ २ ॥ २७९ ॥ अथश्राद्धप्रतिषेधकालमाह*रात्रौश्राद्धमित्यादिकम् ॥ १ ॥ २८० ॥

रात्रौश्राद्धंनकुर्व्वीतराक्षसीकीर्त्तिताहिसा । सन्ध्ययोरुभयोश्चैवसूर्य्येचैवाचिरोदिते॥२८०॥

श्राद्धंरात्रौनकुर्व्वीत * कस्मादित्यतउच्यते * राक्षसीकीर्त्तिताहिसेति ॥ १ ॥ हियस्मात्सारात्रीराक्षसीर्वी*तराकीर्त्तिताराक्षसासुरादीनां * कालतयावेदेप्रोक्तार्षिभिरुक्ता ॥ २ ॥ तर्हि दिवासन्ध्यासु रात्रि * स्तत्किं श्राद्धं कुर्व्वीतेत्यतआह*सन्ध्ययोरुभयोश्चेति ॥ ३ ॥ प्रातःसन्ध्यायांसायंसन्ध्यायाञ्च* श्राद्धं नकुर्व्वीततर्हि * प्रातस्तत्कर्त्तव्यदिनान्तकिं * कुर्य्यादित्यतउच्यते * सूर्य्ये चैवाचिरेत्यादि ॥ ४ ॥ अचिरोदितेसूर्य्ये चार्णोदयकाले*श्राद्धं कुर्व्वीत*एभ्योऽन्यस्मिन्कालेयथा* विहितंश्राद्धं कुर्व्वीतेति * पर्य्यासनजामेयम् ॥ ५ ॥ प्रमादिन

[illegible]गं ङ्गायां* सर्व्वदा स्नानमत्र तद्यथोच्यते । ६८ । आदिपर्व्वणि महाभारते उक्तं * सर्व्वएव शुभः कालः सर्व्वो [illegible]भस्तथा । सर्व्वो जनस्तथा पात्रं स्नानादौ जाह्नवीजले । ६९ । ब्रह्माण्डपुराणे चोक्तं * दिवा रात्रौ च सन्ध्यायां [illegible]यां तु विशेषतः । स्नात्वा प्रश्नमेधजं पुण्यं लभेद्‌ गङ्गातटे नरः इति । ७० । अथैवं ग्रहणे * स्नानादिकर्म्मणी * ष[illegible] तत् * कथं विष्णुनोक्तं । ७१ । चन्द्रार्कोपरागे नाश्नीयात् * स्नात्वा मुक्तयोरश्नीयात् * ह्यस्तयोरस्तं गतयो * ह्युष्ट्वा [illegible]परेऽह्नि । ७२ । इति । तत्र दृश्यते यः स्नानदानादिकं * न कुर्य्यात्‌ सोऽपि न * ग्रहणाद्धेऽद्यात् । ७३ । आपस्तम्बेनाभिहितं * मृतके सूतके चैव चन्द्रे सूर्य्ये विभास्करे । हस्तिच्छायायां योऽभुङ्क्ते पापः स दुःखभोभवेदिति । ७४ ॥ तर्हि प्राक्‌ सोमार्क्कग्रहणादद्यात् * नतु चराहुदर्शने * स्नानदानतपःश्राद्धानामनन्त * फलत्वात्तत्का[illegible]लिका * रात्रिर्न राहुर्यथा ॥ ७५ ॥ तथा गोहिरण्यभूमिकन्यादीनां * दानमपि महाफलत्वात् * रात्रौ प्रतिषि[illegible]न स्यात् ॥ ७६ ॥ नैव राहुदर्शनं हि * सूर्य्यग्रहणे दिवसे * चन्द्रग्रहणे रात्रौ नियतमेव * ततो रात्रौ चन्द्रग्र[illegible] * स्नानदानादिविधानं ॥ ७७ ॥ तथा खलयज्ञादिकं रात्रावेव * नियतं तेन भूगोहिरण्यादीनां * सर्व्वेषां दानं [illegible]रात्रौ विधीयते न * खलयज्ञादिभ्योऽन्यत्र दानमिति ॥ ७८ ॥ उक्तं हि पराशरेण * खलयज्ञे विवाहे च * संक्रान्तौ ग्रहणेऽपि च । शर्व्वर्य्यां दानमेतेषु नान्यत्रेति विनिश्चयः ॥ इति ॥ ७९ ॥ एषु खलयज्ञादिषु * दानं रात्रिर्न राहु[illegible] * वृत्ता भवतीत्यतो भ्योऽन्यकर्म्म * दाने रात्रौ राहुरेव तास्यात् ॥ ८० ॥ तर्हि तपस्त्वकिं राहु * दर्शनादन्य[illegible] रात्रौ * न कुर्व्वीत शिवरात्रि * व्रतादिकं तपो रात्रौ * कर्त्तव्यं तथा कथमुपपद्यते ॥ ८१ ॥ तत्रोच्यते धर्म्मविद्भिः * खल[illegible]यज्ञादिषु रात्रौ * दानवद्विशेषाभिधानात्तपश्च * शिवरात्रिव्रतादिकं * रात्रावेवोपपद्यते ॥ ८२ ॥ यस्या यस्या हि [illegible] देवतायाः पूजादि * तपो रात्रौ यस्मिन् यस्मिन् * काले विहितं स काल * स्तस्यास्तस्या देवतायाः पूजादौ देवानराह्वसः ॥ ८३ ॥ शिवरात्रिव्रतविधि * रुक्तो भविष्यपुराणे * तद्यथावत्‌ प्रदर्श्यते ॥ ८४ ॥ पुरा कैलासशिखरे सर्व्वरत्न विभूषिते । इत्याद्यनन्तरं तत्र ॥ ८५ ॥ उवास च चिरं शीतो भर्त्तो गिरिजया सह । सखोपिता कदाचित्तु देवी [illegible]प्रपच्छ शङ्करम् ॥ ८६ ॥ कर्म्मणा केन भगवन्‌ व्रतेन तपसापि वा । धर्म्मार्थकाममोक्षाणां हेतुस्त्वं परितुष्यसि ॥ ८७ इति देव्या वचः श्रुत्वा भगवान्‌ शङ्करोऽब्रवीत् । फाल्गुने कृष्णपक्षस्य या तिथिस्या चतुर्दशी ॥ ८८ ॥ तस्यां या [illegible]मसौ रात्रिः सोच्यते शिवरात्रिका । तत्रोपवासं कुर्व्वाणः प्रसादयति मां ध्रुवम् ॥ ८९ ॥ न स्नानेन न मन्त्रेण न च [illegible]र्च्चया । पुष्पैस्तथा न तुष्यामि यथा तत्रोपवासतः ॥ ९० ॥ त्रयोदश्यां कृतस्नानो ब्रह्मचारी समाहितः । [illegible]मिषं हविष्यं वा सकृद्भुञ्जीत नान्यथा ॥ ९१ ॥ मन्नामस्मरणाद्रात्रौ शयीत स्थण्डिले कुशे । रात्रिशेषे समु[illegible]य सन्ध्याञ्च ततः ॥ ९२ ॥ सन्ध्यामुपास्य विधिवद्विल्व पत्राण्युपार्ज्जयेत् । एकान्तः सर्व्वपुष्पाणि विल्व पत्रं तथैव तः ॥ ९३ ॥ मणिमुक्ताप्रवालैश्च स्वर्णरत्नादिभिस्तथा । न तथा जायते प्रीतिर्विल्वपत्रैर्यथा सम ॥ ९४ तत्तो रात्रौ प्रकुर्व्वीत मम भीणन तत्परः । नद्यादौ स्थण्डिले वापि लिङ्गे वा स्थावरे चरे ॥ ९५ ॥ प्रहरे प्रहरे स्नानं पूजाञ्चैव विशेषतः । दुग्धेन प्रथमे स्नानं दध्ना चैव द्वितीयके ॥९६ ॥ तृतीये तु तथाज्येन चतुर्थे मधुना तथा । पञ्चरा [illegible]विधाने मम मूलमन्त्रेण चैव हि ॥९७॥ पूजायै [illegible]मृत्त्यगीतादिभिर्नरः । अपरेद्युस्तथा विप्रान्‌ मम भक्तान् [illegible]तान् ॥ ९८ ॥ भोजयित्वा तथा भार्य्या पारणं स्वयमाचरेत् । एवमेव व्रतं देवि मम प्रीतिकरं शुभम् ॥ इति ॥ [illegible] प्रहरे प्रहरे रात्रौ * शिवा[illegible]विधानतो * [illegible] ॥ १०० । [illegible]

तत्रविशेषाद्धरात्रादधोदास्प्राया*सा चतुर्द्दशीयस्यां रात्रौ * लोकेऽस्मिन्नर*स्तस्यां रात्रौव्रतं कुर्यात् ॥ १२२ ॥ तत्
पूर्वार्द्धरात्रादूर्द्ध्व व्याप्राया*सा चतुर्द्दशीयस्यां रात्रौ * लोकेऽस्मिन्नृश्यातेनर * स्तस्यां रात्रौव्रतं कुर्यात् ॥१२३॥
इत्थञ्चरात्रेःपूर्व्वप्रहरद्वय*व्यापिनीचतुर्द्दशीचे*द्यथवामध्यमयाम * द्वयव्यापिनीस्यादथवा* शेषयामद्वयव्यापिनी
॥ १२४ ॥ तदातस्यां रात्रौशिव*रात्रिव्रतं नरःकुर्या*दितिव्यःपश्चाउक्ता* ईशानसंहितायां ॥ १२५ ॥ भवि
ष्यपुराणे प्रोक्तं * अर्द्धरात्रात्पुरस्तात्तु जयायोगोभवेद्यदि। पूर्व्वविद्धैवकर्त्तव्याशिवरात्रिःशिवप्रियैः ॥ इति ॥
॥ १२६ ॥ विष्णुधर्म्मोत्तरे चोक्तं * जयन्तीशिवरात्रिश्चकार्य्ये भद्राजयान्विते। कृत्वोपवासं तिथ्यन्ते मध्ये कुर्य्या
त्तुपारणम् ॥ इति ॥ १२७ ॥ तर्हि चार्द्धरात्रात्परं जयायोगो* यदिस्यात्तदाकिं पर* दिनेऽमावस्याविद्धायां*
चतुर्द्दश्यां व्रतं कुर्य्या * दितिचेत्सत्यमेवैतत् ॥ १२८ ॥ तदाहिरात्रेःशेषयामद्वय * व्यापिनीचतुर्द्दशीनभवति*
परदिनेतु रात्रेर्याम * द्वयव्यापिनीचतुर्द्दशीभवति ॥ १२९ ॥ तर्हि कथं चतुर्द्दश्यां परदिने * पारणं सम्भवति
गौतमीयेऽपि*प्रोक्तं चतुर्द्दश्यां पारणं तद्यथा ॥ १४० ॥ दिनमात्रप्रमाणेनयातुरात्रौचतुर्द्दशी। शिवरात्रिस्तुसा
ज्ञेयाचतुर्द्दश्यान्तुपारणमिति ॥ १४१ ॥ सत्यमेतदेवं दिनमानस्य*यत्प्रमाणं तत्प्रमाणयुक्तारात्रौ* चतुर्द्दशीतत्र
पर*दिनेचतुर्द्दश्यां पारणं ॥ १४२ ॥ दिनमानप्रमाणाभ्यूना*रात्रौचतुर्द्दशीयत्र*तत्रचतुर्द्दश्यां नपारणमुक्तं*तत्रा
मावस्यायामेव ॥ १४३ ॥ एतदभिप्रायेणस्कन्द*पुराणे प्रोक्तं तद्यथा*ब्रह्माण्डोदरमध्ये तु *यानितीर्थानिसन्ति
वै। पूजितानिभवन्तीह भूतायां पारणे कृते ॥ इति ॥ १४४॥ एतेनचतुर्द्दशीचेत्परदिने * वर्त्तते तद्भूतायामपार
णं *नकुर्य्यादितिख्यापितं भवतीति ॥ १४५ ॥ लिङ्गपुराणे यथोक्तं * शेषार्द्धरात्रगायत्र* जयापूर्व्वेऽह्नि तत्र तु।
शिवरात्रिव्रतेभूता कामविद्धा विवर्ज्जयेत्॥इति॥१४६॥ इत्थञ्चमहानिशानाञ्चदेवल*प्रोक्ताया●समस्यवचनाभावात्*
नापिप्रदोषव्यापिनोवनारोति॥१४७॥ एवमपिजन्माष्टम्यां * कृष्णास्यजातायां महा*निशानराचलौरात्रि*र्भवतिवि
शेषवचना*त्तद्यथाब्रह्मपुराणे॥१४८॥ अथभाद्रपदेमासि*कृष्णाष्टम्यां कलौयुगे। अष्टाविंशतिमेजातःकृष्णोऽ
सौदेवकीसुतः॥१४९॥ विष्णुपुराणेऽपिप्रोक्तं *प्रावृट्काले चनभसिकृष्णाष्टम्यां महानिशि। उत्पत्स्येऽहं नवम्याञ्चप्रसूति
मवाप्स्यसीति॥१५०॥ संशयश्चात्रकिं भाद्रे *कृष्णाष्टम्यां वासुदेवः*कृष्णोऽज्ञजायतायद्यारणेकृष्णा*ष्टम्यां
महानिशिजातः॥१५१॥ उच्यते भाद्रपदे मासीतिगौण*भाद्रेयाकृष्णाष्टमीसा*मुख्यश्रावणकृष्णाष्ट*मीतिनास्ति
तद्विरोधः ॥ १५२ ॥ विष्णुपुराणे महानिशीति विशेषेणोक्तत्वा* द्ब्रह्मपुराणेऽपितथा व्याख्यातव्यम ॥ १५३ ॥
यदाप्यत्ररोहिणीयुक्ताष्टमी*नोक्तातथाप्यन्यादि पुराणे विष्णु*धर्म्मोत्तरे चोक्तत्वात्तु* रोहिणीयोगउन्वेयः ॥ १५४॥
तद्यथात्रप्रदर्श्यते *रोहिणीसहिताकृष्णा मासिभाद्रपदेऽष्टमी। सप्तम्याचार्द्धरात्राधःकलयापियदाऽभवत्॥१५५
तत्रजातोजगन्नाथः कौस्तुभीहरिरीश्वरः। तमेवोपवसेत्कालं तत्रकुर्य्याच्चजागरम् ॥ १५६ ॥ इति। अत्र
भाद्रपद इति*गौणभाद्रपदे मासि * रोहिणीसहिताकृष्णाष्टमीतिथिः * सप्तम्यविशिष्टायदा * र्द्धरात्राधःकल
यापि ॥ १५७ ॥ पूर्व्वार्द्धरात्रस्याल्पकलयाविशि * ष्टाभवेत्तत्राष्टम्यां जगन्नाथो * हरिरीश्वरःकौस्तुभीकृष्णो
जातः ॥ १५८ ॥ एषहिकृष्णस्यजन्मकालस्तत्र*नराणां क्रियाविधानं *महर्षिभिर्व्रतरक्षणादियोग* विशेषफलविशे
षं ॥ १५९ ॥ दिवाकरभिः पद्मार्क्कविहितं * नामविशेषयुक्तः * क्रमेणात्तत्प्रदर्श्यते ॥ १६० ॥ भविष्य
पुराणे वायुपुराणे च*रोहिणीसहिताकृष्णा मासे चश्रावणेऽष्टमी। अर्द्धरात्रादधश्चोर्द्ध्वं कलयापियदाभवेत् ॥१६१

पार्षतेन नवगवयेन * दशमं हरिणेनैकादशं कौर्म्मेण * संवत्सरं गव्येन पयसा च तद्विकारैश्च । ७० । अत्रापि पितृगीता गाथा भवति * कालशाकं महाशल्कं मांसं वार्ध्रीनसस्य च । विषाणवर्ज्जं खड्गास्तं सुभक्षामहे सदा ॥७१॥ नवान्नप्राशनमारोपयेत्तपदास्पृशे * इच्छेत्पणं भूमिगतं * मजिष्ठसाष्टसावा । दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥ ७२ ॥ दैवे कर्म्मणि ब्राह्मणं न परीक्षेत * प्रयत्नात्पित्र्ये परीक्षेत ॥ ७३ ॥ हीनाधिकाङ्गान्विवर्जयेत् * विकर्म्मस्थाश्वित्रिकुष्ठिनिकान् * श्यावदन्तान् नक्षत्र * जीविनो देवलकांश्च ॥७४॥ चिकित्सकान् कुण्डापुत्रान् * स्तनपुत्रान् वक्रयाजिनो * ग्रामयाजिनः शूद्रयाजिनोऽशाखा * याजिनो व्रात्यांस्तद्याजिनः सूचकान् ॥७५॥ पर्व्वकारान् भृतकाध्यापकान् भृत * काध्यापितान् शूद्रान्नपुष्टान् पतित * संसर्गाननधीयानान् * सन्ध्योपासनाननुष्ठानान् ॥७६॥ राजसेवकान् नग्नान् * पितृमातृगुरुत्यागिन * स्वाध्यायत्यागिनश्च ॥७७॥ ब्राह्मणापसदा ह्येते * कथिताः पङ्क्तिदूषकाः । एतान्विवर्जयेद्विप्रान् श्राद्धकर्म्मणि पण्डितः ॥ ७८॥ अथ पङ्क्तिपावनास्त्रिणाचिकेतः * पञ्चाग्निर्ज्येष्ठसामगो * वेदपारगो वेदाङ्ग * स्वाध्यायिकस्य च पारगः ॥ ७९ ॥ पुराणेतिहास व्याकरणपार * गो धर्म्मशास्त्रस्वाध्यायिकस्य पारग * तीर्थपूतो यज्ञपूतस्तपःपूतः ॥ ८० ॥ सत्यपूतो मन्त्रपूतो * गायत्रीजपनिरतो * ब्रह्मदेयानुसन्तानस्त्रिसुपर्णो * जामातादौहित्रश्चेति * विशेषेण वर्णाग्रगिनः ॥ ८१ ॥ अत्र पितृगीता गाथा भवति * अपि स्यात्स कुले ऽस्माकं भोजयेद्यस्तु योगिनम् । विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम् ॥ इति ॥ ८२ ॥ न गच्छेन्म्लेच्छविषयम् । परनिपानेऽपः पीत्वा * तत्साम्यमुपगच्छतीति ॥ ८३ ॥ चतुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । स म्लेच्छदेशो विज्ञेय आर्यावर्त्तस्ततः परः ॥ ८४ ॥ इति ॥ अथ पुष्करेषु श्राद्धं * जपो होमस्तपांसि च । पुष्करे स्नानमात्रतः सर्व्वपापेभ्यः पूतो भवतीति ॥ ८५ ॥ एवमेव गयाशीर्षे * ऽक्षयवटे ऽमरकण्टकपर्व्वते * वराहपर्व्वते यत्र * क्वचन नर्म्मदातीरे ॥८६ यमुनातीरे गङ्गायां * विशेषतः कुशावर्त्ते * बिल्वके नीलपर्व्वते * ॥ ८७ ॥ कनखले कुब्जाम्रे * भृगुतुङ्गे केदारे * महालये नडन्तिकायां * सुगन्ध्यायां शाकम्भर्य्याम् ॥ ८८ ॥ फल्गुतीर्थे महा * गङ्गायां मात्रि * हलिकाश्रमे * कुमारधारायां ॥ ८९ । प्रभासे यत्र क्वचन सरस्वत्यां विशेषतः । गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे । ९० । सततं नैमिषारण्ये वाराणस्यां विशेषतः । अगस्त्याश्रमे कण्वाश्रमे कौशिक्यां सरयूतटे । ९१ । शोणस्य ज्योतिषायां सङ्गमे श्रीपर्व्वते । कालोदके उत्तरमानसे * वडवायां मतङ्गवाप्यां । ९२ । सप्तार्षे विष्णुपदे स्वर्गमार्गपदे गोदावर्य्यां । गोमत्यां वेत्रवत्यां विपाशायां वितस्तायाम् । ९३ । शतद्रुतीरे चन्द्रभागायां * मिरावत्यां सिन्धोस्तीरे * दक्षिणे पञ्चनदे औजसे । ९४ । एवमादिषु चान्येषु तीर्थेषु सरिद्वराम । सर्व्वेष्वपि स्वभावेषु पुलिनेषु प्रस्रवणेषु । ९५ । पर्व्वतेषु निकुञ्जेषु वनेषूपवनेषु च । गोमयेनोपलिप्तेषु मनोज्ञेषु । ९६ । अत्र चापि पितृगीता गाथा भवन्ति * कुले ऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् । नदीषु बहुतोयासु शीतलासु विशेषतः । ९७ । अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः । गयाशीर्षे वटे श्राद्धं यो नः कुर्यात्समाहितः । ९८ । एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत । ९९ । वृषोत्सर्गे नीलवृषलक्षणं वक्ष्यते । याज्ञवल्क्यसंहितायाञ्च यदुक्तं * श्राद्धविधानं तदप्यत्र दर्श्यते * । १ । अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयम । द्रव्यं ब्राह्मणसम्पत्तिर्विषुवं सूर्यसंक्रमः । १ । व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः । श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः । २ । अग्र्याः सर्व्वेषु वेदेषु श्रोत्रियो

पञ्चाक्षरेण मन्त्रेण पूजयानौ वृषध्वजं । व्यतिचक्रामतस्तौव सहस्रं परिवत्सरान् ॥ १११ ॥ निराहारौ यताहारौ हरसंन्यस्त मानसौ । तपसा निन्यतुर्वर्षसहस्रमेकवर्षवत् ॥ ११२ ॥ गतेऽब्दसहस्रे तस्वयमेव वृषध्वजः । प्रसन्नस्तु तयोर्भूत्वा प्रत्यक्षत्वमुपागतः ॥ ११३ ॥ तमुपप्रत्यक्षतो दृष्ट्वा तदा वेतालभैरवौ । वृषध्वजं तुष्टुवतुर्ध्यानगम्यं पुरःस्थितं ॥ ११४ ॥ वेतालभैरवावूचतुः ॥ ० ॥ पञ्चवक्त्रं महाकायं सर्व्वज्ञानमयं परं । संसारसारं तं शान्तं प्रणमावो वृषध्वजम् ॥ ११५ ॥ त्वं परः परमात्मा च परेशः पुरुषोत्तमः । त्वं कूटस्थो जगद्व्यापी प्रधानः परमेश्वरः ॥ ११६ ॥ रूपात्मा त्वं महात्मा त्वं तत्त्वज्ञानालयः प्रभुः । साङ्ख्ययोगालयः सर्व्वो गुणत्रयविभागभृत् ॥ ११७ ॥ त्वं नित्यस्त्वमनित्यश्च जगत्कर्त्ता लयः स्थितिः । एकानेकस्वरूपश्च शान्तश्चेता जगन्मयः ॥ ११८ निर्व्विकारी निराधारो नित्यानन्दः सनातनः । त्वं विष्णुस्त्वं महेन्द्रश्च त्वं ब्रह्मा जगतां पतिः ॥ ११९ ॥ यो रूपरूपेश्वर वर्त्तमानः संभूतिभूतो निरवग्रहश्च । काङ्क्षावतीर्णा विगतः प्रमाथो योगेश्वरो ज्ञानगतिस्त्वगम्यः ॥ १२० ॥ पर्म्मेयरूपात्मधरा धराभो भोगीन्द्र वक्षान्तरभागतन्त्वः । सूक्ष्माकरस्तत्त्वविदः प्रमाथी त्वं देवदेवः शरण्यं शरणाम् ॥ १२१ ॥ विकल्पमानः परिहीनदेहः शुद्धात्मधामा त्व गतेकविद्यः । बहिर्ग्गुणरूपः पुरुषः परात्मा त्वमिन्द्रियौघस्य विचारबुद्धः ॥ १२२ ॥ त्वं नाथनाथः प्रभवः परेषां गतिर्मुनीनां परयोगगम्यः । त्वं भूधरो भोगधरो ह्यनन्तो विश्वात्मनस्ते त्वभवन् प्रपञ्चाः ॥ १२३ ॥ ज्ञानामृतस्यन्दन पूर्णचन्द्रो मोहान्धकारस्य परः प्रदीपः । भक्तात्मजानां परमः पिता त्वं कार्य्ये च पञ्चानन रूपधारी ॥ १२४ ॥ शास्त्राखिलानां प्रथमोऽपि विद्वान् तनूनपाच्च तनुधिमरश्मिनि । त्वं ब्रह्मरूपेण करोषि सृष्टिं त्वं विष्णुरूपी सततं स्थितिं च ॥ १२५ ॥ त्वं रुद्ररूपी कल्पितयान्तं त्वत्तो न चाना ज्जगतीहरस्तु । त्वं रात्रिनाथो दिवसेश्वरश्च त्वमग्निरापः पवनो धरित्री ॥ १२६ नभस्तथात्वं ऋतुतन्त्वहोता त्वमष्टमूर्त्तिर्भवतो न चान्यत् । अनन्तमूर्त्तिस्त्विह तत्त्वभावाज्जगद्यतश्चाष्टमयीति मूर्त्तिः ॥ १२७ ॥ अनन्तमूर्त्तिः कथमन्यथा ते सङ्गाभिरूपस्य यदष्टमूर्त्तिः । त्वं त्र्यम्बकस्त्वं त्रिपुरान्तकस्त्वं त्वं शम्भुरीशः शमनो विधाता ॥ १२८ ॥ सहस्रबाहुश्च हिरण्यबाहुः सहस्रमूर्त्तिस्त्विह पंचवक्त्रः । प्रभूतनेत्रश्च षडर्द्धनेत्रः प्रभूतबाहुर्द्दशबाहुरीशः ॥ १२९ ॥ प्रभूतभोगी मितभोगयुक्तो भोगोऽत्वसारो निरवग्रहश्च ॥ १३० नित्यानित्यस्वरूपाय नित्यधामस्वरूपिणे । परतत्त्वस्वरूपाय नमस्तुभ्यं शिवात्मने ॥ १३० ॥ नान्तं लिङ्गस्य यस्यान्तं ब्रह्मणा विष्णुना तथा । तस्यावां किं विधास्यावः स्तुतिवाक्यं वृषध्वज ॥ १३१ ॥ स्वरूपं यस्य जानन्ति न देवा नापि दानवाः । बालावावां कथं तुत्वा स्तोष्यावः परमेश्वर ॥ १३२ ॥ भक्तिमात्रेण देवत्वं तवाव वृषभध्वज । कुर्व्वः प्रनामं गौरीश भूयस्तुभ्यं नमो नमः ॥ १३३ ॥ इति ओर्व्व उवाच सगरं प्रति ॥ ० ॥ इति स्तुतो महादेव इत्यादि । ततः साक्षात्स्थितं शिवं वरं ययाचाते । नित्यं यथानुगच्छाव स्तथा देहि वरं शुनौ । इति ततः शिवस्तौ मर्त्यभावापनयनपूर्व्वकदेवत्वप्रदानं कृत्वा तावुवाच ॥ ० ॥ अहं प्रीतस्तु युवयोः पार्व्वती दयिता मम । मद्भक्तं काममाकाङ्क्षा नाराधयत मीश्वरीं ॥ १३५ ॥ तामृते ऽहं न शक्नोमि दातुमिष्टं सनातनं । सेवितुं च सतीं नित्यं तस्मात्तां शरणं व्रज ॥ १३६ ॥ ० ॥ * ॥ ० ॥ इति वक्तुमेकपंचाशत्तम * ध्याये कालिकापुराणे * द्विपञ्चाशत्तमेऽध्याये * वेतालभैरवावूचतुः ॥ १३७ ॥ पार्व्वत्या नद्विजानीवो ध्यानमन्त्रार्च्चनाविधीन् । कथमाराधयिष्यावो भगवन् समादिश्यताम् ॥ १३८ ॥ भगवाञ्छिव उवाच ॥

स्मृता द्विज। दशाक्षराधिका मन्त्रास्तदूर्ध्वं गुणिजसंज्ञिताः ॥ २०५ ॥ इति एषां मन्त्राणामष्टाक्षरमन्त्रं *यथा विधिमुक्तवान् यः* स कालिकापुराणस्य* द्विपञ्चाशत्तमेऽध्याये ॥ २०६ ॥ महामाया मन्त्रविधि कल्पा सुभक्तौ श्रुतौ। उपदेक्ष्यामि तच्चैव त्वारभ्य तदध्याये ॥ २०७ ॥ त्रिपञ्चाशत्तः पञ्चाशत्पञ्च* पञ्चाशत्षट् पञ्चाशत् सप्त पञ्चाश*दष्टपञ्चाशत्तमेषु* सप्तस्वेवाध्यायेषु ॥ २०८ ॥ प्रोक्तेन कल्पेन वैष्णवीं* महामायां नित्यपूजनं * नैमित्तिकपूजां च यथा* कुर्यात्तदुक्तं वच्म्यते ॥ २०९ ॥ यस्तु नेत्रमन्त्रं प्रोक्तवान् स* तेनैव वैष्णवीपूजाकल्पेनेत्थं* ध्यात्वा नित्यं पूजयेत् ध्यानं यथा ॥ २१० ॥ जटाजूटसमायुक्तां अर्द्धेन्दुकृतशेखराम्। लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् ॥ २११ ॥ तप्तकाञ्चनवर्णाभां सुप्रतिष्ठां सुलोचनाम्। नवयौवनसम्पन्नां सर्व्वाभरणभूषिताम् ॥ २१२ ॥ सुचारुदशनां तद्वत् पीनोन्नतपयोधराम्। त्रिभङ्गस्थानसंस्थानां महिषासुरमर्द्दिनीम् ॥ २१३ ॥ मृणालायतसंस्पर्शदशबाहुसमन्विताम्। त्रिशूलं दक्षिणे ध्येयं खड्गं चक्रं क्रमादधः ॥ २१४ ॥ तीक्ष्णबाणं तथा शक्तिं वामसङ्क्षेषु संगतम्। खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च ॥ २१५ ॥ घण्टां वा परशुं वापि वामतः प्रतियोजयेत्। अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ॥ २१६ ॥ शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्। हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ॥ २१७ ॥ रक्तारक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम्। वेष्टितं नागपाशेन भ्रूकुटीकुटिलाननम् ॥ २१८ ॥ सपाशवामहस्तेन धृतकेशं च दुर्गया। वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत् ॥ २१९ ॥ देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम्। किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ॥ २२० ॥ स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत् ॥ उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ २२१ ॥ चण्डा चण्डवती चैव चामुण्डा चण्डिका तथा। आभिः शक्तिभिरष्टाभिः सततं परिवेष्टिताम् ॥ २२२ चिन्तयेत् सततं देवीं धर्म्मकामार्थसिद्धिदाम् ॥ एवं ध्यात्वा दशभुजां *नित्यं साधकः प्रपूजयेत् ॥ २२३ ॥ अथ नैमित्तिकीं पूजां *यथा कुर्यात्तथोक्तं चा * तदूर्द्ध्वं शिवेन यथा ॥ २२४ ॥ रवौ मकरराशिस्थे या भवेत् सितपञ्चमी। तस्यामनेन सम्पूज्या मन्त्रेण विधिवच्छिवा ॥ २२५ ॥ शुक्लाष्टम्यां पुनर्देवीं पूजां कृत्वा यथाविधि। नवम्यां बलिदानानि प्रभूतानि समाचरेत् ॥ २२६ ॥ सन्ध्यायाञ्च बलिं कुर्यात्त्रिजगावासमुचितं। एवं कृते तु कल्याणयुक्तो नित्यं प्रमोदते ॥ २२७ ॥ पुत्रपौत्रसमृद्धस्तु धनधान्यसमृद्धिभिः। दीर्घायुः सर्व्वसुभगो लोकेऽस्मिन् सञ्जायते ॥ २२८ ॥ अत्र निजगात्रोत्थिता सृजाञ्जलिं *क्षत्रियादिः कुर्यान्नतु *ब्राह्मणस्तस्य प्रतिषेधात् २२९ ॥ सिताष्टम्यान्तु चैत्रस्य पुष्पैस्तत्कालसम्भवैः। अशोकैरपि यः कुर्यान्मन्त्रेणानेन पूजनम् ॥ २३० ॥ न तस्य जायते शोको रोगो वाप्यथ दुर्गतिः ॥ २३१ ज्यैष्ठे च शुक्लपक्षस्य अष्टम्यां समुपोषितः। नवम्यां सतिलैश्चूर्णैर्यावकैरथ मोदकैः ॥ २३२ ॥ चौरै राजा तथा चौष्ट्रैर्मदिराभिः सपिष्टकैः। नानापशूनां रुधिरैर्मांसैरपि च पूजयेत् ॥ २३३ ॥ ततो दशम्यां शुक्लायां मद्भिस्तु तिलमिश्रितैः। दुर्गातन्त्रेण मन्त्रेण दातव्यमञ्जलित्रयम् ॥ २३४ ॥ एवं कृते दशम्यान्तु यत्पापं दशजन्मभिः। कृतं तत् प्रलयं याति दीर्घायुरपि जायते ॥ २३५ ॥ आषाढे शुक्लपक्षस्याष्टमी श्रावणस्य वा। पवित्रारोहणं कुर्याद्देवीप्रीतिकरं परम् ॥ २३६ ॥ दुर्गातन्त्रेण मन्त्रेण दुर्गाबीजेन भैरव। वैष्णवी तन्त्रमन्त्रेण पवित्रारोहणं चरेत् ॥ २३७ ॥ विशेषाच्छ्रावणेऽभ्यर्च्य देव्याः कुर्यात् पवित्रकं। सर्व्वेषामेव देवानां पवित्रारोहणं चरेत् ॥ २३८ ॥ आषाढे श्रावणे वापि संवत्सरफलप्रदम्।

प्रतिपद्दनदस्योक्ता पवित्रारोहणे तिथिः ॥ २३९ ॥ श्रियादेव्या द्वितीयाच तिथीनामुत्तमा स्मृता । तृतीया भवानीयाश्चतुर्थी तत्सुतस्य च ॥ २४० ॥ पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च । सप्तमी भास्करस्योक्ता दुर्गायाश्च तथाष्टमी ॥ २४१ ॥ मातृणां नवमी प्रोक्ता वासुकेर्दशमी तथा । एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः ॥ २४२ ॥ त्रयोदशी त्वनङ्गस्य मम चैव चतुर्दशी । ब्रह्मणो दिक्पतीनाञ्च पौर्णमासी तिथिर्मता ॥ २४३ ॥ पवित्रारोहणं यावद्देवानां न समाचरेत् । तस्य सांवत्सरपूजाफलं हरति भैरवः ॥ २४४ ॥ तस्माद् यत्नेन कर्त्तव्यं पवित्रारोहणं परम् । कृते च फलमाप्नोति तत्पूजासफला भवेत् ॥ २४५ ॥ पवित्रं येन सूत्रेण यथा कार्य्यं विजानता तत् शृणुष्व प्रमाणन्तु वचनान्मम भैरव ॥ २४६ ॥ प्रथमं दर्भसूत्रञ्च पद्मसूत्रं ततः परम् । ततः क्षौमं सुपुण्यं स्यात् कार्पासकमतः परम् ॥ २४७ ॥ पञ्चसूत्रमतोऽन्येन पवित्राणि न कारयेत् । त्रिचित्राणि पवित्राणि कर्त्तव्यानि प्रयत्नतः ॥ २४८ ॥ गन्धैर्माल्यैः सुरभिभिरर्च्चितानि यथोदितम् । कन्यया चर्कर्त्तयेत् सूत्रं प्रमदा वा पतिव्रता ॥ २४९ ॥ विधवा साधुशीला वा दुःशीला न च कर्त्तयेत् । यत् सूत्रं छिन्नं दग्धं च भस्मधूमादिदूषितम् ॥ २५० ॥ तद्वर्जनीयं यत्नेन सूत्रमस्मिन् पवित्रके । अशुकेशाद्यजग्धं वा मेध्यं रक्तादिदूषितम् ॥ २५१ ॥ मलिनं रक्तनीलञ्च यत्नेन परिवर्जयेत् । सूत्रैः पवित्रं कुर्वीत कनिष्ठोत्तममध्यमम् ॥ २५२ ॥ कनिष्ठं तत्पवित्रं यत्सप्तविंशतितन्तुभिः । मतं श्रीयशःकीर्त्तिसुखसौभाग्यमुत्तमम् ॥ २५३ ॥ चतुःपञ्चाशता पूर्व्वतन्तूनां मध्यमं परम् । दिव्यभोगावहं पुण्यं धर्ममोक्षप्रदायकम् ॥ २५४ ॥ उत्तमं शतन्तूनामष्टोत्तरशतेन च । तद्दत्त्वा तु महादेवि शिवसायुज्यमाप्नुयात् ॥ २५५ ॥ उत्तमं वा शतं वापि दद्याद् यदि पवित्रकम् । तदा याति हरेर्लोकं साधको नात्र संशयः ॥ २५६ ॥ अष्टोत्तरसहस्रन्तु रत्नमालेति गीयते । पवित्रन्तु महादेव्या भुक्तिमुक्तिप्रदायकम् ॥ २५७ ॥ रत्नमालान्तु यो दद्यान्महादेव्यै पवित्रकम् । कल्पकोटिसहस्राणि स्वर्गे स्थित्वा शिवो भवेत् ॥ २५८ ॥ एतत्तु नागहाराख्यं सहस्रपवित्रकम् । अष्टोत्तरसहस्रेण तन्तूनां च मनोहरम् ॥ २५९ ॥ यः प्रयच्छति मह्यं तत् यावत्तन्तुसङ्ख्यया । तावत्कल्पसहस्राणि मम लोके प्रमोदते ॥ २६० ॥ अष्टोत्तरसहस्रेण वनमाला हरेः स्मृता । तन्तूनां तस्य दानेन विष्णुसायुज्यमाप्नुयात् ॥ २६१ ॥ यत्कनिष्ठं पवित्रन्तु नाभिमात्रं भवेत्तु तत् । द्वादशग्रन्थिसंयुक्तमात्ममानेन योजयेत् ॥ २६२ ॥ ऊरुप्रमाणं मध्यं स्याद् ग्रन्थीनां तत्र योजयेत् । चतुर्व्विंशतिमप्यत्र आत्मन एव च ॥ २६३ ॥ पवित्रमुत्तमं प्रोक्तं जानुमात्रं च भैरव । षट्त्रिंशता तु ग्रन्थीनां योजयेदात्ममानतः ॥ २६४ ॥ शतमष्टोत्तरं कार्य्यं ग्रन्थीनां सविधानतः । नागहाररत्नमालावनमालासु योजयेत् ॥ २६५ ॥ पवित्रं क्रियते येन सूत्रेण ग्रन्थयः पुनः । तद्रागवर्णसूत्रेण कर्त्तव्या लक्षणान्विताः ॥ २६६ ॥ ग्रन्थिन्तु सप्तभिः कुर्य्यात् द्विगुणैः सूत्रकनिष्ठके । द्विगुणैर्मध्यमे कुर्य्यात् त्रिगुणैरुत्तमे तथा ॥ २६७ ॥ अधिवास्य पवित्राणि पूर्व्वस्मिन् दिवसे ततः । मन्त्रन्यासं पवित्रे तु कुर्य्यात्तत्र परेऽहनि ॥ २६८ ॥ दुर्गाबीजेन मन्त्रेण मन्त्रन्यासं द्विजश्चरेत् । वैष्णवीतन्त्रमन्त्रेणाप्युर्य्युरन्यं च भैरव । २६९ प्रतिपर्व्विस्वयं कुर्य्यान्मन्त्रन्यासं विचक्षणः । अङ्गुष्ठापर्व्वणा जपमेवमालायामिह भैरव ॥ २७० ॥ यावन्तो ग्रन्थयश्च स्युस्तावन्तो वचसं नयेत् । मन्त्राणि तेन तस्याः स्याद्देव्याः सोपनियोजनम् ॥ २७१ ॥ दुर्गातन्त्रेण मन्त्रेण तन्त्रन्यासं प्रधारयेत् । एकमन्त्रस्य सकलं यत्र पात्रे पवित्रकम् ॥ २७२ ॥ तस्मिन् विधाय गन्धादिपुष्पार्च्चितमशोभनम् । तन्त्रन्यासं ततः कुर्य्यादङ्गुष्ठाग्रेण भैरव ॥ २७३ ॥ विष्णोस्तु मूलमन्त्रेण तन्त्रन्यासन्तु कारयेत् । इदं विष्णोरिति मन्त्र

कादिभिः ॥ ७४१ ॥ बालप्रियैरन्नवेद्यैर्लाजाघृतफलादिभिः। गवां गुडैश्च ग्रामांसैर्मद्यैर्मधुभिरेव च ॥ ७४२ ॥ दुग्धदध्ना सिताभिश्च लवलीनागरङ्गकैः। अजैश्च महिषैर्मेषैर्व्याघ्रशोणितसंस्रवैः ॥ ७४३ ॥ पञ्चादिबलिजातीयैस्तथा नवविधैर्मृगैः। पूजयेज्जगतां धात्रीं मांसशोणितकर्दमैः ॥ ७४४ ॥ रात्रौ स्कन्दविशाखौ च कृत्वा पिष्टकपुत्रकौ पूजयेच्च क्रतुनामाय दुर्गायाः प्रीतये तथा ॥ ७४५ ॥ होमञ्च सतिलैराज्यैः समां सैरपि चाचरेत्। उग्रचण्डादिकाः पूज्यास्तथाष्टौ योगिनीः शुभाः ॥ ७४६ ॥ योगिनीश्च चतुःषष्टिं तथैव कोटियोगिनीः। नवदुर्गास्तथा पूज्या देव्याः सन्निहिताः शुभाः ॥ ७४७ ॥ जयन्त्यादौ गन्धपुष्पैस्तादेव्या मूर्त्तयो मताः। देव्याः सर्व्वाणि चास्त्राणि भूषणानि तथैव च ॥ ७४८ ॥ अङ्गप्रत्यङ्गयुक्तानि वाहनं सिंहमेव च। महिषासुरमर्द्दिन्याः पूजयेद्भूतये सदा ॥ ७४९ ॥ इति दुर्गातन्त्रं दुर्गामन्त्रस्तु। ओं दुर्गे दुर्गे रक्षणि स्वाहा ओं मः* नवर्णं वमन्त्र इति ॥ ७५० ॥ वैष्णवीतन्त्रोक्तेन सामान्यविधिना* दुर्गां दशभुजां पूजयित्वा उग्र*दल उग्रचण्डादिका*अष्टौ योगिनीः पूजयेत् ॥ ७५१ ॥ ध्यानेऽक्ताउक्तं यथा*उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिकाः। चण्डा चण्डवती चैव चामुण्डा चण्डिका तथा। इति ॥ ७५२ ॥ योगीन्याश्चतुःषष्टि * श्च कोटि रेकमेव*गन्धपुष्पाभ्यां पूज्याः ॥ ७५३ ॥ जयन्त्याद्यो नवदुर्गा*देव्याः सन्निहिता गन्ध * पुष्पैः पूज्यास्ताः प्रोक्ता ॥ ७५४ ॥ जयन्ती मङ्गला काली भद्रकाली कपालिनी। दुर्गा शिवा क्षमा धात्री नवदुर्गाः प्रकीर्त्तिताः ॥ ७५५ ॥ केचिदेतानवदुर्गा*नवच पत्रिकास्थ पूजायितं * व्यवस्थापयन्ति तन्न ॥ ७५६ ॥ इत्थं देव्याः सन्निहिता इत्युक्तेः*अष्टादशभुजायाः पूजायां हि*सप्तम्यां पत्रिकापूजा निवृत्तिश्च ॥ ७५७ ॥ इत्येवं सप्तम्या अष्टम्यां नवम्यां*पूजयित्वा नवमीरात्रौ स्कन्द*विशाखयोः पूजा रिमात्रायकार्य्या। ७५८। ततो दशम्यां विसर्जनं कुर्यात्*शावरोत्सवैर्विसर्जनं कृत्वा*साधकोनक्तमशनमाचरेत् ॥ ७५९ ॥ इति साधकस्य स्वार्थं दशभुजा पूजाविधि * कृतास्ततः परं परार्थञ्च दुर्गा* पूजाविधिरुक्तस्तद्यथा दृश्यते। ७६०। रामस्यानुग्रहार्थं वै रावणस्य वधाय च। रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा। ७६१। ततस्तु त्यक्त निद्रा सा नन्दां यामाश्विने सिते। जगाम नगरीं लङ्कां यत्रासीद्राघवः स्वयं। ७६२। तत्र गत्वा महादेवी तदा तौ रामरावणौ। युद्धे नियोजयामास स्वयमन्तर्हिताम्बिका। ७६३। रक्षसां वानराणाञ्च जग्धा मांसं सशोणितं। रामरावणयोर्युद्धं सप्ताहं सा न्ययोजयत्। ७६४। व्यतीते सप्तमे चाह्नि नवम्यां रावणं ततः। रामेण घातयामास महामाया जगन्मयी। ७६५। यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत। तावत्सप्त रात्राणि सर्व्वैर्देवैः सुपूजिता। ७६६। निहते रावणे वीरे नवम्यां सकलैः सुरैः। विशेष पूजां दुर्गायाश्चक्रे लोकपितामहः। ७६७। ततः संप्रेषितादेवी दशम्यां शावरोत्सवैः। शक्रोऽपि देवसेनायां नीराजनमथाकरोत्। ७६८। शान्त्यर्थं सर्वसैन्यानां देवराजस्य हृदये। रामरावणबाणेन युद्धक्षावेश्य भीतिदम्। ७६९। हतीयायां हिलक्ष्मायाः पूर्व्वोत्तर दिग्विस्थितम्। स्वातिनक्षत्र युक्तायां भीतं सर्वबलं महत्। ७७०। शान्त्यर्थं वारयामास देवेन्द्रश्चवनारिः। ततस्तु श्रवणे नाथ दशम्यां चण्डिकां शुभाम्। ७७१। विसृज्य चक्रे शान्त्यर्थं बलनीराजनं हरिः। नीराजितबलः शक्रस्तत्र रामञ्च राघवम्। ७७२। संभाष्य प्रययौ स्वर्गं सह देवैः शचीपतिः। इति वृत्तं पुराकल्पे मनोः स्वायम्भुवान्तरे। ७७३। प्रादुर्भूता दशभुजा देवी देवहिताय वै। नृणां

त्रेतायुगसमाप्ते जगतां हितकाम्यया ॥७७४॥ पुराकल्पे यथाऽऽसन्तं प्रतिकल्पं तथा तथा । प्रवर्त्तते स्वयं देवीदं ता
नां नाशनाय वै ॥ १७५॥ प्रतिकल्पं भवेद्रामो रावणश्चापि राघव । तथैव जायते युद्धं तथा लिङ्गप्रसङ्गमः ॥ ७७६ ॥
एवं राम सहस्राणि रावणानां सहस्रशः ॥ भवितव्यानि भूतानि तथा देवीप्रवर्त्तते ॥ १७७ ॥ पूजयन्ति सुराः
सर्व्वे बलं गौरीं जयन्तापि । तथैव च नराः सर्व्वे कुर्युः पूजां यथाविधि ॥ १७८ ॥ बलनीराजनं राजा कुर्य्याद्विबल
महये । दिव्याल्हादकरं शक्तिभिरित्याहि पूर्व्वं कृतिमम् ॥ १७९ ॥ इति ॥ इत्यत्र पूर्व्वयोः *कुर्य्याद्देवा
महोत्सवमिति दुर्गा*तत्र पूजयन्ति सुराः*सर्व्वे इत्यादिभिरुक्तं ॥१८०॥ दुर्गामन्त्रमो दुर्गे दुर्गे *रक्षिणि स्वाहा ॥
मौ मिति*पूर्व्वमुक्त स्तं गृहीतवान् * यथोक्तदुर्गातत्वोक्त*विधिनानितां पूजयेत् ॥ १८१ ॥ तत्रनृपादयश्चाऽ
जनाः सर्व्वे*शरदि माश्विने मासि*देव्या महोत्सवं निजाश्रमं कुर्युः * एकरूपं छायं दोषः स्यात् ॥ १८२ ॥ योमोहा
द्यथवालस्याद्देवीं दुर्गां महोत्सवे । न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव ॥ १८३ ॥ क्रुद्धा भगवती तस्य कामा
निष्टान्निहन्ति वै । परत्र च महामायावलिभूत्वा स जायते ॥ १८४ ॥ तथा च गृहीतदुर्गामन्त्रः पुमान्*निजाश्रमे सौर
आश्विने *मुख्यचान्द्रे मासि कृष्ण*पक्षे वा प्रतिपदादि*नवमीतिथिपर्यन्तं* ॥ १८५ ॥ यथाचित्वादिनियमेन व्रती
सन् *षष्ठ्यां पूर्व्वाह्ने सफल* बिल्वशाखायां यथोक्त* विधानेन पूजया देवीं बोधयेत् ॥ १८६ ॥ मतः प्रतिपदादि
षु*नवबोधयित्वा कल्पान्तरं षष्ठ्यां बोधयेत् * इति प्रतिपत्तन्नतदाया ॥ १८७ ॥ पुराकल्पे महादेवी मनोः स्वायम्भुवा
न्तरे । नृणां कृतयुगस्यादौ सर्व्वैर्देवैः स्तुता सदा ॥ १८८ ॥ महिषासुरनाशाय जगतां हितकाम्यया । योगनि
द्रा महामाया जगद्धात्री जगन्मयी १८९ ॥ भुजैः षोडशभिर्युक्ता भद्रकालीति विश्रुता । क्षीरोदस्योत्तरे तीरे
बिभ्रती विपुलां तनुं ॥ ७९० ॥ अतसीपुष्पवर्णाभा मिताऽऽदान्तरकृत्तम् । सिंहस्था नयने रक्तवर्णे स्तुतिभिरुज्ज्व
ला ॥ ७९१ ॥ शूलेन महिषं भित्त्वा तिष्ठन्ती परमेश्वरी । वामपादेन चाक्रम्य तत्र देवी जगन्मयी ॥ ७९२ ॥ तां
दृष्ट्वा सकला देवाः प्रणम्य परमेश्वरीम् । प्रोचुर्न किञ्चित्तं दृष्ट्वा निहतं महिषासुरम् ॥ ३९३ ॥ ततः प्रोवाच
देवांस्तान् ब्रह्मादीन् परमेश्वरी । स्मितप्रसन्नवदना विकासिनयनोज्ज्वला ॥ १९४ ॥ गच्छन्तु भोः सुरगणा जम्बु
द्वीपान्तरं प्रति । हिमवत्पर्व्वतासन्ने वरं कात्यायनाश्रमम् ॥ ७९५ ॥ तत्रैव भवतां सिद्धिर्भविष्यति मनस्विनः ।
इत्युक्ता सा महादेवी तत्रैवान्तरधीयत ॥ ७९६ ॥ देवा अपि तदा जग्मुः कात्यायनमुनेः पुरम् । आश्रमं प्रति ते गत्वा
विस्मयाविष्टचेतसः ॥ १९७ ॥ निहतो महिषो देव्या दृष्टोऽस्माभिर्यदर्थतः । संस्तुता सा जगद्धात्री महादेवी जग
न्मयी ॥ ७९८ ॥ किमर्थं सा महादेवी गन्तुं कात्यायनाश्रमम् । किमनया वाञ्छितं कार्यमस्माकं वा भविष्यति
७९९ ॥ इति ब्रुवन्तस्ते देवा गच्छन्ति स्म परस्परम् । हिमवत्पर्व्वतासन्नं मुनिकात्यायनाश्रमम् ॥ ४०० ॥
ततः सेन्द्राः सदिक्पाला ब्रह्मविष्णुशिवादयः । निषेदुश्चिरं प्रीता दुर्गादर्शनमानसाः ॥ ४०१ ॥ ततो रुद्रगणाः
सर्व्वे महिषासुरचेष्टितम् । आगता कथयामासुर्देवलोकपराभवम् ॥ ४०२ ॥ ततस्तत्र महाकोपं ब्रह्मविष्णुशिवा
दयः । चक्रुः कोऽयमोऽस्ति महिषो हतो देव्या स दानवः ॥ ४०३ ॥ ततो ये न मत्कारे णत्वमवाच्युतैवशा । पश्चात्
धानमहिषं जगद्धात्री निबोधतम् ॥ ४०४ ॥ देवानां तेजसां मूर्त्तिं शुक्लपक्षे सुशोभने । षष्ठ्यां दधार सा देवी
सप्तम्यां तैरलङ्कृता ॥ ४०५ ॥ अष्टम्यामुपचारैः सुपूजिता महिषासुरं । निजघान नवम्यां तु विसृष्टान्तर्हिता
शिवा ॥ ४०६ ॥ इत्येवमाश्विने शुक्लपक्षे षष्ठ्यां *दशभुजायाः प्रादुर्भावादयोक्त* नियमेन तस्यां प्रथमं *पूर्व्वाह्णे

एवं द्वितीयेऽपि तिथिमले *चामलतिथौ च दिने *सन्धिपूजां स्थापयित्वा *यथा न एवमिति द्वितीयेऽभूत् ॥ ५०० ॥ अष्ट म्यान्तु दिने पूजायां कृतायां *पुनः महानिशायां बलिदानं *न निशि पुनःपूजामपेक्षते ॥५०१॥ यथा माघेऽष्टम्यां दिने *कृतायां पूजायां पुनः *सन्ध्यायां निजगौवासं *गबलिदानं पुनःपूजां नापेक्षते ॥ ५०२ ॥ तथाच महानिशा गामिनामेव *ह्यष्टम्यां दिने विशेषपूजा *महानिश्यष्टम्यामेव बलिदानमिति चेत् ॥ ५०३ ॥ यदा पूर्व्वाह्णाद् ऊर्द्ध्वं प्रवर्त्तमाना *सताष्टमी परदिने *पूर्व्वाह्णादूर्द्ध्वं यदा सा *तदा पूजा किं पूर्व्व दिने *पूर्व्वाह्णादूर्द्ध्वं भवति ॥५०४॥ परदिने पूजायां हि *महानिश्यष्टम्यामभावात् * बलिदानं नोपपन्नं स्यात् ॥ ५०५ ॥ तस्मात् पुनःपूजामष्टम्यामिति* महानिशि बलिदाने तिथि * नियमो नास्तीति निर्णयः ॥ ५०६ ॥ तथाच यत्र षष्टी घटिकाकालं * सप्तमीपर दिने च *पूजार्हकालव्यापिनी *सतूदयगामिनीतात* *परदिने पूजा कार्या ॥ ५०७ ॥ तत्र युग्मत्वं नग्राह्यं *तथा ष्टमीपरदिने *घटिकाकालं मुहूर्त्तं वावर्त्तते ॥ ५०८ ॥ तत्रोदयगामित्वेऽपि * क्रियानिष्पत्त्यनर्हत्वात्* द्युग्म त्वेऽपि च न परदिने पूजा स्यात् ॥ ५०९ ॥ किन्तु क्रियायोग्यत्वादनुदय*गामित्व युग्मत्वेऽपि च *पूर्व्वदिने पूजा भवति* न हि दुर्गोत्सवव्यापारो मुहूर्त्तं स्यात् ॥ ५१० ॥ यदि हि नवमी पूर्व्वदिने कियत् * कालानन्तरं प्रवृत्ता *परदिने मुहूर्त्तकाला भवति *तदानुदयगापि सा ॥ ५११ ॥ पूजार्हत्वात् पूर्व्वदिने पूजायां * ग्राह्या न परदिने तूदयगा पि* प्रभूत बलिदानादानर्हत्वात् ॥ ५१२ ॥ अथ विसर्जनं दशम्यान्तु कुर्याद्द्वैगावरीत्सवैरिति * चरलग्ने श्रवणा युक्ते *पूर्व्वोक्ते दिने दशम्यां ॥५१३॥ तदुक्तं देवीपुराणे यथा *चरलग्ने चरांशे वा देवीं नियतमानसः ॥ ५१४ ॥ प्रतिसंवत्सरं कुर्यात् स्थापनञ्च विसर्जनम् *राज्यो विनाशमिच्छन्तु स्थिरलग्ने शिवार्पिता ॥ ५१५ ॥ इत्याह कश्चित् देवीपुराणाभिलेखेन । इति दशभुजापूजाविधिरावृत्तिरने प्रोक्तः ॥ ५१६ ॥ ० ॥ अथ योभद्रकालीं षोडश * भुजां महामायामुपासीतस्म *तस्याय दृश्यमन्त्रं गृह्णीयात्तदुक्तं *मे कथयिष्यते मेऽधार्य कालीपुराणे ॥ ५१७ ॥ सर्व्व लोकहितार्थाय सर्व्वलोकविभूतये । दुर्गातन्त्रेण मन्त्रेण पूजितव्या शुभे अपि ॥ ५१८ ॥ भद्रकाल्युग्रचण्डाच महामायामहोत्सवे । नेत्रवीजञ्च सर्व्वासां पूजने परिकीर्त्तितम् ॥ ५१९ ॥ योगिनीनाञ्च सर्व्वासां मूलम न्त्रस्तथैव च । उग्रचण्डाभद्रकाल्योर्मन्त्रन्तु शृणु भैरव ॥ ५२० ॥ आद्यद्वयं नेत्रवीजं मन्त्रस्यापान्त्यमन्ततः । वह्निरन्तस्वरेणेन्दुविन्दुभ्यां मन्त्रमौपिकम् ॥ ५२१ ॥ नेत्रवीजद्वितीयन्तु द्विरावर्त्तितमुच्यते । भद्रकाल्यास्तु मन्त्रोऽयं धर्म्मकामार्थसिद्धये इति ॥ ५२२ ॥ सर्व्वासां देवीनां पूजने नेत्रवीजं प्रणवपुटितं *ओं म् ऐं ह्रौँ ५ं श्रौँ ५ं ओँ म् ॥५२३॥ दुर्गातन्त्रेण मन्त्रेण पूजितव्या *भद्रकाल्युग्रचण्डे द्वे *ओँ दुर्गे दुर्गे रक्षणि ५ स्वाहा ओँ म् * इति साधारणमन्त्रद्वयं ॥५२४॥ प्रत्येकमन्त्रन्तु आद्यद्वयमित्यादि *नेत्रवीजमन्त्रस्याद्यद्वयं मैँ ह्रौँ * तस्यान्तत उपान्त्यो हकारवर्णः ॥ ५२५ ॥ वह्निनारेफेणान्तस्वरेणौकारेण *न्दविन्दुभ्यामर्द्धचन्द्राकृति *रेखानुस्वारा भ्यां युक्तो ह्रौँ तेन ॥ ५२६ ॥ ओँ म् ऐँ ह्रौँ ५ं ह्रौँ ओँ म् इति *उग्रचण्डाया मन्त्रो *भद्रकाल्यास्तु मन्त्रो *५२७ ॥ नेत्रवीजस्य द्वितीयं ह्रौँ ५ं । तद्द्विरावर्त्तितं ह्रौँ ५ं ह्रौँ ५ं *तच्च प्रणवपुटितं ओँ ह्रौँ ५ं ह्रौँ ५ं ओँ म् ॥ ५२८ ॥ तथाच नेत्रवीजमयता दुर्गा *मन्त्रमथवा ह्रौँ ५ं ह्रौँ ५ं *मितिमन्त्रं गृहीत्वा पूर्व्वोक्तदुर्गा* तन्त्रविहितक्रमेण । ५२९ ॥ भद्रकालीं नित्यां पूजयेत्तत्राय *विशेषस्तदुक्तस्तद् यथा ॥ ५३० ॥ उग्रचण्डोदयश्चाष्टौ दुर्गामूर्त्तिस्वकी र्त्तिताः । भद्रकाल्यास्तु मन्त्रेण भद्रकालीं प्रपूजयेत् ॥ ५३१ ॥ पूजयेदृनिद्राय मेताएवाष्टयोगिनीः । जयन्ती

ऽत्यजन्मुदस्तदातपः। नदूरात् संस्थितो नाहं मुनिना कात्यसूनुना ॥५९८॥ स त्वामाराध्य तद्दोषः शिष्यार्थं कोपसङ्गिना। यस्मात्त्वयाऽमे शिष्योऽयं मोहितस्तपसश्च्युतः ॥५९९॥ ततस्त्वया स्त्रीरूपेण तत्त्व. स्त्रीमिह निषत्स्यति। इतिमां शप्तवान्पूर्वं मुनिः कात्यायनो हि माम् ॥६००॥ तस्य शापस्य कालोऽयमागतः समुपस्थितः। देवेन्द्रत्वं मयाप्राप्तं भुक्तं त्रिभुवनं समम् ॥६०१॥ किञ्चिन्नयाचामि तेऽत्रासि वाञ्छनीयं त्वया मया। तस्मात्त्वां वै प्रपन्नोऽहं प्रार्थयामि प्रियं मम ॥६०२॥ तद्देहि देवि दुर्गे त्वं भूयो देवि नमो नमः। देव्युवाच। प्रार्थनीयो वरो यस्ते तं वृणुष्व महासुर ॥६०३॥ दास्यामि ते वरं प्रार्थ्यं संशयो नात्र विद्यते। महिषस्तूवाच। यज्ञभागमहं भोक्तुमिच्छामि त्वत्प्रसादतः ॥६०४॥ यथा यज्ञेषु सर्वेषु पूज्योऽहं स्यां तथा कुरु। त्वत्पादसेवां नत्यक्ष्ये यावत् सूर्यः प्रवर्त्तते ॥६०५॥ देव्युवाच। यज्ञभागाः सुरेभ्यस्तु कल्पिता वै पृथक् पृथक्। भागो न विद्यते चान्योऽयं दास्यामि तवाधुना ॥६०६॥ किन्तु त्वयि मया युद्धे निहते महिषासुर। नैव त्यक्ष्यसि मत्पादं सततं नात्र संशयः ॥६०७॥ मम प्रवर्त्तते पूजा यत्र यत्र च तत्र ते। पूज्यश्चिन्त्यश्च कायोऽयं तवैव तव दानव ॥६०८॥ इति श्रुत्वा वचस्तस्याः प्रत्युवाच महिषासुरः। वरं प्राप्य हि हृष्टः प्रसन्नवदनस्तदा ॥६०९॥ उग्रचण्डे भद्रकालि दुर्गे देवि नमोऽस्तु ते। मूर्त्तयो देवि भवत्याः सकलात्मिकाः ॥६१०॥ काभिस्त्वं मूर्त्तिभिः पूज्यो यस्मात्स्यां परमेश्वरि। तन्मामाचक्ष्व यदि मे भवत्येव कृपा कृता ॥६११॥ देव्युवाच। भोक्तानियानि नामानि त्वयि हे महिषासुर। तासु मूर्त्तिषु संस्पृष्टः पूज्यो लोके भविष्यसि ॥६१२॥ उग्रचण्डेति या मूर्त्तिः भद्रकालीत्यहं पुनः। यया मूर्त्या त्वां हनिष्ये सा दुर्गेति प्रकीर्त्तिता ॥६१३॥ एतासु मूर्त्तिषु यदा पादलग्नो नृपा॰ तदा। पूज्यो भविष्यसि त्वं वै देवानामपि रक्षमाम् ॥६१४॥ आदिसृष्टे उग्रचण्डमूर्त्या त्वं निहतः पुरा। द्वितीयसृष्टौ भवान् भद्रकाल्या मया हतः ॥६१५॥ दुर्गारूपेणाधुना त्वां हनिष्यामि सवाहनम्। किन्तु पूर्वं न गृहीतस्त्वं मया पादयोस्तले ॥६१६॥ अधुना प्रार्थितवरो गृहीतः पूर्वकायधीः। गृहीतवांश्च पश्चात्त्वं यज्ञभागोपभुक्तये ॥६१७॥ इत्युक्त्वा सा महामाया उग्रचण्डा हि यां तनुं। दर्शयामास च तदा महिषायासुराय वै ॥६१८॥ महिषः प्रणनामाशु दृष्ट्वा विस्मयमागतः। ततो यथा पदाक्रम्य निहतो महिषासुरः ॥६१९॥ यथैव जग्हे पादतले देवी हयन्तु तं। छित्त्वा शूलेन निर्भिन्नं महिषं त्रिशिरस्कं ॥६२०॥ गृहीतकर्णं देव्याशु नियतं क्रियाविभूषितं। निर्यद्रक्तं महाकायं दृष्ट्वा पूर्वतनुं स्वकाम् ॥६२१॥ भयं प्राप्यासुरः सोऽथ पुनश्च समोहच। ततस्तु प्रणनाम त्वां संस्तभ्य च दानवः ॥६२२॥ प्रणम्य वचनं देवीमिदमाह सगद्गदम्। यदि देवि प्रसन्नासि यज्ञभागस्य कल्पितः ॥६२३॥ तदा मम नान्यानाथ एवमेव भवेन्न हि। यथाहं न सुरैः सार्द्धं करिष्ये वैरमद्भुतम् ॥६२४॥ तथा मां कुरु तां देवि न जन्म प्रलम्भ तथा। देव्युवाच। आराधिताहं भवता वरो दत्तो मया तव ॥६२५॥ वधार्थं त्वं मम विहनार्थ कार्या विचारणा। इत्थं प्रार्थितश्चापि सर्वैः सुरगणैः सह ॥६२६॥ विरोधामे सदा मा भूदिति चापि भविष्यति। मत्पादतलसंस्पर्शात् स्फुरीरं तव दानव ॥६२७॥ यज्ञभागो नभोगाय विशीर्णं नभविष्यति। विगतप्राणजीवात्मा सन्नेव त्वं महासुर ॥६२८॥ वह स्वपादसंयोगाच्चिरं स्थास्यसि केवलम्। कल्पकोटि सहस्राणि विंशतिं महिषासुर ॥६२८॥ गतानि च स्थानानि जन्मतो न भविष्यति। इति देवी वरं दत्वा तत्रैवान्तरधीयत। इति ॥६२९॥ अथ कन्यायां कृष्णपक्षे तिथि*कन्यायां गौणचान्द्राश्विने रवौ*

कन्यापक्षसमातः परं हि वध्यते ॥ ६३१ ॥ शुक्लपक्षे चतुर्थ्यां निवसामी नैव * मुख्यचान्द्राश्विन इति ॥ ६३२ ॥ नवम्या
मार्द्रान्सर्वे * दिवाभागे देवीमुप * चण्डां दुर्गां तत्स्तोत्रविधानेन * पूजयित्वा गीतादीनां * निःस्वनैर्बोधयेदिति
६३३ ॥ नवकस्मादेव गौणचान्द्राश्विने दिने * नवम्यामार्द्रायां बोधये * तत्रदशभुजायाश्च * षष्ठ्यां प्रतिपदि वेति
६३४ ॥ तत्रोच्यते । षष्टितमेऽध्याये भग * वान्शिववाचयथा ॥ ६३५ ॥ उग्रचण्डा तु यामूर्त्तिरष्टादशभुजाऽभवत् ।
सा नवम्यां पुरा कन्यापक्षे कन्यान्तरे रवौ ॥ ६३६ ॥ प्रादुर्भूता महामाया योगिनीकोटिभिः सह । आषाढस्य तु
पूर्णायां सत्रं द्वादशवार्षिकम् ॥ ६३७ ॥ दक्षः कर्त्तुं समारेभे हताः सर्वे दिवौकसः । तत्राहं न हतस्तेन दक्षेण च
महात्मना ॥ ६३८ ॥ कपालीति सती चापि पितृज्ञाय त्रिवृतानच । ततो रोष समायुक्ता प्राणांस्तत्याज वा सती
६३९ ॥ तान्त्वदेहा सती चापि चण्डमूर्त्तिस्तदाऽभवत् । ततः प्रवृत्ते यज्ञे पितस्मिन्द्वादशवार्षिके ॥ ६४० ॥ नवम्यां
कन्यापक्षे कृष्णायां चण्डरूपधृक् । योगनिद्रा महामाया योगिनीकोटिभिः सह ॥ ६४१ ॥ सतीरूपं परित्यज्य
यज्ञभङ्गमथाकरोत् । भृङ्गरेणोगणैः सर्वैः सहिता शङ्करेण च ॥ ६४२ ॥ स्वयं तमभञ्जत् देवी महासत्रं महात्म
नः । ततो देवा महाक्रोधं चातीव त्रिदिवौकसः ॥ ६४३ ॥ पूजयाञ्चक्रुरतुलां देवीं पूर्व्वोदिते नवे । पूर्व्वो
दितविधानेन पूजामसा दिवौकसः ॥ ६४४ ॥ कृत्वैव परमामापुर्निर्वृतिं दुःखहानये । एवमन्यैरपि सदा कार्या
देव्याः प्रपूजनम् ॥ ६४५ ॥ विभूतिमतुलां प्राप्य चतुर्वर्गप्रदायिनीम् । यो मोहादथवालस्याद्देवीं दुर्गां महो
त्सवे ॥ ६४६ ॥ न पूजयति दम्भाद्वा द्वेषाद्वाप्यथ भैरव । क्रुद्धा भगवती तस्य कामानिष्टान्निहन्ति वै ॥ ६४७ ॥
परवत्सम महामायावलिभूत्वा समजायते । इति ॥ अष्टम्यां रुधिरैर्मांसै * रित्यादुक्तं पूर्व्वं श्रेयम् ॥ ६४८ ॥ इतो
तन्त्रशास्त्रमविद्वान् * कश्चित्प्रमादीवाचष्टे * कालिकापुराणे तु * नवम्यां बोधनमष्टा * दशभुजाया इति तन्न
६४९ ॥ तत्रैव हि कालिकापुराणे प्रोक्तं * उग्रचण्डेति या मूर्त्तिर्भद्रकाली ह्यहं पुनः । यया मूर्त्त्याहं हनिष्ये
सा दुर्गेति प्रकीर्त्तिता ॥ ६५० ॥ एतासु मूर्त्तिषु यदा पादलग्नो नृणां तदा । पूजनीयो भविष्यसि त्वं वै देवानामपि पर
त्तमाम् ॥ ६५१ ॥ इत्यनेन कात्यायनादुर्गयोः * पादलग्नत्वेन महिषासुरस्य * पूजात्वहमतएवाष्टादशभू
जायास्तु ॥ ६५२ ॥ पादलग्नत्वं महिषासुरस्य न * सम्भवति तस्मादष्टादशभुजाया नवम्यां * न बोधनमिति यत् *
प्रमादिना व्याख्यातम् ॥ ६५३ ॥ तदसाधुत्वादग्राह्यं * प्रमादी ह्यन्धः कालीपुराणवचनं * लिखितं
एतासु मूर्त्तिषु यदा * पादलग्नो नृणां तदा ॥ ६५४ ॥ पूजनीयो भविष्यसि त्वमिति तथापि * तन्नाम्नादृष्ट्वा चचष्टे * कात्याय
न्या दुर्गायाः * पादलग्नत्वेन * महिषासुरस्य पूजात्वमुक्तमिति ॥ ६५५ ॥ एतासु मूर्त्तिष्विति वहुवचन * नान्तपदाभ्यां किं
दुर्गैवोपस्थाप्यते पूर्व्वोक्तोग्रचण्डादि * मूर्त्तित्रयं नोपस्थाप्यते ॥ ६५६ ॥ प्रमादी कथमाह स्म * महिषासुरस्य
दुर्गा * पादलग्नत्वेन पूज्यत्वोक्तिरेषा * दशभूजापादलग्नत्वं * न सम्भवति तस्मात् ॥ ६५७ ॥ अष्टादशभुजायान *
नवमी बोधनमिति * महिषासुरस्याष्टादशभुजा * पादलग्नत्वं किं तस्या * बोधने हेतुर्भवति ॥ ६५८ ॥ सा नैव तस्मै
वरमदाद्यदा त्वं * मम पादलग्नः स्यास्तदा मम * पूजार्थं बोधनं भविष्यतीति ॥ ६५९ ॥ अधुना प्रार्थितवरो * गृहीतः प्र
त्यक्षायये * रितोऽपि किं नैवापश्यत् । तस्मात्तत्प्रमादिव्याख्यानमसाधुः * विरुद्धहेतुत्वाक्षायध * तत्संस्कृत
वाक्यमिति ॥ ६६० ॥ इत्थं गौणचान्द्राश्विने कन्या * पक्षे नवम्यामार्द्रायां * दिवाभागे विल्वशाखायां फल * युक्ता
यां यथोक्तेनैव ॥ ६६१ ॥ विधानेन पूजयित्वा * गीतवादित्रादिशब्दै * रुग्रचण्डां बोधयित्वा * दशम्यादिषु दुर्गां

तन्त्रोक्तविधिनाव्रतीभूत्वाप्रत्यहं ॥ ६६२ ॥ नित्यपूजाविधिनापूजयेदथ*शुक्लपक्षे चतुर्थ्यान्तु * देव्याःकेश मोचनं कुर्य्यात् * पञ्चम्यां प्रातरेवस्नापयेत्* सप्तम्यां पत्रिकापूजा ॥ ६६३ ॥ सप्तम्यां दुर्गां तन्त्रोक्तविधानेन * तामूग्रचण्डां पूजयित्वानवसु*पत्रिकास्वनवानां दुर्गाणां पूजा ॥६६४ ॥ नवपत्रिकाउक्ताः*कदलीदाडिमीधान्य *हरिद्रामानककचुः। बिल्वोऽशोकोजयन्तीचविज्ञेयानवपत्रिकाः ॥ ६६५ ॥ अत्रबिल्वइतिफलयुग्मसहितबिल्व शाखा* लिङ्गपुराणेऽभिहिता ॥ ६६६॥ युग्मऽभिन्नाभ्यां बिल्वस्यफलाभ्यां शाखिकां तथा। संस्नाप्यामृतयोः देवीं पूजयित्वाप्रवेशयेदिति ॥६६७॥ पत्रिकाप्रवेशउक्तो*हयशीर्षपञ्चरात्रे* शुभोभावविनिजगत्सिद्धः*प्रवेशेबिल्व वासिनी। बिल्वपादपमभ्येतिपूजार्थं सायमम्बिकाइति॥६६८॥ इत्यनेनपूर्व्वदिने सायं*षष्ठ्यां सज्जं छायांतदभावेचामन्त्रयेन्मत्स्य * सूक्तेउक्तं तद्यथा ॥ ६६९ ॥ ज्येष्ठावाप्यथवाषष्ठीसायंकालेनचेद्भवेत्। सायमेवतथापिस्याद्बिल्वशाखाभिमन्त्रणम् ॥ ६७० ॥ पूर्व्वां षष्ठीं सनक्षत्रां सायं प्राप्तामपित्यजेत्। यद्यातु पत्रिकापूजानपरेद्युर्भविष्यति ॥ ६७१ ॥ सन्निकृष्टन्तुयत्पूर्व्वं पत्रिकादिवसस्यतु। तद्दिनेवरणं कृत्वापरे शाखां प्रवेशयेत् ॥ ६७२ ॥ नन्दिकेश्वरेणाप्युक्तं *पत्रीप्रवेशात् पूर्व्वेद्युःसायाह्ने बिल्ववासिनीम्। चण्डीमामन्त्रयेद्विद्वान्नात्रषष्ठीपुरस्क्रिया ॥ ६७३ ॥ इतीवंश्रह फलान्विताया यस्याः*बिल्वशाखाया बोधनं*कृतं तस्यां शाखायां देवी*मधिवासेनामन्त्रयेत् ॥ ६७४ ॥ एवं नवसुपत्रिकासुचनव * दुर्गाअधिवासेनपूर्व्व * दिनमामन्त्रयेत्परेऽह्निसप्तम्यां पत्रिकासुपूजां कुर्व्वीत ॥ ६७५ ॥ तत्राष्टदलपद्मस्याष्टसुदले * षष्टीकौशिकादीःपूजयेत्प्रत्यह* मष्टम्यां दुर्गां तन्त्रोक्तविधानेन ॥ ६७६ ॥ पूजयेन्महानिशायां *स्वयं बलिदानं वर्यां*जागरणञ्चकुर्व्वीत*अपुत्रकस्तूपवासं *कुर्य्यान्नतुपुत्रवानिति ॥ ६७७॥ नवम्यां तथापूजयित्वाविधिव*द्भूरिबलिदानं कुर्य्यात्*दशम्यां पूर्व्वोक्तविधानेनैव*विसर्जनंकुर्य्यात्तथा॥६७८॥शावरोत्सवंकुर्य्यात्*राजातुमेनाजांबल*द्वयं नीराजनं कुर्य्यात्* इत्युग्रचण्डापूजाविधिः ॥ ६७९ ॥ वैष्णवीं महामायां यउपासीत*सकलवरगतं वैष्णवीमन्त्रं *गृहीत्वावैष्णवी तन्त्रोक्त विधिनैवं*मूर्त्तिं ध्यात्वा*साधकोनित्यं पूजयेत् ॥ ६८० ॥ शोणपद्मप्रतीकाशां रक्तमृदुजलम्बिनीं। चलत्काञ्चनमाणिक्य कुण्डलोज्वलशालिनीम् ॥ ६८१ ॥ सुवर्णरत्नसम्बन्ध किरीटद्वयधारिणीं। रक्तभूषाकर्णनेत्रे स्त्रिभिर्श्चारु विभूषिताम् ॥ ६८२ ॥ सन्ध्यानलसमप्रख्य कपोलांलोललोचनाम्। बिपक्वदाडिमीबीज दन्तां शुभ्रयुगोज्वलाम् ॥ ६८३ ॥ वन्धूकदलरसनां शिरीषप्रभनासिकाम्। कम्बुग्रीवांविशालाक्षीं सूर्य्यकोटिसमप्रभां ॥ ६८४ ॥ चतुर्भुजां विवसनां पीनोन्नतपयोधराम्। दक्षिणोर्द्ध्वेनिस्त्रिंशं परेणासिद्धसूत्रकम् ॥ ६८५ ॥ बिभ्रतीं वामहस्ताभ्यां ममीति वरदायिनीम्। निम्ननाभिं क्रमायात क्षीणमध्यां मनोरमाम् । ६८६ ॥ आनम्रनागनासान्तां गुप्तगुल्फां शुपार्ष्णिकाम्। वक्षपद्माङ्क शङ्काब्ज निविड़ासन राजिताम् ॥ ६८७ ॥ गात्रेण रत्नस्तम्भञ्च समागालम्ब्यसंस्थिताम्। किमिच्छसीतिवचनं व्याहरन्तीं मुहुर्मुहुः ॥ ६८८ ॥ पञ्चाननं पुरःसंस्थं निरीक्षन्तीं स्ववाहनम्। मुक्तावली स्वर्णरत्नहारकङ्कणकादिभिः ॥६८९॥ सर्व्वैरलङ्कारगणैरुज्ज्वलां सस्मिताननाम्। सूर्य्यकोटिप्रतीकाशां सर्व्वालङ्कारसंयुताम् ॥ ६९० ॥ नवयौवनसम्पन्नां तथासर्व्वाङ्गसुन्दरीम्। ईदृशीमम्बिकां ध्यात्वा ओँ नमः फड़िति मस्तके ॥ ६९१ ॥ स्वकीयंमनोदद्यात् साहमेवं बिचिन्तयेत्। इत्येवं नित्यंपूजको*यथाविधिनेपूजयेत्त*इक्षमेकोन षष्टितमेऽध्याये

॥ ६९२ ॥ यदाश्विने शारदीं देवीं महामायां जगन्मयीम् । पूजयेत्तत्र च तदा विशेषं शृणु भैरव ॥ ६९३ ॥ कन्यासंस्थे रवाविषे या शुक्ला तिथिरष्टमी । तस्यां रात्रौ विधातव्या पूजा विभवविस्तरैः ॥ ६९४ ॥ नवम्यां बलिदानञ्च कर्त्तव्यं वै यथाविधि । जपं होमञ्च विधिवत् कुर्यात्तत्र विभूतये ॥ ६९५ ॥ संपूजयेन्महादेवीं अष्ट पुष्पैः क्रमान्नरः । इतोऽत्र विशेषं शृणु * भैरवेति यदुक्तम् ॥ ६९६ ॥ तदाश्विने दशभुजा * पूजाविधानं सामान्या * इत्युक्तं तदनुवर्त्त्य * तत्र विशेष उक्तः ॥ ६९७ ॥ तेन सप्तकोशःस्वार्थं * माश्विने वैष्णवीं देवीं * पूजयेत् शुक्लप्रतिपदादि * नवम्यन्तं यथावि * त्यादिनियमेन प्रतीयात् ॥ ६९८ ॥ प्रातःस्नायी च त्रिकालं * शिवपूजकश्च भवेत् * कुमारीश्च भोजयेत् ॥ ६९९ ॥ षष्ठ्यां वैष्णवीतन्त्रोक्त * विधानेन बहुफल * सहितायां बिल्वशाखायां पूर्णां पूजां * पूर्वाह्णे देवकर्त्तव्यत्वात् * कल्पादिवादिस्वने ॥ ७०० ॥ देवीं सप्तमीबोधयेज्जागरयेत् * प्रमादीतु षष्ठ्यां सायं * बोधनमिति व्याचष्टे ॥ ७०१ ॥ षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत् * इतिनिदर्शनञ्च दर्शयति ॥ ७०२ ॥ तन्निदर्शनमनार्षं * भविष्योक्तत्वेन दर्शितं न च * तत्रास्ति सन्ध्यास्विति बहुवचन * श्चायुक्तं यथाक्रमत्वात् ॥ ७०३ ॥ सायन्तस्याः बिल्वशाखायामामन्त्र्य * तां वैष्णवीं देवीमधिवासयेत् । ७०४ परदिने सप्तम्यां तां * शाखामाहृत्य वैष्णवीं * तन्त्रोक्त विधानेन तां पूजयेत् * अष्टम्यां पुनर्विशेषेण पूजयेत् ॥ अष्टम्यां रुधिरैर्मांसै रिष्टदाक्तैः * विशेषेण पूजयेत् * स्वयं कुर्याद्बलिदानं * महानिशीति यदुक्तं * तत्र विशेष उच्यते । ७०५ । कन्यासंस्थे रवाविष इत्यादि * कन्यासंस्थे रवाविष्यते व * इतिलब्धं पुनरिषग्रहणं * मलमासान्त्राश्विनज्ञापनार्थमेव । ७०६ । तत्र शुक्लाष्टम्यां रात्रौ * विभवविस्तरैर्देव्याः * पूजाविधातव्या नवम्यां बलि * दानं जपो होमश्च वि * भूतये कर्त्तव्या इति । ७०७ । पूजाञ्च दिनत्रयमेवाष्टपुष्पैः * कुर्यात्कुर्यादष्ट पुष्पकाणोक्ता * इहन्निर्व्वाण तन्त्रे तद्यथोच्यते । ७०८ । विष्णुक्रान्ता शङ्खसाहान च करवीरकम् । कुर्याद्दधि द्रोणपुष्पं जवादेया तथाञ्जनौ । ७०९ । जलपद्मं स्थलपद्मं बकपुष्पं प्रदापयेत् । स्वदेहे देवबुद्ध्या धात्वादौ मस्तके क्षिपेत् । ७१० । श्वेतकरवीरं देविधानं तद्देवतात्मकम् । अन्तर्यागे चाष्ट पुष्पं युक्तं तत्र प्रदश्यते । ७११ । अहिंसापरमं पुष्पं पुष्पमिन्द्रियनिग्रहः । दयापुष्पं क्षमापुष्पं भक्तिपुष्पमतःपरम् । ७१२ । ज्ञान पुष्पं शम पुष्पं सोऽहं पुष्पं तथाष्टमं । देह पुष्प देहि पुष्प देहि देहैक्य पुष्पकम् । ७१३ । मन्त्रपुष्पं देवपुष्पं गुरुपुष्पञ्च शाश्वतम् । सर्व्वकान्तु सोऽहं पुष्पमष्टपुष्पमहं परम् । इति ७१४ अपराजितारक्तकरवीर * द्रोणजवाजलपद्मस्थलपद्मावकपुष्प * श्वेतकरवीराणीति * भवन्त्यष्टपुष्पाणीति । ७१५ । नन्वेवं विधाष्टमी नवम्याः पूजा * कस्माद्देतोरिति चेत्तत्राय हेतुः * प्रागुक्तमाश्विनस्य यः शुक्ले तयाभवेदष्टमी तिथिः । ७१६ । महाष्टमीति सा प्रोक्ता देवीप्रीतिकरी परा * इति महाष्टमी देव्यास्तिथिरुक्ता । ७१७ । ततोऽनुनवमी यासा तु सा महानवमी स्मृता । सा तिथिः सर्व्वलोकानां पूजनीया शिवप्रिया । इति । ७१८ । इति महानवमी शैवी तिथि * रुक्तातयोर्मेलने ऽर्द्धनारीनर * प्राया तिथिर्भवति तत्र * वैष्णवीपूजा बहुफला । ७१९ । तदुक्तं विष्णुधर्म्मोत्तरे यथा * अष्टम्यां नवमीयुक्ता नवम्यां चाष्टमी तथा । अर्द्धनारीनरप्राया उमामाहेश्वरी तिथिः । ७२० । इति । नतु सिद्धैवाष्टम्यन्तरानवमी * तत्कस्मादुक्तमष्टम्यां * युक्ता नवमी नवम्यायुक्ता चाष्टमी तिचेत्सत्यम् । ७२१ । नखलु सम्पूर्णा महाष्टमीतिथिः * सम्पूर्णा च महानवमीतिद्वयी * भवत्यर्द्धनारीनर प्राया

तिथिः । ७२२ । किन्त्वष्टम्याः शेषभागो*नवम्याः पूर्व्वभागश्च यस्मिन् तिथौ*सैव तस्यामुत्तरतिथौ*सन्धिरुक्तः । सन्धिः शिवरात्रौ स्यात् । ७२३ । इत्येवं द्वयोस्तयो र्योगोऽयं*अष्टम्याः नवमीयुक्ता नवमी चाष्टमीयुक्ता नवम्यायुक्तेति । ७२४ । तर्हि किमर्थं तस्यां रात्रौ*विधातव्या पूजेत्युक्तं*न तु दिवसे विहिता*इति चेत्तत्रोक्तं मत्स्यसूक्ततन्त्रे । ७२५ । अष्टमीनवमीयोगो रात्रिभागे प्रशस्यते । अर्द्धरात्रे दशगुणं सन्ध्यायां त्रिगुणं भवेदिति । ७२६ । आश्विने वैष्णवीपूजायां शेष*भागाष्टमी पूर्व्वभाग*नवमीयोगोऽष्टमीनवमीयोगो*रात्रौ योगे प्रशस्तः स्यात् ॥ ७२७ ॥ दिवायोगे त्वप्रशस्त* स्तस्मात् वैष्णवीपूजायां दिवाभागेऽष्टमीनव * मीयोगो वर्ज्जनीयः ॥ ७२८ ॥ विध्यर्थस्यापहरणार्थं हि प्रशंसा *स्तुतिर्वर्ज्जनार्थं* निन्दा*द्वावेतावर्थवादावुक्तौ ॥ ७२९ ॥ तस्मात्तस्यां रात्रौ विधातव्या पूजा*विभवविस्तरैरित्या * उक्तं न दिवा तत्पूजोक्ता ॥ ७३० ॥ तत्र रात्रियोगे पि विशेषः फल*मतावर्त्तते वैष्णवी*पूजायां सप्तम्यादिषु*यत्फलं तद्दशगुणं * मध्यरात्रे भवतीति रात्रेरर्द्धं मध्यरात्रो * द्वितीय प्रहरः* सन्ध्या प्रथमयाम इति * न तु मध्याह्नमुहूर्त्तः पूजानिर्व्वाह योग्यत्वाभावात् ॥ ७३१ ॥ यत्तु प्रमादैर्व्वाप्यदृष्टं *दुर्गादिसर्व्वमूर्त्तिपूजायामेवा*ष्टमीनवमीयोगे सन्धौ दिवा* रात्रौ च पूजा महाफला ॥ ७३२ ॥ तत्र निर्द्दिश्य न कश्चित्*अष्टम्याः शेषदण्डश्च* नवम्याः पूर्व्व एव च * तत्र या क्रियते पूजा* विशेषा सा महाफलेति ॥ ७३३ ॥ तदसाधु तद्वचनस्यानार्षत्वा* दमूलकत्वाद्दण्डद्वयस्य च*दुर्गापूजानिर्व्वाहयोग्यकालत्वाभावाच्च । ७३४ । दशभुजादि पूजासु*तया विधसन्धौ पूजाविधानादुक्तत्वाच्च दिवायोग * स्याप्रशस्तत्वेन वर्ज्ज्यत्वाच्चेति । ७३५ । यदि दुर्गादिपूजासु * रात्रियोग एव दण्ड * द्वयं सन्धिपूजेति चेत् । ७३६ । तदा त्वस्यां वैष्णवीमूर्त्तिपूजायां *विशेषं शुभमेवेति * वचनं नोपपद्यते । ७३७ । ० । इति कालिकायां * रागानुगादि*मूर्त्तिपूजाविधि*स्वार्थश्च व्याख्यातः । ७३८ । अथ पराथं रामस्यानुग्रहार्थं * तत्प्रतिपदि रात्रौ बोधनं कृत्वा*दशभुजा एव पूजनं पूर्व्वं दर्शितम् । ७३९ । ० । अथ देवीपुराणोक्तो*देवीपूजाविधिर्यथा । ७४० । इन्द्रं प्रति ब्रह्मोवाच*हते घोरे महावीरे *सुरासुरभयङ्करे *देव्या उपासका देवा* गन्धर्व्वा राक्षसास्तथा । ७४१ । आगता घातितं दृष्ट्वा महिषं तं सुदुर्ज्जयम् । ब्रह्मविष्णुमहेशाना इन्द्रचन्द्रयमानिलाः । ७४२ । आदित्या वसवः साध्या । महानागाश्च गुह्यकाः । समेताः सर्व्वतो देवीं भक्त्या स्तुतिपरे च ते । ७४३ । वरं च सर्व्वलोकानां सा ददौ भयनाशिनी । दलितश्च दशभूतानां महिषाजामिषं घाते । ७४४ । परे श्वो यज्ञमेयं श्वमेधोऽयमसहस्रशः । हता इन्दुभिनादश्च पटहैः शब्दाः समद्दैलाः । ७४५ । पताकाध्वज सङ्घश्च घण्टाचामरशोभितम् । तद्दिनं कारयाश्चक्रे शक्रो भक्तवरोत्तमः । ७४६ । एवं तस्मिन् दिने वत्स भूतप्रेत समाकुले । कृतवान् सर्व्व देवैः स पूजां तस्यास्तु शाश्वतीम् । ७४७ । जलदान्ताश्विने मासि महिषाद्यनिवर्हणी । देवीं सम्पूजयाचाष्टम्यामर्द्धरात्रे पशुं स्वयं ७४८ । घातयन्ति सदा भक्त्या ते भवन्ति महाबलाः । बलिं श्च ये प्रयच्छन्ति सर्व्वभूतेषु मानवाः । ७४९ । तेषां तुष्यति सा देवी यावत्कल्पान्तु शङ्करी । क्रीड़न्ति विविधैर्भोगैर्देवलोके सुदुर्लभैः । ७५० । नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् । न च देवग्रहा दैत्या नागा राक्षसा न च पन्नगाः । ७५१ । बाधयन्ति सुराधाश्च देवीपादसमाश्रितान् । यावद्भूर्वायुराकाशं जलवह्नि शशिग्रहाः । ७५२ । तावच्च चण्डिकापूजा भविष्यति सदा भुवि । शरत्काले विशेषेन आश्विने ह्यष्टमीतिथौ । ७५३ । महाशब्दो नवम्यास्तु लोके ख्यातिं गमिष्यति । इन्द्र उवाच । आश्विने घातिते घोरे नवम्यां प्रतिवत्सरम् । ७५४ । श्रोतुमिच्छामि हं तात सोपवासव्रतादिकम् । ब्रह्मा

वाच। शृणु वत्स प्रवक्ष्यामि यथा त्वं परिपृच्छसि। ७५५। महासिद्धिप्रदं पुण्यं सर्व्वपापनिवर्हणम्। सर्व्वलोकोपकारार्थं विशेषाद्‌गृहिवृत्तिषु ॥ ७५६ ॥ कर्त्तव्यं ब्राह्मणैरेव क्षत्रियैर्भूमिपालकैः। गोधनार्थं वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ॥ ७५७ ॥ महाव्रतं महापुण्यं शङ्करादैरनुष्ठितम्। कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥ ७५८ ॥ कन्यासंस्थे रवौ वत्स शुक्लामारभ्य नन्दिकाम्। अयाचीत्वथवैकाशी नक्ताशी त्वथ वा गयतः ॥ ७५९ ॥ प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः। जपहोमसमायुक्तः कन्यकां भोजयेत्सदा ७६० ॥ अष्टम्यां नवगेहानि दारुजानि शुभानि च। एकं वा वित्ताभावेन कारयेत्तद्वरसत्तम ॥ ७६१ ॥ तस्मिन् देवीं प्रकर्त्तव्या हैमी वा राजती तथा। महालक्षणोपेता खड्गं शूले ऽथ पूजयेत् ॥ ७६२ ॥ सर्व्वोपहारसम्पन्नवस्त्ररत्नफलादिभिः। कारयेद्रथदोलादौ पूजाञ्च बलवर्द्धिनीम् ॥ ७६३ ॥ पुष्पैश्चन्द्रोणविल्वाम्रजातीपुन्नागचम्पकैः। विचित्रां रचयेत् पूजामष्टम्यामुपवासयेत् ॥ ७६४ ॥ दुर्गापतो जपेन्मन्त्रमेकचित्तः सुभावितः। तदर्द्धयामिनीशेषे विजयार्थं नृपोत्तमैः ॥ ७६५ ॥ सर्व्वाङ्गलक्षणोपेतं गन्धपुष्पस्रजार्च्चितम्। त्रिधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् ॥ ७६६ ॥ पश्चात्तद्रुधिरं मांसं गृहीत्वा पूतनादिषु। नैऋताय प्रदातव्यं महाकौशिकमन्त्रितम् ॥ ७६७॥ तस्याग्रतो नृपःस्नायात् शत्रुं कृत्वाथ पिष्टजम्। खड्गेन घातयित्वाथ दद्यात् स्कन्दविशाखयोः ॥ ७६८ ॥ ततो देवीं स्नापयेत क्षीरसर्पिर्जलादिभिः। कुङ्कुमागुरुकर्पूरचन्दनैश्च चर्चापूजयेत् ॥ ७६९ ॥ हेमादिपुष्परत्नादिवासांसि वाहनानि च। निवेद्यमन्नपूतन्तु देयं देव्यै सुभावितम् ७७० ॥ देवीभक्तास्तु पूज्या स्युः कन्यकाः प्रमदा अपि। द्विजान् दीनांस्तपसन्नान् सर्व्वान् दानेन प्रीणयेत् ॥ ७७१ नन्दन्ति भक्त्या ये येन महाव्रतधराश्च ये। पूजयेत्तान् विशेषेण तस्मात्तद्देवचर्च्चिका ॥ ७७२ ॥ मातृकाणाञ्च देवीनां पूजा कार्य्या तथा निशि। ध्वजच्छत्रपताकादि मूर्द्ध्नि चाम्बिकागृहे ॥ ७७३ ॥ रथयात्रां बलिक्षेपं पटुवाद्यरवाकुलम्। कारयेत्तूर्य्यघोषेण देवीवस्त्रनिपातनैः ॥ ७७४ ॥ अश्वमेधफलावाप्तिर्भक्तितस्तद्वरसत्तम। महानवम्यां पूजेयं सर्व्वकामप्रदायिका ॥ ७७५ ॥ सर्व्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्त्तिताम्। कृत्वाप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः ॥ ७७६ ॥

---

## अथकालीपूजाकालनिर्णयः।

पूर्व्वाह्नो वै देवानां *मध्यन्दिनं मनुष्याणां*मपराह्नः पितृणा*मिति श्रुतिं कृत्वा मतमभिहितं* ॥ १ ॥ पूर्व्वाह्न एव कर्त्तव्यं *देवतानाञ्च पूजनं* मिति तस्यापवादे ॥ २ ॥ यथा शिवरात्रिव्रते शिवस्य *जन्माष्टमीव्रते कृष्णस्य रात्रौ *पूजा विहिता तथैव* कालीपूजा रात्रौ ज्ञेया ॥ ३ ॥ तद्यथा शिववचनं* दिवा न पूजयेद्देवीं रात्रावेव च पूजयेत्। सर्व्वदा पूजयेत कालीं दिवारात्रिविवर्जिते। इति ॥ ४ ॥ सूर्य्यावस्थितिकालो दिवा त्रियामा*रात्रिः प्रथमार्द्धयाम * शेषार्द्धयामौ विहाय * मध्यमत्रियामा रात्रि * रन्यावस्थ्या वर्ज्ज्या ॥ ५ ॥ इत्थं प्रथमयाम*शेषयामद्वयमिति*त्रियामा रात्रि र्विवक्षिता ॥ ६ ॥ इतो वै त्रियामा रात्रि *सूर्य्यावस्थितकालं दिवा * वर्ज्जयित्वा

युक्तापाऽमावास्याकालरात्रीतिविश्रुता ॥ ६७ ॥ आविर्भूतामहाकालीयोगिनीकोटिभिःसह । तस्यांपूजाप्रकर्त्तव्यानिशार्द्धे कर्कटोदये ॥६८॥ तत्रोभयदिनेव्याप्त काले भूतयुतायदि । उमामाहेश्वरीसाच तिथिःसिद्धिप्रदामताः ॥ ६९ ॥ इति महाकाली विषयपूजा*वचनं नदक्षिणा काली विषयं*तत्रकर्कटे इतिनोक्ता * यत्कर्कटोदय इत्युक्तं ।७०। तेनभावितंयस्याममावास्यायां*कर्कटस्योदयःस्यात्तस्यामेव*ह्यमावास्यायांमहाकालींपूजयेत् ॥७१॥ नत्र यस्याममावास्यायां* कर्कठोनोदित्य क्रियत्कालं वर्त्तते*तस्याममावास्यायामिति ॥ ७२ ॥ तत्रोभयदिनेव्याप्त काले इति*यत्रकालेऽक्षयफलं*ममृतकल्पफलं*चौरोपमफलंसहि व्याप्तकालः ॥ ७३ ॥ तत्रभूतचतुर्द्दशी * युक्तामावास्या यदिस्या*त्तदासातूमामाहेश्वरी तिथिःस्यात् ॥ ७४ ॥ इति ॥ तत्रापिकार्त्तिकस्य प्रथमदिनमारभ्य मेषवृष मिथुनपरिमानं पञ्चविंशति पलाधिकचतुर्द्दशदण्डाः । तेनाष्टम मुहूर्त्तन्यूनत्वे उत्तरोत्तरदिनेषुमेषमाना पाये मुहूर्त्त पूरणे महाकाली पूजनं न दक्षिणा कालिकाया इति निष्कर्षः ॥ * ॥ इत्येवं स्वस्वाभीष्टानां देवतानां*पूजनं यथोक्त विधिना पूर्व्वाह्णे एवकुर्व्वीतेतिशेयं ॥ * ॥ ७८८ ॥ * ॥ १५२ ॥

**दैवतान्यभिगच्छेत्तु धार्म्मिकांश्चद्विजोत्तमान् । ईश्वरञ्चैवरक्षार्थं गुरूनेवचपर्व्वसु ॥ १५३ ॥**

दैवतान्यभीत्यादि ॥ १५३ ॥ द्विजोनिजसंरक्षार्थं* पर्व्वसुदैवतानाभि*गच्छेद्धार्म्मिकान् द्विजोत्तमान् ब्राह्मणा*नभिगच्छेदीश्वरञ्च*राजानं गुरूंश्चाभिगच्छेत् ॥ १ ॥ १५३ ॥

**अभिवादयेद्वृद्धांश्चदद्याच्चैवासनंस्वकम् । कृताञ्जलिरुपासीतगच्छतःपृष्ठतोऽन्वियात् ॥१५४**

अभिवादयेदित्यादि ॥ १५४ ॥ स्वगृहमागतान्वृद्धा*नभिवादयेत् स्वकञ्चासनंदद्या* त्तान्कृताञ्जलिःसन्नुपासीततांश्च*गच्छतः पृष्ठतोऽन्वियात् ॥ १ ॥ १५४ ॥

**श्रुतिस्मृत्युदितंसम्यङ्निबद्धंस्वेषुकर्म्मसु । धर्म्ममूलंनिषेवेतसदाचारमतन्द्रितः ॥ १५५ ॥**

श्रुतीत्यादि । १५५ । द्विजःस्वेषुकर्म्मसु धर्म्ममूलं स*श्रुतिस्मृतिभ्यां सम्यग्याथार्थ्येनैव * निबद्धंसंहिताक्रमेण*कृतंतच्चनिषेवेत । १ । अतन्द्रितः*सन्धर्म्ममूलं *सदाचारं*निषेवेत । २ । १५५ । सदाचारात्यद्भवति तदुच्यते*आचाराल्लभतइत्यादि । १ । १५६ ।

**आचाराल्लभतेह्यायु राचारादीप्सिताःप्रजाः । आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ १५६ ॥**

अलक्षणमशुभ लक्षणमाचारोहन्त्यथ दुराचार कार्य्यमाहदुराचारेत्यादि । १ । १५६ । १५७ ।

दुराचारो हि पुरुषो लोके भवति निन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥ १५७

सद्व्यर्थवाद श्लोकः सदाचारस्यापरं गुणमाह * सर्व्वलक्षणेत्यादिकं ॥ १५७ ॥

सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः। श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥ १५८

यद्यत्परवशं कर्म्म तत्तद्यत्नेन वर्जयेत्। यद्यदात्मवशन्तु स्यात्तत्तत्सेवेत यत्नतः॥ १५९

सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम्। एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥ १६०

यत्कर्म्म कुर्व्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः। तत्प्रयत्नेन कुर्व्वीत विपरीतन्तु वर्जयेत्॥ १६१

आचार्यञ्च प्रवक्तारं पितरं मातरं गुरुम्। न हिंस्याद्ब्राह्मणान्गाश्च सर्व्वांश्चैव तपस्विनः॥ १६२

नास्तिक्यं वेदनिन्दाञ्च देवतानाञ्च कुत्सनम्। द्वेषं दम्भञ्च मानञ्च क्रोधं तैक्ष्ण्यञ्च वर्ज्जयेत्॥ १६३

परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैव निपातयेत्। अन्यत्र पुत्राच्छिष्याद्वा शिष्ट्यर्थं ताडयेत्तु तौ॥ १६४

यद्यदित्यादि * ताडयेत्तु ता * वित्यन्ताः सप्त * श्लोकाः स्पष्टार्थाः ॥ १ ॥ ब्राह्मणायेत्यादि ॥ १६४ ॥

ब्राह्मणायावगुर्य्यैव द्विजातिर्वधकाम्यया। शतं वर्षाणि तामिस्रे नरके परिवर्त्तते॥ १६५ ॥

द्विजातिर्वधकाम्यया * ब्राह्मणायावगुर्य्य दण्डमुद्यम्य * तामिस्रे नरके शतं * वर्षाणि परिवर्त्तते ॥ १ ॥ १६५

ताडयित्वा तृणेनापि संरम्भान्मतिपूर्व्वकम्। एकविंशतमाजातीः पापयोनिषु जायते॥ १६६

ताडयित्वेत्यादि ॥ १६६ ॥ संरम्भादिति क्रुद्धात् * विलक्षणारभटीं कृत्वा * एकविंशतितमा इति * एकविंशतेः पूरणी एकविंशी ॥ १ ॥ एकविंशीमाजातीनां * जन्मनां मध्येऽतिशयेन पाप * योनिषु या जातयस्ता * एकविंशतितमा इति ॥ २ ॥ ० ॥ १६६ ॥ ० ॥

अयुध्यमानस्योत्पाद्य ब्राह्मणस्यासृगङ्गतः। दुःखं सुमहदाप्नोति प्रेत्याप्राज्ञतया नरः॥ १६७

अयुद्ध्यमानस्येत्यादि ॥ १६७ ॥ सर्व्व एव नरो ब्राह्मणस्य * अयुद्धमानस्याङ्गतोऽसृक् * अज्ञानप्राज्ञतयोत्पाद्य * प्रेत्य महद्दुःखमाप्नोति ॥ १ ॥ ० ॥ १६७ ॥ ० ॥

शोणितं यावतः पांशून्संगृह्णाति महीतलात्। तावतोऽब्दानमुत्रान्यैः शोणितोत्पादकोऽद्यते॥ १६८

शोणितमित्यादिनापर*दोषमाह्वायुद्धमानस्या*ब्राह्मणस्यासृक् पात । १ । ० ॥ १६८ ॥ ० ॥ अयुध्यमा नस्यब्राह्मणस्याङ्गतः*शोणितं येनोत्पादितं* मह्वीतलात् यावतःपांशून् व्स्यृह्णाति*तावतोऽब्दानमुत्र ॥ १॥ स तच्छोणि*तोत्पादको*नरोऽन्यैरद्यते इति ॥ २ ॥ ० ॥ १६८ ॥

नकदाचिद्द्विजे तस्माद्विद्वानवगुरेदपि। नताड़येत्तृणेनापिनगात्रात्स्त्रावयेदसृक् ॥ १६९

नकदाचिदित्यादि ॥ १६९ ॥ तस्मात्कामिस्नवके*यतवधवाम्यादिदोषाद्विद्वान् * वधकामाय वद्विजे ॥ १ ॥ ब्राह्मणेनावगुरेन*दण्डमुद्यच्छेत्तृणे*नापिनताड़येन्नच*गात्रादसृकस्त्रावयेत्*नलवधकामायादोषो* नच युद्धमानस्यापात् ॥ २ ॥ ० ॥ १६९ ॥ ० ॥

अधार्म्मिकोनरोयोहि यस्यचाप्यनृतंधनम्। हिंसारतश्चयोनित्यं नेहासौसुखमेधते ॥ १७०

अधार्म्मिक इत्यादि ॥ १७० ॥ अनृतं धनमितिधर्म्मार्थंव्यय*नक्रियतेहिंसारतइत्यावेध * हिंसारतोनवे धहिंसायांरत*स्तनदोषाभावोक्तत्वात् ॥ १ ॥ ० ॥ १७० ॥ ० ॥

नसीदन्नपिधर्म्मेण मनोऽधर्म्मे निवेशयेत्। अधार्म्मिकाणां पापाना माशुपश्यन् विपर्य्ययम् ॥ १७१

नसीदन्नित्यादि ॥ १७१ ॥ ०॥ धर्म्मेणावसीदनधनाद्यभावेन*क्लिश्यन्नपिनरोविद्वा*नधार्म्मिकाणामाशुवे व*विपर्य्ययंपापानान्तु*कर्म्मधनादिमम्पद ॥ १ ॥ पश्यन्नाधर्म्मे मनोनिवेशयेदिति*कस्मान्न पापानां कर्म्म* ध नसम्पत्स्याम्न विप*दित्यत आह्न नेत्यादि ॥ २ ॥ ० ॥ १७१ ॥ ० ॥ १७१ ॥

नाधर्म्मश्चरितोलोके सद्यःफलतिगौरिव। शनैरावर्त्तमानस्तु कर्त्तुर्मूलानिकृन्तति ॥ १७२ ॥

नाधर्म्मइत्यादिः । नरेणाचरितोयस्तु धर्म्मःसखलु*लोके गौरिवदुग्धं न*सद्यःफलतिशनैः स* आवर्त्तमानस्तु कर्त्तु*र्मूलानिकालेकृन्तति ॥ १ ॥ ० ॥ १७२ ॥ ० ॥

यदिनात्मनिपुत्रेषु नचेत् पुत्रेषुनप्तृषु। नत्वेवतुकृतोऽधर्म्मःकर्त्तुर्भवतिनिष्फलः ॥ १७३ ॥

कदाफलतीत्यतआह*यदीत्यादि ॥ १७३ ॥ यदिपापकर्म्मफलं * नात्मनिफलति पुत्रेषुफलेत्*पुत्रेषु न चेत्फलति * नप्तृषु पौत्रेषुफलेत् । १ । ततस्तु धर्म्मोनकर्त्तुर्निष्फलःस्या * दितिव कालेफलति । १ । ० १७३ ॥ ० ॥ यदा वमेके नकतकर्म्मफल* मनात्मिन् फलतितदात्वनात्मत*कर्म्मफलमनगोभुङ्क्ते । २ । ततो ऽनात्मवादिमास्तिकानां मत*मपपदातेनास्मात्मेति । ३ । नैवं योहिशुभाशुभं *कर्म्मकरोतिसएव* तत्सकर्म्म फलंभुङ्क्ते । ४ । कर्म्मणःकालान्तरफलकत्वा*दयदात्मनिजीवतिनफलति* परलोकेपिनयदिफलति । ५ ।

पुनर्जन्मनि च नात्मनि फलति*तच्छुभाशुभकर्म्मफलेनैव* पुत्राः स्वकर्म्मफलसहितेन*दुःशीलधार्म्मिका रोगाः स्वयं विद्यादिगुणिनः ।६। दुःशीलाधार्म्मिकानारोगानैश्वर्या*जात्यान्धावाधिर्यादिदोषवन्त* जायन्ते इति पुत्रेषु* स्वकर्म्माणि फलन्ति । ७ । तन्निमित्तकखदुःख*फलं पिता भुङ्क्ते पुत्राश्च स्वकृत*कर्म्मफलं स्वतन्त्रं भुञ्जते*पौत्रेष्वेवं ज्ञेयमिति । ८ । ततोऽनात्मवादिनास्तिकानां मतं*नोपपन्नं भवतीति । ९ ।

अधर्म्मेणैधते तावत्ततो भद्राणि पश्यति । ततः सपत्नान् जयति समूलन्तु विनश्यति ॥ १७४

अधर्म्मेणेत्यादि ।१७४। अधर्म्मेण तावदेधते यावत्तदधर्म्मो न परिणमते*फलोन्मुखो भवति*ततो भद्राणि पश्यति * ततः सपत्नान् * शत्रून् जयति ॥ १ ॥ इत्येवं वर्त्तते तत * स्वाधर्म्मपरिणामे * समूलन्तु विनश्यति ॥ २ ॥ ० ॥ १७४ ॥

सत्यधर्म्मार्य्यवृत्तेषु शौचे चैवारमेत्सदा । शिष्यांश्च शिष्याद्धर्म्मेण वाग्बाहूदरसंयतः ॥ १७५

सत्येत्यादि ॥ १७५ ॥ ब्राह्मणः सत्यधर्म्मेषु*चार्य्यवृत्तेषु शौचे चैव सदा*रमेत शिष्यांश्च धर्म्मेणैव शिष्यात्* वाग्बाहूदरसंयतः ॥ १ ॥ वाक्संयतः परुषं*न ब्रूयाद् बाहुसंयतः*कञ्चिन्न ताडयेदुदरसंयतः* किञ्चिदप्यभक्ष्यं नाद्यात् ॥ २ ॥ ० ॥ १७५ ।

परित्यजेदर्थकामौ यौ स्यातां धर्म्मवर्जितौ । धर्म्मञ्चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥ १७६

परित्यजेदित्यादि ॥ १७६ ॥ यौ स्यातां धर्म्मवर्जितौ*अर्थकामौ तौ धर्म्मार्थी*वर्जयेद्येन धर्म्मेण* लोकाश्चाक्रोशन्ति ॥ १ ॥ तं लोकविक्रुष्टमसुखोदर्कं*परमे दुःखदं धर्म्मं*चापि परित्यजेदिति । २ ॥ ० ॥ ० ॥ ७६ ॥ ० ॥

न पाणिपादचपलो न नेत्रचपलोऽनृजुः । न स्याद्वाक्चपलश्चैव न परद्रोहकर्म्मधीः ॥ १७७

न पाणिपादेत्यादि ॥ ० ॥ १७७ ॥ ० ॥ न पाणिपादचपलः स्यात्* पाणिचपलः सन् पाणिना * हठान्नताडयेत् । १ ॥ पादचपलः सन् हठात्*कस्मिंश्चित् पादाघातमपि* ब्राह्मणो न कुर्य्यात् ॥ २ ॥ न नेत्रचपलः स्यान्नेत्र*चपलः सन् परदारेषु*विरुद्धदृष्टिं न कुर्व्वीत न नानाविधशुभेऽसद्दृष्टिः स्यात् । ३ । नानृजुः स्यात् कुटिलो न स्यात्* वाक्चपलः स्याद्वाक्चपलः सन् *हठात् परुषं न ब्रूयात्*न परद्रोहधीश्च स्यात् । ४ । ० । १७७ ।

न येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥ १७८

येनेत्यादि । १७८ । सतां खलु धर्म्माचरणप्रकारा*बहवः सन्ति तत्र*येन प्रकारेणास्य* पिता सतां मार्गं गन्ताभूत्* । १ । न केवलः पिता येन*प्रकारेण सतां मार्गं *गन्ता तेन प्रकारेण*सतां मार्गं पुत्रो यायात्

२॥ किन्तर्हि पितामहादयस्तेनैव येन प्रकारेण सतां मार्गं याता येन प्रकारेण तत्पुत्रादिः सतां मार्गं यायात्। २॥ यदि पिता येन प्रकारेण पिता पितामहादयश्चास मार्गं यातास्तेन प्रकारेण सतां मार्गं यायात्॥ १॥ तेन प्रकारेण सतां मार्गं गच्छन् अधर्मेण न रिष्यते न हिंस्यते ॥ इति ॥ ४॥ ०॥ १७८॥ ०॥

ऋत्विक्पुरोहिताचार्यैर्मातुलातिथिसंश्रितैः। बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः॥१७९

मातापितृभ्यां यामीभिर्भ्रात्रा पुत्रेण भार्यया। दुहित्रा दासवर्गेण विवादं न समाचरेत्॥१८०

ऋत्विगित्यादि ॥१७९॥ १८०॥ ऋत्विगादिभिर्दासवर्गान्तैः सह विवादं न समाचरेत् यामयो भगिनीस्नुषाद्य इति ॥१॥०॥ १७९ ॥१८० तैः सह विवादत्यागफलमाह एतैर्विवादानित्यादि ॥ १॥ ०॥ १८१॥

एतैर्विवादान्सन्त्यज्य सर्वपापैः प्रमुच्यते। एभिर्जितैश्च जयति सर्वांल्लोकानिमान्गृही॥१८१

विवादत्यागेन जितैरेभिरृत्विगादिभिः गृही सर्वानिमाँल्लोकाञ्जयतीति ॥ १॥ १८१ ॥

आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः। अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः॥१८२

आचार्य इत्यादिना येन सह विवादपरित्यागेन यं लोकं जयति तत्तत्लोकं प्रमाह ॥१॥०॥ १८२ ब्रह्मलोके प्रभुराचार्यस्तेन सह विवादपरित्यागेन गृही ब्रह्मलोकं जयति ॥२॥ प्राजापत्यलोके प्रभुः पिता तेन सह विवादत्यागेन तल्लोकं गृही जयति ॥३॥ इन्द्रलोके प्रभुरतिथिस्तेन सह विवादस्य परित्यागेन इन्द्रलोकं गृही जयति ॥४॥ देवलोकस्य प्रभुरृत्विक् तेन सह विवादस्य परित्यागेन देवलोकं जयति ॥५॥ १०॥ १८२॥

यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः। सम्बन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलौ॥१८३

यामय इत्यादि ॥ १८३॥ ०॥ अप्सरसां लोकस्येशा यामयस्तैः सह विवाद परित्यागेनाप्सरोलोकं जयति ॥६॥ वैश्वदेवस्य लोकस्य बान्धवा ईशास्तैः सह विवादत्यागेन वैश्वदेवलोकं जयति ॥७॥ अपां लोके सम्बन्धिनो वैवाहिकादय ईशास्तैः सह विवादत्यागेनापां लोकं जयति ।८। पृथिव्या लोकस्येशौ मातृमातुलौ ताभ्यां सह विवादस्य त्यागेन भूलोकं जयति ॥ ९॥ ०॥ १८३॥

आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः। भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः॥१८४

आकाशेशा इत्यादि ॥ १८४॥ बालादय आकाशेशास्तैः सह विवादत्यागेनान्तरीक्षलोकं जयति ।१। ज्येष्ठो भ्राता पित्रा समस्तेन सह विवादस्य त्यागेन च प्राजापत्यं लोकं जयति भार्या च पुत्रश्च स्वीया तनुः शरीरं

२॥ ०। १८४॥

छायास्वोदासवर्गश्चदुहिताकृपणंपरम्। तस्मादेतैरधिक्षिप्तःसहेताऽसंज्वरःसदा॥ १८५

छायेत्यादि ॥१८५॥ दासवर्गःस्वाछायासमा* दुहितापरंकृपणं*कृपापात्रमिति.समा * अयंगादिभिरधिक्षिप्तः*सन्नप्रासंज्वरोमनसि*तापंनकल्पासहेत् ॥ २॥ ०॥ १८५ ॥ ० ॥

प्रतिग्रहसमर्थोपिप्रसङ्गंतत्रवर्जयेत्। प्रतिग्रहेणह्यस्याशुब्राह्मंतेजःप्रशाम्यति॥ १८६

प्रतिग्रहेत्यादि ॥१८६॥ विद्याक्रियातपोभिःसम्पन्नएव*द्विजःप्रतिग्रहसमर्थोभवति* तद्यथाययाविधि यथाकालं । १ । उपनीतोगुरुकुले*वसन्ब्रह्मचर्यं चरनवेदान्*वेदौवेदामकशाखांवाधीत्यावि*प्लुतब्रह्मचर्यःसन गुरुणानुमतः स्नात्वा ।२। समावर्त्तनेसविद्यासम्पन्नः* स्यान्नत्वविधिनावेदमधीत्यापि*विद्यासम्पन्नोभवति ।३। मापितेदं विनानायशास्त्रमधीत्यादि विद्यासम्पन्नोभवति । ४ । तथैवविद्वान्दारान्गृहीत्वान्यत्र*मावसनगृहीत्वा चाग्नि*मग्निहोत्रादीनियःकरोति*सक्रियासम्पन्नः स्यात् । ५ । इत्येवंविधोद्विजःप्रतिग्रहसमर्थःस्यात्तथाविधोपि *तत्रप्रसङ्गंतुपुनःपुनः*प्रवृत्तिं वर्जयेत् ॥ १ ॥ कस्मात्हियस्मात्सतत * प्रतिग्रहेणब्राह्मंतेजो * वेदाध्ययनादिजनितं*तेजःआशुप्रशाम्यति २ ॥ ० ॥ १८६ ॥

नद्रव्याणामविज्ञायविधिंधर्म्यंप्रतिग्रहे। प्राज्ञःप्रतिग्रहंकुर्यादवसीदन्नपिक्षुधा॥ १८७

नद्रव्याणामित्यादि ॥ १८७ ॥ द्रव्याणांप्रतिग्रहेधर्म्यंविधिंन*विज्ञायप्राज्ञःक्षुधया* सीदन्नपिप्रतिग्रहं * नकुर्यात्ग्राह्यवाभेदेदोषात् ।१।१८७। कस्मिन्द्रव्येकोदोषइत्यत आह*हिरण्यंभूमिमित्यादि ।१।१८८।

हिरण्यंभूमिमश्वंगामन्नंवासस्तिलान्घृतम्। प्रतिगृह्णन्नविद्वांस्तुभस्मीभवतिदारुवत्॥१८८

अविद्वान्वेदाध्ययन*विहीनोब्राह्मणोहिरण्यादीनिप्रतिगृह्णन्सन्*दारुवद्भस्मीभवति ॥१॥ ० ॥१८८॥०॥

तत्रयत्प्रतिग्रहेयत्*स्यात्तदाहहिरण्य*मायुरित्यादिश्लोकम् ॥ १ ॥ ० ॥ १८९ ॥ ० ॥

हिरण्यमायुरन्नञ्चभूर्गौश्चाप्योषतस्तनुम्। अश्वश्चक्षुस्त्वचंवासोघृतंतेजस्तिलाःप्रजाः॥१८९

अविद्यपावेदमनधीयानेन**प्रतिगृह्णीतेहिरण्य*मन्नञ्चेतातेतस्यायु*रोषतदुपदाहेभौवादिकोऽयम् ॥१ भूर्गौश्चेतातेचाविदुषाप्रति*गृह्णीतेतस्यवतत*शरीरमोषतएव*मश्वश्चाविदुषाप्रति*गृहीतश्चक्षुरोषति ॥ २ वासोवस्त्रमविदुषा*प्रतिगृह्णीतंतस्यैव*त्वचंचर्मदेहस्योषति* ॥ ३ ॥ घृतमविदुषाप्रति * गृह्णीतंतेजओषति* तिलाअविदुषाप्रति* गृह्णीताःप्रजाओषन्ति ॥ ४ ॥ ० ॥ १८९ ॥ ० ॥ असमर्थस्यप्रतिग्रहफलमाह * अतपा इत्यादिश्लोकं ॥ १ ॥ ० ॥ १९० ॥

अतपास्त्वनधीयानःप्रतिग्रहरुचिर्द्विजः। अम्भस्यश्मप्लवेनेवसहतेनैवमज्जति॥ १९०॥

लिप्तकर्मरतो यस्तु गर्भाष्टव्रतिपालकः। वाणिज्यो ब्राह्मणो यस्तु स विप्रो वैश्य उच्यते ॥ १९ ॥ लाक्षालवण सम्मिश्र कुसुम्भं क्षीर सर्पिषी। विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥ २० ॥ चौरश्च तस्करश्चैव सूचको दंशकस्तथा। मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥ २१ ॥ ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः। तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥ २२ ॥ वापीकूपतडागानामारामस्य सरःसु च। निःशङ्कं रोधकश्चैव स च विप्रो म्लेच्छ उच्यते ॥ २३ ॥ क्रियाहीनश्च मूर्खश्च सर्व्वधर्म्मविवर्जितः। निर्दयः सर्व्वभूतेषु विप्रश्चाण्डाल उच्यते ॥ २४ ॥ वेदैर्विहीनाश्च पठन्ति शास्त्रं शास्त्रेण हीनाश्च पुराणपाठाः। पुराणहीनाः कृषिणो भवन्ति भ्रष्टास्ततो भागवता भवन्ति ॥ २५ ॥ ज्योतिर्विदो ह्यथर्व्वाणः कीराः पौराणपाठकाः। श्राद्धे यज्ञे महादाने वरणीयाः कदाचन ॥ २६ ॥ श्राद्धं च पितृणां मोघं दानं सर्व्वं तु निष्फलम्। यत्र चैते महाभागाः तस्मात्तान् परिवर्जयेत् ॥ २७ ॥ इति ॥ १९२ ॥०॥ एषु बैडालव्रतिक*बकव्रतिकादिषु*दत्तं दानं व्यर्थमित्याह त्रिष्वपीत्यादि ॥ १ ॥ ० ॥ १९२ ॥

**त्रिष्वप्येतेषु दत्तं हि विधिनाप्यर्जितं धनम्। दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥ १९३ ॥**

विधिना धर्म्मेणापार्जितं धनं *एतेषु वैडालव्रतिकबक*व्रतिकावेदवित्सु दत्तं ॥१॥ दातुरादातुश्च परत्र नार्थाय*भवतीत्यतस्तान् त्यजेत् ॥ २ ॥ ० ॥ १९३ ॥ ० ॥ ० ॥

**यथा प्लवेनौपलेन निमज्जत्युदके तरन्। तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥ १९४ ॥**

यथेत्यादि ॥ १९४ ॥ औपलेन प्रस्तरकृतेन*प्लवेन उडुपेन यथा* तरंस्तेन प्लवेन*सह उदके मज्जति ॥१॥ तथा तेषु दातृप्रतीच्छकावपि* अधस्तान्मज्जतः ॥ २ ॥ ० ॥ १९४ ॥ ० ॥ ननु कोऽब्राह्मणो वैडालव्रतिकः* कश्च बकव्रतिक इत्यपेक्षायामाह*धर्म्मध्वजी सदेत्यादि ॥ १ ॥ ० ॥ १९५ ॥ १९६ ॥

**धर्म्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः ॥ १९५ ॥**

धर्म्मो ध्वजं चिह्नमस्यास्तीति धर्म्म * ध्वजी लोके धार्म्मिकता * चिह्नं यः प्रकाशयति ॥ १ ॥ सदा धनादिषु लुब्धः*छाद्मिको धार्म्मिकजन *व्याजेनाचरति ॥ २ ॥ लोकदम्भको लोकेषु * दर्पकारी हिंस्रः सर्व्वाभिसन्धकः सर्व्वेषां दोषच्छिद्राभि *सन्धिकारी स ब्राह्मणो*वैडालव्रतिको ज्ञेयः ॥ २ ॥ ० ॥ १९५ ॥ ० ॥

**अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकव्रतचरो द्विजः ॥ १९६ ॥**

अधोदृष्टिरित्यादि ॥ १९६ ॥ ० ॥ स विनयत्वख्यापनाय यो विप्रः*सततमधो दृष्टिः स्यात्*नैष्कृतिकः प्रवञ्चकः *स्वार्थसाधनतत्परः*शठादिश्च बकव्रतिकः ॥ १ ॥ ० ॥ १९६ ॥ ० ॥

**ये बकव्रतिनो विप्रा ये च मार्जारलिङ्गिनः। ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा ॥ १९७ ॥**

ननु तयोर्दानं प्रतिषेधामस्तु*कात्वेनयोःपरत्रतु*गतिःस्यादित्यतआह* येबकव्रतिन इत्यादि॥ १ ॥ ० ॥ १९७ ॥ ० ॥ स्पष्टार्थोऽयंश्लोकः॥ १९७ ॥

**नधर्मस्यापदेशेनपापंकृत्वाव्रतंचरेत्। व्रतेनपापंप्रच्छाद्यकुर्वन्स्त्रीशूद्रदम्भनम्॥ १९८**

नधर्मेत्यादि॥ १९८ ॥ पापंकृत्वाधर्मस्याप* देशेनानेनकारणे*नायंधर्मइत्येवमपदेशेन॥ १॥ स्त्रीशूद्रादिमूर्खदम्भनंमोहनं*कुर्व्वन् व्रतेनपापंप्रच्छाद्य*नव्रतंचरेदिति॥ २ ॥ ० ॥ १९८ ॥ ० ॥

**प्रेत्येहचेदृशाविप्रागर्ह्यन्तेब्रह्मवादिभिः। छद्मनाचरितंयच्चव्रतंरक्षांसिगच्छति॥ १९९॥**

प्रेत्येत्यादि॥ १९९ ॥ ईदृशाश्छद्मनाव्रत* माचरन्तोविप्राब्रह्म* वादिभिरिहप्रेत्यचगर्ह्यन्ते॥ १॥ कस्मात्। छद्मनायच्चव्रतंचरितंस्या*त्तद्व्रतंरक्षांसिगच्छति*नतुदेवानितिशेषम्॥ २ ॥ ० ॥ १९९ ॥ ० ॥

**अलिङ्गीलिङ्गिवेशेनयोवृत्तिमुपजीवति। सलिङ्गिनांहरत्येनस्तिर्यग्योनौचजायते॥ २००॥**

अलिङ्गीत्यादि। २०० । यस्ययच्चिह्नंनभवतिसएव* यस्तस्यालिङ्गिनोवेशेनवृत्ति*मुपजीवतिसतल्लिङ्गिनामेनः*पापंहरतितिर्य्यग्योनौचजायते॥ १ ॥ ० ॥ २०० ॥ ० ॥

**परकीयनिपानेषुनस्नायाच्चकथञ्चन। निपानकर्त्तुःस्नात्वातुदुष्कृतांशेनलिप्यते॥ २०१॥**

परकीयेत्यादि॥ २०१ ॥ निपानंजलाशयःपरकीयेषु*देवेभ्योऽनुत्सृष्टेषु, निपानेषुकदाचन* पञ्चपिण्डाननुद्धृत्य*ब्राह्मणोनस्नायात्कस्मात्॥ १ ॥ परकीयनिपानेषु*स्नात्वानिपानकर्त्तुः*दुष्कृतस्यांशेनलिप्यते॥ २ ॥ उक्तञ्चयाज्ञवल्क्येन*पञ्चपिण्डाननुद्धृत्यनस्नायात्परवारिषु। उद्धृत्यवाचतःपिण्डानपारकेस्नानमाचरेत्। इति। ३॥ अत्रिसंहितायाञ्च। अलाभेदेवखातानांह्रदेषुचसरःसुच। उद्धृत्यचतुरःपिण्डानपारकेस्नानमाचरेत्॥ ४ ॥ इति॥ ० ॥ २०१ ॥ ० ॥

**यानशय्यासनान्यस्यकूपोद्यानगृहाणिच। अदत्तान्युपयुञ्जानएनसःस्यात्तुरीयभाक्॥ २०२**

यानेत्यादि॥ २०२ ॥ अस्यापरस्ययानादीनियानितत्* स्वामिनापरेषामुप* योगार्थंवाचाविधिनावादेवेभ्यो*नदत्तानितानिपुनः॥ १ । उपयुञ्जानःपुरुषः*स्तस्यैनसःपापस्य*तुरीयांशभागभवति। २ । ० । २०२।

तर्हिकुत्रस्नायादित्यतआह*नदीषुदेवखातेत्यादि। १। ० । २०२। ० ।

**नदीषुदेवखातेषुतडागेषुसरःसुच। स्नानंसमाचरेन्नित्यंगर्त्तप्रस्रवणेषुच॥ २०३॥**

अष्टसहस्रधनूंषितदेशा*दधिकदेशगामिनी*नदीभवतिततोन्यूनदेशगो*गर्त्तोभवतितदुक्तं* । १ । धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते। नतानदीशब्दवहागर्त्तास्तापरिकीर्त्तिताः। इति। २। देवखातानिदेवादकस्माद्यानि*खातानितडागानि स्वल्पसरः॥ प्रस्रवणंपर्व्वतेभ्यः*प्रसूतजलाशय इति। २ । ० । २०३।

**यमान् सेवेत सततं न नित्यं नियमान् बुधः। यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन्॥२०४**

यमानित्यादि ॥ २०४ ॥ इमयमान् सततं बुधः स्नातकः* सेवेत इत्यनियमा॰* सुनित्यं यमव्यतिरिक्तं नसम्सेवेत*कस्मादित्यतउच्यते ॥ १ ॥ यमानकुर्वाणो बुधः* स्नातकः केवलान्केवलान् *नियमान् भजन्पतति ॥ २ ॥ यमानियमाश्चेकानिर्दिष्टाः* मेतद्वचनादुक्तं ॥ ३ ॥ आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम्। प्रीतिः प्रसादो माधुर्यं मार्दवं च यमा दश ॥ ४ ॥ शौचमिज्यातपोदानं स्वाध्यायोपस्थनिग्रहौ। व्रतमौनोपवासाश्च स्नानञ्च नियमा दश ॥५॥ इति ॥ याज्ञवल्क्ये तु यमा* नियमाश्चान्यथोक्ताः* ब्रह्मचर्यं दयाक्षान्तिर्दानं सत्यमकल्कता। अहिंसास्तेयमाधुर्ये दमाश्चेति यमाः स्मृताः ॥ ६ ॥ स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः। नियमा गुरुशुश्रूषा शौचाक्रोधप्रमादता ॥ इति ॥ ॥ ७ ॥ महर्षि द्वयोक्तत्वादुभयमेव* यमनियमनिर्देश * वचनं सर्वं मन्तव्यम् ॥ ८ ॥ यद्योक्तं पञ्च यमाः पञ्च नियमा* इतितदनार्षत्वान्न* ग्राह्यं तत्प्रदर्श्यते ॥ ९ ॥ अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता। अस्तेयमिति पञ्चैते यमाः परिकीर्तिताः ॥ १० ॥ अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्। अप्रमादश्च सततं पञ्चैते नियमाः स्मृताः ॥ ११ ॥ २०४ ॥

**नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा। स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥२०५**

नाश्रोत्रियेत्यादि ॥२०५॥ छन्दोऽधीते इति श्रोत्रियस्तत्राः* छन्दोऽध्ययनवर्जितं *ब्राह्मणैस्ततं विस्तृतं कृतं यज्ञे *नक्वचिद्ब्राह्मणो भुञ्जीत ॥ १ ॥ अनधीतवेदाश्चानग्निकास्ते *वितते यज्ञे गृह्यान्तोपक्वमन्नं *नवर्त्तते लौकिकं नासंस्कृतं नाग्निनापचाते ॥ २ ॥ तदन्नमभक्ष्यं मनिनोक्तं यथा* योऽनन्यथा विराहाग्नि गृहस्य इतिमनात्। अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ ३ ॥ वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः। प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुध्यति ॥ ४ ॥ इतिते न वृथापाकं नान्ने नाग्नि* शौवादिपाकयज्ञाभावा * द्विजानामभोज्यत्वमुक्तं *अनर्राः पितृदेवानामभोज्यं तत् ॥ ५ ॥ वशिष्ठसंहितायाञ्च* अश्रोत्रिया अननुवाक्या* अनग्नयः शूद्रसधर्माणो भवन्ति* नानृग्ब्राह्मणो भवति* मानवञ्चात्र श्लोकमुदाहरन्ति ॥ ६ ॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ॥७॥ कालिधर्मवक्ता पराशरश्चाब्रवीत्* अग्निकार्यात् परिभ्रष्टाः सन्ध्योपासनवर्जिताः। वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ ८ ॥ तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः। अध्येतव्योऽप्येको वेदो यदि सर्वो न शक्यते ॥ इति ॥ ९ ॥ ग्रामयाजिहुते यज्ञे *ब्राह्मणो न भुञ्जीत* स्त्रियाहुते यज्ञे क्लीवेन च हुते *यज्ञे ब्राह्मणो न भुञ्जीत ॥ १० ॥ २०५ ॥ ० ॥ तत्र दोषमाह ॥

**अश्लीकमेतत्साधूनां यत्र जुह्वत्यमी हविः। प्रतीपमेतद्देवानां तस्मात्तत्परिवर्जयेत् ॥२०६**

अश्लीकमित्यादि ॥ ० ॥ २०६ ॥ ० ॥ अश्लीकमितिरेफस्य लकारः * अमी अश्रोत्रियग्रामयाजि

भुक्त्वेत्यादि ॥ २२२ ॥ अश्रोत्रियततपश्रादीनामन्न* ममत्या ज्ञानतोऽभुक्त्वा त्रिरात्र* मुपवासमुपवासं चरेदिति ॥ १ ॥ मत्या ज्ञानेन तदन्नं भुक्त्वा कृच्छ्रं* प्राजापत्यादिकं* व्रतं* चरेदिति विष्णुर्विज्ञ* भुक्त्वा कृच्छ्रव्रतं चरेत् ॥ २ ॥ ० ॥ २२२ ॥ ० ॥

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः। आददीताममेवास्मादवृत्तावैकरात्रिकम् ॥२२३

नाद्यादित्यादि ॥ २२३ ॥ शूद्रस्य पक्वमन्नं स्नातको विद्वान्* द्विजो नाद्यादवृत्तौ* भोजनद्रव्याभावे ऽनातो* ऽपास्तवैकरात्रिकमे* काहोरात्रयापनार्हं ॥ १ ॥ आममेवापक्वमेव* तण्डुलादिद्रव्यामस्मा* च्छूद्रादश्राद्धिनः श्राद्धे* दत्तमाममन्नं विनैवाददीत ॥ २ ॥ आपस्तम्बेनचोक्तं हि *आममांसं मधुघृतं धानाः क्षीरं तथैव च। गुडस्तक्रं रसं ग्राह्यं निवृत्तेनापि शूद्रतः ॥ ३ ॥ शाकं मांसं मृणालानि तुम्बुरुः सक्तवस्तिलाः। रसाः फलानि पिण्याकं प्रतिग्राह्याणि सर्वतः ॥ ४ ॥ प्रमादीत्वेवमविद्वन् श्राद्धिन इति श्राद्धादि* पञ्चयज्ञानुष्ठायी शूद्र* स्तोतिवाचेष्टं तद्सत्* ॥ ५ ॥ शूद्रस्य पक्वान्नस्याधिकाराभावा* देतद्विषयं पक्वान्नग्रहणात्* शूद्रान्नं ब्रह्मवर्चस* मित्यादिकस्यापवादोऽयम् ॥ ६ ॥ ० ॥ २२३ ॥ ० ॥

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्द्धुषेः। मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ २२४

श्रोत्रियस्येत्यादि ॥ २२४॥ देवाः कदर्यस्य कदाचारवतः श्रोत्रियस्य* वदान्यस्य दानशीलस्य वार्द्धुषेः* अन्न समयं मीमांसित्वा* सममेवाकल्पयन् ॥ १ ॥ ० ॥ २२४ ॥

तान्प्रजापतिराहैत्य मा कृध्वं विषमं समम्। श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥ २२५ ॥

तानित्यादि ॥ २२५ ॥ तान् कदर्यश्रोत्रिय* वदान्यवार्द्धुषिणोरन्न* समं कल्पितवतो देवान्* तत्प्रजापतिराह* ॥ १ ॥ भो देवा यूयं विषम* मिदं समं माकृध्वमिति* कथं विषमं तदुभय* मन्नमित्यत उक्तं च ॥ २ ॥ वदान्यस्य वार्द्धुषिकस्यापि श्रद्धया* पूतमन्नमितरत्* कदर्यस्य श्रोत्रियस्यान्न* मश्रद्धयादेयत्वाद्धतम् ॥ ३ ॥ ० ॥ २२५ ॥ ० ॥

श्रद्धयेष्टञ्च पूर्त्तञ्च नित्यं कुर्यादतन्द्रितः। श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥ २२६ ॥

श्रद्धयेष्टञ्चेत्यादि ॥ २२६ ॥ अतन्द्रितः स्नातक इष्टं पूर्त्तं* च नित्यं श्रद्धया कुर्यात्* हि यस्मात्ते इष्टापूर्त्ते* धनैः श्रद्धाकृते स्वागतैः* स्वकर्म्मणा वाक्षये भवतः ॥ १ ॥ इष्टं पूर्त्तञ्चोक्तं मत्स्यसंहितायां* अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥ २ ॥ वापिकूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥ ४ ॥ इष्टं पूर्त्तं प्रकर्त्तव्यं ब्राह्मणेन प्रयत्नतः। इष्टेन लभते स्वर्गं पूर्त्ते मोक्षमाप्नुयात् ॥ ५ ॥ इष्टापूर्त्ते द्विजातीनां सामान्यो धर्म्मसाधने। अधिकारी भवेच्छूद्रः

पूर्त्तं धर्मो न वैदिकः । इति वैदिकोऽग्निहोत्रादाविष्टे ॥ ६ ॥ एतद्विद्वान् प्रमादीष्टापूर्त्ते * इष्टमन्तर्वेदि यज्ञादि*कर्म्म तितदम्यदे *वाग्निवचनदर्शनात् ॥ ७ ॥ ० ॥ २२६ ॥ ० ॥

दानधर्म्मं निषेवेत नित्यमैष्टिकपौर्त्तिकम् । परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥ २२७

दानधर्म्ममित्यादि ॥ २२७ ॥ नित्यं दानधर्म्मं गृही* स्नातकः परितुष्टेन*भावे मदानसत्पात्र*मासाद्य शक्तितो निषेवेत ॥ १ ॥ ऐष्टिकपौर्त्तिकञ्च धर्म्मं नित्यं *स्नातको निषेवेतेति ॥ २ ॥ ० ॥ २२७ ॥

यत्किञ्चिदपि दातव्यं याचितेनानसूयया । उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्व्वतः ॥२२८

यत्किञ्चिदित्यादि ॥ २२८ ॥ याचितेन स्नातकेन*याचकाय स्वमप्राप्तपात्राय*मनुवादि । अप्रयायत्*किञ्चि दवमनसूयया दातव्यं ॥ १ ॥ नहि सर्व्व दा दानपात्रं लभाते *सततदानकरणे *कचित्तथाविधं दान*पात्रमुत्पत्स्यते यत्*सर्व्वतःपापात्तारयति ॥ २ ॥ ० ॥ २२८ ॥ ० ॥

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः । तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २२९ ॥

वारिदइत्यादि ॥ २२९ ॥ वापीकूपादिभिर्वारिदः*तृप्तिमाप्नोति*अन्नदोऽक्षय्यं सुखमाप्नोति* तिलप्रद इष्टां प्रजामाप्नोति*दीपदउत्तमं चक्षुराप्नोतीति ॥ २ ॥ ० ॥ २२९

भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः । गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥२३०

भूमिदइत्यादि ॥ २३० ॥ स्पष्टार्थोऽयं ॥ २३० ॥

वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः । अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥२३१

वासोदइत्यादि ॥ २३१ ॥ ब्रध्नस्य सूर्य्यस्य विष्टपं स्थानं* ॥ २३१ ॥

यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः । धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसार्ष्टिताम् ॥२३२

यानशय्येत्यादि ॥ २३२ ॥ नौकादोलादियानं * खट्वादिशय्याः यो ददाति सभार्य्यामाप्नोति*प्रतीतार्थमन्यत् ॥ १ ॥ ब्रह्मदो वेदस्याध्यापनेन दाता*ब्रह्मसार्ष्टितां ब्रह्मणः*सलोकतामाप्नोतीति ॥ २ ॥ ० २३२ ॥

सर्व्वेषामेव दानानां ब्रह्मदानं विशिष्यते । वार्य्यन्नगोमहीवासस्तिलकाञ्चनसर्पिषाम् ॥२३३

सर्व्वेषामित्यादि ॥ २३३ ॥ वार्य्यन्नादीनां सर्व्वेषां * दानानां दाने मध्ये ब्रह्म * दानमेव विशिष्यते ॥ १ ॥ ० ॥ २३३ ॥

येन येन तु भावेन यद्यद्दानं प्रयच्छति । तत्तत्तेनैव भावेन प्राप्नोति प्रतिपूजितः ॥ २३४ ॥

महर्षिपितृदेवानांगत्वानृण्यंयथाविधि। पुत्रे सर्व्वं समासज्यवसेन्माधस्थ्यमाश्रितः॥२५७

महर्षी तगादि ॥ ० ॥ २५७ ॥ ० ॥ ब्राह्मणस्वाध्यायेनमहर्षीणां * मानुषाणिताम्‌ाद्दिनापितृणां * मानुणामग्निहोत्रादिनादेवानां * मानृणां यथाविधिगत्वा ॥ १ ॥ पुत्रे सर्व्वमर्थं जातं समासज्यसमर्पणासक्तस्ता माधस्थं * नच्छनिवनवासी * तां वं भूत्वान्वहं वसेत्‌ ॥ २ ॥ ० ॥ २५७ ॥ ० ॥

एकाकीचिन्तयन्नित्यं विविक्ते हितमात्मनः। एकाकीचिन्तयानो हि परं श्रेयोऽधिगच्छति॥२५८

एकाकीतगादि ॥ ० ॥ २५८ ॥ आत्मनोहितं पारलौकिकं नानात्‌ * शेषं सर्व्वं स्पष्टमिति । १ । ० । २५८ । ०

एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती। स्नातकव्रतकल्पश्च सत्त्ववृद्धिकरः शुभः ॥ २५९ ॥

एषोदितेतगादि । २५९ । गृहस्थस्यसाप्रायेवाविप्रस्येप्रं * सङ्कृतःतुषलियादेश * शाश्वतीचिरं योदितास्नातक * व्रतकल्पश्चोपसउदितः ॥ १ । ० ॥ २५९ । ० ।

अनेनविप्रोवृत्तेन वर्त्तयन्वेदशास्त्रवित्‌। व्यपेतकल्मषोनित्यं ब्रह्मलोके महीयते ॥ २६० ॥

अनेनेतगादिश्लोकःस्पष्टार्थः । २६० । ० ।

॥*॥*॥ इतिमानवे धर्म्मशास्त्रे *भृगुप्रोक्तायांसंहितायां*चतुर्थोऽध्यायः ॥*॥४॥*॥

इतिमानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां *वैद्यागङ्गाधर * कृतायां प्रमाद * भञ्जन्यां चतुर्थाध्याय प्रमादभञ्जिनी ॥*॥*॥*॥

---

यथोद्दिष्टक्रमेण * भक्ष्याभक्ष्यौ वक्तुं * तत्रऋषीणांप्रश्नमाह ।

श्रुत्वैतानृषयोधर्म्मान् स्नातकस्य यथोदितान्‌। इदमूचुर्महात्मानमनलप्रभवं भृगुम्‌ ॥ १ ॥

श्रुत्वैतानिति । १ । अनलप्रभवं भृगु * मितिप्रभवःप्रभावोनतज्जन्माशप्रकाशोवायथा * हिमवतो * गङ्गाप्रभवतीतगादि । १ । ० । १ ।

एवंयथोक्तं विप्राणांस्वधर्म्ममनुतिष्ठताम्‌। कथंमृत्युःप्रभवति वेदशास्त्रविदांप्रभो ॥ २ ॥

एवमित्यादि ॥ २ ॥ कथंमृत्युःप्रभवतिमारणायसमर्थो * भवतीतिनाशःप्रभवः । १ । ० । २ । तत्रोत्तरमाह ।

सतानुवाच धर्म्मात्मा महर्षीनिमान् बोभृगुः। श्रूयतां येन दोषेण मृत्युर्विप्रान् जिघांसति ॥ ३ ॥

सतानित्यादि । ३ ॥ ० । मानवो मनोरपत्यं । १ । ० । ३ । ० ॥

अनभ्यासेन वेदानामाचारस्य च वर्जनात्। आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥४॥

अनभ्यासेनेत्यादि ॥ ४ ॥ वेदानामनभ्यासेन * चाचारस्य वर्जनाच्च * आलस्याच्चान्नदोषाच्च * मृत्युर्विप्रान् जिघांसति ॥ १ ॥ ४ ॥ तत्रादावस्त्वयः स्फुटार्थाः * अन्नदोषांस्तु वदति * लशुनमित्यादिश्लोकैः ॥ १ ॥ ० ॥ ५ ॥ ०

लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च। अभक्ष्याणि द्विजातीनाममेध्यप्रभवाणि च ॥ ५ ॥

चकाराल्लशुनादिगन्धरसानि * द्रव्याणि वर्ज्यानीत्युक्तानि विष्णुना * प्रायश्चित्तविधानेन * तानि वर्ज्यानि तद्यथा ॥ २ लशुनपलाण्डुकृञ्ज * नैतद्गन्धिविड्वराह * ग्रामकुक्कुटवानर * गोमांसभक्षणे न च * चान्द्रायणं कुर्यादिति । कवकाणि छत्राकाणि कानीति कश्चित्वर्षापलदृतान् ॥ ५ ॥

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा। शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्जयेत् ॥ ६ ॥

लोहितानित्यादि । ६ । वृक्षनिर्यासान् स्वतोवृक्षान्निर्गतान् * स्वरसविशेषान् वृक्षस्य व्रश्चनात् * छेदात् प्रभवन्ति ये * निर्यासास्तान् रक्तवर्णान् । १ । शेलुं श्लेष्मातकफलं * गव्यं पेयूषं सद्यः प्रसूतायाः गोः क्षीरं पेयूषं १ । ० । ६ ।

वृथाकृसरसं यावं पायसापूपमेव च। अनुपाकृतमांसानि देवान्नानि हवींषि च ॥ ७ ॥
अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा। आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥ ८ ॥
आरण्यानाञ्च सर्व्वेषां मृगाणां माहिषं विना। स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व्वशुक्तानि चैव हि ॥ ९ ॥

वृथेत्यादयस्त्रयः श्लोकाः ॥ ७ । ८ । ९ । ० । वृथेति देवतापितॄन् * नाहन्तियेते तु * वृथा कृसरास्तिलतण्डुलाः पक्वाः ॥ १ । कात्यायनेनोक्तं यथा * तिलतण्डुलसंपक्वः कृसरः सोऽभिधीयते इति । २ ॥ संयावो गोधूमचूर्णं * दुग्धघृतगुडैः सह मिश्रं पक्वं * पायसः क्षीरेण पक्वं * मन्नं यदुच्यते परमान्नमिति ॥ २ ॥ अपूपं वटकमेतानि वृथा * पक्वानि वर्ज्जनीयानि * मन्त्रेण पर्य्युक्षण * मुपाकरणमुच्यते ॥ ४ ॥ तदुपाकरणहीनभक्ष्य * पशुमांसानि वर्ज्ज्यानि * देवान्नानि देवतार्थं कृतान्नानि * प्रागुद्देवभोदानादेव * हवींषि च प्राग् होमात् ॥ ५ ॥ ० ॥ ७ ॥ ० ॥

अनिर्दशाया गोः प्रसूताया * गोर्महिष्याश्च जाताया * दशाहाभ्यन्तरे क्षीरं * वर्ज्यमिति शेषेण ॥ १ ॥ अनिर्दशाह गोः क्षीरमाजं माहिषमेव च ॥ इति ॥ तत्र गव्यापेयूषस्य * पाने प्रायश्चित्तविशेषात् पृथगुक्तिः ॥ २ ॥ सद्य औष्ट्रमैकशफमश्वखरादीनां क्षीरं * माविकञ्च क्षीरं वर्ज्यम् ॥ १ ॥ सन्धिनीक्षीरं वृषभसन्धयतीति * यावद्दिनं यभते

त*द्विने तस्याः क्षीरं वर्ज्यं *विवत्सायाश्च गोः पयोवर्जनीयं ॥ २ । ० ॥ ७ ॥ ० । आरण्यानां सर्वेषां मृग* जातीनां क्षीरं वर्ज्यं विनामाहिष*क्षीरमारण्यामहिषी*क्षीरं पेयमिति निर्णयं ॥१॥ स्त्रीलोकानां क्षीरं दक्षिणावर्ज्यं* सर्वाणि च शुक्तानि या*न्यन्नमुजातिद्रव्याणि*काले जातामूरसानि ॥ २ तानि चेता तानिष्टया *कमरादीनिभक्षणार्थं*द्विजैर्वर्ज्यानि भवन्ति ॥ ३ ॥ ० ॥ ९ ॥ ० ॥

**दधिभक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम्। यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥ १० ॥**

शुक्तेषु प*वादमाह*दधिभक्ष्य*मित्यादि ॥ १ ॥ शुक्तेषु मध्ये दधिभक्ष्यं भवति* दधिसम्भवञ्च सर्व्वं तक्रामोक्षा*मस्तुप्रभृतिकं भक्ष्याम् ॥ २ ॥ शुभैः पुष्पमूलफलैर्यानि द्रवाभि*षूयन्ते सन्धीयन्ते काले * जातास्तानाम वारिष्ट*प्रभृतीनि शुक्तानि तानि*भक्ष्याणि भवन्ति ॥ ३ ॥ ० ॥ १० ॥ ० ॥

**क्रव्यादाञ्छकुनीन्सर्व्वांस्तथा ग्रामनिवासिनः। अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्जयेत् ॥ ११ ॥**

क्रव्यादानित्यादि ॥ ११ ॥ मांसादान् शकुनीन् श्येनगृध्रादीन्*ग्रामनिवासिनः सर्व्वान् * शकुनीन् कपोतवरटाकादीन्*भक्षणार्थं विवर्जयेत् ॥ १॥ ये चैकशफायत्र निर्दिष्टास्तेभ्यो*ऽन्यानेकशफान् खरादीन् भक्षणार्थं विवर्जयेत्*उष्ट्राश्वौ यत्र निर्दिष्टौ*तयोर्मांसं भक्षयेत् ॥ २॥ श्रुतिरुष्ट्रं वाडवमालभेतेति*टिट्टिभञ्च पक्षिभेदं*भक्षणार्थं विवर्जयेत् । ३ ॥ ११ ॥ ० ॥

**कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम्। सारसं रज्जुवालञ्च दात्यूहं शुकसारिके ॥ १२ ॥**

कलविङ्कमित्यादि ॥ १२ ॥ कलविङ्को हरिद्राभमस्तकश्चटकभेदो*नयामन्त्राशीति नेह * पृथक् शुक्तः सरोमं पा पक्षीन*भेकः पक्षिप्रकरणात् ॥ १ ॥ चक्राङ्गश्चक्रवाकः पक्षी*शकुनीन् ग्रामनिवासिनः * सर्व्वानित्यनेन ग्रामकुक्कुटस्यावर्जने *सिद्धे सति ॥ १ ॥ पुनर्ग्रामकुक्कुटमिति*तद्वर्जनवचनं प्रायश्चित्तभेद*ज्ञापनार्थं नपुन*रारण्यकुक्कुटविधायं ॥ २ ॥ ग्रामकुक्कुटवर्जने *नारण्यकस्याभक्ष्यात्व*सिद्धे रज्जुवालः पक्षिविशेषः । दात्यूहो दात्यूह इत्याख्यो*लोके शुकसारिके प्रसिद्धे ॥ ३ ॥ १२ ॥ ० ॥

**प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान्। निमज्जतश्च मत्स्यादान्सौनं वल्लूरमेव च ॥ १३॥**

प्रतुदानित्यादि ॥ १३ ॥ प्रतुदमाहायुर्व्वेदकता*शतपत्रादिपक्षिणां । १ । भक्षयन्तोनातुदन्तीत्युक्ता* विकीर्य विष्किराश्चैव प्रतुदाः प्रतुदास्तथा ॥ २ ॥ शतपत्रो भृङ्गराजकोयष्टिजीवजीवकाः । कैरातः कोकिलोत्पूर्वा पापुतः प्रियात्मजः ॥ ३ ॥ लटटालटटपकौरभ्रवटहाहिरिण्डमाणकः । जटीदुन्दुभिवास्कारलोहपृष्ठकुलिङ्गकाः ॥ ४ ॥ कपोतशुकसारङ्गाश्चिरटीकङ्कयष्टिकाः । शारिकाकलविङ्कश्चटकोऽङ्गारचूडकः ॥ ५ ॥ पारावतः पान

षे इति ॥ २ ॥ एतद्विद्वान् प्रमादी*वाचष्टे एकचरान् सर्पादीनिति * तदसाधुअज्ञाता*श्चेतिचकारर्थ ॥
पत्तेः ॥ ३ ॥ ० ॥ १७ ॥ ० ॥

**श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा। भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥ १८ ॥**

पञ्चनखवर्जनेऽप*वादमाह श्वाविधमिति ॥ १ ॥ ० । १८ ॥ ० ॥ शल्लको द्विविधः दीर्घशल्लकः*क्षुद्रशल्लकश्चेव * यः श्वानं शल्कै राविधातिस श्वावित् ॥ १ ॥ पञ्चनखेषु मध्ये चैतान् *पञ्चपञ्चनखान्भक्ष्यानाहुः एक*दतएकपङ्क्तिदन्तान् *सर्व्वानुष्ट्रवर्जं छाग*मेषादीन् भक्ष्यानाहुः ॥ २ ॥ ० । १८ ॥ ० ॥

**छत्राकं विड्वराहञ्च लसुनं ग्रामकुक्कुटम् । पलाण्डुं गृञ्जनञ्चैव मत्या जग्ध्वा पतेद्द्विजः ॥ १९ ॥**
**अमत्यैतानि षड् जग्ध्वा कृच्छ्रं सान्तपनं चरेत्। यतिचान्द्रायणं वापि शेषेषूपवसेदहः ॥ २० ॥**

छत्राकमित्यादि ॥ १९ ॥ उक्तेष्वभक्ष्येषु मध्ये *छत्राकादीनि षट् मत्या*जग्ध्वा द्विजः पतेदित्य ॥ १९ ॥ अमत्या तानि छत्राकादीनि षट् *जग्ध्वा सान्तपनं यति*चान्द्रायणानन्यतरं चरेत् ॥ १ ॥ शेषेष्वभक्ष्येषु पुं*मत्यामत्या भुक्तेषु*रेकमुपवसेदिति ॥ २ ॥ ० ॥ २० ॥ ० ॥

**संवत्सरस्यैकमपि चरेत्कृच्छ्रं द्विजोत्तमः । अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥ २१ ॥**

संवत्सरस्यैकमित्यादि ॥ २१ ॥ द्विजोत्तमो ब्राह्मण एव विशेषे*णोक्तत्वान्न द्विजमात्र * अज्ञातभक्षशुद्ध्यर्थं *विशेषतो ज्ञातस्याभक्षस्य शुद्ध्यै ॥ १ ॥ संवत्सरस्य मध्ये कृच्छ्रं *प्राजापत्यादिकं एकमपि कृच्छ्रव्रतं चरेत् ॥ २ ॥ ० ॥ २१ ॥ ० ।

**यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत् पुरा ॥ २२ ॥**

ननु ब्राह्मणादिविषये यानाम*भक्ष्यं भक्ष्यञ्च मांसं *यदुक्तं तत्कथमुपपद्यते यज्ञार्थं कानां *मृगपक्षिणां कस्याः पि ॥ १ ॥ अथ विनानमांसं स्यात् * तर्हि किं ब्राह्मणादिभि* र्भक्ष्या मृगपक्षिणो वध्याः * इत्यत आह यज्ञार्थमित्यादि ॥ २ । ० ॥ २२ ॥ ० ॥ ब्राह्मणैरिति बहुवचनाद्द्विजैः*प्रशस्ता मृगपक्षिण*इति चनह्वचनाच्चलजाश्च* कूर्म्ममत्स्यास्थापिताः ॥ १ ॥ प्रशस्ता इति भक्ष्यानभक्ष्या यज्ञा*दे वयज्ञपितृयज्ञभूतयज्ञनृयज्ञादौ* स्तेनैव भुक्तभूताः मधु*पर्क पितृदैवक्रियाः । २ । तथा च ब्राह्मणादिभि*र्द्विजैः प्रशस्ता मृगपक्षिणो येतु भक्ष्या उक्तास्ते यज्ञार्थं *भृत्याना पोष्याणां वृत्त्यर्थं वध्याः स्युः । ३ । कस्मादित्यत उच्यते *अगस्त्योह्याचरत्पुरेति*वर्षसाहस्रिकसत्रे*महर्षिरगस्त्यः पुरा प्रशस्तमृगपक्षिवधमाचरत् । ४ ० । २२ ।

**वभ्रुर्हि पुरोडाशाभच्चयाणांम्हगपचिणाम्। पुराणे प्वपियज्ञे षुब्रह्मचत्रोत्सवेषुच ॥ २३॥**

अपरञ्च ॥ वभ्रुर्हीत्यादि ॥ ० ॥ २२ ॥ ० ॥ पुराणेषुयज्ञेषुच * हियस्मात् भद्याणां म्हग * पचिणां पुरोडाशा वभ्रुव ॥ १ ॥ ब्रह्मचत्रोत्सवेषुच * ब्राह्मणानां भोजनेनोत्सवेषु * चत्रियाणांचभोजनेनोत्सवेषु * म्हगपचिपुरोडाशाः ॥ २ ॥ ० ॥ २३ ॥ ० ॥ सर्व्वंपर्युषितमाद्यमित्यस्यापवादमाह * यत्किञ्चित्स्नेहेत्यादि ॥ १ ॥ ० ॥ २४ ॥

**यत्किञ्चित्स्नेहसंयुक्तंभच्यंभोज्यमगर्हितम्। तत्पर्युषितमप्याद्यं हविःशेषञ्चयद्भवेत्॥२४॥**

स्नेहसंयुतं यत् किञ्चित् * दुग्धं घृतपूरादिकं * यच्चागर्हितं स्नेहसंस्कृतं भोज्यं मांसौ * दनादिकं तत्सर्व्वं * पर्युषितमप्याद्यं ॥१ । हविःशेषश्चयत्तच्च * पर्युषितमप्याद्यं * ब्राह्मणादीनां भवति ॥ २ ॥ ० २४ ॥ ० ॥

**चिरस्थितमपित्वाद्यमस्नेहाक्तंद्विजातिभिः। यवगोधूमजंसर्व्वं पयसश्चैवविक्रिया ॥ २५ ॥**

चिरस्थितमपीत्यादि ॥ २५ ॥ यवगोधूमजमस्नेहाक्तं भच्यं * सक्तुकादिकं भोज्यं * यत्किञ्चित्तत्सर्व्वं चिर * स्थितमपि द्विजातिभि * राद्यं खाद्यं भवतीति ॥ १ ॥ पयसोविक्रियाचतक्रतक्र * कूर्च्चिकादिकं चिरस्थितमपि * द्विजातिभिराद्यं खाद्यं भवति ॥ २ ॥ ० ॥ २५ ॥ ० ॥

**एतदुक्तंद्विजातीनांभच्याभच्यमशेषतः। मांसस्यातःप्रवच्यामिविधिंभच्चणवर्ज्जने ॥ २६ ॥**

एतदित्यादि ॥ २६ ॥ ० ॥ द्विजातीनां भच्याभच्यमशेषत * एतत्कथितमतःपरं * मांसस्यभच्चणवर्ज्जने * विधिमहं प्रवच्यामि ॥ १ ॥ ० ॥ २६ ॥

**प्रोचितंभचयेन्मांसंब्राह्मणानाञ्चकाम्यया। यथाविधिनियुक्तश्चप्राणानामेवचात्यये ॥२७॥**

प्रोचितमित्यादि ॥ २७ ॥ अनुपाकृतमांसवर्ज्जनेनैवो * पाकृतमांसमभच्चणमायातः * प्राप्तमिद्धौप्रोचितं * भचयेन्मांसमिति ॥ १ ॥ भच्चणविधिस्तदनुवादोनत * नियमःप्राणात्ययेहि * भच्याभच्यप्रोचिताप्रोचितमांस * भच्चणविधानादुक्तं ॥ २ ॥ नियमश्चेत्तदपवादोयंप्राणा * त्यये सर्व्वमांसभच्चणविधि * र्ब्राह्मणानाञ्चकाम्ययेति मांसत्यागव्रतविषयं ॥ ३॥ सोमांसभच्चणत्यागी * यच्चब्राह्मणानां काम्ययाप्रोचितं * भच्यं मांसं भचयेत् ॥४॥ मद्धुपाच्चणकामायेति * यमवचनान्मद्विजादि * वारान्भचयेत् ॥ ५ ॥ यथाविधियज्ञे नियुक्तस्त्वृत्विक् * तत्प्रोचितं मांसं भचयेदेव * प्राणानामत्यये चेति * त्रयोनियमाउक्ताः ॥ ६ ॥ ० ॥ २७ ॥ ० ॥ प्राणात्यये कथं सर्व्वमांसमद्यमि * त्यतआहमाणेत्यादि ॥ १ ॥ ० ॥ २८ ॥ ० ॥

**प्राणस्यान्नमिदंसर्व्वं प्रजापतिरकल्पयत्। स्थावरंजङ्गमञ्चैवसर्व्वं प्राणस्यभोजनम ॥२८॥**

यतः प्रजापतिर्ब्रह्मा * सर्व्वमिदं प्राणस्यान्नं * पूर्व्वकालमकल्पयत् ॥ १ ॥ तस्मात् सर्व्वं स्थावरं * जङ्गमञ्च * प्राणस्य भोजनमित्यर्थः ॥ २ ॥ ० ॥ २८ ॥ ० । किं कस्य भोजनमित्यत उच्यते * चराणामन्नमित्यादि । १ । ० ॥ २९ ॥ ० ॥

चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः । अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः ॥ २९ ॥

चराः स्थावराश्च प्राणिनां प्राणिना* मन्नं दंष्ट्रिणां व्याघ्रादीनामपि* प्राणिनामदंष्ट्रिणः प्राणिनोऽन्नं । १ । अहस्तामत्स्यादयश्च * प्राणिनः सहस्तानां प्राणिनामन्नं * शूराणां प्राणिनां राजतादीनां * भीरवो मनुष्यादयो ऽन्नम् । २ । ० । २९ । ० ।

नात्ता दुष्यत्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि । धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च ॥ ३० ॥

नात्तेत्यादि तस्मात्प्राणात्यये ऽत्ता भक्षयिता * प्राणिन आद्यानहन्यहन्यापादन् * न दुष्यति दोषीन स्यात् * कस्मादित्यत आह धात्रेति ॥ १ ॥ हि यस्मात् धात्रा सृष्टैव * प्राणिन आद्याः खाद्याः सृष्टाः प्राणिन * एवात्तारश्च सृष्टाः । २ । ० । ३० । ० । तर्हि सर्व्वदा किं सर्व्व * सर्व्वः खादेदित्यत आह * यज्ञायजग्धिरित्यादि । १ । ० । ३१ ।

यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः । अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥ ३१ ॥

यज्ञाय देवपित्रतिथिसेवार्थं * यन्मांसं तद्देवादिभ्य * मर्पयित्वा तस्य मांसस्य जग्धि * र्दैवो मांसभक्षणविधिः । १ । अतो देवाद्यर्थं नाद्यन्यथा मांस * भक्षणप्रवृत्तिस्तु राक्ष सो विधि* र्दोषायमहर्षिभिरुच्यत इति । २ । ० । ३१ । ० । यज्ञायकिं मांसमित्यत उच्यते * क्रीत्वा स्वयं वापीत्यादि । १ । ० । ३२ ।

क्रीत्वा स्वयं वाप्युत्पाद्य परोपहृतमेव वा । देवान्पितॄंश्चार्च्चयित्वा खादन्मांसं न दुष्यति ॥ ३२ ॥

भक्ष्यं मांसं यदुक्तं तत् * क्रीत्वा स्वयं वा मृगया * सलौत्पाद्य परेण * पोपहृतमपि * देवान् पितॄंश्च वा * यार्च्चयित्वा भक्तान् खादयन् स्वयं वा * खादन्न दुष्यति दोषीन भवति । १ । ० । ३२ । ० । इतिमांसभक्षण* विधिरुक्तः वर्ज्जने च * विधिमाह ।

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः । जग्ध्वा ह्यविधिना मांसं प्रेतस्तैरद्यतेऽवशः ॥ ३३ ॥

नाद्यादित्यादि । १ । ० ॥ ३३ । ० । अविधिनोक्तं विधिं * विनाविधिज्ञो द्विजस्त्वनापदि * भक्ष्यं मांसं नाद्यात् कस्मात् ॥ १ ॥ हि यस्मादविधिनाऽनापदि यो * मांसं यो जग्ध्वा प्रेतावर्त्तैः * सोऽवशः सन्नद्यते । २ । ॥ ० ॥ ३३ ॥

नतादृशं भवत्येनो मृगहन्तुर्धनार्थिनः । यादृशं भवति प्रेत्य वृथामांसानि खादतः ॥ ३४ ॥

अपरञ्च । नतादृशमित्यादि ॥०॥३४॥०॥ विधिं विनाव्यथामांसानिखादतः * प्रेत्य भोगाय यादृशमेनोयत्पपरिमितं भवति * तादृशमेनोधनार्थिनो मृग * हन्तुर्नभवतीति ॥ १ ॥ ७४ ॥ नियुक्तस्यात्तद् यस्य प्रमांसस्य * भक्षणे ऽवश्यं वदमाह * नियुक्तस्वित्यादिश्लोकम । १ । ० । ७५ । ० ।

नियुक्तस्तुयथान्यायं योमांसंनात्तिमानवः । सप्रेत्यपशुतांयाति सम्भवानेकविंशतिम् ॥ ३५ ॥

यान्यायेयो यज्ञे प्रशा * श्राद्धे नियुक्तश्चेत् * तद्यज्ञे यं मांसं नात्ति * सप्रेत्य एकविंशतिन्तु * सम्भवान् जन्मानि पशुतां यातीति । १ । इतिनियुक्तस्यात्तद्यज्ञे प्र * मांसाभक्षणे दोषवचनेन * प्राचितमांसाभक्षणे * ब्राह्मणस्यामांसाभक्षणे च * दोषाव्वचनेन तयोः * परिसङ्ख्ये विज्ञापिता । २ । ० । ३५ । ० । अथानुपाकृतमांसभक्षणं न * प्रतिषिद्धं नदिश्यते * तासंस्कृतानित्यादि । ३ । ० ।

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कदाचन । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ ३६ ॥

मन्त्रैरसंस्कृतान्पशून् * हत्वा विप्रः कदाचन * मांसं नाद्यात् मन्त्रैस्तुसंस्कृतान्पशून् * हत्वामांसं शाश्वतं * विधिमास्थायवादद्यात् । १ । ० । ३६ । ० । नवसततं न पितृदेवार्चनं * मटते मांसभक्षणं * नित्यमांसं तव * किं कर्त्तव्यमित्यतआह * कुर्यादघृतपशुमिति । १ । ० । ७७ ।

कुर्याद्घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा । नत्वेवतु वृथा हन्तुं पशुमिच्छेत्कदाचन ॥ ३७ ॥

सङ्गे नितांमांसाशनासक्तोऽहं * पशुं पिष्टाद्यं वापि * कुर्यात्पशुं कृत्वाभक्षयेत् । १ । नत्वेवकदाचनपितृदेवार्चनं विनामांसमत्तुं पशुं हत्वाहन्तुमिच्छेत् । २ । ० । ३७ । वधस्य निन्दात आह * यावन्तीत्यादि । ० । ३८ । ० ।

यावन्तिपशुरोमाणितावत्कृत्वोहिमारणम् । वृथापशुघ्नः प्राप्नोतिप्रेत्यजन्मनिजन्मनि ॥ ३८ ॥

यः पशुं योवृथा हन्ति * सवृथापशुघ्नो द्विज * स्तस्य पशोर्यावन्ति लोमानि सन्ति । १ । तावत्कृत्वस्तावतो वारान् * प्रेत्य जन्मनिजन्मनि * मारणं तेषां तेन प्राप्नोतीति २।०। ३८ ।०। ननुक्रमे वार्थ्य * प्राणामार्थमिदं सर्वं प्रजापति कल्पय * दित्यादितथा ततश्च । १ । नानादृष्टात्प्राणात्तत्र प्राणिनो ऽहननं हननं पि । इत्यादितत्कथमेवं * प्रतिजन्मनिमारणं * प्राप्नुयादित्यतआह * यज्ञार्थमित्यादिश्लोकं । २ । ० । ३९ । ० ।

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । यज्ञोऽस्यभूत्यै सर्व्वस्यतस्माद्यज्ञेवधोऽवधः ॥ ३९ ॥

योद्विजोऽहिंसकानित्यभूतानात्मसुखादिप्रयुक्त्या न पिबेद्वा यत्न हत्वाऽऽत्मसुखेच्छया वर्द्धयति ॥१॥ स जीवंश्च मृतश्च क्वचिदपि सुखमेधत इति ॥२॥४५॥

यो बन्धनवधक्लेशान्प्राणिनां न चिकीर्षति। स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥४६॥

य इत्यादि ॥४६॥ आत्मसुखेच्छया यो वर्त्तते यो द्विज आत्मसुखेच्छया प्राणिनां बन्धनवधक्लेशान्न चिकीर्षति ॥१॥ सर्वस्य हितप्रेप्सुः स सुखमत्यन्तं निर्वाणं प्राप्नोतीत्यर्थः ॥२॥४६॥ अपरञ्च फलमाह।

यद्ध्यायति यत् कुरुते धृतिं बध्नाति यत्र च। तदवाप्नोत्ययत्नेन यो हिनस्ति न किञ्चन ॥४७॥

यद्ध्यायतीत्यादि ॥४७॥ यो द्विज आत्मसुखेच्छया किञ्चन न हिनस्ति स यद्ध्यायति यत् कुरुते यत्र च धृतिं नियमं बध्नाति तत्सर्वं स यत्नेन प्राप्नोति ॥१॥४७॥ ननु पित्र्ये दैवे वा नाश्नीयात् कथं मांसभक्षणं परित्याज्यं तत्राह नाकृत्वेत्यादि ॥१॥४८॥

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्। न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत् ॥४८॥

प्राणिनां हिंसां वधमकृत्वा मांसं क्वचिदपि नोत्पद्यते प्राणिवधश्चावेदविहितो नैव स्वर्ग्यः स्वर्गाय हितः ॥१॥ वेदविहितस्तु प्राणिवधः स्वर्ग्यस्तस्मादवेदविहितहिंसयोत्पन्नं मांसमात्मार्थं भोक्तुं विवर्जयेत् ॥२॥४८॥ कस्मादेवं मांसं भोक्तुं विवर्जयेदित्यत आह समुत्पत्तिञ्च मांसस्येत्यादि ॥१॥४९॥

समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम्। प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात् ॥४९॥

मांसस्य समुत्पत्तिं च मांसस्योत्पत्तौ च देहिनां भक्ष्याभक्ष्याणामविधिनैव वधबन्धौ च प्रसमीक्ष्य ॥१॥ भक्ष्याभक्ष्यस्य मांसस्याविधिना भक्षणान्निवर्त्तेत इति परश्लोके विधिं हित्वा पिशाचवदित्यनेन ॥२॥ यस्य प्रमाणोऽदृष्टे मांसस्य समुत्पत्तिं शुक्रशोणितपरिणामात्मिकां घृणाकरीं विज्ञाय ॥१॥ प्राणिनां वधबन्धौ च क्रूरकर्म्माणौ निरीक्ष्य विहितमांसभक्षणादपि जनो निवर्त्तेत किमुताविहितमांसभक्षणादिति ॥२॥ तदसाधु मांसस्यान्तरशोणितपरिणामोऽनष्टपरिणामः एवं यदि मन्त्रो वैधावधोऽवधः वधे क्रूरकर्म्मत्वे न निषिद्धो वा वैधार्थधर्म्म मांस भक्षणान्निवर्त्तेत तर्हि सान्निक्योऽमावास्यादि श्राद्धे भोक्ताऽपि निवर्त्तेत प्रेतश्राद्धे भोक्तव्यमिष्टं भाष्ये इति ॥१॥ यैर्त्रिनाम मातापित्रोः प्रेतत्वं नापि तत्र तस्मात् श्राद्धादि स्वतः क्रियाधिकारश्च न स्यात् तस्मात् तदसाधु ॥१॥४९॥ तर्हि किं वैधावैधं सर्व्वमांसभक्षणान्निवर्त्तेत न च किं स्यादित्यत आह न भक्षयतीति ॥१॥५०॥

न भक्षयति यो मांसं विधिं हित्वा पिशाचवत्। स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥५०॥

विधिं हित्वा पिशाचवत्*यो मांसं भक्षयति*स लोके प्रियतां याति*व्याधिभिश्च न पीड्यते ॥१॥ विधिना मांसभक्षणे*चैवमेव* फलं नितवां भवति ॥ २ ॥ ५० ॥ अथ वधहिंसायां पुनः* घातकत्वं किं केवलं*छेत्तुर्भवति अथ किमन्यस्यापि तत्र *आहानुमन्तेत्यादि ॥१॥ ५१ ।

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥ ५१ ॥

अनुमतिकर्त्ता विशसिता * कर्त्तयाऽङ्गानां खण्डशश्छेत्ता * निहन्ता वधकर्त्ता क्रेता * विक्रेता संस्कर्त्ता पाकादिकर्त्ता *उपहर्त्ता परिवेशकः*खादकश्चेत्येते त्वष्टौ धर्मे वधे घातका भवन्ति ॥ २ ॥ ५१ ॥

स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति । अनभ्यर्च्य पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यकृत् ॥ ५२

स्वमांसमित्यादि ॥ ५२ ॥ यो द्विजः पितॄन् देवानानभ्यर्च्य*भक्ष्येण परमांसेन*स्वमांसं वर्द्धयितुमिच्छति ततोऽन्यस्त्वपुण्यकृन्नास्ति ॥ १ ॥ ५२ ॥

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥ ५३ ॥

वर्षे वर्षे इत्यादि ॥ ५३ ॥ यो द्विजः शतं समाः वर्षे वर्षेऽश्वमेधेन यजेत यश्च*विधिनापि मांसानि यावज्जीवं न*खादेत्तयोः पुण्यं समं ॥ १ ॥ ५३ ॥

फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः । न तत्फलमवाप्नोति यन्मांसपरिवर्जनात् ॥ ५४ ॥

फलमूलेत्यादि ॥ ५४ ॥ मेध्यैः फलमूलाशनैः*मुन्यन्नानां शालिप्रभृतीनां नीवारादीनां भोजनैः*तत्फलं नाप्नोति*मांसपरिवर्जनात्तु*यत्फलमाप्नोतीति ॥ १ ॥ ५४ ॥ ननु त्वयोक्तं* शास्त्रात्वविधिना मांसं *भक्षितारं दातेऽत्र*इति कथं मांसादित्वात * आह मांस इत्यादि निरुक्तं ॥२॥ ५५॥

मांस भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ५५ ॥

अहमिह लोके यस्य * मांसमविधिनैवाद्मि * सोऽप्यत्र परलोके गतं मां * स भक्षयिता भक्षयिष्यति ॥ १ ॥ मांसपदस्यैतन्मांसत्व *मांस*भावं मनीषिणो बुधाः * प्रवदन्ति व्याचक्षते ॥ २ ॥ ५५ ॥ नन्वस्त्वेवमविधिना* मांसभक्षणे मांससा*व्याख्यानं विधिना मांस * भक्षणतस्तु गतास्त्र * मेधमम् पुण्यं भवतीति चोक्तं ॥ १ ॥ तर्हि किं विधिना मांसभक्षणे च*दोषाः सन्तीत्यत उच्यते * न मांसभक्षणेत्यादि ॥ २ ॥ ५६ ॥

न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ ५६ ॥

विधिना मांसभक्षणे *दोषो नास्ति विधिनैव*मद्यपीते दोषो नास्ति * विधिनैव मैथुने च दोषो नास्ति ॥ १ ॥

अह्ना चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः। शवस्पृशो विशुध्यन्ति त्र्यहादुदकदायिनः॥ ६४॥

प्रेतहाच्छवस्पर्शाशौचमाह * अह्ना चैकेनेत्यादि ॥ १ ॥ ६४॥ अहरस्य प्रकरणादिह शव * स्पृश इति बहुवचननिर्देशा * ब्राह्मण क्षत्रियवैश्य शूद्रा एव ॥ १ ॥ सवर्णस्य शवस्पृशः * क्रमेणैकेनाह्ना रात्र्या * चैकया अह्ना सहितया त्रिरात्रैः त्रिभि * स्त्र्यहाभिश्च विशुध्यन्ति ॥ २ ॥ एवमुदकदायिनो * ये शवं दग्ध्वा तर्पयन्ति ते त्र्यहाद्विशुध्यन्तीति * भ्रान्ता स्वाङ्क शवस्पृशो * दशरात्रेणाशुध्यन्तीति ॥ ३ ॥ ६४ ॥

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समस्तत्र दशरात्रेण शुध्यति ॥ ६५ ॥

गुरोरित्यादि ॥ ६५ ॥ अहरस्थः शिष्यो ब्राह्मणः * पितृमेधं प्रेतस्य गुरो * राचार्यस्य देहादिकर्म्म समाचरन् ॥ १ ॥ प्रेतहारैस्तच्छववाहैः * सपिण्डैः समः सन् दशरात्रेण शुध्यतीत्यर्थः स्यात् ॥ २ ॥ ० ॥ ६५ ॥ ० ॥

रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला॥ ६६ ॥

रात्रीभिरित्यादि । ६६ । ० । गर्भस्रावे स्त्री मासतुल्याभिर्यावत् * माससम्भूतो गर्भस्तु * स्रवेत्तावतीभिरेव * रात्रिभिर्विशुध्यतीति । १ । चतुर्थमासपर्यन्तं गर्भस्रावः पञ्चमषष्ठयोः पात * इत्यायुर्वेदे तद्वय * मिहपाह सप्तमाष्ट * मयोरकालप्रसवः । २ । साध्वीश्चरोगिणी रजस्वला स्त्री * रजस्युपरते सति * चतुर्थदिने स्नानेन * विशुध्यतीति विशेषः । ३ । रोगिणी चतुर्थादूर्द्ध्वमहन्यपि * शुध्यतीति साध्वीत्युक्तं * स्वदुक्तं मापस्तम्भेन । स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते । इत्ते रजसि गमनास्त्रीनानिवृत्ते कथञ्चन । रोगिणी यदुरजः स्त्रीणामत्यर्थं हि प्रवर्त्तते । अशुद्धा स्तानतेन स्युस्तासां वैकारिकं हि तत् । अत्रापरस्पर्शे शुद्धि * विशेषः * विष्णूक्तस्तद्यथोच्यते । १ । रजस्वलायदा स्पृष्टा श्वानचाण्डालवायसैः । निराहारा भवेत्तावत्स्नात्वा काले न शुध्यति । २ । रजस्वलायदा स्पृष्टा उष्ट्रजम्बुकगर्द्दभैः । पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति । ३ । स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या ब्राह्मणी चया ॥ एकरात्रं निराहारा पञ्चगव्येन शुध्यति । ४ । स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या क्षत्रिया चया शुद्धिस्त्रिरात्रोपवासाद्व्यासस्यवचनं यथा । ५ । स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या वैश्यसम्भवा । चतूरात्रं निराहारा पञ्चगव्येन शुध्यति । ६ । स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या शूद्रसम्भवा । शुद्धिः षड्रात्रोपवासाद्ब्राह्मण्याः कामकारतः । ७ । अकामतश्चरेदेवं ब्राह्मणी सर्वतः स्पृशेत् । ७ । इति । विष्णुनाप्युक्तं तद्यथा * रजस्वला चतुर्थेह्नि * स्नाता शुध्यति हीनवर्णां * रजस्वलां स्पृष्ट्वा न तावत् * दश्नीयाद्यावन्न शुद्धा ॥ १ ॥ सवर्णामधिकवर्णां * वा स्पृष्ट्वा स्नात्वाश्नीया * दिति रजोपि वीजलात् * प्रेतवदु पचर्यते ॥ २ ॥ ० ॥ ६६ ॥ ०

नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता। निर्वृत्तचूडकानान्तु त्रिरात्राच्छुद्धिरिष्यते ॥ ६७ ॥

ऊर्द्धमक्रमेण दन्तजाते वर्ने *यज्ञमाहनृणामिति ॥ १ ॥ ० ॥ ६७ ॥ अकृतचूडाणां दन्तजातानां * मरणे सपिण्डेषु * नैशिकी विशुद्धिः स्मृता * कृतचूडानामनुप * नीतानान्तु मरणे * त्रिरात्राच्छुद्धिरिष्यते । अदन्तजाते जातादत्तु * प्राग्दन्तोत्पत्तेः सद्यः शौचमलं हि * यथा अलङ्कृतेनतद्यथा । २ । आदन्तजननात्सद्यआचूडान्नैशिकी स्मृता। इति विष्णुसंहितायां * ४ । अदन्तजाते बाले च * प्रेते सद्य एव नास्याग्नि * संस्कारो नोदकक्रिया । ५ । दन्तजाते त्वकृतचूडे * प्रेते त्वहोरात्रेण * कृतचूडे त्वसंस्कृते त्रिरात्रेण * । ततः परं यथोक्तकालेन शुद्धिः । ६ । स्त्रीणां विवाहः संस्कारः * संस्कृतासु स्त्रीषु नाशौ * चं भवति पितृपक्षे । ४ । तत्प्रसवमरणे चेत् * पितृगृहे भवतस्तु * दैकरात्रं त्रिरात्रञ्च । ५ । अत्र पितृगृहे स्त्रीणां * प्रसवे पितोरेकरात्रं * मरणे त्रिरात्रमिति ॥ ३ । ० । ६७ । ० ॥

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः। अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥ ६८ ॥

ऊनद्विवार्षिकमित्यादि ॥ ६८ ॥ द्विवर्षादूनवयसं * बालं प्रेतमलङ्कृत्य * बान्धवाः शुचौ भूमौ * ग्रामाद्बहिर्निदध्युः * ॥ १ ॥ अस्थिसञ्चयनादृते * तदर्थं यद्विनास्थिसञ्चयनं कुर्यादिति तथा । २ । ० । ६८ ।

नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया। अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव च ॥ ६९ ॥

नास्येत्यादि । ६९ । अस्योनद्विवार्षिकस्य * बालस्य मृतस्याग्निसंस्कारस्तु न कार्यो नोदकक्रिया च कार्या ॥ अरण्ये काष्ठवद्भूमौ * निधाय तस्मात्त्र्यहम * शुचयो * भूत्वा क्षपेयुः । २ । ० । ६९ । ० ।

नात्रिवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया। जातदन्तस्य वा कार्या नाम्नि वापि कृते सति ॥ ७० ॥

नात्रिवर्षस्येत्यादि । ७० । द्विवर्षादूर्द्धं त्रिवर्षात्र्यूनस्य मृतस्य बालस्य * ग्निसंस्कारः कर्त्तव्यो नोदक * क्रिया बान्धवैः कर्त्तव्या । १ । जातदन्तस्य तूदकक्रिया कार्या । * नाम्नि वा कृते सत्यजातदन्तस्योदकक्रिया कर्त्तव्या * विष्णुवचनेऽपि हि दृश्यते । २ । अदन्तजाते बाले च * प्रेते सद्य एव नास्याग्नि * संस्कारो नोदकक्रियेति । ३ । ० ॥ ७० ।

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम्। जन्मन्येकोदकानान्तु त्रिरात्राच्छुद्धिरिष्यते ॥ ७१ ॥

सब्रह्मचारीत्यादि । ७१ । सब्रह्मचारिणीति समानशाखा * ध्यायिनि मृतस्य तीते * गृहस्थस्यैकाहमशुचिभावेन क्षपणं स्मृतम । १ । ममादौ तु सब्रह्मचारिशब्दार्थं * न जानन् सहाध्यायीत्याह । २ । जन्मन्यापतात्तत्प्रभृति सप्तम * त्वेकोदकानां सपिण्डा * नां त्र्यहाच्छुद्धिरिष्यते * न त्वसंस्पर्श । प्रागुक्तं सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिरिति पराशरेणोक्तं । सम्पर्काज्जायते दोष इत्यादिना प्रागदर्शितं मरणे प्रागुक्तं नृणा * मित्यादिभिः श्लोकैरिति । ३ ।

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः । यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥७२॥

स्त्रीणामित्यादि । ७२ । असंस्कृतानामनूढानां स्त्रीणान्तु*प्राक्सप्तपदीगमना*न्मरणे बान्धवामाता*पित्रादयोबान्धवास्त्र्यहाच्छुध्यन्ति । १ । स्वगोत्राद्भ्रश्यते नारी*विवाहात्सप्तमे पदे*इतिलिखितवचनात् । २। उपसंहरतियथोक्तेनैव*सनाभीनां सपिण्डानां*येषां यत्कालमशौच* उक्तं ते सनाभयस्तेन*कल्पेनकालेन शुध्यन्ति ३ ॥ ० ॥ ७२ ॥

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् । मांसाशनञ्च नाश्नीयुः शयीरंश्च पृथक्क्षितौ ॥७३॥

नन्वेवमशौचे कथं*सपिण्डा वर्त्तेरन्नितातआह*अक्षारलवणेत्यादि । १ । ० । ७३ । ते सपिण्डा बान्धवा अशौचे प्राप्ते*यावदाशौचमक्षार*लवणान्नाः स्युस्त्र्यहन्तु*नद्यादिषु निमज्जेयुः मांसाशनञ्चावदाशौचं ते*नाश्नीयुः क्षितौ पृथक्च* शयीरन्नखट्टायां न कदा । २ । विष्णुवचनदर्शनात्यावदाशौचं तावत्प्रेतस्योदकं *पिण्डमेकञ्च दद्युः । १ । क्रीतलब्धाशनाभवेयु*रक्षारमांसाशनाश्च*स्थण्डिलशायिनः पृथक्शायिनश्च । २ । क्षारकृतलवणं कृतं यत्तत्क्षारलवणं * क्षारादिपृथग्लवणं* न तु लवणेषु क्षारो * विद्धद्भिर्गण्यते क्वचित् । ३ । तस्मात् पांशुलवणमक्षारादि*सैन्धवादिलवणाक्तं*नाक्षाराक्तं नमश्नीयात् । ४ । एतद्विद्वान्क्षारलवणं पांशु* लवणं वर्जयित्वा सैन्धवा*दिलवणं व्यवस्थापयति । ५ । तदसाधु क्षारादिभक्ष्यतत्कृतनिर्देशमविशेषः ० । ७३ ।

सन्निधावेष वै कल्पः शावाशौचस्य कीर्त्तितः । असन्निधावयं ज्ञेयो विधिः सम्बन्धिबान्धवैः ॥७४॥

उक्ताशौचं यत्रस्थानां*भवति तदुच्यते व * सन्निधावेष इत्यादि । १ । ७४ । शावाशौचस्यैष उक्तः कल्पः सर्वैः*सन्निधावेवस्थितानां* कीर्त्तितः सम्बन्धिबान्धवै*रसन्निधौस्थितैरयं*वक्ष्यमाणोविधिर्ज्ञेयः । १ । ७४ ।

विगतन्तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ७५॥

विगतमित्यादि । ७५ । विदेशस्थं सपिण्डं विगतं मृतं *सपिण्डोऽनिर्दशं * दशाहाभ्यन्तं शृणुयात् । १ । सदशरात्रस्यावशेषं*यावद्दिनं तावद्दिन*नमशुचिर्भवेदिति । २ । ७५ ।

अतिक्रान्ते दशाहे च त्रिरात्रमशुचिर्भवेत् । संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति ॥ ७६॥

अतिक्रान्ते चेत्यादि । ७६ । अतिक्रान्ते दशाहे प्राक्*संवत्सरपूरणात्तु* विदेशस्थं विगतं यः शृणुयात्स* त्रिरात्रमशुचिर्भवेत् । १ । संवत्सरे व्यतीते तु * यो विदेशस्थं सपिण्डं* विगतं शृणुयात्सोऽपः*स्पृष्ट्वा स्नात्वा विशुध्यति । १ । ७६ । ० ।

निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥ ७७।

निर्दशमित्यादि । ७७ दशाहादूर्द्धं ज्ञातिमरणं श्रुत्वा*पुत्रस्य च जन्म श्रुत्वा*सवासा जलमाप्लुत्य*स्नात्वा शुद्धो भवतीति ॥ १ ॥ सन्निधौ चपश्चतायाम् असंस्पर्शे स्नानाच्छुद्धिरुक्तापूर्व्वं ७७ ॥

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते। सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥७८

बाले इत्यादि ॥ ७८ ॥ बाल इत्यत्र जाते जाता*दन्ताः प्राग्दन्तोत्पत्तेः * संस्थिते सन्निधौ मृते सपिण्डः*सद्य एव विशुध्यति ।१। दन्तजाते हि बाले कृतनामकर्म*चूडाना विशुद्धिर्निर्दशिकी उक्ता*देशान्तरस्थे च बाले संस्थिते ।२। जलमाप्लुत्य सद्य एव शुध्यति * पृथक्पिण्डे प्रपितामहादूर्द्ध्वं * पुरुषे प्रपौत्रादधः*पुरुषे च संस्थिते ।३। सवासा ज*लमाप्लुत्य*सद्य एव*विशुध्यति ॥ ४ ॥ ७८ ॥

अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम् ७९॥

अन्तर्दशाहे स्यातामित्यादि ।७९। सपिण्डस्य मरणेऽन्तर्दशाहे*दशाहाभ्यन्तरे यदि*पुनः सपिण्डस्य मरण*मथवा जन्म स्यात्तदा ।१। विप्रो यावत्तत्पूर्व्वाशौचं निर्दशं*न स्यात्तावदशुचिः स्यात् न तु पुनराशौचकालात्यये ॥२॥७९॥

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ८०॥

त्रिरात्रमित्यादि । ८० । आचार्ये संस्थिते मृते * सति गृहस्थस्य शिष्यस्य त्रिरात्र * मशौचं धर्म्मज्ञा आहुः।१। तस्याचार्य्यस्य पुत्रे च*संस्थिते पत्न्याञ्चाचार्य्यस्य मृतायां *दिवारात्रमहोरात्र*माशौचमाहुरिति स्थितिः ॥ २ ॥ ८० ॥

श्रोत्रिये तूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥८१॥

श्रोत्रिये इत्यादि । ८१ । छन्दोऽधीते इति श्रोत्रियः इति स*एव यथा स्यात्तदुक्तं* मत्रिसंहितायां यथा ।१। जन्मना ब्राह्मणो ज्ञेयः*संस्काराद्द्विज उच्यते । विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च । २ । उपसम्पन्ने समीपे*स्वगृहे स्थिते संस्थिते *मृते त्रिरात्रमशुचिर्भवेदिति । ३। मातुले संस्थिते मृते *पक्षिणीं रात्रिमशुचिः* शिष्यर्त्विग्बान्धवेषु चमृते *पक्षिणीं रात्रिमशुचि*र्बान्धवोऽत्र मित्रं ज्ञेयं । ४ । विद्यां नत्वाचार्य्य पुत्रा * द्विमरणे त्वेकरात्र*मशौचमुक्तं तद्यथा । ५ । आचार्य्यपत्नीपुत्रोपाध्याय* मातुलश्वशुरश्वशुर्य्यसखा * ध्याय्याधिशिष्यें मृतेष्वेकरात्रेण ॥ ६ ॥ ८१ ॥

प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः। अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥८२॥

प्रेते राजनीत्यादि। ८२। यस्य विषये देशे स्थितो*ऽहस्याब्राह्मणादिः* तस्मिन्नभिषिक्ते क्षत्रिये राजनि* प्रेते सज्योतिर्यावज्ज्योतिः*स्तावदशुचिर्भवेत्। १। दिवा मृते तावद्दिनं *रात्रौ मृते यावन्नक्षत्रं*तावदशुचिर्भवेत्। २। अश्रोत्रिये ब्राह्मणे स्व*गृहमागते मृते च*ऽहतस्नानमहरशुचिः स्यात्। ३। अनूचाने चाधीतवेदे स्वगृह*मागते मृते गुरौ च*जातकर्मादिसंस्कार*कारिणि स्वगृहे मृते *ऽहतस्नानमहरशुचिः स्यात्॥ ४॥ ८२॥ जातीत्यादि।

**जातिविप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति॥ ८३॥**

इत्येवं ब्राह्मणस्य गुणविशेषे*दशाहत्र्यहैकाहाद्याशौचमुक्तं*सर्वं प्रामेव ब्राह्मणानां दशाहा*द्यधिकाशौचं वा ऽत्यर्थं प्रोच्यते। १। यथा तथा विधो विप्रो* ब्राह्मणब्रुवः समब्राह्मणो वा * सपिण्डानां मरणे*दशाहेनैव शुद्ध्यति। २। अपत्यजनने पिता*स्नानाच्छुद्ध्यति प्रसूति*स्पृष्टा दशाहेनैव*माता दशाहेनैवेति। ३। एवं द्वादशाहेन भूमिप इति जातिक्षत्रियः क्षत्रिय* ब्रुवः समक्षत्रियो वा * सपिण्डमरणे द्वादशाहेन शुद्ध्यति अपत्यजनने पिता * स्नानाच्छुद्ध्यति प्रसूति * स्पृष्टा द्वादशाहेनैव माता च। ४। वैश्यः पञ्चदशाहेनेति वैश्यो वैश्यब्रुवः समवैश्यो वा*सपिण्डमरणे पञ्चदशाहेन शुद्ध्यतीति। ५। अपत्यजनने पिता * स्नानाच्छुद्ध्यति प्रसूति * स्पृष्टा पञ्चदशाहेन प्रसूतिश्च। ६। शूद्रो मासेन शुद्ध्यतीति * जातिशूद्रः सपिण्डानां* शुद्ध्य * त्यपत्यजनने पिता * स्नानाच्छुद्ध्यति प्रसूति*स्पृष्टा मासेन प्रसूतिश्च। ७। अत्र शुद्धो हि पु... पठन्ति तेन च*पौनरुक्त्यं स्यात् पूर्वमुक्तं *दशाहं यावदाशौच*मित्यतोऽत्र सर्वसंग्रहार्थं जातीति। ८। पराश रेणचोक्तं हि*जन्म कर्मादिविभ्रष्टः सन्ध्योपासनवर्जितः। नामधारकमात्र*श्च दशाहं सूतकी भवेत्। २। क्षत्रिय स्तु दशाहेन स्वकर्मनिरतः शुचिः। तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात्। ४। इति गुणयुक्ते क्षत्रिये वैश्ये च* दशाहं द्वादशाहमशौचमुक्तं। शूद्रस्य च याज्ञवल्क्योक्तं* न्यायवर्त्तिनोऽर्द्धमासं। ५। तद्यथा। ब्राह्मण मधिकृत्य। त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते। क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु। त्रिंशद्दिनानि शूद्रस्य तदर्द्धं न्यायवर्त्तिनः इति॥ ८॥ ८३॥ ननु यदि ब्राह्मणादीनामत्यन्त* निर्गुणत्वं वर्त्तते तत्र किमेषा *मधिककालमशौचं *स्यादित्यत आह। ८४।

**न वर्द्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः। न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत्॥ ८४॥**

नेत्यादि। १। ८४। अघाहानीति समासान्तविधे*रनित्यत्वान्नटच। ब्राह्मणः*क्षत्रियो वैश्यः शूद्रो वा यस्य अघाहानि मरणजननाशौच*दिनानि दशाहादिभ्यो*ऽधिककालं न वर्द्धयेत्। २। तदघाहवर्द्धनेन सन्ध्योपासन* प्रभृतिलोपो भवति। यस्य यस्य श्रौताग्निर्वैदादेर्यावत् * कालमशौचं विहितं *तत्तत्कालमेवाशौचं स्यात्। ३। तत्र यस्तु त्रिस्त्रब्रह्मचर्यः सन * यथाविधि समावृत्तो * भार्य्यां गृहीत्वाग्निं गृहीतिनस्यैव * भवत्येकाह

मशौचं । ४ । सरवाग्निषुक्रियाहोमं नप्रत्यूहे * होमविघ्नं नकुर्व्वीत * शुष्कान्नेन फलेन वा * होममदग्धां कुर्व्वीत । ५ । तत्र हिताब् कालिकाखण्डे रेनखागपितं पञ्च * यज्ञसन्ध्योपासनादि * कर्म्माणि न तस्मिन् दिने कुर्य्यादिति । ५ । कात्यायनेन च्छन्दोक्तं च * मृतके कर्म्मणां त्यागः * सन्ध्यादीनां विधीयते । होमः श्रौतस्तु कर्त्तव्यः शुष्कान्नेनापि वा फलैरिति । ६ । संवर्त्तेनाप्युक्तं यथा * होमस्तत्र तु कर्त्तव्यः शुष्कान्नेन फलेन च इति । ७ । तथाऽत्रिसंहितायाञ्च * महायज्ञविधानन्तु न कुर्य्यान्मृतजन्मनोः । होमं तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा । इति । ८ । निरग्नेः केवलवेदादि स्वाध्याय * दाशौचमग्न्याभावात् * होमादिपञ्चयज्ञान् * सन्ध्यैव सन्ध्योपासना * दीनि तेन च न कुर्य्युरिति ६ । ननु तर्हि तस्य साग्निके दृश्य * सपिण्डाः पुत्रादयो निरग्नित्वात् * त्र्यहादशौचभाजः स्युः * रिताते च स्यादेव नचेत्यादि । १० । तत्कर्म्म कर्व्वाण इताग्निषु तत् * कर्म्म कुर्व्वाणः साग्निकः * साग्निकस्य तस्य समानाभ्योपि सर्व्वः * सपिण्डस्तेनाग्निनैव * शुचित्वान्नाशुचिर्भवेत् । ११ । इत्येवं तेषामप्यशुचित्वाभावात् * दशकौतैरपि होमः * कार्य्य इत्युक्तं जाबालेन । १२ । जन्महान्योर्वितानस्य कर्म्मलोपो न विद्यते । शालाग्नौ केवलो होमः कार्य्योऽनन्यैर्विपश्चिद्भिः । इति । १३ । एतद्व्याख्यानमविद्वान् * प्रमादेन चेन्निरग्निकः * नाथात्राञ्च इतरत्र यथा । १२ । शौनाग्निके त्रहोमान्स्वे विधानयेत् * स्वयं कुर्य्यादित्यक्तौ * पुत्रादीन्नेव कारयेत् । १४ । अतएवोक्तं हृदमाह * तत्कर्म्माग्निहोत्ररूपं * कुर्व्वाणः पुत्रादिः सपिण्डो * नाशुचिर्भवतीति निरन्न * मनाश्यानां निरग्निकः * नाशौचाभावानुत्पत्तेः । १५ । येऽनो प्रमादिनो व्याचक्षते चैवं * यदेकाहाद्यशौचवचनं तत्तु * तात्कालिकशुद्धिज्ञापकमग्निषु * होमार्थं सर्व्वथा शुद्धिरिति आह दुर्क्षुं । १६ । तत्प्रमादेन व्याख्यातं * यतः केवलवेदादि * स्वाध्याय दाशौचभागिनो नास्ताग्नि * कस्मिन्कर्म्मणि तात्कालिक शुद्धिरुपपद्यते ॥ १७ ॥ तेषां तात्कालिकशुद्धि * व्याख्यानानुपपत्तेस्तु * प्रमादादेव तद्व्याख्यातम् ॥ १८ ॥ अङ्गस्पर्श नश्चैवापि * काहाद्याशौचभागिना * तत्तदशौचसमाप्तौ * यास्यातये । दशाहाशौचे * त्रिचतुःपञ्चदशाहा * तायै तन्नोपपद्यते ॥ १६ ॥ तद्यथाग्निपुराणे च * सर्व्वेषामेव वर्णानां त्रिभागात्स्पर्शनं भवेत् । त्रिचतुःपञ्चभिः शूद्रा वर्णाः क्रमेण तु । इति । २० । चतुर्थे च दिने कार्य्यस्तथास्थ्नां चैव सञ्चयः । अस्थिसञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते । ८४ । अपरञ्चाग्निपुराणे * भार्गवरामं प्रतियत् * पुष्कर उवाचेत्यादिदम् । १ । प्रेतशुद्धिं प्रवक्ष्यामि सूतिकाशुद्धिमेव च ॥ दशाहं शावमाशौचं सपिण्डेषु विधीयते । २ । जनने च तथा शुद्धिर्ब्राह्मणानां भृगूत्तम । द्वादशाहेन राजन्याः पक्षाद्वैश्या यथामतः । शूद्रोऽनुलोमतो दासो स्वामि तुल्याशौचकम् । ४ । षड्भिस्त्रिभिस्तथैकेन च क्षत्रविट्शूद्रयोनिषु * ब्राह्मणः शुद्धिमाप्नोति क्षत्रियस्तथैव च । विट्शूद्रयोनौ शुद्धिः स्यात् क्रमात् परशुरामक । षड्रात्रेण त्रिरात्रेण षड्भिः शूद्रे तथा विशः ॥ इति सवर्णयोनिषु सपिण्डेषु * शावमाशौचं ब्राह्मणानां दशाहं * राजन्ये द्वादशाहं वैश्ये पक्षात् परं । १ । शूद्रे मासतः परमनुलोमतो * दासस्य स्वामितुल्यं शूद्रे * शौचं स्वामिमरणे स्यात् । २ । तथा च ब्राह्मणे स्वामिमरणे * दासे शूद्रे दशरात्रं * क्षत्रियस्वामिमरणे शूद्रे दासे द्वादशाहं * वैश्यस्वामिमरणे पक्षः । ३ । क्षत्रविट्शूद्रयोनिषु * सपिण्डेषु ब्राह्मणः * क्रमात्षड्रात्रेण त्रिरात्रेणैकेनाह्ना * रात्रेण शुद्धिमाप्नोति ॥ ४ । क्षत्रियस्य विट्शूद्रयोनौ सपिण्डे * मृते शावाशौचं क्रमात् * षड्रात्रेण त्रिरात्रेण * शुद्धिः स्याच्छ्राद्धोचाते । ५ । षड्रात्रेणैव वैश्ययोनौ * मृते त्रिरात्रेण शूद्र * योनौ मृते क्षत्रियस्य शुद्धिः

द्विपितृकौ भ्रातरावन्यमातृकौ। एकाहं सूतके तत्र मृतके तु त्र्यहं भवेत्। सपिण्डानामशौचं हि समानोदके मृते। दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतके। त्रिरात्रेण सकुल्यास्तु स्नाताः शुध्यन्ति गोत्रिणः। सपिण्डता पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेत चतुर्द्दशात्। जन्मनामस्मृतेरेतत्तत्परं गोत्र उच्यते। मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च। मृते जामातरि प्रेते दौहित्रे भगिनीसुते श्यालके तत्सुते चैव सद्यः स्नानं विधीयते॥ मातामह्यां तथाचार्य्ये मृते मातामहे त्र्यहम॥ दुर्भिक्षे राष्ट्रसंपाते आगतायां तथापदि उपसर्गमृतानान्तु दातृब्रह्मविदां तथा। यतिव्रतीब्रह्मचारीसंग्रामे देशविभ्रमे। दाने यज्ञे विवाहे च सद्यः शौचं विधीयते। असाध्यव्याधियुक्तस्य स्वाध्याये चाक्षमस्य च। प्रायश्चित्तमनुज्ञातमग्नितोयप्रवेशनम्। अपानादथ क्रोधाद्भयात्परिभवात्तथा यात्। उद्बध्य म्रियते नारी पुरुषो वा कथञ्चन। आत्मघातीचैकत्वं वसेत्सनरकेऽशुद्धः शौचस्मृतिलुप्तः परित्यजति यस्त्वघम्। त्रिरात्रं तत्र चाशौचं द्वितीये चास्थिसञ्चयः। तृतीये तूदकं कार्य्यं चतुर्थे श्राद्धमाचरेत्। विड्दारादिहतानाञ्च त्र्यहाच्छुद्धिः सपिण्डके। शूद्रायाः प्रसवे गेहे शूद्रस्य मरणे तथा। भाण्डानि परित्यजेत्त्र्यहाद्भूमिं पतः शुचिः। सर्व्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्। सूतकं मातुरेव स्यादुपस्पृश्य पिताशुचिः। पुत्रजन्मदिने श्राद्धं कर्त्तव्यमिति निश्चितं। तदहस्तत्प्रदानञ्च गोहिरण्यादिवाससाम्। मरणं मरणेनैव सूतकं सूतकेन च। उभयोरपि यत्पूर्व्वं तेनाशौचेन शुध्यति। सूतके मृतकं चेत्स्यान्मृतके वापि सूतकम् तत्राधिकृत्य मृतकं शौचं दद्यान्न सूतकम्। समानं लघुशौचन्तु प्रथमेन समापयेत्। असमानं द्वितीयेन धर्म्मराजवचो यथा। शावान्तः शावआपाते पूर्व्वाशौचेन शुध्यति। गुरुणा लघु बाध्येत लघुना नैव तद्गुरु। मृतके सूतके वापि त्रिमध्ये न दाहयेत्। तच्छेषेणैव शुध्यरन् रात्रिशेषे द्व्यहादिकात्। प्रभाते यदशौचं स्याच्छुद्धिरेव त्रिभिर्दिनैः। उभयत्र दशाहानि कुलस्यान्नं न भुज्यते। इति। अथ कालीपुराणे। विशेषतः शिवापूजां प्रमीते पितृकोनरः। यावद्वत्सरपर्य्यन्तं मनसापि न चाचरेत्। महागुरुनिपाते च काम्यं किञ्चिन्न चाचरेत्। आद्विजब्रह्मयज्ञं श्राद्धं दैवयुतं च यत्। इति। अत्र यावद्वत्सरपर्य्यन्तमिति * सपिण्डीकरणपर्य्यन्ताभिप्रायं * ज्ञातेन महागुरुनिपाते॥ १॥ सपिण्डीकरणादूर्द्ध्वं * न देहाशुद्धिर्वर्त्तते * पुराणां प्रेतत्वाभावात्॥ २॥ ८४॥ प्रेतशुद्धिविशेषात् प्रेतस्पर्शि * शौचं शुद्धिमाह द्विनेति॥ १॥ ८५॥

**दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥८५॥**

दिवाकीर्त्तिश्चाण्डालः उदक्या * रजस्वला पतितो ब्रह्महा * प्रभृति पापी सूतिका * प्रसवाद्यशौचान्ता॥ २॥ शवस्पृष्टः तानेन * शवस्पर्शाशौचयुक्ता * मिहासवर्णा सा शवं * स्तच्छवस्पृष्टी च सर्व्वः। ३। एतान् स्पृष्ट्वा स्नानेन शुध्यति तत्र * रजस्वलामुदक्यां स्पृष्ट्वा यथा * शुध्यति तत्पूर्व्वमुक्तं मतिनोक्तं । ४। सूतिका * सपिण्डादन्यः स्पृष्ट्वा * स्नानेन

द्व्यतिनव*सपिण्डास्तेहिकतिकाया अशौचातायै य३ान्ति ॥ ५ ॥ ८५ ॥

ाचमयप्रयतोनित्यं जपेदशुचिदर्शने। सौरान्मन्त्रान्यथोत्साहं पावमानीश्चशक्तितः॥८६॥

आचमेत्यादि ॥ ८६ ॥ विष्ठाद्य शुचिद्रव्यादर्शने कृते*प्रयतःसन्नाचम्यसौरान्मन्त्रा * उदत्यं जातवेदस* त्यादीन्यथोत्साहं। १। पावमानीश्चशक्तितस्तच्छुद्ध्यर्थं*जपेदिति प्रायश्चित्तम् ॥ २ ॥ ० ८६ ॥

ारंस्पृष्ट्वास्थिसस्नेहं स्नात्वाविप्रोविशुद्ध्यति। आचम्यैवतुनिःस्नेहंगामालभ्यार्कवीक्षणात्॥८७

नारमित्यादि ॥ नरस्यास्थिसस्नेहमा*युक्तं स्पृष्ट्वा विप्रः स्नात्वाविशुद्ध्यति*निःस्नेहं शुष्कं नरास्थि* स्पृष्ट्वा म्यविशुद्ध्यति। गामालभ्यस्पृष्ट्वार्कवीक्षणादर्कं*वीक्ष्याविप्रोविशुद्ध्यति। २। ०। ८७। ०।

ादिष्टीनोदकं कुर्य्यादाव्रतस्यसमापनात्। समाप्ते तूदकं कृत्वात्रिरात्रेणैव शुद्ध्यति॥८८

आदिष्टीत्यादि। ०। ८८। व्रतादेशनमादिष्टं*तदस्यास्तीत्यादिष्टी*ब्रह्मचर्याश्रमी।१। सपिण्डीकरण* ान्त*उदकादिकं कर्म्मपित्रादेः*न कुर्य्यात् यावद्व्रतस्य समापनात्। २। समाप्ते ब्रह्मचर्य्य व्रते*गुरुणानुमतः त्वा * यथाविधि समावृत्तः। ३। उदकं तर्पणं कृत्वा * त्रिरात्रेणैव शुद्ध्यति * शुद्धःसं*वत्सर्यादिनि पिण्डीकरणान्तं कर्म्मकुर्य्यात्। ४। ०। ८८।

थासङ्करजातानां प्रव्रज्यासुचतिष्ठताम्। आत्मनस्त्यागिनाञ्चैवनिवर्त्ततोदकक्रिया॥८९॥

वर्थेत्यादि। ८९। वृथाजातानां प्रायेणत्यक्तधर्म्म * कर्म्मणां सङ्करजातानां * प्रतिलोमजातादीनां * तादीनां प्रव्रज्यासु*स्वतन्त्रायाश्रमे तिष्ठतां। १। आत्मनस्त्यागिनां विधिं * विनात्मघातिनाञ्चैव * मृतानां दकक्रिया*पिण्डश्राद्धादिकं सर्वं निवर्त्तत। २। ०। ८९। ०।

ाषण्डमाश्रितानाञ्चचरन्तीनाञ्चकामतः। गर्भभर्तृद्रुहाञ्चैवसुरापीनाञ्चयोषिताम्॥९०॥

पाषण्डेत्यादि। ९०। योषितां पाषण्डजन * माश्रितानां कामतः * व्यभिचरन्तीनां गर्भं*द्रुहां भर्तृ हां सुरा*पानशीलानामेवच*पिण्डोदकादि निवर्त्तत। १। ०। ९०।

ाचार्यंस्वमुपाध्यायं पितरं मातरं गुरुम्। निर्हृत्यतुव्रतीप्रेतान्नव्रतेनवियुज्यते॥९१॥

आचार्यमित्यादि। ९१। व्रतीब्रह्मचर्य्याश्रमस्थः* आचार्य्यादीन्प्रेतान्निर्हृत्यव्रतेन * नवियुज्यते त्वाशुद्धो न। १। प्रमादीववाच्छेदे*निर्हृत्येति दाहदश्राद्धपिण्ड*षोडशश्राद्धादिसकलप्रेत * कृत्यस्योपलक्ष र्थम्। २। इतितदुक्तं पूर्वं*कृत्यादिष्टीत्येनैवव्रतस्यासमाप्ति* पर्यन्तमुदकक्रिया * प्रतिषेधकरणात्। ३।

तेनग्टहाच्छ्मशानपर्य्यन्तं * निर्हरणमेवनत्त * तदुद्दकक्रियादि । ४ । ९१ । ० । तन्निर्हरणमाहद्दक्षि
णेनेत्यादि । १ । ९२ । ० ।

**दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्व्वैस्तु यथायोगं द्विजन्मनः॥ ९२**

दक्षिणेनपुरद्वारेण* शूद्रं मृतं निर्हरेत् * पश्चिमेनवैश्यं मृत * उत्तरेण क्षत्रियं मृतं * पूर्व्वद्वारेण
ब्राह्मणं मृतं निर्हरेत् । १ । ० । ९२ ।

**नराज्ञामघदोषोऽस्तिव्रतिनां नचसत्रिणाम्। ऐन्द्रं स्थानमुपासीनाब्रह्मभूताहिते सदा॥ ९३**

नराज्ञामित्यादि । ९३ । राज्ञामभिषिक्तक्षत्रियनृपाणां * सपिण्डमरणेऽघदोषोनास्तीति नक्षत्रि
मात्रस्य* । १ । व्रतिनां ब्रह्मचारिणां * चान्द्रायणादि व्रतकारिणामपिच * सत्रिणां यज्ञदीक्षितान
*पित्रादिमरणेऽघदोषोनास्ति* ।२। कस्मात्हिदस्य त्तेराजव्रतिसत्रिणः *ऐन्द्रमिन्द्रस्यस्थान*उपासीनाब्रह्मभू
भवन्तीति । ३ । ऐन्द्रमिन्द्रस्य परमेश्वरस्य * स्थानं राजासनं ब्रह्म*चार्य्यासनं सत्रिस्यान्नञ्च । ५ । ० । ९
कथमैन्द्रस्थानं राजासनमित्य* तत्राहराज्ञइत्यादि । १ ९४ ।

**राज्ञोमाहात्मिकेस्थाने सद्यःशौचं विधीयते। प्रजानांपरिरक्षार्थमासनञ्चात्रकारणम्॥ ९४**

माहात्मिके महात्मनः* परमेश्वरस्यस्थाने * प्रजापरिरक्षणार्थमासीनस्य * राज्ञोऽभिषिक्तक्षत्रिय
खलु* । १। सपिण्डमरण* जननयोःसद्यः * शौचं विधीयते * नतुपूर्णाशौचं । २ । अत्रसद्यःशौचे प्रजाना
रि*रक्षणार्थं राजासनं*कारणं नतुक्षत्रियत्व* जातिःकारणं दृश्यते । ३ । प्रमादीत्वचारः सर्व्वजाति*रेव
जेतितत्रयत्रैव*मासनं धर्म्मेणक्षत्रियस्यैव । २ । ० । ९४ । सद्यःशौचप्रसङ्गादाह*डिम्बाहवेत्यादि ।१। ९

**डिम्बाहवहतानाञ्चविद्युतापार्थिवेनच। गोब्राह्मणस्यचैवार्थे यस्यचेच्छतिपार्थिवः॥ ९५**

डिम्बानां शिशूनां आहवहतानां चविद्युताचहतानां * पार्थिवेन राज्ञादण्डार्थं * मपराधविशि
हतानां * गोरक्षणार्थं ब्राह्मणस्य * त्राणार्थं च हतानां । २ । पार्थिवोऽभिषिक्तःक्षत्रियो * राजा
कर्म्मकरणार्थं यस्यच*शौचमिच्छतितस्यच*सद्यःशौचं विधीयते । ३ । ० । ९५ ।ननुप्रजानांपरिपालनार्थं
राज्ञ्यासनं कथंमाहात्मिकं * स्थानमित्यतआहसोमेत्यादि । १ । ० । ९६ ।

**सोमाग्न्यर्क्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्यच। अष्टानां लोकपालानां वपुर्धारयते नृपः॥ ९६**

सोमश्चाग्निश्चार्कश्चानिलश्चेन्द्रश्च * वित्तपतिश्चाप्पतिश्च* यमश्चेताष्टानां लोकपालानां * वपुर्नृपोध
रयते । १ । ० । ९६ । ० ।

**लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते । शौचाशौचं हि मर्त्यानां लोकेशप्रभवाप्ययम् ॥ ९७ ॥**

लोकेशेत्यादि । ९७ । अष्टभिर्लोकेशैरधिष्ठितो राजा * नास्याशौचं विधीयते * कस्मात् हि यस्मान्मर्त्यानां * शौचाशौचं लोकेशप्रभवाप्ययम् । १ । लोकेशेभ्यः प्रभवति * लोकेशेषु प्रतिलीयते तैस्तु * लोकेशैरधिष्ठितो राजा । २ । ० । ९७ । ० । नन्वाहवहतानां कथं सद्यःशौचमित्यत आह * उद्यतैरित्यादि । १ । ० । ९८

**उद्यतैराहवे शस्त्रैः क्षत्त्रधर्म्महतस्य च । सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः ॥ ९८ ॥**

उद्यतैः शस्त्रैराहवे * क्षत्त्रधर्म्मेण हतस्य * यज्ञो रणात्मकः सद्यः सन्तिष्ठते * तथा सति शौचमिति स्थितिर्नत्वशौचमिति । १ । ० । ९८ । नन्वशौचदिनेऽतीते * किं स्नानादेव शुध्यति * किं क्रियान्तरेणेत्यत * आह विप्र इत्यादि । १ । ० । ९९ ।

**विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्त्रियो वाहनायुधम् । वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥ ९९ ॥**

अशौचान्तदिनेऽतीते * कृतक्रियो मृतकर्म्मादिक्रियः * कृतस्नानाचान्तश्च विप्रोऽपः * स्पृष्ट्वा शुध्यतीति । १ । क्षत्त्रियो वाहनायुधं * स्पृष्ट्वा शुध्यति वैश्यः प्रतोदं रश्मीन् * वा स्पृष्ट्वा शुध्यति शूद्रो * यष्टिं स्पृष्ट्वा शुध्यतीति । २ । ० । ९९ उपसंहरति एतदित्यादि । १०० ।

**एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः । असपिण्डेषु सर्व्वेषु प्रेतशुद्धिं निबोधत ॥ १०० ॥**

भो द्विजोत्तमाः सपिण्डेषु प्रेतेषु तच्छौचं वो युष्माभ्य * मभिहितं मया सर्व्वं * असपिण्डेषु प्रेतेषु * शुद्धिं मत्तो निबोधत । १ । ० । सपिण्डेषु पितृमातृपरागिव * इह तु जनवचनं तेना * न्यग्राम शौचवचनं * नदूरातीत्य वर्धयम । २ । १०० । ० ।

**असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् । विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥ १०१ ॥**

असपिण्डमित्यादि । १ । १०१ । विप्रो ब्राह्मणमसपिण्डं * प्रेतं बन्धुवन्निर्हृत्य * तदन्नमदन्नेव तस्य गृहे नै * वसेत्तदा त्रिरात्रेण विशुध्यतीति * । १ । मातुराप्तान् बान्धवान् * भ्रात्रादीन् निर्हृत्य च * त्रिरात्रेण शुध्यति । २ । १०१ ।

**यद्यन्नमत्ति तेषान्तु दशाहेनैव शुध्यति । अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥ १०२ ॥**

यद्यन्नमत्तीत्यादि । १०२ । एवमसपिण्डं प्रेतं * निर्हारको यदि प्रेतं * निर्हृत्य तेषां मृतस्य * सपिण्डानामन्नमत्ति * तदा दशाहेनैव हि * तेषामशौचान्ते शुध्यति । १ । यद्यसपिण्डं प्रेतं निर्हृत्य तदन्नं नादन् * तस्य गृहे वसेत्तदा अह्नैकेन * शुध्यतीत्यनेन पूर्व्व * श्लोके तदन्नमदन् गृहे वसंस्त्रिरात्रे * णैव शुध्यतीति ख्यापितं । २ । ० । १०२ । ० ।

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा। स्नात्वा सचेलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥१०३॥

अनुगम्येत्यादि। १०३। ज्ञातिमज्ञातिं वा प्रेतं * स्वेच्छयानुगम्य स्वर्ग * वहनदहनादिकं * विना पश्चाद्वै व गत्वा * सचेलः स्नात्वाग्निं स्पृष्ट्वा * घृतं प्राश्य विशुध्यति। १। १०३।

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्। अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता॥१०४

न विप्रमित्यादि॥ १०४। मृतं विप्रं स्वेषु ज्ञातिषु विप्रेषु * वा तिष्ठत्सु वर्त्तमानेषु * न शूद्रेण नाययेत्। १। कस्मात् हि यस्माच्छूद्रसं * स्पर्शदूषिता सा स्यात् * सा अग्नावाहुतिरस्वर्ग्या स्यात्। २। तर्हि क्षत्रियवैश्याभ्यां * किं नयने दोषो नास्ति * तथैवासत्सु विप्रेषु * किं शूद्रेण नयने दोषो नास्तीति चेत्। ३। शूद्रसंस्पर्शदुष्टविप्रशवस्याग्नावाहुतेरस्वर्ग्यत्व * मेव क्षत्रियवैश्याभ्यां * नाययेदिति ज्ञापनार्थं * स्वेषु तिष्ठत्स्वित्युक्तं। ४। ०। १०४
शुद्धेः कारणान्याह * ज्ञानं तप इत्यादि। १। ०। १०५।०।

ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम्। वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम्॥१०५

ज्ञानादिकं किञ्चित्कर्त्तृ * देहिनां शुद्धेः कर्तृ स्यात् * तद्यथाक्रमाद्दर्श्यते। १। बुद्धिर्ज्ञानेन शुद्ध्यति * तपसा वेदवित्तमा शुद्ध्यन्ति * पुनःपाकेन मृन्मयं * पात्रं शुद्ध्यतीत्यग्निः। २। पञ्चगव्येन शुद्धिरित्याहारः * एकालिङ्गे गुदे तिस्र * इति मृद्यथमनःपूतं * समाचरेदित्युक्तं। ३। वारि यथा पुनः प्रक्षालनात् कांस्याः * शुद्ध्यन्तीत्युक्तमुपाञ्जनं यथा * मार्जनोपाञ्जनैर्वेश्म * शुद्ध्यतीत्युक्तमृषिभिः। ४। पन्था वातेन शुद्ध्यतीति वायुः * कर्म यथा यज्ञेन वाश्वमेधेनेति * गामालभ्याक्रे वीक्ष्येत्युक्तमत्र * कालो यथा शुद्धो हि प्रोदशाहेनेति। ५। ०। १०५। ०।

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम्। योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः॥१०६

सर्वेषामित्यादि*। १०६। अर्थशौचं धनप्रतिग्रहशौचं * सर्वेषां शौचानां मध्ये * परं श्रेष्ठं शौचं स्मृतम्। १। कस्मात् हि यस्मादर्थे धनप्रति * ग्रहे शुचिः स शुचिः स्यात् * मृद्वार्यादिशुचिस्तु न * शुचिः श्रेष्ठशुचिर्भवेत्। २। १०६।

क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्यकारिणः। प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः॥१०७॥

क्षान्त्येत्यादि। १०७। विद्वांसः भवद्भिरुपद्रुताः सन्तः * क्षान्त्या तत्कृतप्रतिकारापकार * निवृत्त्या शुद्ध्यन्ति तापा * भाविपापाशौचशुद्धिः। १। अकार्यकारिणो वेद * विधिविपर्ययेण तु * कर्मकारिणो दानेन शुद्ध्यन्तीति। २। प्रच्छन्नपापा अप्रकाशितपाप * कारिणो जप्येन गायत्रीजप्येन * शुद्ध्यन्ति वेदवित्तमा * अकार्यकारिणस्तपसा ३। ०॥ १०७।

त्तोयैः शुद्ध्यते शोधं नदीवेगेन शुद्ध्यति। रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः॥१०८

नत्तोयैरित्यादि। १०८। शोधं मलादाकं यत्पात्रादिकं तत् * सर्व्वं नत्तोयैः शुद्ध्यति * नदीपुरीषादिदुष्टा नद्यो तमासु शुद्ध्यति। १। मनोदुष्टामनसा नान्यपुरुषरतौ इच्छया * दुष्टामनसा दुष्टा * यास्त्रीस्वेच्छाविनापर * ह्रीगसंभुक्ता सा। २। रजसा मासान्ते स्व स्वरक्तेन * प्रवृत्ते न शुद्ध्यति * तदुक्तं सत्रान्तिवि चिन्तायाम्। ३। नस्त्रीदु जारेण ब्राह्मणोऽवेदकर्म्मणा। नापो मूत्रपुरीषाभ्यां नाग्निर्दहतिकर्म्मणा। ४। पूर्व्वं स्त्रियः सुरैर्भुक्ताः * गन्धर्व्व वह्निभिः। भुञ्जते मानवाः पश्चान्नता दुष्यन्ति कर्हिचित्। ५। स्वयं विप्रतिपन्ना यायदि वापि प्रता ता। बलान्नारी प्रभुक्तावाचौरभुक्तातथापिवा। ६। नत्याज्या दूषितानारी नकामोऽस्या विधीयते। ऋतुकाले उपासीत पुष्पकालेन शुध्यति। ७। असवर्णैस्तु योगर्भः स्त्रीणां योनौनिषिच्यते। अशुद्धासा भवे द्यावद्गर्भं नमुञ्चति। ८। विमुक्ते ततः शल्ये रजश्चापिप्रदृश्यते। तदासा शुद्ध्यते नारी विमलं काञ्चनं यथा। ९। इति। याज्ञवल्क्ये नचोक्तं * सोमः शौचं ददौतासां गन्धर्व्वाश्च शुभां गिरम्। पावकः सर्व्वमेध्यत्वं मेध्यावैयोषितो ह्यतः। १०। इति। संवर्त्तेनचोक्तं यथा * सोमिन्द्रग नसं प्राप्ते सोमोभुङ्क्ते हि कन्यकाम्। गन्धर्व्वैः कुचौ दृष्ट्वा पावकः इति। ११। तेनाकामतो जारदोषोनस्त्रीणां * भवति तथा विषजारभु हि * रजसैव शुद्ध्यति न * प्रायश्चित्तान्तरमस्ति। १२। संन्यासेनकामाकर्म्म * त्यागेनसकलपापा * द्विजोत्तमो शुद्ध्यति॥१२॥०॥१०८।

अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुद्ध्यति। विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति॥१०९॥

अद्भिरित्यादि। १०९। गात्राणि मलादद्भिः शुध्यन्ति मनः * सत्येनवाक्ये न शुद्ध्यति * विद्यातपोभ्यां भूतात्मा * तिबुद्धिर्ज्ञानेन * शुद्ध्यति बुद्धिरहङ्कारः। १। ०। १०९।

शौचस्यवः प्रोक्तः शारीरस्य विनिर्णयः। नानाविधानां द्रव्याणां शुद्धेः शृणुत निर्णयम्॥११०॥

उपसंहरति एष इत्यादि। ११०। शारीरस्य शौचस्यैष * विनिर्णयो वो युष्मभ्यं * मयाप्रोक्तोऽथ द्रव्याणां * नानाविधानां शुद्धेस्तु * निर्णयं मत्तः शृणुत। १। ०। ११०।

तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च। भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः॥१११॥

तैजसानामित्यादि *। १११। तैजसानां तेजोभूत * वहुलपञ्चभूतारब्ध * द्रव्याणां नवतैर्घटितानां * प्रभृतीनां भस्मनाद्भि * मणीनामद्भिः शुद्धिः। १। सर्व्वस्याश्ममयस्य प्रस्तर * घटितस्य पात्रादेर्मृदैव * उक्तामनीषिभि * मन्वादिभिः शुद्धिर्विद्भिः। २। ०। १११।

**निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति। अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम्॥ ११२**

निर्लेपमित्यादि। ११२। काञ्चनं भाण्डं निर्लेपं * स्वर्णभाण्डं यत्केनचिदशुचिना * द्रवेणास्पृष्टं निर्लिप्तमात्रमपि * रद्भिरेव भवतीति। १। अनुपस्कृतं कृत्रिमैः * रेखादिभिरभूषित * मब्जं शङ्खादिकम * अश्मप्रस्तरमयं। २। राजतं रजतमयञ्चाद्भिरेव * शुध्यति सर्व्वत्रानुपस्कृतमि * त्यासां योजना त्रिधा या। १।०। ११
ननु कथं रजतं स्वर्णञ्चाद्भिः शुध्यतीत्यत आह * अपामग्नेश्चेत्यादि। १।०। ११३।

**अपामग्नेश्च संयोगाद्धैमं रूप्यञ्च निर्बभौ। तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः॥ ११**

हैमरूप्याञ्चापामग्नेश्च * संयोगान्निर्बभौ जज्ञे * तस्मात्तयोर्हेमरूप्ययोः स्वयोन्या * जलेन निर्णेकः शुद्धिर्गुणवत्तरः श्रेष्ठः। १। ११३

**ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च। शौचं यथार्हं कर्त्तव्यं क्षाराम्लोदकवारिभिः॥ ११**

ताम्रेत्यादि। ११४। ताम्रादीनां तु शौचं शुद्धिः * क्षारेणाम्लोदकेन वा * वारिणा वा यथार्हं कर्त्तव्यं रैत्यं पित्तलमयं त्रपुरङ्गं। १। ११४।

**द्रवाणाञ्चैव सर्व्वेषां शुद्धिरुत्प्लवनं स्मृतम्। प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम्॥ ११**

द्रवाणामित्यादि। ११५। सर्व्वेषां द्रवाणां दुग्ध * घृततैलादीनां काक * कीटाद्युपहतानां शुद्धि * रुत्प्लवनं कुशपत्रे * णोत्क्षेपणावक्षेपणम्। १। संहतानां राशिकृता * न्नशय्यादीनां काकाद्यशुचिद्रव्यै * रुपहतानां जलेन * प्रोक्षणं शुद्धिर्भवति। २। दारवाणां काष्ठमय * द्रव्याणामशुचिद्रव्यै * रुपहतानां शुद्धिस्तक्षणं स्यात्॥ ३॥ ११

**मार्ज्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि। चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु॥ ११**

मार्ज्जनमित्यादि। ११६। यज्ञकर्म्मणि यज्ञपात्राणां * चमसानां संदंशादीनां ग्रहाणां * पाणिना मार्ज्जनतः * प्रक्षालनेन शुद्धिः स्यात्॥ १॥ ०॥ ११६॥

**चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा। स्फ्यशूर्पशकटानाञ्च मुषलोलूखलस्य च॥ ११**

चरूणामित्यादि। ११७। चरूणां स्रुक्स्रुवाणामशुद्धौ वारि * णोष्णेन शुद्धिर्भवति * स्फ्यादीनाञ्च वारि * शुद्धिर्भवतीति बोध्यम्। १।०। ११७।

**अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते॥ ११**

अद्भिरित्यादि। ११८। बहूनां धान्यानां वाससामद्भिः * प्रोक्षणं शौचं विधीयते। १। स्वल्पानां धान्यानां * वाससाञ्चाद्भिस्तु * प्रक्षालनेन तु * शौचं विधीयते। २। ११८।

**चैलवच्चर्म्मणां शुद्धिर्वैदलानां तथैव च । शाकमूलफलानाञ्च धान्यवच्छुद्धिरिष्यते ॥११९॥**

चैलेत्यादि । ११९ । चर्म्मणां चैलवत् * बहूनामद्भिस्तु * प्रोक्षणं शुद्धिः स्यात् * अल्पानां चर्म्मणाम् । १ । अद्भिः प्रक्षालनेन शुद्धिस्तथैव * वैदलानां बहूनामद्भिः प्रोक्षणं * अल्पानां प्रक्षालनेन शुद्धिः स्यात् ॥ २ ॥ शाकादीनां धान्यवद्बहूनामद्भिः * प्रोक्षणमल्पानामद्भिः * प्रक्षालनेन शुद्धिः स्यात् ॥ ३ ॥ ० ॥ ११९ ॥

**कौषेयाविकयोरूषैः कुतपानामरिष्टकैः । श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥१२०**

वाससां विशेषाणां * शुद्धिविशेषमाह च * कौषेयाविकेत्यादि ॥ १ ॥ १२० ॥ कोषकृतवाससामाविकानाञ्च * वाससामूषैः क्षारमृत्तिकाभिश्च * शुद्धिर्भवतीति पूर्व्वार्धयोजना । १ । कुतपानां मेषलोम * कृतानामासनानां * कम्बलादीनामरिष्टकैः * निम्बफलकैः शुद्धिर्भवेत् । २ । अंशुपट्टानां पट्टवस्त्राणां शुद्धिः * श्रीफलकल्कैर्भवति * क्षौमाणामतसीवल्कल * कृतवस्त्राणान्तु * श्वेतसर्षपकल्कैः शुद्धिः ॥ ३ ॥ ० ॥ १२० ॥

**क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च । शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वा ॥ ॥१२१॥**

क्षौमेत्यादि ॥ १२१ ॥ शङ्खशृङ्गाणां क्षौमवच्च * गौरसर्षपकल्कैरेव * शुद्धिर्भवतीति । १ । शुद्धिज्ञानवता जनेन * अस्थिदन्तमयं यद्य * त्पात्रादिकं तस्य शुद्धिर्गोमूत्रेणोदकेन वा कार्या स्यात् ॥ २ ॥ ० ॥ १२० ॥

**प्रोक्षणात्तृणकाष्ठञ्च पलालञ्चैव शुध्यति । मार्ज्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृन्मयम् ॥ १२२ ॥**

प्रोक्षणादित्यादि । १२२ । तृणकाष्ठं पलालं धान्योज्झितं य * त्तृणं तच्च प्रोक्षणादद्भिः शुध्यति * मार्ज्जनोपाञ्जनैर्वेश्म शुध्यति ॥ १ । मृन्मयं स्थालीकलस * शरावादिकमशुचि * स्पर्शनेन दुष्टं पुनः * पाकेन दाहेन शुध्यति ॥ २ ॥ । ० । १२२ । तत्रापवादमाह । मद्यैरित्यादि ॥ १२३ ।

**मद्यैर्मूत्रैः पुरीषैर्वा ष्ठीवनैः पूयशोणितैः । संस्पृष्टं नैव शुध्येत पुनःपाकेन मृन्मयम् ॥१२३॥**

मद्यादिभिः संस्पृष्टं मृन्मयं पात्रा * दिकं पुनःपाके * न न शुध्यतीति त्यजेत् ॥ १२३ ॥ ० ॥ मार्ज्जनेत्यादि । १२४ ।

**सम्मार्ज्जनोपाञ्जनेन सेकेनोल्लेखनेन च । गवाञ्च परिवासेन भूमिः शुध्यति पञ्चभिः ॥ १२४ ॥**

मार्ज्जनञ्चोपाञ्जनञ्च * जलैः सेकश्च कुद्दालादिभिर्मृदा * उल्लेखनञ्च गवां परिवासश्च * पञ्चभिरेतैर्भूमिः शुध्यति । १ । ० । १२४ ।०।

**पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम् । दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति ॥ १२५ ॥**

पचीतादि । १२५ । पचिणाजग्धं गवाघ्रातं यदवधूतं पादेनवा * यत्प्रचालितं अवक्षुतं यद्वाचोपरि चवं * करोतितद्वस्तुकेश * कीटे रुपदूषितं यच्च । १ । तस्मात्तस्योपरिक्षेप्तव्य मृदा * तत्तत्सर्व्वं शुद्ध्यतीति । २ । १२५ ।

**यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः । तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥१२६॥**

यावदित्यादि । १२६ । अमेध्यद्रव्याक्ताद्द्रव्यात् * तदमेध्यद्रव्यकृतो * गन्धो लेपश्च नयावत् * दपैति तावत् द्रव्य * शुद्धिषु सर्वासु * वारि चादेयं समागदेयं । १ । ० । १२६ ० ।

**त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥१२७॥**

त्रीणीत्यादि । १२७ ॥ देवा हि ब्राह्मणादीनां * त्रीणि वस्तूनि पवित्राण्यकल्पयन् * तत्रैकमदृष्टं यत्र * दृष्टं यदद्भिश्च निर्णिक्तं * तद्द्वितीयं पवित्रम् । १ । यच्च वाचा सद्भिः प्रशस्यते भद्रं * भद्रमिति प्रशंसा वाचा प्रोच्यते * तत्तृतीयं पवित्रम् ॥ २ । ० ॥ १२७ ॥

**आपः शुद्धा भूमिगता वैतृष्ण्यं यासु गोर्भवेत् । अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥ १२८॥**

आपइत्यादि । १२८ । याश्च यावत्परिमिता * स्वपत्नुपीतास्वैतृष्ण्यं * गोरेकस्यानिवृत्तिर्भवति । १ । भूमिगतास्तावत्परिमिता अपि * ह्यापो भूमिगता अमेध्येन चेद् * व्याप्ताऽसतः स्वीयगन्धा * द्यन्विताः तदाताः शुद्धाः । २ ॥ ० ॥ १२८ ॥

**नित्यं शुद्धः कारुहस्तः पण्ये यच्च प्रसारितम् । ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः १२९**

नित्यमित्यादि ॥ १२९ ॥ कारुहस्तो नित्यं शुद्धः * स्तेन हस्तेन निर्मितं * माल्यादिकं तन्न दूषितं । १ । पण्ये हट्टादौ विक्रय * स्थाने यत्प्रसारितं * तन्नित्यं शुद्धं वर्त्तते । २ । ब्रह्मचारिगतं यच्च * भैक्ष्यं भिक्षालब्धमन्नादिकं तच्च * नित्यं मेध्यं पवित्रमि * ति शास्त्रस्थितिर्व्यवस्थेति ॥ ३ ॥ ० ॥ १२९ ॥ ० ॥

**नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ १३० ॥**

नित्यमित्यादि ॥ १३० ॥ स्त्रीणां स्वीयानां परे प्राज्ञस्त्रीजन * मात्राणामास्यं नित्यं शुचिवर्त्तते * फलानां पातने शकुनेरास्यं शुचि ॥ १ ॥ प्रस्रवे गोः क्षीरस्य * दोहनार्थं वत्समुखे नस्रवात्वत्सोवनित्यं शुचि * वर्त्तते मुखे नम्ग * ग्रहणे श्वानित्यं शुचिः । २ । शङ्के नचोक्तं यत्तद् यथा * छववज्जं त्तु गोः शुद्ध मार्जारश्चाश्रमे शुचिः । शय्याभार्याशिशुर्वस्त्रं उपवीतं कमण्डलुः । आत्मनःकथितं शुद्धं नतत्तु परस्य तु । शुद्धाभर्त्तुश्चतुर्थेऽह्नि स्नाता नारीरजस्वला । दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यतीदृति ॥ १३० ॥

मूत्रमुत्सृजतः शौचार्थं * मेकां मृत्तिकां लिङ्गे दातव्याः * पुरीषं विसृजतः शौचार्थं गुदे * तिस्रो मृदो दातव्याः * वामे करे दश इति ॥१॥ येन करेण अन्यशौचाभावाय गुदशुद्धिं करोति * तस्मिन्नेव कस्मिन्नेव करे * दशवारान् मृदोऽभिमृशेत् देयाः ।२। उभयोः करयोर्मिलितयोः सप्त * वारान् मृदः * शौचमभीप्सता जनेन दातव्याः ।३।१३६ विस्तरेण पादयोश्च शौचविधानं * चतुर्थाध्याये मेव प्रसाधनं * मित्यस्मिन् वचने पूर्व्वं प्रदर्शितम् । ४ । ० । १३६ ।

एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं स्याद्वनस्थानां यतीनान्तु चतुर्गुणम् ॥१३७

एतच्छौचमित्यादि । १३७ । स्पष्टार्थोऽयं श्लोकः । १३७ ।

कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत्। वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्व्वदा ॥१३८॥

कृत्वेत्यादि । १३८ । मूत्रं कृत्वा पुरीषं वा * कृत्वा गृहस्थादिः उक्त * विधिना शौचं विधाय * आचान्तः खानि यथोक्तं विधिनोपस्पृशेत् ।१। वेदमध्येष्यमाणः * पूर्व्वमाचान्तः खान्युप * स्पृशेदन्नमश्नन्नप्यारम्भे * भुक्त्वाचान्तः खानि स्पृशेदिति सर्व्वदा स्पृशेत् । २ । ० । १३८ । कथमाचामेदित्यत उच्यते * ।

त्रिराचामेदपः पूर्व्वं द्विः प्रमृज्यात्ततो मुखम्। शारीरं शौचमिच्छन् हि स्त्री शूद्रश्च सकृत् सकृत् ॥१३९

त्रिराचामेदित्यादि । १ । ० । १३९ । शारीरं शौचमिच्छन् हि * द्विजः पूर्व्वं ब्राह्मणादिना * तीर्थेनापस्त्रिराचामेत् । १ । ततो मुखमोष्ठौ द्विः प्रमृज्यात्ततः * खान्युपस्पृशेदित्यत्र च * मननविधानं प्रागुक्तं * स्त्री शूद्रश्च पूर्व्वमपः * सकृत्सकृदाचामेत् । २ । ० । १३९ । इदानीं शूद्राणां धर्म्ममाह * ।

शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम् ॥१४०

शूद्राणामित्यादि । १४० । शूद्राणामशौचे मासिकं वपनं * कार्य्यं न्यायवर्त्तिनां शूद्राणामिति * ब्राह्मणसेवा शुश्रूषा सेवनं धर्म्मार्थं । १ । इतरार्थं क्षत्रियसेवनं * धनार्थं वैश्यसेवनं * ये शूद्राः कुर्व्वन्ति तेषाम् * वैश्यवच्छौचकल्पश्च स्यात् । २ । पञ्चमे वर्णाशौचं * स्त्रीणां सूतिकाशौचञ्च * न मासाशौचमनयोः * मासाशौचं नवैश्यवत् * पक्षाशौचं द्विजोच्छिष्टं च भोजनं । ३ ।१४० ।

नोच्छिष्टं कुर्व्वते मुख्या विप्रुषोऽङ्गं पतन्ति याः। न श्मश्रूणि गतान्यास्यं न दन्तान्तरधिष्ठितम् ॥१४१

नोच्छिष्टमित्यादि । १४१ । मुखान्मुखान्निःसृता या * विप्रुषः अस्मादङ्गवक्रणाद् अङ्गे * पतन्ति ता विप्रुषस्तु * इदम् उच्छिष्टं न कुर्व्वते । १ । आस्यं गतानि श्मश्रूणि * नोच्छिष्टं कुर्व्वते दन्तान्त * र्दन्तमध्ये अधिष्ठितं च * तच्चोच्छिष्टं न कुरुते । २ । ० । १४१ ।

पतायप्रजापते*यज्ञःसप्तपदीगमनान्त*क्रियाप्रयुज्यते ।२ । तस्मान्नारीजीवतः*पत्युःशुश्रूषां कुर्यात्*मृते स्वर्गात् । १ । क्वचित्पुस्तके स्वाम्यकारणमिति * पाठोऽस्मात् तस्मिन् पाठे * प्रदाने न स्वामित्वं कन्या । पुनःप्रजापतियज्ञः*प्रयुज्यते इत्यत्र तु*वाच्यो भवतीतिनिर्णयः । यद्येवं व्याख्यायते*आसां मङ्गलार्थं *स्वकालमताःसगोत्रताःसपिण्डताःसहधर्माचरणतादिमङ्गलार्थं * प्रजापतेर्यज्ञःसप्तपदीगमनान्तं कर्मैषां प्रयुज्यते । वरस्य स्वाम्यकारणं पित्रादिभिरासां प्रदानं प्रयुज्यते इति तदा स्वामीति पाठो युक्तः स्यादिति । नारीणां ताभ्यां किं स्यादित्यत आह ।

ऋतावृतुकाले च मन्त्रसंस्कारकृत्पतिः। सुखस्य नित्यं दातेह परलोके च योषितः ॥ १५३ ॥

अनृतावित्यादि । १ । १५३ । मन्त्रसंस्कारकृदिति*विवाहमन्त्रैर्योषितः*संस्कारकृत्त्वेन सह * कालादिगुणाधान कृत्पतिः । १ । अनृतौ च ऋतुकाले च हनिता * सुखस्य दाता परस्मिं * लोके च सुखस्य । २ । १५३ ।

विशीलःकामवृत्तो वा गुणैर्वा परिवर्जितः। उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥१५४॥

यस्मादाह विशील इत्यादि । १५४। यस्माद्योषित इह* लोके परलोके*सुखस्य दाता पतिस्तस्मात्*विशीलो वा स्ववृत्तो यथेष्टवृत्तो वा भोजनादिभिर्गुणैर्विर्जितो वा पतिः । १ । साध्व्या स्त्रिया सततं देववदुप*चर्यः सेवाभिः । २ । १५४ ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्। पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ १५५॥

नास्तीत्यादि । १५५ । स्पष्टार्थोऽयं श्लोकः । १५५ ।

पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा। पतिलोकमभीप्सन्ती नाचरेत्किञ्चिदप्रियम् ॥ १५६

पाणिग्राहस्येत्यादि । १५६ । पतिलोकमभीप्सन्ती*साध्वी स्त्री पाणिग्राहस्य*पत्युर्जीवतो वा मृतस्य वा किञ्चि* न वाचरेत् । १ । १५६ । ननु मृते पत्यौ कथं *देहं क्षपयेदित्यत*आह ।

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः। न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ १५७॥

काममित्यादि ।१।१५७। पत्यौ प्रेते साध्वी स्त्री कामम्*पुष्पफलादिभिः शुभैराहारैः*देहं क्षपयेत्कृशं कुर्यात् *क्वचित्पुनः । १ । परस्य पुरुषस्य नामापि कदाचिन्न*गृह्णीयादिति निश्चयः । २ । १५७ ।

आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी। यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥१५८

यथापतिहृदावर्त्तिनी ॥१२॥ छायेवानुगता स्वच्छा सखीव हितकर्म्मसु । दासीवादिष्टकार्य्येषु भार्य्या भर्त्तुः सदा भवेत् ॥१३॥ ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् । वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥१४॥ पतिञ्चैतदनुज्ञाता शिष्टमन्नाद्यमात्मना । भुक्त्वा नयेदहःशेषमायव्ययविचिन्तया ॥१५॥ पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च । कृतान्नसाधना साध्वी सभृत्यं भोजयेत् पतिम् ॥१६॥ नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च । आस्तीर्य्य साधु शयनं ततः परिचरेत् पतिम् ॥१७॥ सुप्ते पत्यौ तदभ्याशे स्वपेत्तद्गतमानसा । अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥१८॥ नोच्चैर्वदेन्न परुषं न बहून् पत्युरप्रियम् । न केनचिद्विवदेच्चाप्रलापविलापिनी ॥१९॥ न चातिव्ययशीला स्यान्न धर्म्मार्थविरोधिनी । प्रमादोन्मादरोषेर्ष्यावञ्चनञ्चातिमानिताम् ॥२०॥ पैशुन्यहिंसाविद्वेषमोहाहङ्कारधूर्त्तताः । नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्जयेत् ॥२१॥ एवं परिचरन्ती सा पतिं परमदैवतम् । यशः शमिह यात्येव परत्र च सलोकताम् ॥२२॥ योषितो नित्यकर्म्मोक्तं नैमित्तिकमथोच्यते । रजोदर्शनतो दोषात् सर्व्वमेव परित्यजेत् ॥२३॥ सर्व्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् । एकाम्बरावृता दीना स्नानालङ्कारवर्जिता ॥२४॥ मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला । अश्नीयात् केवलं भक्तं नक्तं मृन्मयभाजने ॥२५॥ स्वपेद्भूमावप्रमत्ता क्षिपेदेवमहस्त्रयम् । स्नायीत च त्रिरात्रान्ते सचेलमुदिते रवौ ॥२६॥ विलोक्य भर्त्तुर्वदनं शुद्धा भवति धर्म्मतः । कृतशौचा पुनः कर्म्म पूर्व्ववच्च समाचरेत् ॥२७॥ रजोदर्शनतो याः स्यू रात्रयः षोडशार्त्तवाः । ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥२८॥ चतस्रश्चादिमा रात्रीः पर्व्ववच्च विवर्जयेत् । गच्छेद्युग्मासु रात्रीषु पौष्णपित्र्यर्क्षराक्षसाः ॥२९॥ प्रच्छादितादित्यपथे पुमान् गच्छेत् स्वयोषितम् । क्षामालङ्कृदवाप्नोति पुत्रं पूजितलक्षणम् ॥३०॥ ऋतुकालेऽभिगामी वै ब्रह्मचर्य्ये व्यवस्थितः । गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत् ॥३१॥ भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः । सा त्ववाप्य ततो गर्भं त्याज्या भवति पापिनी ॥३२॥ महापातकदुष्टा च पतिगर्भविनाशिनी । आशुद्धेः संयमाद्दूरं स्थिताया महचिन्तया ॥३३॥ व्यभिचारेण दुष्टाया पतिसन्दर्शनादृते । धिक्कृतायामवाच्यायामन्यत्र वासयेत्तु ताम् ॥३४॥ पुनस्तामार्त्तवस्नातां पूर्व्ववद्व्यवहारयेत् ॥ धूर्त्तां च धर्म्मकामघ्नीमपुत्रां दीर्घरोगिणीम् ॥३५॥ सुदुष्टां व्यसनासक्तामहितामधिवेदयेत् । अधिविन्नामपि विभुः स्त्रीणां तु समतां नयेत् ॥३६॥ सहचारिणीं पत्नीं त्यक्त्वा पतति धर्म्मतः । महापातकदुष्टोऽपि स प्रतीक्ष्यस्तया पतिः ॥३७॥ विवर्णदीनवदना देहसंस्कारवर्जिता । पतिव्रता निराहारा शोष्यते प्रोषिते पतौ ॥३८॥ मृतं भर्त्तारमादाय ब्राह्मणी वह्निमाविशेत् । जीवन्ती चेत्त्यक्तकेशा तपसा शोषयेद्वपुः ॥३९॥ सर्व्वावस्थासु नारीणां न युक्तं स्यादरक्षणम् । तदेवानुक्रमात् कार्य्यं पितृभर्त्तृसुतादिभिः ॥४०॥ जाताः सुरक्षिताया ये पुत्रपौत्रप्रपौत्रकाः । ते यजन्ति पितॄन्, यज्ञैर्मोक्षप्राप्तिमहोदयैः ॥४१॥ मृतां तामग्निहोत्रेण दाहयेद्विधिपूर्व्वकम् । दाहयित्वाऽविलम्बेन भार्य्याग्निं व्रजेद्बुधः ॥४२॥

॥४२॥ इति व्यासोक्तस्त्रीधर्म्मः । अथ दक्षोक्तं यथा । सा भार्य्या या वहेदग्निं सा भार्य्या या पतिव्रता । सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती ॥१॥ लालनीया सदा भार्य्या ताडनीया तथैव च । लालिता ताडिता चैव स्त्री श्रीर्भवति नान्यथा ॥२॥ इति दक्षसंहितायामप्युक्तं * पत्नीमूलं गृहं पुंसां यदि छन्दोऽनुवर्त्तिनी । गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा ॥१॥ तया धर्म्मार्थकामानां त्रिवर्गफलमश्नुते । प्राकाम्ये वर्त्तमाना त्वेषा

अनेन विधिना नित्यं पञ्चयज्ञान्न हापयेत्। द्वितीयमायुषो भागं कृतदारो गृहे वसेत्॥ १६९॥

अनेनेत्यादि। १६९। अनेनोक्तेन विधिना * नित्यं पञ्चयज्ञान् न हापयेदेवमेव * द्वितीयमायुषो भागं * कृतदारः सन् धर्मेण * यावद् गृहे वसेदिति। १। १६९।

॥ * * ॥ इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां शौचादिविधिः पञ्चमोऽध्यायः॥ * * ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां। श्रीवैद्य गङ्गाधर कविराज कृतायां प्रमादभञ्जन्यां पञ्चमाध्यायस्य प्रमादभञ्जनीव्याख्या पञ्चमाध्यायः ।*।५।*।*।

---

गृहाश्रमधर्ममुक्त्वा* तृतीयाश्रमधर्मं वक्तुं षष्ठ*अध्यायमारभते एवं *गृहाश्रमे स्थित्वेत्यादि ।१।०।१।

एवं गृहाश्रमे स्थित्वा विधिवत्स्नातको द्विजः। वने वसेत्तु नियतो यथावद्विजितेन्द्रियः॥ १॥

स्नातको द्विजः खलु द्विस्तु न ब्रह्म*चर्यं स्नात्वा समावृत्तो ब्राह्मणादि*रेव तत्प्रकारेण। १। * विधिवद्गृहाश्रमे स्थित्वा *नियतो विजितेन्द्रियः * सन् यथावद्वने वसेत्। २।०।१।१।०। ननु कति पर्यन्तं यावद्वने वसे* दित्यत आह गृहस्थ * स्तु यदा पश्येदित्यादि। १।०।२।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ २॥

गृहस्थो द्विजो यदा तु * खल्वात्मनो वलीपलितं पश्येत् *तदारण्यं समाश्रयेत्। १। अपत्यस्य चापत्यं पौत्रं पश्ये* दात्मनो वलीपलितं* पश्यन्नपत्यापत्यं तदा*रण्यं समाश्रयेदि*त्यायुषस्तृतीये भागे आश्रयेत् ।२।०। कथं वसेदित्यत आह सन्त्यज्येत्यादि* ।१।२।

सन्त्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम्। पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा॥ ३॥

पुत्रेषु भार्यां निक्षिप्य* भार्यया चेच्छुयाति तया सहैव वा पत्नी * आहारं सर्वं परि * च्छदं सन्त्यज्य वनं गच्छे दिति।१।२।०। नन्वग्निहोत्रादिकं किं *पुत्रेषु निक्षिप्य वनं गच्छेदि*त्यत आह अग्नीत्यादि।१।०।४।

वासन्तशारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः । पुरोडाशांश्चरूंश्चैव विधिवन्निर्व्वपेत् पृथक् ॥११॥

वासन्तेत्यादि । ११ । स्वयमाहृतैर्मेध्यैर्वासन्तैः * शारदैश्च मुन्यन्नैर्निष्पन्नान् * पुरोडाशांश्चरूंश्चैव * विधिवत् पृथक् निर्व्वपेत् । १ । ० । ११ ।

देवताभ्यस्तु तद्धुत्वा वन्यं मेध्यतरं हविः । शेषमात्मनि युञ्जीत लवणञ्च स्वयं कृतम् ॥१२॥

देवतेत्यादि । १२ । तद्वन्यं वासन्तं शारदञ्च * मेध्यतरं हविर्देवताभ्यो * हुत्वा शेषमात्मनि च * भार्यायाञ्च युञ्जीतेति । १ । लवणञ्च तत्रत्यदेशं * तदपि स्वयं कृतमुप * युञ्जीत न परकृतम् । २ । ० । १२ । ० ।

स्थलजौदकशाकानि पुष्पमूलफलानि च । मेध्यवृक्षोद्भवान्यद्यात् स्नेहांश्च फलसम्भवान् ॥१३॥

स्थलजेत्यादि । १३ । स्थलजानि चौदकानि च शाकानि * मेध्यवृक्षोद्भवानि च * पुष्पमूलफलान्यद्यात् * फलसम्भवांश्च स्नेहांश्च * तैलादीनद्यान्न घृतादीन् । १ । ० । १३ । ० ।

वर्ज्जयेन्मधु मांसञ्च भौमानि करकाणि च । भूस्तृणं शिग्रुकञ्चैव श्लेष्मातकफलानि च ॥ १४ ॥

वर्ज्जयेदित्यादि । १४ । भौमानि करकानि चेति * पूर्व्वं द्विजानामभक्ष्येषु * करकमात्रमभक्ष्यमुक्तं न * वनस्थानां । वनस्थानां भौम * करकमभक्ष्यं शेषं * वृक्षजं भक्ष्यमिति । १ । यमेन त्वत्र * प्रकरणे ऽभिहितं भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये । ब्रह्मघ्नांस्तान् विजानीयाद् ब्रह्मवादिषु गर्हितान् । इति । २ । प्रमादीत्वेवमविद्वान् * तन्नाव्याख्याचष्टे तन्न भौमानीति विशेषणात् । २ । ० । १४ ।

त्यजेदाश्वयुजे मासि मुन्यन्नं पूर्व्वसञ्चितम् । जीर्णानि चैव वासांसि शाकमूलफलानि च ॥१५॥

त्यजेदित्यादि । १५ । आश्वयुजे मासाश्विने * ग्राम्याहारभिन्नं पूर्व्वं * सञ्चितं वनान्नं जीर्णानि वासांसि शाकमूलफलानि च * वनस्थो द्विजस्त्यजेत् । १ । १५ ।

न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् । न ग्रामजातान्यार्त्तोऽपि मूलानि च फलानि च ॥ १६ ॥

न फालकृष्टमित्यादि । १६ । वनाश्रमी द्विजः फाल * कृष्टं शस्यं नाश्नीयान्न * केनचिदुत्सृष्टं त्यक्त * मपि चाश्नीयात् ग्राम * जातानि मूलफलान्यार्त्तोऽपि नाश्नीयात् । १ । ० । १६ ।

अग्निपक्वाशनो वा स्यात् कालपक्वभुगेव वा । अश्मकुट्टो भवेद्वापि दन्तोलूखलिको ऽपि वा ॥ १७ ॥

अग्नीत्यादि । १७ । अग्निपक्वाशनो वा स्यात् * इति फलं विनाऽन्यद्वन्यं नाग्निना * पक्वं यद्वन्यं द्रव्यं तदश्नीया

स्यात्*कालपक्वफलभुग्वास्यात् । १ । अश्मकुट्ट इति प्रस्तरेणाकुट्ट* यित्वाश्नीयादश्मखण्डेन * दन्तोलूखलिको वास्यात् * दन्तैश्चर्वयित्वोदूखलेन*वाकुट्टयित्वाभक्षयेत्* । २ । ० । १७ ।

सद्यःप्रक्षालकोवास्यान्माससञ्चयिकोऽपिवा । षण्मासनिचयोवास्यात्समानिचयएववा ॥१८॥

सद्यइत्यादि । १८ । तद्दिनाहारोप* युक्तसञ्चयीव* सद्यःप्रक्षालक*उच्यते *मासाहारोपयुक्तद्रव्यसञ्चयी* षण्मासनिचयोवास्यात् । १ । समानिचयःसंवत्सराहारोप*युक्तद्रव्यसञ्चयीवास्यात् । २ । १८ । ० ।

नक्तञ्चान्नंसमश्नीयाद्दिवावाहृत्यशक्तितः । चतुर्थकालिकोवास्यात्स्याद्वाप्यष्टमकालिकः ॥१९॥

नक्तञ्चेत्यादि । १९ । अन्नमपामांसकं य* त्तन्नक्तमश्नीयाद्यथाशक्तितोदिवापाहृत्य* तदन्नमश्नीयाद्यथा* चतुर्थयामार्द्धेऽश्नीया*द्यथवाष्टमयामार्द्धे । १ । १९ ।

चान्द्रायणविधानैर्वाशुक्लेकृष्णेचवर्त्तयेत् । पक्षान्तयोर्वाप्यश्नीयाद्यवागूंक्वथितांसकृत् ॥२०॥

चान्द्रायणेत्यादि । २० । अथवाचान्द्रायणविधानैःशुक्ले *पक्षेक्रमादेकैकग्रासंवर्द्धयेत् *कृष्णेचैकैकग्रासंक्रमाद्ध्रासयेत् । इत्येवंचान्द्रायणविधानै* वर्त्तयेद्दिनंयापयेत् । २ । अथवापक्षान्तयोः पौर्णमासामा*वास्ययोरश्नीयाद्यथवायवागूंक्वथितांसिद्धक*सहितांसकृदेकवारमश्नीयात् । १ । २० ।

पुष्पमूलफलैर्वापिकेवलैर्वर्त्तयेत्सदा । कालपक्वैःस्वयंशीर्णैर्वैखानसमतेस्थितः ॥ २१ ॥

पुष्पेत्यादि । वानप्रस्थोद्विविधस्तत्रैकउक्तो * द्वितीयस्तुवैखानस*स्तस्यमते स्थितःकाल*पक्वैःस्वयंशीर्णैः पुष्पाद्यैः* केवलैःसदावर्त्तयेत् । १ । २१ । ० ।

भूमौविपरिवर्त्तेत तिष्ठेद्वाप्रपदैर्दिनम् । स्थानासनाभ्यांविहरेत् सवनेषूपयन्नपः ॥ २२ ॥

अपरञ्चाहभूमावित्यादि । २२ । वैखानसमतेस्थितो * द्विजोभूमौविपरिवर्त्तेतपार्श्वात्पार्श्वं परिवर्तं कुर्यात् ॥ १ ॥ प्रपदैर्वा पदाग्रेणाभिन्नतया*तिष्ठेत्स्थानासनाभ्यां *कश्चित्स्थितिःकश्चिदुप*वेशनमित्येवंविहरेत्* ।२ । सवनेषुसायंप्रगे मध्याह्ने च*स्नानेषूपउपयन्नदीतडागादि*षूपउपगच्छन् भवतीतिशेषः । १ । ० । २२ । ० ।

ग्रीष्मेपञ्चतपास्तुस्याद्वर्षास्वभ्रावकाशिकः । आर्द्रवासास्तुहेमन्ते क्रमशोवर्द्धयंस्तपः ॥ २३ ॥

ग्रीष्मइत्यादि । २३ । ग्रीष्मकाले पञ्चतपाः*स्याच्चतसृषुदिक्षुग्नीन्*कृत्वामध्ये स्थित्वोर्द्ध्वमातपं *सेवेतेतिपञ्चतपाः । १ । वर्षास्वभ्रमाकाशमवकाश*माश्रित्यावर्त्तनाच्छादितदेशे *हेमन्तेजलार्द्रवासाः* सन्क्रमात्तपोवर्द्धयेत् । २ । ० । २३ । ० ।

उपस्पृशंस्त्रिषवणं पितॄन्देवांश्च तर्पयेत् । तपश्चरंश्चोग्रतरं शोषयेद्देहमात्मनः ॥ २४ ॥

उपस्पृशन्नित्यादि । २४ । त्रिषवणं सायंप्रातर्मध्याह्ने च*स्नानं कुर्वन्पितॄन्देवांश्च तर्पयेत्*देहमुग्रतरं तप*श्चरन्नात्मनो देहं शोषयेत् । १ । ० । २४ ।

अग्नीनात्मनि वैतानान्समारोप्य यथाविधि । अनग्निरनिकेतः स्यान्मुनिर्मूलफलाशनः ॥ २५ ॥

अग्नीनित्यादि । २५ । वैखानसमते स्थितो वानप्रस्थो*द्विजो वैतानानग्नीन्सर्वानात्मनि*यथाविधि वैखानस*शास्त्रोक्तविधानेनैव । १ । समारोप्यानग्निः सन्*निकेतनहीनश्च सन्*मूलफलाशनोऽपि* मौनव्रत एव भवेत् । २ । ० । २५ ।

अप्रयत्नः सुखार्थेषु ब्रह्मचारी धराशयः । शरणेष्वममश्चैव वृक्षमूलनिकेतनः ॥ २६ ॥

अप्रयत्न इत्यादि । २६ । सुखार्थेषु प्रयत्नशून्यः स्यात्*ब्रह्मचारी मनोवाक्कायसंयुतः* तथा गौरवाद्धराशयो*भूशयानः स्याच्छरणेषु ममः स्यात् । १ । यत्र वसेत्तत्र ममताहीनः स्यात् *वृक्षमूलनिकेतः स्यात् । २ । । ० । २६ ।

तापसेष्वेव विप्रेषु याचिकं भैक्षमाहरेत् । गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ २७ ॥

तापसेष्वित्यादि । ० । २७ । तापसेषु विप्रेषु जीवनयात्रा*करं भैक्षं भिक्षित्वा गृहमेधिषु* चान्येषु वनवासिषु द्विजेषु वा भैक्षमाहरेत् । १ । ० । २७ ।

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्वने वसन् । प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ २८ ॥

ग्रामादित्यादि । २८ । ग्रामादष्टौ ग्रासान्पत्र*पुटेन पाणिना ऽथवा*खण्डिकादिशकलेन*वा प्रतिगृह्याहृत्य* वने वसन्नश्नीयादिति । १ । ० । २८ ।

एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥ २९ ॥

एतादित्यादि ॥ २९ ॥ वैखानसमते स्थितो वने वसन्*विप्र एताश्चान्याश्च दीक्षाः सेवेत * विविधाश्चौपनिषदीः *श्रुतीरात्मसिद्धये सेवेत । १ । ० । २९ ।

ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः । विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ॥ ३० ॥

ऋषिभिरित्यादि । ऋषिभिः सेविता एव*याश्चौपनिषद्यः श्रुतयः*गृहस्थैर्ब्राह्मणैरेव सेविता*याश्चौपनिषद्यः श्रुतयः । १ । विद्यातपोविवृद्ध्यर्थं शरीरस्य शुद्ध्यर्थं च*ताश्चौपनिषदीः श्रुतीः*विविधाः सेवेतेति । २ । ० । ३० ।

**आश्रमादाश्रमं गत्वा हुतहोमो जितेन्द्रियः। भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्द्धते ॥ ३४ ॥**

आश्रमादाश्रममित्यादि।१।२४। आश्रमादेकस्मादन्य*माश्रमं गत्वा गृहस्था*श्रमे वनाश्रमे षु च कृतहोमः सन् भिक्षा*बलिपरिश्रान्तः*प्रव्रजन्प्रेत्य वर्द्धते।१। भिक्षाब्रह्मचर्याश्रमे*होमादिकर्म्मविधानं *गृहाश्रमे होमबलिदानादिविधानश्चास्ति वनाश्रमे भिक्षाचार्यत।२। प्रेत्य वर्द्धते इति तथा प्रव्रजन्*प्रेत्य मोक्षमाप्य परमात्मरूपे*णाभिनिष्पद्यते ततो*ऽयं सर्व्वतो विवर्द्धते।३।२४। ननु एवमकृत्वा प्रव्रज्याकरणे * को दोषो भवतीत्यत * आह ऋणानि त्रीणी त्यादि।१।२५।

**ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥ ३५ ॥**

त्रीण्यृणानि देवर्षिपितॄणामनपा* कृत्य मोक्षे मनो निवेशयेदिति।१। कस्मात्। यस्मात्त्रीण्यृणान्यनपाकृत्य * मोक्षं मोक्षार्थं कर्म्माणि*सेवमानोऽधो व्रजति।२। एतेन निरग्नीनां प्रव्रज्या नास्ती* त्युक्तं ब्रह्मयज्ञदेव* यज्ञाकरणासम्भवात् विवाहादग्न्यभावादा* त्मन्यग्न्यारोपणासम्भवाच्च।३।२५। केस्त्रीण्यृणान्यपाकर्य्यादित्यत* उच्यते ऽधीत्येत्यादि।१।२६।

**अधीत्य विधिवद्वेदान्पुत्रांश्चोत्पाद्य धर्म्मतः। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥३६॥**

विधिवद्वेदानधीत्यर्षीणामृणमपा*कृत्य धर्म्मतः पुत्रांश्चोत्*पाद्य पितॄणामृणमपाकृत्य*शक्तितो यज्ञैरिष्ट्वा च* देवर्णमपाकृत्य च।१। मोक्षेऽपवर्गार्थं कर्म्म* कर्त्तुं मनो निवेशयेत्*न त्वेतान्यनपाकृत्य।२।०।२६। ननु एवमृणत्रयापाकरणं * मन्यथापि भवतीति यथा * गयायां पिण्डदानादनृणः स्यात्।१। तत्र नियममाह अनधीत्ये त्यादि।२७।

**अनधीत्य द्विजो वेदाननुत्पाद्य तथा सुतान्। अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यधः॥३७॥**

अग्निमान् गृही द्विजो वेदाननधी*त्यानुत्पाद्य तथा सुतान्*यज्ञैरनिष्ट्वा च मोक्ष * मिच्छन्नधो व्रजति नत्वन्निकः।१। इति कश्चिद्व्याचष्टे*तदयं सन्नानपाक*त्यैतान्न नैवोक्तत्वात्।२। पूर्व्वोक्तान*पाकृत्यैता*न्सगार्य प्रपञ्चो*न पुनरुक्तं।३।२७। ननु एवमृणत्रयापा*करणं गृहाश्रमए* वाद्वैतिभवितं तस्मात्*कुतो गृहाद्वनं व्रजे*दित्यत आह प्राजापत्यामि त्यादि।१।२८।

**प्राजापत्यां निरूप्येष्टिं सार्व्ववेदसदक्षिणाम्। आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्॥**

यः कश्चिद्यद्याश्रयः प्रथमभागं * ब्रह्मचर्यं चरित्वाख * लु विसृत ब्रह्मचर्य्यो भूत्वा।१। द्वितीयभागे गृहस्थो*भूत्वा सम्पूर्णतृतीय*भागपर्यन्तं विधिव*द्वेदाध्ययनपुत्रोत्* पादनयज्ञैर्वर्त्तते।२। तदा स ब्राह्मणः

आहानमिरित्यादि । १ । ० । ४१ । ० । अनमिर्वाहिकाग्निहोनो निकेत*होम*ग्राद्यनाथ ग्राममाश्रयेत्* असङ्कुसकः स्थिर* चित्तउपेक्षकश्शन । १ । मुनिभावसमाहितो* मौनेनचित्तं समादध * दिता वं ग्राममाश्रयेत् । २ । ० । ४२ । ० ।कपालमित्यादि । ४४ ।

**कपालं वृक्षमूलानि कुचेलमसहायता । समताचैवसर्व्वस्मिन्नेतन्मुक्तस्यलक्षणम् ॥ ४४ ॥**

कपालं भग्नघटादि * खर्परं भक्षणपात्रं वृक्षमूलानिस्थित्यर्थं कुचेलं कौपीनादिमसहायतात्वं कलतासर्व्वस्मिन् समतायस्य*तदेतन्मुक्तस्यलक्षणं भवति । १ । ४४ । नाभिनन्देतेत्यादि । ४५ ।

**नाभिनन्देत मरणंनाभिनन्देतजीवितम् । कालमेव प्रतीक्षेत निर्द्देशं भृतकोयथा ॥ ४५ ॥**

मरणं नाभिनन्देत*जीवितश्चनाभिनन्देत* कालमेवमरणस्यप्रतीक्षेत । १ । यथाभृतकोवेतन*प्राप्तौदासो वेतनस्य*प्राप्तौनिर्द्देशं तं कालं प्रतीक्षते । २ । ० । ४५ ।

**दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिवेत् । सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ४६ ॥**

दृष्टिपूतमित्यादि । ४६ । गच्छन्कीटादिविनाश*भयाद्दृष्टिपूतं पादं न्यसेत्* पिवन्जलं कीटादिनाशः*भयाद्वस्त्रपूतं पिवेत् । १ । वाचं जल्पन्सत्यपूतां * वाचं वदेत्कर्म्माणिवा*चरन्मनःपूतं कर्म्मसमाचरेत् २ । ० ४६ ।

**अतिवादांस्तितिक्षेतनावमन्येतकञ्चन । नचेमं देहमाश्रित्यवैरं कुर्व्वीतकेनचित् ॥ ४७ ॥**

अतिवादाश्चेत्यादि । ४७ । अतिवादान्सुमतिक्रमान्परेय*दुरुक्तितांस्तितिक्षेत*क्षमां कुर्व्वीतकञ्चन* जनं नावमन्येत च । १ । इमञ्चपरिव्राजक*देहमाश्रित्यानकेनचित्सहवैरं वाकुर्व्वीत । २ । ० । ४७ ।

**क्रुद्ध्यन्तंनप्रतिक्रुद्ध्येदाक्रुष्टःकुशलं वदेत् । सप्तद्वारावकीर्णाञ्चनवाचमन्तृतांवदेत् ॥ ४८ ॥**

क्रुद्ध्यन्तमित्यादि । ४८ । स्वस्मैक्रुद्ध्यन्तं जनं न*प्रतिक्रुद्ध्येत्परैश्चाक्रुष्टःसन्नपि*कुशलमितोवं वदेत् । १ । सप्तद्वारावकीर्णामितिस्वस्य*द्वाभ्यां चक्षुर्द्वाराभ्यां दृष्टविषये*द्वाभ्यां भ्राणद्वाराभ्यां भ्रातविषये*।२। द्वाभ्यां कर्णद्वाराभ्यां श्रुतिविषये*एकद्वारेणैकेनास्वादविषये*वाचमनृतामसत्यां नैववदेत् । १ । ० । ४८ ।

**अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः । आत्मनैवसहायेनसुखार्थीविचरेदिह ॥ ४९ ॥**

अध्यात्मेत्यादि । ४९ । सुखार्थी परिव्राजको*निरामिषोनिर्विषयः * सन्नात्मनैवसहाये*नासीनोनिरपेक्षःसन्नध्यात्मरतिरात्मान * मधिकृत्यारतिमान्सन् । १ । इहलोके विचरेद * लोऽन्यथाव * नविचरेत् ।

**नचोत्पातनिमित्ताभ्यां ननक्षत्राङ्गविद्यया। नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥५०॥**

नचोत्पातेत्यादि। ५०। परिव्राजको ब्राह्मणः कर्हिचित्* उत्पातं प्रकृत्य भिक्षां *न लिप्सेत निमित्तं वा *तवेदं करिष्यामीति* प्रकृत्य भिक्षां लिप्सेत। १। उत्पातनिमित्ताभ्यामिति लाक्षेपे * पञ्चमीनक्षत्रादिविद्या ज्योतिः शास्त्रविद्यया न भिक्षां लिप्सेत्। २। अनुशासनवादाभ्यां * शास्त्रानुशिष्ट्या भिक्षां नैव लिप्सेत* पक्षप्रतिपक्षानुत्तरमाश्रित्य* वादेन न भिक्षां लिप्सेत्। ३। ०। ५०।

**नतापसैर्ब्राह्मणैर्वा वयोभिरपि वा श्वभिः। आकीर्णं भिक्षुकैर्वान्यैरगारमुपसंव्रजेत्॥५१॥**

नतापसैरित्यादि। ५१। परिव्राजको ब्राह्मण* स्तापसैर्वऽन्यैर्भिर्ब्राह्मणैर्वाकीर्णं *मागारं भिक्षार्थं नोपसंव्रजेत्* वयोभिः पक्षिभिर्वऽन्यैर्भिर्वाकीर्णं। १। बहुभिः श्वभिर्वाकीर्णं * मनावा न्यैर्भिभिक्षुकैराकीर्णं *मागारं गृहस्थगृहं *भिक्षार्थं नोपसंव्रजेत्। २। ५१।

**कॢप्तकेशनखश्मश्रुः पात्री दण्डी कुसुम्भवान्। विचरेन्नियतो नित्यं सर्व्वभूतान्यपीडयन्॥५२॥**

कॢप्तेत्यादि। ५२। कॢप्तान्यकर्त्तितानि केशादीनि यस्य* सक्षौरकर्म्मविहीनः* कमण्डलुस्थालीपात्री* दण्डी दण्डवान्भवन्। १। कुसुम्भवान् कन्थासीवनार्थं सूची* पिप्पलवान नक्षत्रः* कमण्डलुस्तस्य जल* पात्रत्वेन पात्रपदेनोक्तत्वात्। २। सर्व्वभूतान्यपीडय* न्नीदृग्नियतएव* सन्नित्यं विचरेदिति। ३। ५२। नतकानि पात्राणि* कीदृशस्वरूप* इत्य* तत्राह अतैजसानीत्यादि। १। ५३।

**अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च। तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वरे॥५३॥**

तस्य परिव्राजकस्य* पात्राण्यतैजसानि* निर्व्रणान्यच्छिद्रादीनि स्युः। १। तस्यातैजस* पात्राणामद्भिः प्रक्षालनेन शौचं *भवेद् यथा प्रक्षालनाद् ध्वरे तु *चमसादीनि शुचीनि स्युः। २। ०। ५३। इति। नन्वतैजसानि कानि* पात्राणीत्यत उच्यते * अलाबुमित्यादिश्लोकं॥ ५४॥

**अलाबुं दारुपात्रञ्च मृन्मयं वैदलं तथा। एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत्॥ १५४॥**

अलाबुं दारुमयं मृण्मयं *वैदलं वंशपर्व्व निर्म्मितं *यतिपात्राण्येतानि* स्वायम्भुवो मनुरब्रवीत्। १। ५४।

**एककालं चरेद्भैक्षं नप्रसज्येत विस्तरे। भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति॥ १५५॥**

एककालमित्यादि। ५५। एककालं मध्याह्ने भैक्षं चरेत्* विस्तरेऽन्ने प्रसज्येत्* कस्मात् हि यस्मादिति भैक्षे प्रसक्तो* विषयेषु सज्जतीति। १। ०। ५५। नन्वेककालं कदेत्यत उच्यते* विधूम इत्यादि। १। ५६।

देहादुत्क्रमणं चास्मात्पुनर्गर्भे च सम्भवम् । योनिकोटिसहस्रेषु सृतीश्चास्यान्तरात्मनः ॥१६३॥

देहादित्यादि । ६३ । नृणामस्माद्देहादुत्क्रमणं मृत्युं पुनर्गर्भे च सम्भवं * योनिकोटिसहस्रेषु अन्तरात्मनः * ऽसामसृतीः प्रत्यवेक्षेत । १ । ६३ ।

अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम् । धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम् ॥ १६४ ॥

अधर्मेत्यादि ॥ ६४ । शरीरिणां दुःखयोग*मधर्मप्रभवञ्चावेक्षेत तथा*धर्मार्थप्रभवमक्षयं सुखस्य*संयोगमवेक्षेतेति ॥ १ ॥ ६४ ॥

सूक्ष्मतां चान्ववेक्षेत योगेन परमात्मनः । देहेषु च समुत्पत्तिमुत्तमेष्वधमेषु च ॥ १६५ ॥

सूक्ष्मतां चेत्यादि । ६५॥ यतिर्योगेन परमात्मनः सूक्ष्म*भावमन्ववेक्षेत तथा*उत्तमाधमदेहेषु*समुत्पत्तिमवेक्षेत । ६५ ।

दूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः । समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ १६६ ॥

दूषितोऽपीत्यादि । ६६। नरो यत्र यत्राश्रमे * रतस्तत्र तत्र दूषितोऽपि धर्मं *चरेत् सर्वेषु भूतेषु समो भवेत् * ।१ लिङ्गं परिव्राजकस्य चिह्नं दण्डादिधारणमात्रं न*धर्मस्य कारणं भवति ॥ २ ॥ ० ॥ ६६ ॥ कस्मान्न लिङ्गं धर्म कारणं भवतीत्यत आह फलमिति । १ । ६७ ।

फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम् । न नामग्रहणादेव तस्य वारि प्रसीदति ॥ १६७ ॥

यद्यप्यम्बुप्रसादकं * कतकवृक्षस्य फलं * तस्य नामग्रहणादेव वारि न*प्रसीदति तत्संयोगादेव निर्मलं भवति । १ । तथा दण्डादिलिङ्गस्य*धारणमात्रं धर्मस्य*न कारणं तत्तत्कर्माचरणं हि कारणं मतात् ॥ २ ॥ ६७ ॥

संरक्षणार्थं जन्तूनां रात्रावहनि वा सदा । शरीरस्यात्यये चैव समीक्ष्य वसुधां चरेत् ॥ १६८ ॥

संरक्षणार्थमित्यादि ॥ ६८ ॥ परिव्राजको जन्तूनां *कीटादिसर्वप्राणिनां * संरक्षणार्थं :प्राणवधाद्रक्षार्थं * स्वस्य शरीरात्ययेऽपि रात्रावह्नि समीक्ष्य ॥ १ ॥ सम्यगवधानपूर्व्वं *वसुधां पृथिवीं चरेत् ॥ ६८ ।

अह्ना रात्र्या च यान् जन्तून् हिनस्त्यज्ञानतो यतिः । तेषां स्नात्वा विशुद्ध्यर्थं प्राणायामान् षडाचरेत् ॥ १६९ ॥

अह्नेत्यादि । ६९ ॥ यतिरज्ञानतोऽह्ना रात्र्या च यान् * जन्तून् हिनस्ति तेषां जन्तूनां हिंसा* दोषमाश्

विग्रहार्थं । १ । सन्ध्योपासनोक्तेनैव*विधिनाप्रष्ट प्राणायामा*नस*यतिः*समाचरेत् । २ । ६९ । कस्मादित्यतआह प्राणायामाइत्यादि । ७० ।

**प्राणायामाब्राह्मणस्य त्रयोपिविधिवत्कृताः। व्याहृतिप्रणवैर्युक्ताविज्ञेयंपरमंतपः॥ ७०॥**

ब्राह्मणस्यत्रयोपिप्राणायामा*व्याहृतिप्रणवैर्युक्ता*विधिवत् कृताःपरमं*तपोविज्ञेयं विद्वद्भिः ॥ १ ॥ ७० ।
कथंप्राणायामएवं*तपोभवतीत्यतआह*दह्यन्तइत्यादि श्लोकं । १ । ७१ ।

**दह्यन्ते ध्मायमानानांधातूनांहियथामलाः। तथेन्द्रियाणां दह्यन्ते दोषाःप्राणस्यनिग्रहात्॥ ७१॥**

स्वर्णादीनांधातूनांहि*यस्मादग्नौध्मायमानानांमला*यथास्वयमेवदह्यन्ते । १ । तथाप्राणस्यनिग्रहात्*प्राणायामादिन्द्रियाणां*दोषा स्वयमेवदह्यन्ते ॥ २ ॥ ७१ ॥ प्रसङ्गाद्धारणादिप्रभावानाह*प्राणायामैरित्यादिकम ॥ १ ॥ ७२ ॥

**प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्बिषम्। प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ७२ ॥**

यतिःप्राणायामैरिन्द्रियदोषान् * दहेद्धारणाभिरिव* किल्बिषं दुरितं दहेत् । १ । ध्येये देवे मनसोनिश्चलत्वेन*स्थितिकरणं धारणा*प्रत्याहारेण विषयेभ्यइन्द्रिय* निवृत्त्यासंसर्गान्दहेत्* ॥ २ ॥ ध्यानेनतदीश्वराकारचिन्तया*तदाकारोभावादस्य * चात्मनस्त्वनीश्वरान्गुणा*ननितोनितांदुःखसुख*मितोनम।ध्यानेनदहेत् । ३ । ७२ ।

**उच्चावचेषुभूतेषुदुर्ज्ञेयामकृतात्मभिः। ध्यानयोगेनसम्पश्येद्गतिमस्यान्तरात्मनः॥ ७३॥**

उच्चावचेष्वित्यादि । ७० । अकृतात्मभिर्दुर्ज्ञेया * मस्यान्तरात्मनउच्चा * वचेषुभूतेषुगतिं * ध्यानयोगेनसंपश्येत् । १ । ७३ ।

**सम्यग्दर्शनसम्पन्नः कर्मभिर्ननिबध्यते । दर्शनेनविहीनस्तु संसारंप्रतिपद्यते ॥ ७४ ॥**

सम्यगित्यादि । ७४ । अन्तरात्मनोगतेस्तु*सम्यग्दर्शनसम्पन्नः* कर्मभिर्ननिबध्यते ॥ १ । अन्तरात्मनोगतेस्तु*दर्शनविहीनोजनः*संसारंप्रतिपद्यते । २ । ७४ ।

**अहिंसयेन्द्रियासङ्गैर्वैदिकैश्चैवकर्मभिः। तपसश्चरणैश्चोग्रैः साधयन्तीहतत्पदम् ॥ ७५ ॥**

अहिंसयेत्यादि ॥ ७५ ॥ अहिंसयातावदहिंसात्यागेन*इन्द्रियासङ्गैरिन्द्रिय* कर्मस्वनासक्तिभिश्च*वैदिकैःकर्मभिश्च*तपसउग्रैश्चरणैः । १ । तत्पदं ब्रह्मपदमिहास्मिँल्लोके*सर्वेजनाःसाधयन्ति । २ । ७५ ।

**अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्। चर्म्मावनद्धं दुर्गन्धिपूर्णं मूत्रपुरीषयोः ॥ ७६॥**
**जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्॥ ७७॥**

अस्थिस्थूणमित्यादीन्द्वौ * शोकावर्जितावेकवाक्ये क्रियया * भूतावासमिमं देहमस्थि * स्थूणादिरूपं त्यजेत् ।१। जराशोकसमाविष्ट * मिति जराशोकौ समाविष्टौ यस्मिन्नित्यर्थ * करणक्तः शोकः ममता * गात्मनिवर्त्तते न * देहे जरातुरे देहे इति ।२। देहाविशेषेन च मानसरोगोपि * भवति न देहाविशेषादित्यतो * रोगायतनमातुरो * पि देहीनात्माविकारी ।३। रजस्वलमिति स्त्रीदेहाभिप्राये * शोणितमनित्यं नश्वरम् ।४।७७। कथं त्यजेदित्यत आह नदीत्यादि ।७८।

**नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा। तथा त्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते ॥७८॥**

नदी यथा कूलं पुलिने त्यजति * कूलस्थ * वृक्षः कूलं * त्यजति यथा वा शकुनि * वृक्षं त्यजति तथेमं * देहं त्यजन्नृपा ग्रहरूपात् * कृच्छ्रात् दुःखाद्विमुच्यते ।१।७८। न तु पूर्व्वकृतशुभाशुभकर्म्म * फलानि वर्त्तन्त एव * कथं देहं त्यजन् कृच्छ्रा * द्विमुच्यत इत्यत आह प्रियेषु स्वेष्वित्यादि ।१।७९।

**प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्। विसृज्य ध्यानयोगेन ब्रह्माभ्येति सनातनम्॥ ७९॥**

यतिरुक्तरूपेणाचरित्वा देहं * जिहासुः सुकृतं स्वेषु * प्रियेषु दुष्कृतमपि * चाप्रियेषु विसृज्यैव ध्यानयोगेन मनं देहं * त्यजन् सनातनं ब्रह्म * परमेश्वरमभ्येति ।२। वेदेह्येतदुक्तं यथा * अथ तस्य पुत्रा * दायमुपयन्ति * सुहृदः साधुकृत्यां * द्विषन्तः पापकृत्याम ।३। इति । अपरञ्च । स सुकृतदुष्कृते विधुनुते तस्य * प्रियाज्ञातयः सुकृत * मुपयन्त्यप्रिया दुष्कृतम् ।४। इति ।०। न तु तर्हि चायुषः शेषं भोगे * प्रव्रज्यैवं देहत्यागाद्यतिः * कृच्छ्राद्विमुच्यतेऽभ्येति * सनातनञ्च ब्रह्मैव ।१। सुकृतदुष्कृते च कदा * प्रियाप्रियावुपेयात् * इत्यत आह यदेत्यादि ।१।८०।

**यदा भावेन भवति सर्व्वभावेषु निःस्पृहः। तदा सुखमवाप्नोति प्रेत्य चेह च शाश्वतम् ॥ ८०॥**

यतिर्यदा सर्व्वभावेषु निस्पृहः * सर्व्ववस्तुवासना * शून्यः सन् भावेन भावः * सत्तासत्तामात्रेणैव * वर्त्तते तदा जीवन्नेव ।१। सुखाएवेह च शाश्वतं सुख * मवाप्नोति प्रेत्य च * स्वेच्छया देहं त्यक्त्वा तदा स्वे * सुकृतदुष्कृते लभेते * प्रियाप्रियौ गच्छतः ।१। निर्व्वाणं प्राप्नुवन् शाश्वतमीश्वरं * सुखमवाप्नोति न तु देहममतात्मा ।२।८०। एतत्सर्व्वं विवृणोमि अनेनेत्यादि ।१।०।८१।

**अनेन विधिना सर्व्वांस्त्यक्त्वा सङ्गाञ्छनैः शनैः। सर्व्वद्वन्द्वविनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥८१॥**

गृहस्थोत्पादिताः पुत्राः चोपनीताः * ब्रह्मचारिणो भूत्वैव * गृहस्था भवन्ति ततो * वनाश्रमिणः ततस्ततः * परिव्रजन्तो निर्वर्त्ताः । १ । गृहस्थप्रभवाः पृथक् चत्वारः * आश्रमाना प्रभवाः । ४ । ८७ ।

**सर्व्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः । यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥ ८८ ॥**

सर्व्वेऽपीत्यादि । ८८ । सर्व्वेऽप्येते ब्रह्मचारिप्रभृतयः * आश्रमाः यथाशास्त्रं तु * निषेविताः यथाश्रमं * उक्तकर्म्मकारिणं तु * विप्रं परां गतिं नयन्ति । १ । ८८ ।

**सर्व्वेषामपि चैतेषां वेदस्मृतिविधानतः । गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्त्ति हि ॥ ८९ ॥**

सर्व्वेषामित्यादि । ८९ । सर्व्वेषामेतेषां ब्रह्म * चर्य्याद्याश्रमाणां मध्ये * गृहस्थो वेदस्मृत्युक्त * कर्म्मविधानतः श्रेष्ठ उच्यते । १ । कस्मात् हि यस्मादेतान् त्रीन् * ब्रह्मचारिवनाश्रमि * यतीन् गृहस्थो विभर्त्ति । २ । ८९ ।

**यथा नदीनदाः सर्व्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्व्वे गृहस्थे यान्ति संस्थितिम् ॥ ९० ॥**

यथेत्यादि । ९० । यथा सर्व्वे नदीनदाः * सागरे संस्थितिं यान्ति * तथा सर्व्व एवाश्रमिणः गृहस्थे * संस्थितिं यान्त्यतः श्रेष्ठः । १ । ९० ।

**चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः । दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः ॥ ९१ ॥**

चतुर्भिरित्यादि । ९१ । एतैर्ब्रह्मचर्य्याद्याश्रमिभिरेव * चतुर्भिर्द्विजैर्दशलक्षणो धर्म्मो * नित्यं प्रयत्नतः सेवितव्य एव । १ । ९१ । कानि धर्म्मस्य दशलक्षणानीत्य * तत्राह ।

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ९२ ॥**

धृतिरित्यादि । १ । ९२ । स्पष्टार्थोऽयं श्लोकः । ९२ ।

**दशलक्षणानि धर्म्मस्य ये विप्राः समधीयते । अधीत्य चानुवर्त्तन्ते ते यान्ति परमां गतिम् ॥ ९३ ॥**

दशलक्षणानीत्यादि । ९३ । धर्म्मस्य धृत्यादीनि दश * लक्षणानि ये विप्राः सम * गधीयते न केवल * मधीयत एवैतावं । १ । अधीत्य च दशलक्षणानि धर्म्म * स्यानुवर्त्तन्ते तदुक्त * कर्म्माणि कुर्व्वन्ति ते तु * विप्राः परमां गतिं यान्ति । २ । ९३ । अथैवं परिव्राजकप्रव्राजक * धर्म्मानुक्त्वा संन्यासप्रकार * माह ।

**दशलक्षणकं धर्म्ममनुतिष्ठन् समाहितः । वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥ ९४ ॥**

दशलक्षणकमित्यादि । १ । ९४ । द्विजो दशलक्षणकं * धर्म्ममायुषस्तृतीय * भागपर्य्यन्तमनुतिष्ठन् वेदान्तं *

समाहितःसन् विधिवद् गुरुमुखाच्छ्रुत्वैव । १ । ऋणानि देवर्षिपितृणामृणानि * विशोध्य कर्म्म संन्यसेत् । २ । २ । ९४ । ननु वेदसंन्यासिकः कर्म्माणि च त्यक्त्वा * कथं जीवनयात्रां कुर्य्या * दित्यत आह ।

**संन्यस्य सर्व्वकर्म्माणि कर्म्मदोषानपानुदन्। नियतो वेदमभ्यस्य पुत्रैश्वर्ये सुखं वसेत्॥९५॥**

संन्यासीति । १ । १ । ९५ । द्विज एवमनृणः सन् * सर्व्वकर्म्माणि संन्यस्य * कर्म्मदोषांश्चापानुदन् * नियतो वेदमभ्यस्य * पुत्रैश्वर्ये सुखं वसेत् । १ । ० । ९५ ।

**एवं संन्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः। संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम्॥९६॥**

एवमित्यादि । ९६ । एवमनेन प्रकारेण * द्विजः सर्व्वाणि कर्म्माणि संन्यस्य * स्वकार्य्यपरमः सन्नस्पृह एव * संन्यासेन धर्म्मेणैव । १ । एनः पापमपहत्यैव परमां गतिं प्राप्नोतीति । २ । ९७ । इति साग्निकानां गृहाश्रमधर्म्मादिविधयः * वानप्रस्थस्य चैव * वासधर्म्मश्च स्थानस्य धर्म्मा श्चोक्ताः । १ । यतीनां त्रिविधानाञ्च * परिव्राजक प्रव्राजक * संन्यासिनां धर्म्माश्चोक्ताः । २ । निरग्नीनां गृहाश्रमधर्म्माः स्पष्टं * नोक्ता यापि ताः पञ्चयज्ञानसन्ति * पक्व मान्नेन चनास्ति * पितृदेवानामर्च्चनेन । ३ । केवलवेदस्यानग्नेः * स्वाध्यायेन ब्रह्मयज्ञ * सम्भवे पि विवाहाद्य ग्न्यभावेन * लौकिकाग्निपक्वान्नेन * होमादिविधानाभावात् । ४ । असंस्कृतत्वाल्लौकिकाग्निपक्वानां * वृथापाक त्वमाभक्ष्यत्वं तैर्देव * पितृवैश्वदेवातिथ्या * च नसाम्भवेरिति । ५ । उक्तं ह्यत्रिसंहितायां * योऽग्न्याहितो वा विवा हाग्निं गृहस्थ इति मन्यते । अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः । ६ । वृथापाकश्च भुञ्जानः प्रायश्चित्तं चरे द्द्विजः । प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुद्ध्यतीति । ७ । इति एवं लौकिकाग्निपक्वानां वृथा * पाकत्वेन साग्निका नां * लौकिकाग्नौ कर्म्मप्रति * षेधः कात्यायनेनोक्तः ॥ ८ ॥ स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन । न ह्याहि ताग्नेः स्वं कर्म्म लौकिकेऽग्नौ विधीयते । ९ । ९ । तेन निरग्नीनां लौकिकाग्नौ पक्वे * न पितृश्राद्धदेवार्च्चनादि कर्म्म * कर्त्तव्यमामान्नेनैव * कर्त्तव्यं प्रचेतसोक्तं । १० । आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा । आमश्राद्धं द्विजैः कार्य्यं शूद्रेण तु सदैव हि । ११ । इति । अत्रानग्न्यावितिविवाहाग्न्यभावे * न तु लौकिकादिसर्व्वाग्न्यभावे तत् सम्भवाभावात् । १२ । सर्व्वाग्न्यभावे श्राद्धे तु * धूपदीपदानानुपपत्तेः श्राद्ध * मेव न सम्भवतीति । १३ । नितरां निरग्नीनां वानप्रस्थ * यत्याश्रमी नस्त्वग्रेण * त्वधमोक्षाभावादग्नौ * स्वात्मनि समारोपणासम्भवाच्च ॥ १४ ॥ स्वाध्याय होमाभावादृषिदेवर्ण * मोचनसम्भवाभावाच्चाथ तन्मनूक्तवान * प्रस्थाश्रमयत्याश्रम * धर्म्मेणाविरोधा भाव * प्रदर्शनार्थमधिकार्य्य ज्ञापयितुं ॥ १ ॥ अत्र मया विष्ण्वादिप्रोक्तवानप्रस्थ * यतिधर्म्मो लिख्यते ॥ १६ ॥ तद् यथा विष्णुसंहितायां * गृही वलीपलित * दर्शने वनाश्रमी * भवेदपत्यस्य चा * पत्यदर्शने न वा ॥ १ ॥ पुत्रेषु भार्य्यां निक्षिप्य * तया तु गम्यमानो वा * तत्रापाग्नीनुपचरेत् ॥ २ ॥ अफालकृष्टेन * पञ्चयज्ञान्न हापयेत् * स्वाध्यायञ्च न जह्यात्

ब्रह्मचर्य्यं पालयेत् । ३ । चर्म्मचीरवासाः स्यात्* नित्यं जटाश्मश्रुलो मनखांश्च बिभृयात् * त्रिषवणस्नायी स्यात्
४ । कपोतवृत्तिर्मासनिचयः* संवत्सरनिचयो वा संवत् * सरनिचयोऽपूर्व्वनि * चितमाश्वयुज्यां जह्यात् । ५ ।
ग्रामादाहृताष्टग्रासान् वने वसन् । पुटेनैव पलाशेन पाणिना शकलेन वा । ६ । इतिवानप्रस्थधर्म्म
*सक्तावैखानसधर्म्म*उक्तास्तद् यथादर्श्यते । ७ । वानप्रस्थस्तपसा शरीरं *शोषयेद् ग्रीष्मे पञ्चतपाः स्यात् *आका
शशायी प्रावृषि*स्यादार्द्रवासा हेमन्ते । १ । नक्तमाशी स्यादेकान्तरं*द्व्यन्तरम्भ्यन्तराशी वा स्यात्*पुष्पाशी फला
शी शाकाशी*पर्णाशी मूलाशी वा भवेत् । २ । यवागूं पक्षान्तयोर्वा सकृद्वे *चान्द्रायणैर्व्वा वर्त्तेत * अश्म
कुट्टो दन्तोलूखलिको वा । ३ । तपोमूलमिदं सर्व्वं दैवमानुषजं जगत् । तपोमध्यं तपोऽन्तञ्च तपसा च तथा धृतम्
४ । यद् दुस्तरं यद् दुरापं यद् दूरं यच्च दुष्करम् । सर्व्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् । ५ । इति वैखानसध
र्म्मा उक्ता यतिधर्म्मा उक्ताः* स्तद् यथाऽथ प्रदर्श्यते । ६ । अथ त्रिष्वाश्रमेषु पक्वकषायः * प्राजापत्यामिष्टिं कृत्वा *
सर्व्ववेदसं दक्षिणां * दत्त्वाऽऽत्मन्यग्नीनारोप्य*विप्रः प्रव्रज्याश्रमी स्यात् । १ । भिक्षार्थं ग्राममियात्साप्तागारि
क*मैक्ष्यमाददीतालाभे न व्यथेत*न भिक्षुकं भिक्षेत् । २ । न भुक्तवति जनेऽतीते पात्रसम्पाते
भैक्षमाददीत । ३ । मृन्मये दारुपात्रेऽलाबूपात्रे वा*तेषां चैतमाद्भिः शुद्धिः* स्यादभिपूजितलाभादुद्विजेत*
शून्यागारनिकेतः स्यात् । ४ । वृक्षमूलनिकेतनो वा न ग्रामे *द्वितीयां रात्रिमावसेत् * कौपीनाच्छादनमात्र*
मेव वसनं माददीत् । ५ । दृष्टिपूतं न्यसेत् पादं * वस्त्रपूतं जलमाददीत्*सत्यपूतं वदेद्वाचं मनःपूतं समाच
रेत् । ६ । मरणं नाभिकामयेत*जीवितञ्च नाभिनन्देत् । अतिवादांस्तितिक्षेत*न कञ्चनावमन्येत* निरा
शीः स्यान्निर्नमस्कारो वा भवेत् । ७ । एकञ्चेत् तक्षतो बाहुं चन्दनेनैकमुक्षतः । नाकल्याणं कल्याणं वा तयो
रपि चाचिन्तयेत् । ८ । प्राणायामधारणाध्याननित्यः स्यात्* नित्यं संसारस्यानित्यतां पश्येत*शरीरस्याशुचि
भावं *जरया रूपविपर्य्ययम् । ९ । शारीरमानसागन्तु*व्याधिभिश्चापतापं सहजञ्च * नित्यान्धकारे गर्भे च *
वसतिं मूत्रपुरीषमध्ये च । १० । तत्र च शीतोष्णदुःखानुभवनं *जन्मसमये योनिसङ्कुचित*निर्गमनाच्च महद्दुःखा
नुभवनं *बाल्ये मोहं गुरुपरवशताञ्च । ११ । अध्ययनादनेकक्लेशं *यौवने च विषयप्राप्तौ* दमार्गणतदवाप्तौ*
विषयसेवने नरकपतनम् । १२ । अप्रियैः सह संवसतिं *प्रियैश्च विप्रयोगं न* रकेषु च महद्दुःखं *संसारसंसृतौ तिर्य्य
ग्योनिषु च । १३ । एवमस्मिन् सततपापिनि*संसारे न किञ्चित्करं किञ्चित्* यदपि किञ्चिद्दुःखापेक्षया * सुखसं
ज्ञकं तदप्यनित्यम् । १४ । ततः सेवाशक्तीतस्यैवा* लभने वा महद्दुःखं * शरीरञ्चेदं सप्तधातुकं पश्येत् । १५ ।
रसरुधिरमांसास्थि*मेदोमज्जाशुक्राश्रकं * चर्म्मावनद्धं दुर्गन्धि*विविधमलायतनम् । १६ । सुखशतैरपि कृतं वि*
कारि स्यादुत्कृष्टमपि* विनाशि कामक्रोधलोभ* मोहमदमात्सर्य्यस्थानम् । १७ । पृथिव्यप्तेजोवाय्वाकाशात्मक
मस्थिसिराधमनिस्नायुयुतं *रजस्वलं षट्त्वकपिण्डास्थ्यां त्रिभिः *शतैः षष्ट्यधिकैः सधार्य्यमाणम् । १८ । इत्यादि ॥
हारीतेनचोक्तं । अतःपरं प्रवक्ष्यामि वानप्रस्थस्य सत्तमाः । धर्म्माश्रमं महाभागाः कथ्यमानं निबोधत । १ ।
गृहस्थः पुत्रपौत्रादीन् दृष्ट्वा पलितमात्मनः । भार्य्यां पुत्रेषु निक्षिप्य सह वा प्रविशेद्वनम् । २ । नखरोमाणि च तथा
ऽमितगात्रत्वगादि च । धारयन् जुहुयादग्निं वनस्थो विधिमास्थितः । ३ । धान्यैः स्ववनसम्भूतैर्नीवाराद्यैरनिन्दितैः
शाकमूलफलैर्वापि कुर्य्यान्नित्यं प्रयत्नतः । ४ । त्रिकालस्नानयुक्तस्तु कुर्य्यात्तीव्रं तपस्तदा । पक्षान्ते वा समश्नीया

एषवोऽभिहितोधर्म्मोब्राह्मणस्यचतुर्विधः। पुण्योऽक्षयफलःप्रेत्यराज्ञांधर्म्मंनिबोधत॥९७॥

चयसंहरतिएषइत्यादि। ९७। एषचतुर्विधोब्रह्म*चर्यगार्ह स्थ्यवानप्रस्थयति*धर्म्मभेदाद्ब्राह्मणस्य* धर्म्मोघ श्चावश्यककर्म्म। १। पुण्यःपुण्यजनकःप्रेत्यापरलोकंगतस्याक्षय*फलदोवोयुष्माभ्यंमया*ऽभिहितोराज्ञांधर्म्मं शृणुत। २। ०। ९७।

॥ * ॥ इति मानवेधर्म्मशास्त्रे भृगुप्रोक्तायांसंहितायांषष्ठोऽध्यायः समाप्तः ॥ ६ ॥ * ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां वैद्यगङ्गाधर कविराज
कृतायां प्रमादभञ्जन्यांषष्ठाध्यायस्यप्रमादभञ्जनीषष्ठाध्यायः ॥ ० ॥ ६ ॥

---

राज्ञां धर्म्मं निबोधतेतियत्प्रति*ज्ञातं तद्दर्शयन्नाह राजधर्म्मान् प्रवक्ष्यामीत्यादि॥१॥ ० ॥ १ ॥

राजधर्म्मान् प्रवक्ष्यामि यथावृत्तोभवेन्नृपः। सम्भवश्चयथातस्य सिद्धिश्च परमायथा॥१॥

नृपःक्षत्रियोयथावृत्तोभवे*त्तथाराजधर्म्मान् राजाधिपति * क्षत्रियधर्म्मानहंप्रवक्ष्यामि ॥ १ ॥ तस्यक्षत्रियस्य यथार्थेन*प्रकारेणसम्भवस्तत्पत्ति*र्यथाचपरमासिद्धिः*स्याच्चदपिप्रवक्ष्यामि ॥ १ ॥ यराजःक्षत्रियस्य*धर्म्मपत्र पत्नाते नाहिह्यस्या*न्नवामाह्मणस्याराज्ञो*नैववेसर्सोचराप्सःपुद्रस्याव ॥ ४ ॥ १ ॥

ब्राह्मंप्राप्तेनसंस्कारंक्षत्रियेणयथाविधि। सर्व्वस्यास्ययथान्यायंकर्त्तव्यंपरिरक्षणम्॥२॥

ब्राह्ममित्यादि॥२॥क्षत्रियेणयथाविधि*ब्राह्मंवैदिकंसंस्कारं*जातकर्म्मादुपनय*नान्तंप्राप्तेनसमावर्त्तनेन ॥ सर्व्वस्ययथान्यायं*परिरक्षणं कर्त्तव्यम् ॥ २ ॥२॥ ननुकस्मादेवंक्षत्रियेणराज्ञा* सर्व्वस्यास्यलोकस्यपरिरक्ष ण*कर्त्तव्यमित्यतःक्षत्रिय*नृपसम्भवउच्यते ॥१॥ अराजक*इत्यादिभ्यां* द्वाभ्यामन्वि*तर्प्रोक्ताभ्यां ॥१॥॥१॥४॥

अराजकेहिलोकेऽस्मिन्सर्व्वतोविद्रुतेभयात्। रक्षार्थमस्यसर्व्वस्यराजानमसृजत्प्रभुः॥३॥

इन्द्रानिलयमार्कानामग्नेश्चवरुणस्यच। चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः॥४॥

हियस्मादस्मिंल्लोके ख* ल्वराजके यद्राज्यं * लोकोऽराजकएवासीत् * तदासर्व्वतोभयाद्विद्रुतोऽभवत् ॥ तदासर्व्वस्यास्यलोकस्यरक्षार्थं * प्रभुर्ब्रह्माप्रजापति* रिन्द्रादीनामष्टानांलोकपालानां * शाश्वती र्मात्रा ॥ १ ॥ अंशान्निर्हृत्यक्षत्रियं*राजानमसृजत्क्षत्रियोणितोभि*कारान्नमाह्मणा*पैभ्यापूद्रं वा

राजानं* ताभिर्मात्राभिरसृजत् ।१। यद्यप्यात्मप्योर्वै यौवा* शूद्रोवाराजाभवति * सर्पसत्तकर्मफलेन तथा * बलयामजातोराजाग्या* न्नतस्ते न्द्रादिमात्राः सन्ति ॥ २॥ यस्त्वष्टराजान * मस्तूज्वदितियोभूपालोभवति* तमेवेन्द्रादिमात्राभिरसृजदिति*तदच्छदेववाख्यानं ।३। यदितयात्स्य तदा*क्षत्रिये यथाविधी*तिमोक्त ।भूपालेनेतावच्चादिति ।५ ।४।

यस्मादेषांसुरेन्द्राणांमात्राभ्योनिर्मितोनृपः। तस्मादभिभवत्येषसर्व्वभूतानितेजसा॥५॥

तेषामं सर्वक्षत्रियानां दर्शयति*यस्मात्तेषामित्यादिकम् ।१।५। ते ामिन्द्रादिसुरेन्द्राणां मात्राभ्यो* नृपःक्षत्रियोनिर्म्मित * स्तस्मादेषक्षत्रियोराजासर्व्वाणि*तेजसाभिभवत्येव ॥ १ ॥ ५ ॥ तदभिभवकारिधर्म्मं दर्शयति*तपत्यादित्यवदित्यादि ॥१॥ ६ ॥

तपत्यादित्यवच्चैष चक्षूंषिचमनांसिच। नचैनंभुविशक्नोति कश्चिदप्यभिवीक्षितुम्॥६॥

एषक्षत्रियोराजाच*क्षूदित्यवत्तपत्यासा*चक्षुंषिमनांसिचादित्यवत्तपन्ति।१। यतएनञ्चभुवि*कश्चिदपिनाभि* वीक्षितुं शक्नोतीति ।२ ।० ।६।

सोऽग्निर्भवति वायुश्चसोऽर्कःसोमः सधर्म्मराट्। सकुबेरःसवरुणः समहेन्द्रःप्रभावतः॥७॥

सद्दत्यादि ॥ ७ ॥ सक्षत्रियोराजाप्रभावतएव*ह्यग्न्यादष्टदेवरूपो*भवतिनत्वन्योराजा* तथाविधप्रभावः स्यात् ॥ १ ॥ ० ॥ ७ ॥

बालोपिनावमन्तव्यो मनुष्यइति भूमिपः। महतीदेवताह्येषा नररूपेण तिष्ठति॥८॥

बालोपीत्यादि ॥ ८ ॥ बालोप्यकादशादिवर्षवया * उपनीतःक्षत्रियोभूमिपोराजा* मनुष्यइतिबुद्ध्यार्क* इपिनावमन्तव्यः ।१। क्षत्रियभूपतिनररूपेणैषा*महतीदेवतातिष्ठति ।२।८।

एकमेव दहत्यग्निर्नरंदुरुपसर्पिणम्। कुलंदहतिराजाग्निः सपशुद्रव्यसञ्चयम्॥९॥

एकमेवेत्यादि ।९। अग्निर्दुरुपसर्पिण* मेकमेवनरंदहतिनेतरं * राजाग्निर्दुरूपसर्पिणं सपशु* द्रव्यसञ्चयं कुलंदहति ॥ १ ॥ ९ ॥

कार्य्यंसोऽवेक्ष्यशक्तिञ्चदेशकालौचतत्त्वतः। कुरुतेधर्म्मसिद्ध्यर्थं विश्वरूपंपुनःपुनः॥१०॥

कार्य्यमित्यादि ॥ १० ॥ यइन्द्रादिमात्राभिर्निर्म्मितःक्षत्रियो * राजाप्रजानांकार्य्यं शक्तिञ्चावेक्ष्य * देश

कालीचतस्मतोऽयं स्या ॥ १ ॥ धर्म्मसिद्धार्थं तत्रवाऽसं रूपं * पुनःपुनर्विश्वरूपं * मतिचरणं दिशवते । २ । १० ॥

**यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे। मृत्युश्च वसति क्रोधे सर्व्वतेजोमयो हि सः ॥ ११ ॥**

यस्येत्यादि ॥ ११ ॥ यस्य क्षत्रियस्य राज्ञः प्रसादे पद्मा श्रीश्च वसति यस्य * पराक्रमे शौर्यभावे यस्य * त्रिवर्गं च विजयश्च । १ । यस्य क्रोधे मृत्युश्च वसति यस्मिन् * क्षत्रियो राजा वसन् * तेजोमयो नाम यो राजा ॥ २ ॥ ११ ।

**तं यस्तु द्वेष्टि संमोहात्स विनश्यत्यसंशयम्। तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥ १२ ॥**

तमित्यादि ॥ १२ ॥ तं क्षत्रियं राजानं संमोहाद्यो * द्वेष्टि सोऽसंशयमाशु विनश्यति । १ ॥ कस्मात् यस्मात् तस्याशु विनाशाय * राजा मनः प्रकुरुते । २ ॥ १२ ॥

**तस्माद्धर्म्मं यमिष्टेषु स व्यवस्येन्नराधिपः। अनिष्टं चाप्यनिष्टेषु तं धर्म्मं न विचालयेत् ॥ १३ ॥**

तस्मादित्यादि ॥ १३ ॥ तस्मात् क्षत्रियस्य राज्ञ एवंविध * प्रभावात् स नराधिपः * इष्टेषु यं धर्म्मं व्यवस्येत् अनिष्टे * अनिष्टं यच्च व्यवस्येत् ॥ १ ॥ तं धर्म्मं न * कदाचन * कोऽपि जनो * विचालयेत् ॥ २ ॥ ० ॥ १३ ॥ नवराजा कथमेवं कर्त्तुं प्रभुः स्यात् * इत्यत आह तस्येत्यादि ॥ १ ॥ १४ ॥

**तस्यार्थे सर्व्वभूतानां गोप्तारं धर्म्ममात्मजम्। ब्रह्मतेजोमयं दण्डमसृजत्पूर्व्वमीश्वरः ॥ १४ ॥**

तस्य क्षत्रियस्य राज्ञोऽर्थे निमित्ते * ईश्वरः पूर्व्वमात्मजं * स्वस्य पुत्रं धर्म्ममेव ॥ १ ॥ सर्व्वभूतानां गोप्तारं * रक्षितारं ब्रह्मतेजोमयं दण्डं * शासन विधि प्रमसृजत् ॥ २ ॥ इति ॥ १४ ॥ नवदण्डेन किं भवतीत्यत आह * इह तस्य सर्व्वाणीत्यादि ॥ १ ॥ १५ ॥

**तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च। भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च ॥ १५ ॥**

तस्य दण्डस्य भयात् स्थावराणि * सजीवपर्व्वतादीनि * चराणि मनुष्यादीनि * सर्व्वाणि भूतानि । १ । स्वस्वनियताय भोगाय कल्पन्ते * कल्पमानिवर्त्तन्ते नान्य * भोगाय बलात् प्रवर्त्तन्ते न च * तस्मात् धर्म्माच्चलन्ति । २ । १५ ।

**तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः। यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥ १६ ॥**

तमित्यादि । १६ । तं दण्डमन्यायवर्त्तिषु नरेषु देशकालौ शक्तिं च विद्यामपि च * तत्त्वतोऽवेक्ष्य राजा * यथार्हतः सम्प्रणयेत् ॥ १ ॥ १६ ॥

देवेत्यादि। २३। देवादयोऽपि केचित्तेऽपि*दण्डेनैव निपीडिताः*स्वस्वविहितभोगाय कल्पन्ते। १। २३।

दुष्येयुः सर्व्ववर्णाश्च भिद्येरन् सर्व्वसेतवः। सर्व्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥२४॥

दुष्येयुरित्यादि। २४। दण्डस्य विभ्रमाद् अतिक्रमात् सर्व्वे च *वर्णाद् दुष्येयुः सर्व्वसेतवो यमा*यमाद्योर्धर्म्म विधौ*नियमस्तत्तद्व्यवस्था।१। विधर्म्माचरणवारणास्तपस्तु*सेतवस्ते सर्व्वे भिन्द्येरन्*सर्व्वलोकप्रकोपश्च भवेत्। २४॥

यत्रश्यामो लोहिताक्षो दण्डश्चरति पापहा। प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥२५॥

यत्रेत्यादि। २५। यत्र पापहा श्यामो लोहिताक्षः* दण्डश्चरति तत्र सा दण्डमाने ता*नायको राजा साधु यथार्थं चेत् पश्यति* तत्र प्रजाः कदाचिन्न मुह्यन्ति। १। २५।

तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम्। समीक्ष्यकारिणं प्राज्ञं धर्म्मकामार्थकोविदम् २६

कः प्रणेतेत्यत आह * तस्याहुरित्यादि श्लोकं। १। तस्य दण्डस्य प्रणेतारमीदृशं * राजानमाहुर्न्नान्यादृशं। १। २६।

तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते। कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥२७॥

तमित्यादि। २७। सत्यवादी समीक्ष्यकारी*धर्म्मार्थकामकोविदः*राजा तं दण्डं दण्ड्येषु एव *सम्यक् प्रणयन् युञ्जानः। १। त्रिवर्गेणाभिवर्द्धते*स राजा यदि कामात्मा*स्वकामसाधनपरः*सन् विषमो भवति। २। सर्व्वासु प्रजासु समानमानात्*सन् क्षुद्रो राजा तेनैव*दण्डेन स निहन्यते। ३। २७। कुतः स राजा दण्डेन*निहन्यते इत्यत आह दण्डो हीत्यादिकमनुक्रम। १। २८।

दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः। धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥ २८॥

हि यस्माद्दण्डोऽसौ सुमहत्तेजः*स्वरूपोऽकृतात्मभिस्तु*जनैर्दुर्द्धरो धर्म्माद्विचलितं*नृपं सबान्धवं हन्ति। २८।

ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम्। अन्तरीक्षगतांश्चैव मुनीन् देवांश्च पीडयेत् ॥ २९॥

ततइत्यादि॥ २९॥ ततः सबान्धवनृप*हननादनन्तरं स*दण्डो दुर्गादीन् पीडयेत्। १। २९।

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना। न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥ ३०॥

सोऽसहायेनेत्यादि॥ ३०॥ स खलु दण्डो मूढेन*लुब्धेनासहायेनाकृतबुद्धिना*विषये षु सक्तेन च*राज्ञा न्यायतः प्रणेतुं न शक्यः स्यात्। १। ३०। केन स दण्डः प्रणेतव्य इत्यत आह शुचिनेत्यादिकम्। १। ३१।

शुचिनासत्यसन्धेनयथाशास्त्रानुसारिणा। प्रणेतुं शक्यते दण्डः सुसहायेन धीमता ॥ ३१ ॥

शुचिनासत्यसन्ध प्रतिज्ञ। यस्य*तेन राज्ञायथाशास्त्रानुसारिणा*सुसहायेन सम्यक्*प्रश्न तस्सहायेन च। १।
धीमता दण्डप्रणे व* सपराधिषु प्रयोक्तुं * सर्व्वथैव सम्यक् शक्यते। २। ३१।

स्वराष्ट्रे न्यायवृत्तः स्याद्भृशदण्डश्च शत्रुषु। सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ३२ ॥

स्वराष्ट्रे न्यायेत्यादि। ३२। यस्तु राजा स्वराष्ट्रे न्यायवृत्तः स्यात्*शत्रुषु भृशदण्डश्च* सुहृत्सु स्निग्धेषु जिह्मः *
कौटिल्यहीनो ब्राह्मणेषु क्षमावान्। १। ३२।

एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः। विस्तीर्य्यते यशो लोके तैलविन्दुरिवाम्भसि ॥ ३३ ॥

एवमित्यादि। ३३। एवं वृत्तस्य नृपतेः*शिलोञ्छेनापि जीवतो*लोके यशोविस्तीर्य्यते*यथाम्भसि तैलविन्दु
१। ॥ ३३ ॥

अतस्तु विपरीतस्य नृपतेरजितात्मनः। संक्षिप्यते यशो लोके घृतविन्दुरिवाम्भसि ॥ ३४ ॥

अतस्त्वित्यादि ॥ ३४ ॥ अतः स्वराष्ट्रे न्यायवृत्तत्वादिभ्यो * विपरीतस्या जितात्मनो नृपतेर्यशो लोके संक्षि
प्यते *यथाम्भसि घृतविन्दुः ॥ १ ॥ ३४ ॥

स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषामनुपूर्व्वशः। वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता ॥ ३५ ॥

स्वे स्वे धर्म्म इत्यादि। १। ३५। सर्व्वेषां वर्णानामाश्रमाणाञ्च* स्वे स्वे धर्म्मे निविष्टानां * मनुपूर्व्वशोऽभि
रक्षिता राजैव*परमेश्वरेण सृष्टः ॥ १ ॥ ३५ ॥

तेन यद्यत् सभृत्येन कर्त्तव्यं रक्षता प्रजाः। तत्तद्वोऽहं प्रवक्ष्यामि यथावदनुपूर्व्वशः ॥ ३६ ॥

तेनेत्यादि ॥ ३६ ॥ प्रजारक्षता तेन सभृत्येन *राज्ञा यद्यत् कर्त्तव्यं तत्तद् यथाव*दनुपूर्व्वशस्त्वहं * युष्मभ्यं
प्रवक्ष्यामीति ॥ १ ॥ ३६ ॥ तद्यथेत्याह ब्राह्मणानित्यादि ॥ ३७ ॥

ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः। त्रैविद्यवृद्धान् विदुषस्तिष्ठेत्तेषाञ्च शासने ॥ ३७ ॥

पार्थिवः क्षत्रियो राजा * प्रातरुत्थाय यथोक्त*कृत्यानि कृत्वा त्रैविद्या* वृद्धान् विदुषो ब्राह्मणान्*पर्युपासीत तेषां
शासने तिष्ठेत्। १। तिसृभिर्विद्याभिर्निर्व्वृत्ता इति * त्रैविद्याः स्ते च वृद्धास्तान् * ये वृद्धा विद्यातःश्रे
ष्ठा*स्ते राजपालनार्थं यत्*प्रशास्युपादिशन्ति तस्मिंस्तिष्ठेत् ॥ २ । ३७॥ न केवलं तथाविधान् वृद्धान्*ब्राह्मणा
न् पार्थिवः पर्युपासीत * अपरानपीति तद्यथेत्याह*वृद्धांश्चेत्यादिकानि ॥ १ ॥ ३८ ॥

विद्यासुपनिषद्धि ह्यांतेभ्यः * एवमभ्यासातिष्ठेदय * लोकतोवार्त्तानां पशु * पालनकृषिवाणिज्या * दीनामारम्भान्
।पसमातिष्ठेत् ॥ ४ । ४२ ॥ इन्द्रियाणां जये योग * महर्निशं समभ्यसातिष्ठेत् * कस्मा दिन्द्रियसाञ्जितेन्द्रियोनृप
तिः * प्रजाःसम्यक् स्ववशे * स्थापयितुं शक्नोतीति । १ । ४४ । एवंमत्वाकिंकुर्य्यादित्यतोवर्ज्जनीयमाहदशे
त्यादि । ४५ ।

दशकामसमुत्थानि तथाष्टौ क्रोधजानि च। व्यसनानि दुरन्तानि प्रयत्नेन विवर्ज्जयेत्॥ ४५॥

कामसमुत्थानि दश * दुरन्तानिव्यसनानि * तथाष्टौ क्रोधजानि च * दुरन्तानिव्यसनानि * सर्व्वाणि प्रयत्नेन विवर्जयेत् । १ । ४५ । कस्मादित्यतउच्यते कामजेषु * प्रसक्तो हीत्यादिकम । १ । ४६ ।

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्म्माभ्यां क्रोधजेनात्मनैव तु॥ ४६॥

महीपतिः कामजेषु * दशस्वासक्तोहि यस्मा * दर्थधर्म्माभ्यां वियुज्यते । १ । क्रोधजेनव्यसनेनात्मनैव
वियुज्यते म्रियते । २ । ४६ । कानिकामजानि दश * व्यसनानि क्रोधजानि चाष्टावित्यतउच्यते * मृगयाक्ष
इत्यादि । १ । ४७ ।

मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥ ४७॥

मृगयादीनि दशक * कामजानि व्यसनानि * तौर्य्यत्रिकमिति नृत्यं * गीतं वाद्यञ्चेति त्रयं * वृथाट्या वृथा
याटनं । १ । ४७ ।

पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः॥ ४८॥

पैशुन्यमित्यादि । ४८ । पैशुन्यादीन्यष्टौ क्रोध * जानि व्यसनानि तत्र * अर्थदूषणं परार्थापहरणं * वाक्
पारुष्यं दण्डजं * पारुष्यञ्चेति द्वयं । १ । ४८ । कामक्रोधयोः कारणमाह द्वयो * रप्येतयोरित्यादि ॥ १ ॥ ४८ ॥

द्वयोरप्येतयोर्मूलं यं सर्व्वे कवयो विदुः। तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ॥ ४९॥

कवयः पण्डिता एतयो * र्द्वयोरपि कामक्रोधयोर्मूलन्तु यं * लोभं विदुस्तं लोभञ्च * जयेत् तत्प्रभवावेतावु
भौ गणौ ॥ १ ॥ ४९ ॥ तत्रापि विशेषमाह * पानमक्षा इत्यादि ॥ ५० ॥

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्। एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे॥ ५०॥

कामजे दशके गणे * पानं मद्यपानमक्षाः स्त्री * प्रसङ्गश्च मृगया च * इत्येतच्चतुष्कं यथा * क्रमं कष्टतमं
विद्यात् ॥ १ ॥ ० ॥ ५० ॥ क्रोधजगणेऽतिदोषानाह * दण्डस्येत्यादि । ५१ ।

दण्डस्यपातनञ्चैव वाक्पारुष्यार्थदूषणे। क्रोधजे पि गणे विद्यात् कष्टमेतत्त्रिकं सदा ॥ ५१ ॥

क्रोधजे ऽष्टके गणे पि * दण्डस्यपारुष्ये णपातनं तथा " वाक्पारुष्यमर्थदूषणञ्चेति * त्रिकं सदा कष्टं विद्यात् ॥ १ ॥ ५१ ॥

सप्तकस्यास्य वर्गस्य सर्व्वत्रैवानुसङ्गिनः। पूर्व्वं पूर्व्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ ५२ ॥

सप्तकस्येत्यादि ॥ ५२ ॥ मृगयाक्षमद्यपानादि स्त्री मृगयादण्डपारुष्यवाक्पारुष्यार्थदूषणात्मक* वर्गस्य सर्व्वत्रानुसङ्गिनः। १। पूर्व्वं पूर्व्वं व्यसनं गुरुतरं * मात्मवान् नृपति विद्यात्। २। ५२।

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते। व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ ५३ ॥

व्यसनस्येत्यादि। ५३। व्यसनमृत्वोर्मध्ये * दुर्धीमं धो व्यसनं व * कष्टमुच्यते विद्वद्भिः। १। कस्माद् यस्मा व्यसनीमृत * स्त्वधोऽधोनरकं व्रजति * अव्यसनीमृतः स्वर्याति ॥ २ ॥ ५३ ॥ अथैवं क्षत्रियस्य राजा * भृत्यायत्तकार्य्यं तद्‌व्याचष्टे * मौलानित्यादिक्रम। १। ५४।

मौलान्शास्त्रविदः शूरान्लब्धलक्ष्यान्कुलोद्गतान्। सचिवान्सप्तचाष्टौवाप्रकुर्व्वीतपरीक्षितान् ॥ ५४ ॥

उक्तरूपे णप्रकारेण्या प्र सा * दनन्तरं समावृत्तः * क्षत्रियोराजाभूत्रासमप्तचाष्टौवा * शास्त्रविदः शूरान्वीरान्। १। लब्धलक्ष्यान्प्रस्यास्त्रे लब्धोलक्ष्योयैः * स्तान्कुलोद्गतान्सद्वंश * जातान्परीक्षितान्मोहलोभादिदोषविहीन * तया दृष्टोजनादीन्। २। मौलान्स्वराज्यस्थाने जज * भावमहेन्तिये तां सु * सचिवान्मन्त्रिणः सहायान्कुर्य्यात् ॥ १। ५४। सहायप्रयोजनमाह * अपियदित्यादि। १। ५५।

अपियत्सुकरं कर्म्म तदप्येकेनदुष्करम्। विशेषतोऽसहायेन किन्तुराज्यंमहोदयम् ॥ ५५ ॥

सुकरमपियत्कर्म्म * तदपिकर्म्मखलु एकेन दुष्करं * किन्तुमहोदयं राज्यं * राज्यपालनं कर्म्म। १। असहायेनैकेनवि * शेषतो दुष्करं तस्मात् * सचिवान् सहायान् कुर्य्यात्। ५५। सचिवान्कृत्वाकिं कुर्य्यादित्याह * आह तैः साई मित्यादि ॥ १। ५६ ॥

तैःसार्द्धंचिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम्। स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥ ५६ ॥

क्षत्रियोराजा तैः सचिवैः सार्द्धं * नित्यं यत्सामान्यं समत्वं स्वस्मिन् येन * सह सन्धिः कार्य्योविग्रहोवा * कर्त्तव्यस्तच्चचिन्तयेत्। १। स्थानं धनकोषं दण्ड * नीयञ्च नित्यं चिन्तयेत् * समुदयं धनानामुद्भवयोग्या * स्तद्धनाकर

चिन्तयेत्। २। इति प्रजादीनां रक्षां * पुरयथाशास्त्रञ्चिन्तयेत् * यज्ञश्च धानिप्रशमनानि येषां * तानि सर्व्वाणि चिन्तयेत्। १। ०। ५६।

तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्। समस्तानाञ्च कार्य्येषु विदध्याद्धितमात्मनः॥५७॥

तेषामित्यादि ।५७। तेषां सप्तानामष्टानां वा * सचिवानां स्वं स्वं पृथक् * मभिप्रायं तान् समस्तां * नात्माभिप्रायं चोपलभ्य * कार्य्ये यात्मनो हितं राजा विदध्यात्। १। ५७।

सर्व्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता। मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥५८॥

सर्व्वेषामित्यादि। ५८। सर्व्वेषां मन्त्रिणां मध्ये * विशिष्टेन विपश्चिता * ब्राह्मणेन सह राजा * परमं मन्त्रं षाड्गुण्यसंयुतं मन्त्रयेत्। १। यानात्मकष्टासामान्यसन्धिविग्रह * स्थानसहदयगति * लब्धप्रशमनानात षाड्गुण्यगुप्ता * तां मन्त्रणां मन्त्रयेत्। २। ५८।

नित्यं तस्मिन् समाश्वस्तः सर्व्वकार्य्याणि निक्षिपेत्। तेन सार्द्धं विनिश्चित्य ततः कर्म्म समारभेत्॥ ५९॥

नित्यमित्यादि। ५९। तस्मिन् विशिष्टे विपश्चिति ब्राह्मणे * सचिवे समाश्वस्तः सम्यगाश्वस्तः * सन् सर्व्वकार्य्याणि राजा विनिक्षिपेत्। १। तेन विपश्चिता विशिष्टेन खलु * ब्राह्मणेन सचिवेन * सार्द्धं मन्त्रणया सर्व्वं विनिश्चित्य * ततः कर्म्म समारभेत्। २। ५९।

अन्यानपि प्रकुर्व्वीत शुचीन् प्राज्ञानवस्थितान्। सम्यगर्थसमाहर्तॄन् अमात्यान् सुपरीक्षितान्॥६०॥

अन्यानपीत्यादि। ६०। मन्त्रणार्थमेवं सचिवान् सप्त * साष्टौ वा विधायान्यान् * प्राज्ञानवस्थितान् * शुचीन् प्राज्ञान् परीक्षितान्॥ १॥ समागत्य समाहरणार्थमर्थं * समाहृत्य नृ प्रकुर्व्वीत॥ २॥ ६०॥

निर्व्वर्त्तेतास्य यावद्भिरितिकर्त्तव्यता नृभिः। तावतोऽतन्द्रितान् दक्षान् प्रकुर्व्वीत विचक्षणान्॥६१॥

निर्व्वर्त्तेतेत्यादि॥ ६१॥ अस्यार्थसमाहरण * सोतिकर्त्तव्यतानृभि * र्यावद्भिर्निर्व्वर्त्तेत * तावतो नृन् विचक्षणान्॥ १॥ तन्द्रितानधीनान् दक्षा * नथ समाहृत्य नृ राजा प्रकुर्व्वीत॥ २॥ ६१॥

तेषामर्थे नियुञ्जीत शूरान् दक्षान् कुलोद्गतान्। शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने॥ ६२॥

तेषामित्यादि॥ ६२॥ तेषामर्थ समाहर्तॄणां रक्षण * स्यार्थे दक्षान् कुलोद्गतान् * शूरान् पुरुषान्नियुञ्जीत १। अर्थसमाहरणे त्वाकराणां * स्वर्णादिखनीनां धान्यादिक्षेत्राणां * कर्म्मान्ते तत्स्वर्णादिधा * न्यादीनां

मन्त्रिनिवेशनं ॥ २ ॥ तत्तदर्थं स्थापनस्थाने ग्रहीत *विद्याचरणमतिविरहितान्*भीरूंस्तत्तद्वाविषु *भयशीलान् नूनं नियुञ्जीत ॥ ३ ॥ ६२ ॥

**दूतञ्चैव प्रकुर्वीत सर्व्वशास्त्रविशारदम् । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतम् ॥ ६३ ॥**

दूतञ्चैवेत्यादि ॥ ६३ ॥ राजा दौत्यकार्यार्थं तं *दूतं प्रकुर्वीत यः * सर्व्वशास्त्रविशारदः * परेषामिङ्गितानि च*आकारोऽङ्गप्रत्यङ्ग*चेष्टाश्च शास्त्रजानाति ॥ १ ॥ शुचिश्च*दक्षश्च सत्कुले *चोद्गतश्च भवति । २ । ६३ ।

**अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् । वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥ ६४ ॥**

अनुरक्त इत्यादि ॥ ६४ ॥ अनुरक्तादिर्दूतो राज्ञः *प्रशस्यते स दक्षो वाग्मी*सुवपुर्वपुष्मान् । १ । ६४ ।

**अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया । नृपतौ कोषराष्ट्रे च दूते सन्धिविपर्य्ययौ ॥ ६५ ॥**

अमात्ये दण्ड इत्यादि । ६५ । अमात्ये राज्ञः स्वगुणे *आयत्तोऽधीनो दण्डो* दण्डे कर्त्तव्ये नृपता*वायत्ता वैनयिक*विशिष्ट नीतिक्रिया । १ । कोषराष्ट्रे च देने नृपतावायत्ते *दूते सन्धिविग्रहावायत्तौ ॥ २ ॥ ६५ ॥ कथं दूते सन्धिविपर्य्ययावुभा*वायत्तौ स्यातामित्यत * आह दूत एवेत्यादि । १ । ६६ ।

**दूत एव हि सन्धत्ते भिनत्त्येव च संहितान् । दूतस्तत्कुरुते कर्म्म भिद्यन्ते येन वा न वा ॥ ६६ ॥**

दूत एव परैः सह यथा सन्धिः *स्यात्तथा वदन्नसंहितान् सन्धत्ते *यथा च भेदः स्यात्तथा*वदन् संहितान् भिनत्ति ॥ दूतस्तत्कर्म्म कुरुते *येन कर्म्मणा संहिता*भिद्यन्ते येन कर्म्मणा वा न भिद्यन्ते ॥ २ ॥ ६६ ॥ कथमित्यत आह स* विद्यादस्य*कृत्येष्वित्यादि ॥ १ ॥ ६७ ॥

**स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः । आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥ ६७ ॥**

यस्मात् स दूतोऽस्य परस्य निगूढैः * रिङ्गितचेष्टितैः कृत्येषु कर्त्तव्ये * ष्वाकारमिङ्गितं चेष्टां च विद्यात्तस्य भृत्येषु चिकीर्षितं तदा * यथायद् यत्तत्सर्व्वं च * दूतो विद्यात्तस्माद्दूता*यत्तौ सन्धिविपर्य्ययौ । १ । ६७ ।

**बुद्ध्वा च सर्व्वं तत्त्वेन परराजचिकीर्षितम् । तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥ ६८ ॥**

बुद्ध्वा चेत्यादि ॥ ६८ ॥ राजा दूतेन सर्व्वं परराजचिकीर्षितं तत्त्वेन बुद्ध्वा *यथात्मानं स न पीडयेत् *तथा प्रयत्नमातिष्ठेत् ॥ १ ॥ ६८ ॥ परराजेन पीडननिवारणार्थं *राज्ञो वासयोग्यस्थान*माह जाङ्गलमित्यादि । ६९ ।

**जाङ्गलं सस्यसम्पन्नमार्य्यप्रायमनाविलम् । रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत् ॥ ६९ ॥**

जाङ्गलं सस्यसम्पन्नमार्य्यप्रायं *ब्राह्मणबहुलं च* देशं*अल्पजलमतोऽल्पवृक्षमल्पवृष्टं वा* ऽनाविलं मलादाविल

हीनं । १ । इमां मनोरममानतसामन्तं*समाङ्कृतः सारथिय वत्स्वाजीवां तत्र चाजीवां*जीवनोपायद्रवां यत्र* राजा तं देशमावसेत् । २ । २ ॥ ६९ ॥ यथापुरं कृत्वा तस्मिन्नत्राह*धन्वदुर्गमित्यादि । १ । ७०।

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा। नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत्पुरम्॥ ७०॥

धन्वदुर्गं मरुपृष्ठ * दिक्चतुष्टयानाभूमि * भागः पञ्चयोजनादुदकोयत्र* तेन दुर्गेण दुर्गमं पुरं *समाश्रित्य राजा वसेत् । १ । अथवा महीदुर्गं चन्मयेन* विस्तारोत्सेधवता लेनागमा*प्राकारेणावृतं पुरं*माश्रित्य राजा वसेत् । २ । अथवाब्दुर्गं सजलपरिखां* कृत्वा मध्ये पुरं कृत्वा* तदाश्रित्य राजा वसेत् ॥ ३ ॥ अथवा वार्क्षं महत् * कण्टक वृक्षादिभिश्चादि * परिवृतत्वेन दुर्गं * पुरमाश्रित्य राजा वसेत् । ४ । अथवा नृदुर्गं सेना*रक्षितं पुरमाश्रित्य वसेत्*अथवा गिरिदुर्गं पु*रमाश्रित्य राजा वसेत् । ५ । ७० ।

सर्व्वेणतु प्रयत्नेन गिरिदुर्गं समाश्रयेत्। एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ ७१॥

सर्व्वेणेत्यादि । ७१ । सर्व्वेण प्रयत्नेन*गिरिदुर्गं *पुरं राजा समाश्रये *देषां दुर्गाणां मध्ये हि* गिरिदुर्गं विशिष्यते *बहुगुणत्वेनेति ॥ २ ॥ ७१ ॥

त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्ताश्रयाप्चराः। त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः॥ ७२॥

त्रीण्याद्यानीत्यादि ॥ ७२ ॥ आद्यानि त्रीणि धन्वदुर्गं महीदुर्गं*अब्दुर्गाणि मृगा गर्ताश्रया मूषकादयः सर्पादि * गर्ताश्रयाप्चरा आश्रिताः ॥ १ ॥ एषामुत्तराणि त्रीणि*वार्क्षदुर्गं नृदुर्गं गिरिदुर्गाणि*प्लवङ्गमो वानरो वार्क्षं *नरो नृदुर्गममरो* गिरिदुर्गं समाश्रितः ॥ २ ॥ ७२ ॥

यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः। तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम्॥ ७३॥

यथेत्यादि ॥ ७३ ॥ यथा मृगादीन् शत्रवो नोपहिंस*न्ति तथारयो दुर्गाश्रितं *नृपं न हिंसन्तीति ॥ ७३ ॥ नन्वेवं दुर्गेण किं स्यादित्यत*आह ।

एकः शतं योधयति प्राकारस्थो धनुर्द्धरः। शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ ७४॥

एकः शतमित्यादि । ७४ । प्राकारस्थो धनुर्द्धर* एकः शतं धनुर्द्धरान्*योधयति शतं धनुर्धराणां * दशसहस्राणि धनु*र्द्धराणां योधयतीति । १ । तस्माद्दुर्गं राज्ञो वासार्थं विधाता*स्वयमेव विधीयते । २ । ७४ । ०।

तत्स्यादायुधसम्पन्नं धनधान्येन वाहनैः। ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन च॥ ७५॥

तत्स्यादित्यादि । ७५ । तद्दुर्गं राज्ञः पुरमायुधैः शस्त्रैः* रक्षितं सम्पन्नं कार्य्यं*स्याद्धनधान्यैर्वाहनैः*हस्त्यश्व

रथादिभिश्च सम्पन्नं कार्यं ॥१॥ ब्राह्मणैर्वेदविद्भिः * शिल्पिभिः कारुभिर्यन्त्रैः * स्तैलपीडनादियन्त्रैर्यवसेन * ग्रासेन चोदकेन च * सम्पन्नं राज्ञा कर्त्तव्यं ॥२॥७५॥

**तस्य मध्ये सुपर्याप्तं कारयेद्गृहमात्मनः। गुप्तं सर्व्वर्त्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥७६॥**

तस्येत्यादि ।७६। तस्य दुर्गस्य पुरस्य * मध्ये नृपश्चात्मनः सुपर्याप्तं * सुन्दरं पर्याप्तं भोगपर्याप्तं स्त्रीगृहं * रन्धनगृहमग्निगृहं ॥१॥ दूतादीनां पृथक् पृथक् गृहं गुप्तं * रक्षकै रक्षितं सर्व्वर्त्तुकं शुभ्रं * जलवृक्षसमन्वितं कारयेत् ॥२॥७६॥

**तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम्। कुले महति सम्भूतां हृद्यां रूपगुणान्विताम् ॥७७॥**

तदध्यास्येत्यादि ॥७७॥ तद्गृहमध्यास्य * राजा हृद्यां रूपगुणान्वितां लक्षणान्वितां च * महति कुले सम्भूतां ॥१॥ भार्यां क्षत्रियकन्यां वा * वैश्यकन्यां वा मन्त्रेण * विवाहाद्या सवर्णा स्यात् * तां सवर्णामुद्वहेत् ॥२॥ पूर्व्वं हि शूद्रैव भार्या शूद्रस्य * इति वचनेन क्षत्रियस्य भार्या * सं शूद्रकन्या वैश्या * कन्या क्षत्रियकन्या च ॥३॥ न ब्राह्मणकन्या तस्मात् * ब्राह्मणकन्यां नोद्वहेत * तर्हि किं शूद्रकन्यामप्युद्वहेत् * इति तद्वर्जनार्थं तु * सवर्णामिति विशेषणम् ॥४॥ शूद्रकन्यायाममन्त्रेण * विवाहविध्यभावान्न * सावर्ण्यसम्भवोऽस्तीति ॥५॥ क्षत्रियकन्याया जन्मतः सावर्ण्यं * वैश्यकन्यायाममन्त्रेण * विवाहात् सावर्ण्यसम्भवः ॥६॥ तेन क्षत्रियः क्षत्रियकन्यां वैश्यकन्यां वाप्युद्वहेदिति ॥७॥७७॥

**पुरोहितञ्च कुर्व्वीत वृणुयादेव चर्त्विजः। तेऽस्य गृह्याणि कर्म्माणि कुर्युर्वैतानिकानि च ॥७८॥**

पुरोहितञ्चेत्यादि ॥७८॥ एवं ह्यस्य कल्याणार्थं शान्तिक * क्रियार्थमथर्व्ववेदवेत्तारं * ब्राह्मणं पुरोहितं च कुर्व्वीत ॥१॥ ऋत्विजश्च यज्ञार्थं वृणुयात् * यज्ञे तीयजन्तीत्यृत्विजः * तच्च व्याकरोति ते होत्रादिना ॥२॥ हि यस्मात् ऋत्विजोऽस्य * राज्ञो गृह्याणि वैतानिकानि च * सर्व्वाणि कर्म्माणि कुर्युः ॥३॥७८॥

**यजेत राजा क्रतुभिर्विविधैर्भूरिदक्षिणैः। धर्म्मार्थञ्चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ॥७९॥**

यजेतेत्यादि ॥७९॥ राजा भूरिदक्षिणैर्विविधैर्यज्ञैः * मेधादिभिः क्रतुभिस्तु * यजेत धर्म्मार्थं चैव * विप्रेभ्यो भोगान् भूम्यादि * वस्त्रौधधनानि च दद्यात् ॥१॥७९॥

**सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्। स्याच्चाम्नायपरो लोके वर्त्तेत पितृवन्नृषु ॥८०॥**

सांवत्सरिकमित्यादि ॥ ८० ॥ राजा सांवत्सरिकं बलिं स्वपरि* वाराणामाहारार्थं * धान्यसुवर्णा-मादि* स्वामाप्तैर्जनैः राष्ट्रादाहारयेत ॥ १ ॥ आम्नायपरो वेदेषु * तत्परश्च मान्नृषु च * प्रजासु पितृवद्वर्त्तेत ॥ २ ॥ ८० ॥

**अध्यक्षान्विविधान्कुर्यात्तत्रतत्रविपश्चितः। तेऽस्यसर्व्वाण्यवेक्षेरन्नृणांकार्याणिकुर्व्वतान ॥ ८१ ॥**

अध्यक्षानित्यादि । ८१ । तत्रतत्रधान्यादिषु* विपश्चितो विविधानध्यक्षान्कुर्यात्* तेऽध्यक्षाः अस्य राज्ञः* प्रजानां नृणां कार्याणि* कुर्व्वतां सर्व्वाण्यवेक्षेरन् ॥ १ ॥ ८१ ॥

**आवृत्तानांगुरुकुलाद्विप्राणांपूजकोभवेत्। नृपाणामक्षयोह्येषनिधिर्ब्राह्मोऽभिधीयते ॥८२**

आवृत्तानामित्यादि । ८२ । गुरुकुलाद्ब्रह्मचर्याश्रमात्* आवृत्तानां समावृत्तानामपि* कुलागतानां विप्राणां* पूजको राजा भवेत् । १ । एषब्राह्मो ब्राह्मणस्य* पूजात्मकोऽक्षयो निधिः * सर्व्वादिषु नृपाणां * वेदादिषु अभिधीयते । २ । ८२ ।

**नतंस्तेनानचामित्राहरन्तिनचनश्यति। तस्माद्राज्ञानिधातव्योब्राह्मणेष्वक्षयोनिधिः ॥८३॥**

कथमक्षय* इत्यत आह *न तं स्तेनान चामित्रेत्यादि । १ । ८३ । तं ब्राह्मं निधिं स्तेनाः* हरन्ति न चामित्रा हरन्ति न च* स नश्यति तस्माद्राज्ञा* ब्राह्मणेष्वक्षयो निधिर्निधातव्यः । १ । ८३ ।

**नस्कन्दतेनव्यथतेनविनश्यतिकर्हिचित्। वरिष्ठमग्निहोत्रेभ्योब्राह्मणस्यमुखेहुतम् ८४**

धर्म्मार्थं अविवक्षित भोक्तृगानधनानि च * तिथादानं विहितं तत * अग्रामनाथं हस्ते दत्तमेव । १ । ब्राह्मणस्य मुखे हुतं भवति* पाणिर्ह्यग्निर्द्विजः स्मृतः तद्वाक्यं * तच्च कर्हिचित् न स्कन्दते क्षरति । २ । न व्यथते न च विनश्य* नाग्निहोत्रेभ्यो वरिष्ठश्रेष्ठा* इत्यवधातव्याम् । ३ । ८४ ।

**सममब्राह्मणेदानं द्विगुणंब्राह्मणब्रुवे। प्राधीतेशतसाहस्रमनन्तंवेदपारगे ॥ ८५ ॥**

तथा दानस्य ब्राह्मण* विशेषे दत्तस्य फल* विशेषमुच्यते सममित्यादि । १ । ८५ । अब्राह्मण इति सादृश्यार्थे नञ्* समासस्तत्पुरुषः* न तच्छास्त्रं पठितवा* ब्राह्मणादिलक्षणं । १ । ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कार वर्जित । जातिमात्रोपजीवी च सम भवेद् ब्राह्मणः स्मृतः । १। गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च । नाध्यापयति

नाधीते सम्भवे ह्यब्राह्मणब्रुवः । २ । अग्निहोत्रीतपस्वी च वेदमध्यापयेत्स्वयः । सकल्पं सरहस्यं च तमाचार्य्यं प्रचक्षते । ३ । इष्टिभिः पशुबन्धैश्चातुर्मास्यैस्तथैव च । अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं सदृष्टवान् ॥ मीमांसकं चयो वेदान् षड्भिरङ्गैः सविस्तरैः । इतिहासपुराणानि स भवेद् वेदपारगः । ४ । इति । यद्दानमायतफलमुक्तं तत्फलं समब्राह्मणे दत्तं स्यात्*ततो द्विगुणादिफल *ब्राह्मणब्रुवादिषु दत्तं फलति । ५ । ८५ ।

पात्रस्य हि विशेषेण श्रद्धधानतयैव च । अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥ ८६ ॥

पात्रस्येत्यादि । ८६ । दियस्य दानस्य पात्रस्य*ब्राह्मणस्य विशेषेण* श्रद्धधानतया । १ । अल्पं वा बहु वा दत्तवता प्रेत्य*दानस्य फलमवाप्यते । २ । ८६ ।

समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः । न निवर्त्तेत संग्रामात् क्षात्रं धर्म्ममनुस्मरन् ॥ ८७॥

समोत्तमेत्यादि । ८७ । प्रजाः पालयन् राजा*समेनापरेणोत्तमेन*वाऽधमेन वा योद्धुम् * आहूतः सन् क्षात्रं धर्म्मं*मनुस्मरन् संग्रामान्न निवर्त्तेत । १ । ८७ ।

संग्रामेष्वनिवर्त्तित्वं प्रजानाञ्चैव पालनम् । शुश्रूषा ब्राह्मणानाञ्च राज्ञां श्रेयस्करं परम् ॥ ८८

संग्रामेष्वित्यादि ॥ ८८ । राज्ञां संग्रामेष्वनिवर्त्तित्वं * प्रजानाञ्च पालनं ब्राह्मण*शुश्रूषा चेति त्रयं तु* परं श्रेयस्करं स्यात् । १ । ८८ ।

आहवेषु मिथोऽन्योऽन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ ८९ ॥

आहवेष्वित्यादि । ८९ । आहवेषु महीक्षितो*राजानः शक्त्या मिथः*जिघांसन्तोऽन्योऽन्यां परं * शक्त्या युध्यमानाश्च*पराङ्मुखाः स्वर्गं यान्ति । १ । ८९ ।

न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् । न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥ ९० ॥

नेत्यादि । ९० । राजा रणे युध्यमानः*कूटैरायुधैः गोपन*स्थाल्याच्छन्नै रिपून् हन्यात् । १ । कर्णिभिः कर्णिकाकार*फलैर्बाणैर्न रिपून् हन्यात्* विषेण दिग्धैरायुधै * र्न रिपून् हन्यात् अग्नि*ज्वलिततेजनैरायुधैर्न हन्यात् । २ । ९० ।

न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम् । न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥ ९१॥

नचेत्यादि। ९१। रथस्थो राजा हस्त्यश्वरथारूढः* स्थलारूढं न हन्यात्* क्लीवं कृताञ्जलिं च हन्यात्। १। मुक्तकेशं परं न हन्यात्* न चासीनं हन्यात्तथा* तवास्मीतिवादिनं न हन्यात्। २। ९१।

**नसुप्तं नविसन्नाहं ननग्नं ननिरायुधम्। नायुध्यमानं पश्यन्तं नपरेण समागतम्॥ ९२॥**

नसुप्तमित्यादि। ९२। राजा युध्यमानो नसुप्तं हन्यात्* विसन्नाहं युद्धे सन्नद्धो* यो न भवति तं न हन्यात्। १। युध्यमानं नग्नं जनं* न हन्यात्* निरायुधमयुध्यमानं न हन्यात्* युध्यमानं निरायुधं तु युध्यमानो हन्यादिति। २। युद्धं पश्यन्तमयुध्यमानं* सायुधं निरायुधं वा न* हन्यात् परेणसह च* युद्धे समागतं न हन्यात्। ३। ९२।

**नायुधव्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्। नभीतं नपरावृत्तं सतां धर्म्ममनुस्मरन्॥ ९३॥**

नायुधेत्यादि। ९३। आयुधव्यसनप्राप्तं* युध्यमानं भग्नास्त्रं व्ययेनैवाव*सादप्राप्तं न हन्यात्* शोकास्त्रक्षतादिनार्त्तं हन्यात्। १। नचास्त्रैरतिपरिक्षतं हन्यात्* भीतं हन्यात्* परावृत्तं* पराङ्मुखं हन्यात् सतां* वीराणां धर्म्ममनुस्मरन्। २। ९३।

**यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः। भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्व्वं प्रतिपद्यते॥ ९४॥**

यस्त्वित्यादि। ९४। यस्तु संग्रामे भीतः सन्* परावृत्तः पराङ्मुखः* परैर्हन्यते प्रक्षिप्यते* स भर्त्तुः पोषणकर्त्तुः* यत्किञ्चिद्दुष्कृतं तत्सर्व्वं प्राप्नोति। १। ९४।

**यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्। भर्त्ता तत्सर्व्वमादत्ते परावृत्तहतस्य तु॥ ९५॥**

अपरञ्च यच्चास्येत्यादि। ९५। यः संग्रामे भीतः पराङ्मुखः परैः* हन्यते तस्यास्य परावृत्तहतस्य* अमुत्रार्थं परलोकार्थं* य उपार्जितं यत्किञ्चित्। १। सुकृतं तत्सर्व्वं भर्त्ता* युद्धस्वामी आदत्ते तस्मात् संग्रामे* सेनासेनापत्यादिकः* कोऽपि पराङ्मुखो न स्यात्। २। ९५।

**रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः। सर्व्वद्रव्याणि कुप्यञ्च यो यं जयति तस्य तत्॥ ९६॥**

रथाश्वमित्यादि। ९६। यो यं जयति तस्य रथाश्वादिकं* यत्किञ्चद्रव्यं तत्सर्व्वं* तज्जेतुस्तस्यैव भवति। ९६। तर्हि किं तस्य स्वामी राजा किञ्चिन्न* प्राप्नुयादित्यत आह।

**राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः। राज्ञा च सर्व्वयोधेभ्यो दातव्यमपृथग्जितम्॥ ९७**

राज्ञश्च दद्युरित्यादि। १। ९७। जेतारो जितानां रथाश्वादीनि* गृहीत्वा स्वामिनो राज्ञ* उद्धारं तद्यथाश्वादि* यत्तमं यत्किञ्चित्तद्दद्युः। १। राज्ञा चापृथग्जितमेकत्र जितं* यत्किञ्चिद्द्रव्यजातं तत्* सर्व्वं योधेभ्यो दातव्यं* पृथग्जितं तन्न देयं। २। ९७।

एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः। अस्माद्धर्मान्न च्यवेत क्षत्रियो घ्नन् रणे रिपून्॥ ९८

एषइत्यादि। ९८। एषसनातनो नित्यः * अनुपस्कृतोऽसङ्घातेन * पृथग्युद्धजितद्रव्या * ततो योधधर्मः प्रोक्त। १। क्षत्रियः घ्नन्तःधर्म्मात् रणे रिपून्घ्नन् क्षत्रियाणां विभागेन * एतद्धर्मान्न च्यवेत्। २। ९८।

अलब्धं चैव लिप्सेत लब्धं रक्षेत् प्रयत्नतः। रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत्॥ ९९॥

अलब्धं चैवेत्यादि। ९९। राजा यदलब्धं तत् * लिप्सेत लब्धुमिच्छेद् य * लब्धं तत्प्रयत्नतो रक्षेत्। १। रक्षितं धनं वर्द्धयेद् वृद्धन्तु * पात्रेऽनयोगात् जनेराजा निक्षिपेत्। ९९।

एतच्चतुर्विधं विद्यात्पुरुषार्थप्रयोजनम्। अस्य नित्यमनुष्ठानं सम्यक् कुर्य्यादतन्द्रितः॥१००॥

एतदित्यादि। १००। धनस्यालब्धस्य लाभेच्छा * लब्धस्य रक्षा * रक्षितस्य वृद्धि * वृद्धस्य च पात्रेषु * निक्षेप एतच्चतुर्विधं। १। पुरुषाणामर्थस्य धनस्य * प्रयोजनं विद्यादस्य चतुर्विधस्यानुष्ठानं नित्य * मतन्द्रितः सम्यक् कुर्य्यात्। १। १००।

अलब्धमिच्छेद्दण्डेन लब्धं रक्षेदवेक्षया। रक्षितं वर्द्धयेद्वृद्ध्या वृद्धं दानेन निक्षिपेत्॥ १०१॥

तत् राजा कथं कुर्य्यादित्यत * आह अलब्धमित्यादि। १। १०१। राजा अलब्धं धनं दण्डेनेच्छेत् * दण्डेन लब्धं धनमवेक्षया * सर्व्वदा दृष्ट्या रक्षकेण रक्षेत्। १। रक्षितं तद्धनमन्याभावाद्वृद्ध्या * ऋणं दत्वा वर्द्धयेद् वृद्धं धनं दानेनैव निक्षिपेत्। २। १०१।

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। नित्यं संवृतसंवार्य्यो नित्यं छिद्रानुसार्य्यरेः॥१०२

नित्यमित्यादि। १०२। उद्यतो दण्डः शासनं यस्य तथा * विधो नित्यं स्यान्नित्यञ्च * विवृतपौरुषो विस्तृत * पौरुषपुरुषकारः स्यात्। १। संवृतसंवार्य्यः संवरणीयानि * नित्यं संवृणुयान्नित्य * मरेश्छिद्रानुसारी स्यात्। २। १०२।

नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत्। तस्मात् सर्व्वाणि भूतानि दण्डेनैव प्रसाधयेत्॥१०३

एतैः किं स्या * दित्यत आह * नित्यमुद्य * तेत्यादिकम्। १। १०३। नित्यमुद्यतदण्डस्य राज्ञो भयात् * कृत्स्नं जगदुद्विजते * तस्माद्दण्डेन सर्व्वाणि * भूतानि प्रसाधयेत् *। १। १०३।

अमाययैव वर्त्तेत न कथञ्चन मायया। बुद्ध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः॥ १०४॥

अमायवेत्यादि । १०४ । राजानित्यममायया*छद्मभावं विनाकोर्य्ये *वर्त्तेतनत्वमायया* वसंवृतःसन्नरि प्रयुक्तां मायां *छद्मतां नित्यं बुद्धेत । १ । १०४ ।

**नास्यच्छिद्रं परोविद्याद्विद्याच्छिद्रं परस्यतु । गूहेत्कूर्म्मइवाङ्गानिरक्षेद्विवरमात्मनः॥१०५॥**

नास्येत्यादि ॥ १०५ । अस्यास्मद्राज्ञश्छिद्रं परोयथा*नविद्यात्तथावर्त्तेत * परस्यत्वछिद्रं विद्यात् । तद् यथा । कूर्म्मोयथाऽङ्गानिगूहेत्*संवृणुयात्तथात्मनो*विवरं छिद्रं राजारक्षेत् । १ । १०५ ।

**वकवच्चिन्तयेदर्थान् सिंहवच्चपराक्रमेत् । वृकवच्चावलुम्पेत शशवच्चविनिष्पतेत् ॥ १०६ ॥**

वकवदित्यादि । १०६ । वकोयथानैपुन्येन* मत्स्यग्रहणाय चिन्तयेत्तथा*राजाऽर्थान्नैपुन्येन * चिन्तयेत्*सिंहोयथापराक्रमे*तथाराजापराक्रमेत् । १ । वृकःपशुग्राहीयथाऽवलुम्पेत् * रक्षकरक्षितपशुं प्रमथ्य*हटात्कश्चिच्छीत्वा विनाशयति । १। तथाखगणरक्षितं*शत्रुं राजाऽवलुम्पेत्* शशोयथाव्याधं वीक्ष्य स्थानाद्विनिष्पतेत्तथा*प्राणघातकं वीक्ष्यैव*राजास्थानाद्विनिष्पतेत् ।२ । १०६ ।

**एवं विजयमानस्ययेऽस्यस्युःपरिपन्थिनः। तानानयेद्वशं सर्व्वान्सामादिभिरुपक्रमैः॥१०७॥**

एवमित्यादि । १०७ । एवमुक्तप्रकारेण*विजयमानस्यास्यराज्ञोयेऽन्येशत्रवः * परिपन्थिनश्शत्रवः * । १ । सतानपिसामादिभिः*सामदानभेददण्डै*रुपायैर्वशमानयेत् । २ । १०७ ।

**यदितेतुनतिष्ठेयुरुपायैःप्रथमैस्त्रिभिः । दण्डेनैवप्रसह्यैतांश्छनकैर्वशमानयेत्॥ १०८ ॥**

यदितेत्यादि । १०८। तेराज्ञःशत्रवोयदि*प्रथमैस्त्रिभिरुपायैः*शान्तौनतिष्ठेयुरादौ*साम्नास्वान्तप्रणयन*दानैनवशमानयेत् । १ । तेनयदिशान्तौनतिष्ठेयु*स्तदातेषामीपंसितार्थ *दानेनतान्वशमानयेत् २ तेनयदिनतेवशे तिष्ठेयु*स्तदातेषां सहायैः*सहभेदं जनयित्वा* तान्वशमानयेदेव । ३ । एवंत्रिभिर्यदिनते*वशे तिष्ठेयुस्तदैतान्*शत्रून्प्रसह्यविग्रह्य*दण्डेनैववशमानयेत् ॥ ४ ॥ १०८ ।

**सामादीनामुपायानांचतुर्णामपिपण्डिताः । सामदण्डौप्रशंसन्तिनित्यंराष्ट्राभिवृद्धये॥१०९॥**

सामादीनामित्यादि । १०९ । सामादीनामुपायानां*चतुर्णांमध्येराष्ट्राभि* वृद्धयेद्वौसामदण्डौ * पण्डितानित्यं प्रशंसन्ति। १ । १०९ ।

**यथोद्धरतिनिर्द्दाताकक्षं धान्यञ्चरक्षति। तथारक्षेन्नृपोराष्ट्रं हन्याच्चपरिपन्थिनः॥११०॥**

यथेत्यादि । ११० । निर्दाता धान्यं चैवं जातघासादि* छेत्ता कक्षं धान्यमध्यजातं घासं *उद्धरति धान्यं च चैव रक्षति । १ । तथा नृपः परिपन्थिनो हननात्* स्वराष्ट्रं रक्षेत् ॥ २ ॥ ११० ॥

**मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥१११॥**

मोहादित्यादि । १११ । यो राजाऽनवेक्षया स्वराष्ट्ररक्षा * दृष्टिं न कृत्वा स्वराष्ट्रं * मोहात् कर्षयति स ख*लु चिराद्राज्यात् सबा*न्धवश्च जीविताद्भ्रश्यते ॥ १ ॥ १११ ॥

**शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा । तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥११२॥**

शरीरेत्यादि । ११२ । यथा प्राणिनां शरीर * कर्षणात् प्राणाः क्षीयन्ते * तथा राज्ञामपि राष्ट्र * कर्षणात् प्राणाः क्षीयन्ते ॥ १ ॥ ११२ ॥

**राष्ट्रस्य संग्रहे नित्यं विधानमिदमाचरेत् । सुसंगृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥ ११३ ॥**

राष्ट्रस्येत्यादि । ११३ । राजा राष्ट्रस्य संग्रहे *नित्यमिदं वक्ष्यमाणं विधानं समाचरेत् *हि यस्मात् सुसं गृहीत*राष्ट्रः पार्थिवो राजा सुखमेधते ॥ १ ॥ ११३ ॥

**द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममधिष्ठितम् । तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य संग्रहम् ॥११४॥**

द्वयोरित्यादिना राष्ट्ररक्षाविधि* माह । ११४ । द्वयोर्ग्रामयोर्मध्येऽथ* त्रयाणां ग्रामाणां मध्ये * ऽथवा पञ्चानां ग्रामाणां *मध्ये ग्रामशतानां* मध्ये राष्ट्रस्य संग्रहं *गुल्मं सैन्यमधिष्ठितं कुर्यात् ॥ १ ॥ ११४ ॥

**ग्रामस्याधिपतिं कुर्याद्दशग्रामपतिं तथा । विंशतीशं शतेशं च सहस्रपतिमेव च ॥ ११५ ॥**

ग्रामस्येत्यादि । ११५ । प्रत्येकं ग्रामस्याधिपतिमेकैकं *कुर्यात्तेषां दशानां ग्रामपतीनां* मेकमधिपतिं कुर्यात्* स हि दशग्रामपतिः । १ । तयोर्द्वयोर्द्वयोर्दशग्रामपत्यो * रधिपतिमेकं विंशतीशं कुर्यात् * पञ्चानां विंशतीशानां * मेकमधिपतिं शतेशं कुर्यात् । २ । दशानां शतेशानामेकमधि * पतिं सहस्रपतिं कुर्यात् ॥ ३ ॥ ११५ ॥

**ग्रामे दोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम् । शंसेद्ग्रामदशेशाय दशेशो विंशतीशिनम् ॥ ११६ ॥**

ग्राम इत्यादिना ग्रामाधिपति * करणप्रयोजनमाह * । १ । ११६ । ग्रामे प्रजादीनां विवादादीन् दोषान् *

सहत्पञ्चानग्रामिकः स्वयं शनकैः ग्रामदशेशाय शंसेद्विशापयेत् पञ्चदशेशो विंशतीशिनं शंसेत् ॥ १ ॥ ११६ ॥

**विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत्। शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ ११७ ॥**

विंशतीशस्त्वित्यादि। ११७। विंशतीशस्तत्सर्वं शतेशाय निवेदयेत् ग्रामशतेशस्तु सर्वं तत्सहस्रपतये स्वयं शंसेत् ॥ १ ॥ ११७ ॥

**यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः। अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥ ११८**

एषां किं वेतनमित्याह यानीत्यादि। १। ११८। ग्रामवासिभिः प्रत्यहं राजप्रदेयानि यानि खल्वन्नपानेन्धनादीनि न तु संवत्सरं राजप्रदेयानि तानि सर्वाणि ग्रामिक एवाप्नुयात् ॥ १ ॥ ११८ ॥ ग्रामाधिपतेर्वेतनमुक्तं दशग्रामाधिपत्यादेर्वेतनमुच्यते।

**दशी कुलन्तु भुञ्जीत विंशी पञ्चकुलानि च। ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम् ॥ ११९ ॥**

दशीत्यादि। १। ११९। दशी दशग्रामपतिः कुलं व्यावहारिकं षड्गवहलवाह्यं चेव सम्भवं ग्रामं भुञ्जीत। १। हलं धर्म्यं व्यावहारिकं नृशंसं गोहिंसायत्तं च मन्विसंहितायां यथा। अष्टागवं धर्म्यं हलं षड्गवं व्यावहारिकं। चतुर्गवं नृशंसं द्विगवं गोवधायकम्। १। द्विगवं वाहयेत् पादं मध्याह्नं तु चतुर्गवम्। षड्गवन्तु त्रिपादाह्नं पूर्णाहं त्वष्टभिः स्मृतं। इति। २। आपस्तम्बेनचोक्तं हलमष्टागवं धर्म्यं षड्गवं जीवितार्थिनाम्। चतुर्गवं नृशंसानां द्विगवं गोजिघांसिनाम्। इति। पराशरेणापि तदुक्तम्। विंशी विंशतिग्रामाधिपतिः पञ्चकुलानि भुञ्जीत ग्रामं ग्रामशताध्यक्षो भुञ्जीत। ५। सहस्राधिपतिः पुरं सहस्रग्राममध्ये तु श्रेष्ठमेकं नगरं वर्त्तते तन्नगरं भुञ्जीत ॥ ६ ॥ ११९ ॥

**तेषां ग्राम्याणि कार्य्याणि पृथक्कार्य्याणि चैव हि। राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥ १२० ॥**

तेषामित्यादि। १२०। तेषां ग्रामाधिपतिप्रभृतीनां ग्राम्याणि ग्रामसम्बन्धीनि हितानि प्रजानां यानि कार्य्याणि। १। पृथक्कार्य्याणि च यानि कार्य्याणि तानि राज्ञोऽन्यो यः स्निग्धः सुहृदनतन्द्रितश्च सचिवो मन्त्री सपश्येत। २। १२०।

**नगरे नगरे चैकं कुर्य्यात्सर्व्वार्थचिन्तकम्। उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥ १२१**

यथाफलेन युज्येत राजाकर्त्ता च कर्म्मणाम्। तथावेक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान्॥१२८॥

यथाफलेनेत्यादि। १। १२८। राजा फलेन यथा युज्यात्* कर्म्मणां कर्त्ता च फलेन* यथा युज्येत नृपस्तथ*वावेक्ष्य राष्ट्रे करान् कल्पयेत्॥१॥ १२८। कथं करान् गृह्णीयात् किंवा वत्सरिकमेकदा* किमसकृदित्यत आह।

यथाल्पाल्पमदन्त्याद्यं वार्य्योकोवत्सषट्पदाः। तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाब्दिकः करः॥ १२९॥

यथाल्पाल्पमित्यादि॥१॥१२९॥ वार्य्योकाः जलौकाः* वत्सश्च षट्पदाश्च ते* यथाद्यं स्वमदनीय* मल्पाल्पमदन्ति तथा* राज्ञा राष्ट्रादाब्दिकः करोऽल्पाल्पो ग्रहीतव्यः स्यात्॥१॥१२९॥ नतु कियन्मितः करः* कस्मादग्राह्य इत्यत आह* ।

पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः। धान्यानामष्टमो भागः षष्ठो द्वादश एव वा॥ १३०॥

पञ्चाशद्भाग इत्यादि॥ १॥ १३०॥ पशुहिरण्ययोर्मूला* दधिकयोः पञ्चाशद्भागः* एको भागो राज्ञा ग्राह्यः। १। धान्यानां यथा चेत्यल्प* व्यय श्रमाभ्यामुत्पन्नानि यावन्ति* तावतां षष्ठो भागो राज्ञा ग्राह्यः स्यात्* मध्यमव्ययश्रमाभ्यां॥ २॥ यावन्त्युत्पद्यन्ते तावतां धान्यानां* मष्टमो भागो ग्राह्यः स्यात्* बहुळव्ययश्रमाभ्यां यावन्त्युत्पद्यन्ते* तावतां द्वादशो भागः। ३। १३०॥

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम्। गन्धौषधिरसानाञ्च पुष्पमूलफलस्य च॥ १३१॥

पत्रशाकतृणानाञ्च वैदलस्य च चर्म्मणाम्। मृण्मयानाञ्च भाण्डानां सर्व्वस्याश्ममयस्य च॥ १३२॥

आददीतेत्यादि॥ ०॥ १३१॥ द्रुमांसमधुसर्पिषाञ्च* चन्दनादिगन्धौषधि* लवणरसादीनां षष्ठ* भागं राजात्वाददीत अथ कौ पुष्पादिकष्ठ* पुष्करादिमूलहरी* तक्रादिफलस्य च षष्ठं भागं राजात्वाददीत॥ २॥ १३१॥ पत्रेत्यादि॥ १३२॥ पत्रादीनामपि षष्ठं* भागं राजाददीतेति* पूर्व्वेण योजना कार्य्या॥ १॥ १३२॥

म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम्। न च क्षुधास्य संसीदेच्छ्रोत्रियो विषये वसन्॥१३३

म्रियमाण इत्यादि॥१३३॥ श्रोत्रियाद्वेदाध्यायिनः करं राजा नाददीत* श्रोत्रियादन्येभ्यः करं यथोक्त* माददीतैव १॥ कस्मात्तु श्रोत्रियात्करं* नाददीतेत्या* तत्राह न चेत्यादि* ।२। अस्य राज्ञो विषये च *वसन् श्रोत्रियः क्षुधया* न संसीदेदित्यतस्मात्* श्रोत्रियात्करमाददीत्। २। धर्म्मकरदो हि श्रोत्रियो यावन्तं * धर्म्मं श्रोत्रियः करोति* तत्षष्ठांशं राजा प्राप्नोति प्रजानां * यत्कृतं दुष्कृतञ्च * तत्षष्ठांशभागी राजा। ३। विद्या नाथि

तदर्कांश*प्राज्ञर्ण मा:करादानं * नन्दं।ते हिराज्ञो धर्म्मकरदा* राजा च प्रजाभ्यो वृक्षं * मद्दृक्ष तस्य षष्ठांश भाक् इति ॥ ५ ॥ २२ ॥ श्रोत्रियस्य क्षुधावसादे *राज्ञः किं स्यादित्यत आह ।

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा । तस्यापि तत् क्षुधा राष्ट्रमचिरेणैव सीदति ॥१३४॥

यस्य राज्ञ इत्यादिकम् । १ । १२४ । यस्य राज्ञो विषये वसन् श्रोत्रियः * क्षुधा सीदति तस्यापि * श्रोत्रियस्य तया क्षुधा* राज्ञो राष्ट्रमचिरेणैव सीदति । १ । १२४ । ननु श्रोत्रिय किं राज्ञो विषये * निष्कर्षेवास्तु निवसेत्* कथं जीवेदित्यत *आह ।

श्रुतवृत्ते विदित्वास्य वृत्तिं धर्म्यां प्रकल्पयेत् । संरक्षेत् सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥१३५॥

श्रुतवृत्त इत्यादि । १ । १२५ । श्रुतवृत्ते वेदवृत्ते * वर्त्तमानस्यास्य श्रोत्रियस्य जीव * नोपायं विदित्वा धर्म्यां *वृत्तिं राजा प्रकल्पयेत् । १ । एनं श्रोत्रियमौरस*पुत्रमिव पितेव* राजा सर्वतः संरक्षेत् । २ । १२५ । एतेन किं स्यादित्यत आह ।

संरक्ष्यमाणो राज्ञा यं कुरुते धर्म्ममन्वहम् । तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ १३६ ॥

संरक्ष्य*माण इत्यादि । १ । १२६ । राज्ञा संरक्ष्यमाणः श्रोत्रियस्तु यं *धर्म्ममन्वहं कुरुते * तेन धर्म्मेण राज्ञ आयुर्वर्द्धते *द्रविणं राष्ट्रञ्च वर्द्धते । १ । १२६ ।

यत्किञ्चिदपि वर्षस्य दापयेत् करसंज्ञितम् । व्यवहारेण जीवन्तं राजा राष्ट्रे पृथग्जनम् ॥१३७

यत्किञ्चिदित्यादि । १२७ । उक्तादन्यो न व्यवहारेण राष्ट्रे *जीवन्तं पृथग्जनां च*जनं वर्षस्य करसंज्ञितं यत्* किञ्चिदल्पं दापयेत् । १ । १२७ ।

कारुकान् शिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः । एकैकं कारयेत् कर्म्म मासि मासि महीपतिः ॥१३८

कारुकानित्यादि । १२८ । महीपतिः कारुकान् कर्म्मकारादीन्* शिल्पिनो वस्त्रजीवनचित्रकार*प्रभृतीन् शूद्रां *श्चात्मनैवात्मना*भारहरणादिभिरुपजीविनः । १ । स्वराष्ट्रे वसतः करार्थं * मासि मासि एकैकदिनं *तत्तत्कर्म्म कारयेत् । २ । १२८ ।

नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया । उच्छिन्दन् ह्यात्मनो मूलमात्मानं तांश्च पीडयेत् ॥१३९

नोच्छिन्द्यादित्यादि । १२९ । राजा परेषां चातितृष्णयातेषा*मपकारार्थमात्मना* मूलं धनादिकं नोच्छिन्द्यात् । १ । कस्मात् । येषामतितृष्णानिवृत्तये *त्वात्मनो मूलमुच्छिन्द्यात् * तदात्मनो मूलमुच्छिन्दन् हि यस्मा*दात्मानं तांश्च पीडयेत्*ते कमाश्रित्य जीवेयुः । २ । १२९ ।

तीक्ष्णश्चैव मृदुश्च स्यात् कार्यं वीक्ष्य महीपतिः । तीक्ष्णश्चैव मृदुश्चैव राजा भवति सम्मतः ॥ १४० ॥

तीक्ष्ण इत्यादि । १४० । महीपतिः कार्यं वीक्ष्य * यस्मिन् कार्ये तीक्ष्णभावो युक्तः स्यात् * तस्मिं स्तीक्ष्णः स्याद् यस्मिन् कार्ये मृदुत्वं * युक्तं स्यात्तस्मिन् मृदुः स्यात् । १ । इत्थं च तीक्ष्णश्च मृदुश्च राजा * सर्व्वं सम्मतो भवति । २ । १४० ।

अमात्यमुख्यं धर्म्मज्ञं प्राज्ञं दान्तं कुलोद्गतम् । स्थापयेदासने तस्मिन् खिन्नः कार्येक्षणे नृणाम् ॥ १४१ ॥

अमात्यमुख्यमित्यादि । १४१ । राजा नृणां कार्येक्षणे खिन्नः सन् तस्य * तदा धर्म्मज्ञादिगुणममात्यमुख्यं * तस्मिन् नृणां कार्येक्षणे * आसने स्थापयेदिति । १ । १४१ ।

एवं सर्व्वं विधायेदमितिकर्त्तव्यमात्मनः । युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ १४२ ।

एवमित्यादि । १४२ । एवमनेन प्रकारेण राजा * युक्तो * आत्मन इदमितिकर्त्तव्यं * विधायाप्रमत्त एव * इमाः प्रजाः परिरक्षेत् । १ । १४२ ।

विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः । संपश्यतः सभृत्यस्य मृतः स न तु जीवति ॥ १४३ ॥

विक्रोशन्त्य इत्यादि । १४३ । यस्य राज्ञः सभृत्यस्य * सैन्यादिसहितस्य * पश्यतः प्रजाः क्रोशन्त्यो * दस्युभी राष्ट्राद्ध्रियन्ते * स राजा मृत एव न तु जीवति । १ ॥ १४३ ॥

क्षत्रियस्य परो धर्म्मः प्रजानामेव पालनम् । निर्द्दिष्टफलभोक्ता हि राजा धर्म्मेण युज्यते ॥ १४४ ॥

कस्मादित्यत आह क्षत्रियस्येत्यादि । १४४ । यस्मात् प्रजापालनं * क्षत्रियस्य राज्ञः परो * धर्म्मस्तत् प्रजापालनं राजा निर्द्दिष्टफलस्य * राजकरस्य भोक्ता च * तदा धर्म्मेण युज्यते । १ ॥ १४४ ॥

उत्थाय पश्चिमे यामे कृतशौचः समाहितः । हुताग्निर्ब्राह्मणांश्चार्च्य प्रविशेत् स शुभां सभाम् ॥ १४५ ॥

कथं कार्यं तदाह उत्थायेत्यादि । १४५ । सप्रणिधी राजा रात्रेः * पश्चिमे यामे निद्रातः * उत्थाय कृतशौचः सन् । १ । प्राग्युक्तविधानेन मूत्रपुरीषोत्सर्गदन्तधावनादि * शौचं कृतवान् समाहितो हुताग्नि * र्दत्ताग्नौ होमं विधाय । २ । ब्राह्मणांश्च पूजायामर्च्य * समागतैः सह इत्वा सभां * धर्म्मतो विचारशीलो सभां प्रविशेत् । ३ । १४५ ॥

तत्र स्थितः प्रजाः सर्व्वाः प्रतिनन्द्य विसर्जयेत् । विसृज्य च प्रजाः सर्व्वा मन्त्रयेत् सह मन्त्रिभिः ॥ १४६ ॥

तत्रेत्यादि । १४६ । तत्र सभायां स्थितो राजा समागताः प्रजाः सर्व्वाः * स्वं नन्दयन्तीः प्रतिनन्द्य * विसर्ज्जयेद् गन्तुमादिशेत् । १ । सर्व्वाः प्रजाश्च विसृज्य * मन्त्रिभिः सह मन्त्रयेत् * यच्च किञ्चिन्मन्त्रणायोग्यं वर्त्तेत ॥ २ ॥ १४६

दूतेत्यादि ।१५३। परराष्ट्रवृत्तान्तानार्थं दूतसम्प्रेषणं चिन्तयेत्*स्वेनारब्धकार्याणां शेषं*समापनार्थं राजा चिन्तयेत् ॥ १ ॥ अन्तःपुरप्रचारं च*राजा यदा दारादिरक्षार्थं*अन्तःपुरे भवतियत्*स्त्रीणां गमनागमनादि* साधु तत्साधु किमसाधु तच्चिन्तयेत् ॥ २ ॥ विरक्तभार्यादिपि राजानं विषादि * प्रदाने नाशयति । ३ । प्रणिधीनां चराणां चेष्टितं सूक्ष्मे हितमहितं वा तच्च*चरान्तरेण चिन्तयेत् । ४ । १५३ ।

**कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः । अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ १५४ ॥**

कृत्स्नमित्यादि ॥ १५४ । अष्टविधं कर्म राजा*कृत्स्नं चिन्तयेत् तत्कर्म*उशनसा यथा ॥ १ ॥ आदान प्रदानमपि च*प्रतिषेधार्थं वचनं*व्यवहारावेक्षणं दण्डप्रणयः ॥ २ ॥ करादिग्रहणमादानं * वेतनादीनां प्रदानं * भृत्यानां नियोज्यानां नियोगकरणं*प्रतिषेधो विरुद्धानां*कर्मणां चौर्यादीनाम् ।३ अथ वचनं प्रयोजनं यथार्थोक्ति* व्यवहारावेक्षणं विवादेषु*विचारो दण्डोऽपराधे निग्रहः । ४। पङ्क्तिःप्रायश्चित्तं पापे षितृत्वष्टधा *कर्म राजा चिन्तयेत् । ५ । पञ्चवर्गं तत्त्वतो*राजा चिन्तयेद्यथा*पञ्चानां चाराणां वर्गं *कापटिकोदास्थितौ * गृहपति वैदेहक*तापसश्रुतदान्तगाः । ६ । तत्र कापटिकः कपटात्*परमर्मज्ञानकारी*प्रव्रज्याङ्कर पतित*उदास्थितो गृहपतिः*क्षीणवृत्तिः कर्षकोवाणिजकश्च । ७ । वैदेहकोऽन्तःपुररक्षकोहारी * तापसो मुण्डो जटिलो वा तपस्वि* वेषधारीपश्चानामेते* वेषां तत्त्वातत्त्वं चिन्तयेत् । ८ । अनुरागापरागौ च*स्वस्मिन्नमात्यादौ कीदृशौ तौ* राजामात्याचिन्तयेत् ॥ ९ ॥ मण्डलस्यारादीनां प्रचारं परस्य * योऽवचारो व्यवहारः कीदृश * स्तत्र राजा तत्त्वतश्चिन्तयेदेव । १ । १५४ ।

**मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् । उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥ १५५ ॥**

मध्यमस्येत्यादि । १५५ । मध्यमोऽनविजिगीषुर्नानिजिगीषु *स्तस्य प्रचारं व्यवहारं चिन्तयेत् * विजिगीषोश्चेष्टितं चिन्तयेत्* । १ । उदासीनोऽनयत्नेऽमित्रं तस्य प्रचारं राजा चिन्तयेत् * शत्रोश्च विजिगीषुव्यतिरिक्तस्य*बहुजस्यैव प्रचारम । २ । राजा प्रयत्नतश्चिन्तयेत्*कथं बलावरो वर्त्तते *तद्वलवन्दधात् । २ । १५५ ।

**एताः प्रकृतयो मूलं मण्डलस्य समासतः । अष्टौ चान्याः समाख्याता द्वादशैव तु ताः स्मृताः ॥ १५६**

एताइत्यादि ॥ १५६। एतामध्यमविजीगीषूदासीन*शत्रवइतिचतस्रःप्रकृतयो*मण्डलस्य प्रधानं से*मूलं समासत उक्तं । १। अन्याश्चाष्टौप्रकृतयो *मण्डलस्य प्रधानं से मूलं * समाख्याताइत्येताश्च *द्वादशैव प्रकृतयोमूलं मण्डलस्य प्रधानं स्मृताः । २ । ता चाष्टौप्रकृतयस्तु * सुहृदमित्रमरिमित्रं * सुहृदमित्रमित्रमरिमित्रमित्रं * पार्ष्णि पाहआक्रन्दस्र * तयोरावाशारो चेति । ३ । १५६ ।

अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः । प्रत्येकं कथिता ह्येताः संक्षेपेण द्विसप्ततिः ॥ १५७ ॥

अमात्येत्यादि ॥ १५७ ॥ अपराश्च पञ्च प्रकृतयोऽमात्य*राष्ट्र*दुर्गार्थ*दण्डाख्याः * ताः प्रत्येकं कथिता* द्वादशमध्यमादयः*सत्यः षष्टिर्भवन्ति । १ । तद्यथा । मध्यमविजिगीषूदासीन* पार्ष्णिग्राहमित्रारिमित्र*गुरु मित्रामित्रारिमित्र*मित्रपार्ष्णिग्राहाक्रन्दाश्च । २ । शौचदार्थ्यं पाक्षाकाराक्रन्दासारा*विततं च द्वादशामात्य * द्वादशराष्ट्राणि द्वादशदुर्गाणि* द्वादशार्थकोषा द्वादशदण्डाश्च । ३ । इत्येताः षष्टिस्ताभिश्च*मध्यमादिद्वादशभिः*सह संक्षेपेणैताः द्विसप्ततिः प्रकृतयः स्युः ॥ ४ ॥ १५७ ॥

अनन्तरमरिं विद्यादरिसेविनमेव च । अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ १५८ ॥

अनन्तरमित्यादि ॥ १५८ ॥ अरिसेवीयस्तं * अरिसेविनमेतं भो* ऽनन्तरमरिं विद्यात् ॥ १ ॥ अरि सेविनञ्च मित्र*मरेरनन्तरं मित्रं *विद्यात् तयोः परमुदासीनं विद्यात् ॥ २ ॥ १५८ ॥

तान् सर्व्वानभिसन्दध्यात् सामादिभिरुपक्रमैः । व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥ १५९ ॥

तानित्यादि । १५९ । तान् सर्व्वानरीनरभिं *र्व्यस्तैः समस्तैश्च सामादिभिरुप*क्रमैः सामदानसन्धिनयश्च राजा*पौरुषेण च स्वतः * पुरुषकारेण तथा*नयेन चाभिसन्दध्यात् । १ । १५९ ॥

सन्धिञ्च विग्रहञ्चैव यानमासनमेव च । द्वैधीभावं संश्रयञ्च षड्गुणांश्चिन्तयेत् सदा ॥ १६० ॥

सन्धिञ्चेत्यादि । १६० । राजा सन्धिञ्च विग्रहञ्च*विग्रहाय यानं गमनं*मासनं *विपक्षान्निवृत्तिः * विजित्य परोगुणास्तथा द्वैधीभावः पश्चात्समापन्नाद्द्विधा*कृतासं ग्रामे स्थापनं *मिति षड्गुणाश्चिन्तयेत् । २ । १६० ।

आसनञ्चैव यानञ्च सन्धिं विग्रहमेव च । कार्य्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥ १६१ ॥

आसनमित्यादि ॥ १६१ ॥ आसनादीनि षट् कार्य्यं वीक्ष्य यत् *कर्त्तव्यं तद्वीक्ष्य प्रयुञ्जीत । १ । १६१ ।

सन्धिन्तु द्विविधं विद्याद्राजा विग्रहमेव च । उभे यानासने चैव द्विविधः संश्रयः स्मृतः ॥ १६२ ॥

सन्धिन्त्वित्यादि । १६२ । सन्धिश्च विग्रहश्च यानञ्चासनञ्च संश्रयश्च द्वि*विधं प्रत्येकं द्विधा विद्यात् । १ । १६२ ।

समानयानकर्म्मा च विपरीतस्तथैव च । तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥ १६३ ॥

समानेत्यादि । १६३ । एकः शत्रुः सन्धिकरणार्थमेव * समानगमनकर्म्मा * तदात्वकालसंयुक्तः आयतिकाल संयुक्तो वा । १ । द्वितीयो विपरीतोयः * पृथग्गमनकर्म्मा स तात्कालिक तदात्वकालसंयुक्त * आयतिकालयुक्तो वा * *इति द्विलक्षणः सन्धिः । २ । १६३ ।

यदा मन्येत भावेन हृष्टं पुष्टं बलं स्वकम् । परस्य विपरीतञ्च तदा यायाद्रिपुं प्रति ॥ १७१ ॥

यदेत्यादि । १ । १७१ । राजा यदा स्वकं बलं हृष्टं पुष्टं *भावेन मन्येत परस्य च बलं *विपरीतं हृष्टपुष्टाभ्यां विलोमं *मन्येत तदैव रिपुं *प्रति यायात् । १ । १७१ ।

यदा तु स्यात् परिक्षीणो वाहनेन बलेन च । तदासीत प्रयत्नेन शनकैः सान्त्वयन्नरीन् ॥ १७२ ॥

यदा त्वित्यादिना *स्वस्याविपत्प्रवृत्तौ *गमनान्निवृत्तिम् *आह ॥ १ ॥ १७२ ॥ राजा यदा वाहनेन बलेन च *क्षीणः स्यात्तदा प्रयत्नेन शनकैः *अरीन् सान्त्वयन्नासीत *विग्रहाय नैव गच्छेत् । १ । १७२ ।

मन्येतारिं यदा राजा सर्व्वथा बलवत्तरम् । तदा द्विधा बलं कृत्वा साधयेत् कार्य्यमात्मनः ॥ १७३ ॥

अथ बलस्य द्वैधीभावं यदा *कुर्य्यात्तदाह मन्येतेति ॥ १ ॥ १७३ ॥ राजा यदा सर्व्वथा बलवत्तरम् *अरिं मन्येत तदा स्वं *बलं द्विधा कृत्वात्मनः *कार्य्यं विग्रहं साधयेत् । १ । १७३ । यदा संश्रयं कुर्य्यात्तदाह [illegible] ।

यदा परबलानान्तु गमनीयतमो भवेत् । तदा तु संश्रयेत् क्षिप्रं धार्म्मिकं बलिनं नृपम् ॥ १७४ ॥

यदा परेत्यादि । १ । १७४ । यदा राजा वाहनबलाभ्यां परि*क्षीणः परबलानामतिशयेन *गमनीयतमो भवेत् तदा *क्षिप्रं धार्म्मिकं बलिनमन्यं *नृपं सहायं संश्रयेत् ॥ १ ॥ १७४ ॥

निग्रहं प्रकृतीनाञ्च कुर्य्याद्योऽरिबलस्य च । उपसेवेत तं नित्यं सर्व्वयत्नैर्गुरुं यथा ॥ १७५ ॥

निग्रहमित्यादि ॥ १७५ ॥ राजा यं संश्रयेत् स यः *खलु दुष्टानां प्रकृतीनाञ्च * बलस्य च निग्रहं कुर्य्यात् [illegible] तं * संश्रयं गुरुमिवोपसेवेत ॥ १ ॥ १७५ ॥

यदि तत्रापि संपश्येद्दोषं संश्रयकारितम् । सुयुद्धमेव तत्रापि निर्विशङ्कः समाचरेत् ॥ १७६ ॥

यदीत्यादि ॥ १७६ ॥ राजा यदि तत्रापि रिपोः* प्रकृतीनाञ्च बलस्य च * निग्रहे संश्रयकारितं दोषं * [illegible] सम्यग् *तदा तत्रापि च स्वयम् ॥ १ ॥ निःशङ्कः सन् सुयुद्धमेव [illegible] *समाचरेन्न निवर्त्तेत ॥ २ ॥ १७६ ॥ कथं चतुरं कुर्य्यादित्यत आह* ।

सर्व्वोपायैस्तथा कुर्य्यान्नीतिज्ञः पृथिवीपतिः । यथास्याभ्यधिका न स्युर्म्मित्रोदासीनशत्रवः ॥ १७७ ॥

सर्व्वोपायैरित्यादि ॥ १ ॥ १७७ ॥ संश्रयकारितं दोषं * [illegible] तथा *युद्धं सर्व्वोपायैः कुर्य्यात् तथा *मित्रादयो नाधिकाः स्युः ॥ १ ॥ १७७ ॥

**आयतिं सर्वकार्याणां तदात्वञ्च विचारयेत्। अतीतानाञ्च सर्वेषां गुणदोषौ च तत्त्वतः॥१७८॥**

आयतिमित्यादि। १७८। राजा सर्वकार्याणामायतिं दीर्घ*कालं तदात्वञ्च तत्कालिकत्व*मतीतानाञ्च सर्वेषां गुणदोषौ*तत्त्वतो याथार्थ्यतो विचारयेत्। १७८।

**आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः। अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते॥१७९॥**

आयत्यामित्यादि॥१७९॥ यो राजा आयत्यां दीर्घकाले*सिद्धौ गुणं दोषञ्च जानाति*तदात्वे क्षिप्रनिश्चयः*क्षिप्रं कर्त्तव्यमितीदं॥१॥ निश्चयबुद्धिः स्यादतीते कार्ये च*नष्टकार्यशेषं जानाति स राजा* कदापि न शत्रुभिरभिभूयते।२।१७९।

**यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः। तथा सर्वं संविदध्यादेष सामासिको नयः॥१८०॥**

यथैनमित्यादि।१८०। राजा खल्वेनं परं राजानं स्वस्मात्*परं मित्रोदासीनशत्रवो यथा*नाभिसन्दध्युरभिसन्धिं कर्त्तुं न*शक्नुयुस्तथा संविदध्यात्तदाचरेत्॥१॥ स्वस्मात्परे भाव्युक्ते भाव* मित्रोदासीनशत्रुभावाः यथोदाम*सामकरणं भवेदित्येति*एष संक्षेपतो युक्तेनयक्रमः।२।१८०।

**यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः। तदानेन विधानेन यायादरिपुरं शनैः॥१८१॥**

अथ पराराष्ट्राक्रम*विधानमुच्यते यदेत्यादि।१।१८१। प्रभुर्नृपो यदाऽरिराष्ट्रं प्रति*यानं गमनमात्रमायमातिष्ठेत्*तदा वक्ष्यमाणेनानेन विधानेन*नारिपुरं शनैर्धीरं धीरं यायात्।१।१८१।

**मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः। फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम्॥१८२॥**

मार्गशीर्षेत्यादि।१८२। शुभे मार्गशीर्षे मासि*महीपतिररिराष्ट्रं* प्रति यात्रां यायाद्यथा*बलं फाल्गुणं वा चैत्रं वा मासौ प्रति यात्रां यायात्।१।१८२।

**अन्येष्वपि तु कालेषु यदा पश्येद् ध्रुवं जयम्। तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः॥१८३॥**

अन्येष्वपीत्यादि।१८३। यदा राजा ध्रुवं जयं पश्येत्तदा*ऽन्येष्वपि काले षु यायात्*रिपोस्तथा चापरेण*व्यसने*धनक्षयपरिश्रमे।१। जाते सत्यन्येष्वपि काले राजा*रिपुराष्ट्रं प्रति यायात्॥२॥१८३।

**कृत्वा विधानं मूले तु यात्रिकञ्च यथाविधि। उपगृह्यास्पदञ्चैव चारान् सम्यग्विधाय च॥१८४॥**

कृत्वेत्यादि। १८४। राजामूले स्वपुरे रक्षाविधानं*यथाविधि कृत्वा तथा* यात्रिकञ्च विधानं यथाविधि* कृत्वा नमायपरवाराश्च:।१। आसन्नं पुरमपस्मृत्य हता*पश्चवर्गान् विचारान्।२। कापटिकोदास्थित*गृहपति वैदेहक*तापसवेशधारिणः संविधाय।२।१८२।

संशोध्य त्रिविधं मार्गं षड्विधञ्च बलं स्वकम्। साम्परायिककल्पेन यायादरिपुरं शनैः॥१८५॥

संशोध्येत्यादि॥१८४॥ मार्गं रिपुपुरे गमनपथं* त्रिविधं संशोध्य कण्टकलता*दिदूरीकृत्य निम्नोन्नत भूभागञ्च*समीकृत्य विषादिदोषं हत्वा॥१॥ स्वकं बलं षड्विधञ्च*हस्त्यश्वरथपदाति*सेनापतिकर्म्माध्यक्षं* संशोध्य दुःशिक्षावर्य*दौर्बल्यादिदोषान् हित्वा*॥२॥ साम्परायिककल्पेन*सांग्रामिककल्पेनारि *पुरं शनैः शनैर्गायात्।३।१८४॥

शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत्। गतप्रत्यागते चैव स हि कष्टतरो रिपुः॥१८६॥

शत्रुसेवीत्यादि।१८६। शत्रुपक्षे निविष्टं स्व*वान्धवं गूढं वैरं ज्ञात्वा तत्र*मित्रे गतप्रत्यागते * राजा युक्ततरः सावधानो भवेत्॥१॥ कस्मादित्यत उच्यते गृहीतवादि*हि यस्मात् समित्रं गूढवैरः कष्ट*तरो दुःखदायि तरो रिपुर्ज्ञेयः॥२॥१८६॥

दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा। वराहमकराभ्यां वा सूच्या वा गरुडेन वा॥१८७॥

दण्डव्यूहेनेत्यादि॥१८७॥ रिपुपुरं गन्तुं तस्य मार्गं *दण्डव्यूहेन सेनाभिर्दण्डा* कारव्यूहं कृत्वा तेन* व्यूहेन विशिष्टो यायात्।१। अथवा शकटं नव्यूहेन यायात्*दथवा वराहव्यूहे* नाथवा मकरव्यूहे *नाथवा सूची व्यूहेना*थवा गरुडव्यूहेन।२।१८७।

यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम्। पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्॥१८८॥

यतश्चेत्यादि। अथवाऽसौ परो राजा* यतो भयमाशङ्केत्*ततो व्यूहाद्बलं विस्तारयेत् स्वयं स*मध्ये पद्मव्यूहे नैव*तत्र सदा निविशेत।१।१८८।

सेनापतिबलाध्यक्षौ सर्व्वदिक्षु निवेशयेत्। यतश्च भयमाशङ्केत्प्राचीं तां कल्पयेद्दिशम्॥१८९

सेनापतीत्यादि॥१८९॥ सर्व्वदिक्षु सेनापतिबलाध्यक्षौ*निवेशयेत् यतश्च भयमाशङ्केत्* तां दिशं प्राचीं कल्पयेदिति शेषः।१।१८९।

गुल्मांश्च स्थापयेदाप्तान्कृतसंज्ञान्समन्ततः। स्थाने युद्धे च कुशलानभीरूनविकारिणः॥१९०॥

गुल्मांश्चेत्यादि ॥ १९० ॥ यात्रामार्गस्थानपथजलाधानान्गुल्मान्*भागशः सेनासङ्घान् बुद्धिकुशला *अभीरु-
ऽविकारिणश्चापततः* कृतसङ्केतान्गुल्मानामधेदं नाम । १ । परपक्षस्तम्भमार्गनिस्तुत * समवर्त्तमग्रतो
भूतोभवति*तदर्थं कृतसंज्ञा।*नेवसमन्ततः स्थापयेत् । २ । १९० ।

संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् । सूच्या वज्रेण चैवैतान्व्यूहेन व्यूह्य योधयेत्॥१९१॥

संहतानित्यादि । १९१ । संहतानेकीभूतानल्पान्योधयेत्*काममिच्छया बहून्विस्तारयेत्*सूच्याव्यू-
हेनैतान्गुल्मान्व्यूह्य यथा*वज्रेण व्यूहेनचव्यूह्यायोधयेत् ॥ १ । १९१ ।

स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा । वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥१९२॥

स्यन्दनाश्वैरित्यादि । १९२ । स्यन्दनाश्वैरथाश्वैः समे देशे युध्येत अनूपे देशे तु*नौकाभिर्गजैश्च युध्येत
१ । वृक्षगुल्मावृते देशे *चापैर्धनुर्बाणैर्युध्येत*स्थलेऽसिचर्मायुधैर्युध्येतेति । २ । १९२ ।

कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालाञ्छूरसेनजान् । दीर्घाँल्लघूंश्चैव नरानग्रानीकेषु योधयेत् ॥१९३॥

कुरुक्षेत्रांश्चेत्यादि । १९३ । कुरुक्षेत्रजातान्*मत्स्यदेशजातान्*पञ्चालदेशसम्भूतान्*शूरसेनदेशजातान्*
नरान्दीर्घाँल्लघूनग्रानीकेषु राजा योधयेत् ॥ १ । १९३ ॥

प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक्परीक्षयेत् । चेष्टाश्चैव विजानीयादरीन्योधयतामपि॥१९४॥

प्रहर्षयेदित्यादि । १९४ । राजाप्रशंसावचनै* र्बलं प्रहर्षयेद् व्यूह्य च तान्गुल्मान्*परीक्षयेदरीन्योधयतां
तेषां *बलानां चेष्टाश्च विद्यात् । १ । १९४ ।

उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ १९५ ॥

उपरुध्येत्यादि । १९५ । अरिमुपरुध्यासीत राजा * खलु आसीत अपरमः*राज्ञो राष्ट्रमुपपीडयेत् । १ ।
अस्य च परस्य राज्ञो*यवसान्नोदकेन्धनं *सततमेव दूषयेत् । २ । १९५ ।

भिन्द्याच्चैव तडागानि प्राकारान्परिखास्तथा । समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥१९६॥

भिन्द्यादित्यादि । १९६ । अस्य परस्य राज्ञस्तडागानि *भिन्द्यात्प्रकारान् भिन्द्यात्*परिखाश्च समवस्कन्दये-
दिति*समागत्य योधयेत् । १ । एनं परं राजानं वित्रासनैश्च*रात्रौ वित्रासयेदेव । २ । १९६ ।

उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् । युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥ १९७ ॥

उपजप्यानित्यादि । १९७ । अस्य परस्य राज्ञो*य उपजप्या उपमन्त्रणीयास्तान् * उपजपेदुपमन्त्रयेत् । १ ।
तत्कृतं तेनोपजपेनकृतं य*तच्चबुध्येत युक्ते च*दैवे भागधेये शुभे * जयप्रेप्सुरपेतभीःसन्युध्येत । २ । १९७

साम्ना दानेन भेदेन समस्तैरथवा पृथक्। विजेतुं प्रयतेतारीन्न युद्धेन कदाचन॥ १९८॥

सामेत्यादि॥ १९८॥ राजा प्रबलानरीन् साम्ना दानेन भेदेन वा एषां समस्तैः सामदानभेदैर्विजेतुं प्रयतेत। १। युद्धेन तान् प्रबलारीन् विजेतुं कदाचित्किन्न प्रयतेत। २। १९८। कस्मादित्यत आह अनित्य इत्यादि॥ १९९॥

अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः। पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत्॥ १९९॥

संग्रामे यस्माद् युध्यमानयोर्द्वयोः एकस्य विजयो नाम अपरस्य पराजयो दृश्यते तस्मादनित्यो विजयः पराजयश्च। १। तस्मात् प्रबलेन सह धीमान् युद्धं विवर्जयेत्॥ २॥ १९९॥

त्रयाणामप्युपायानां पूर्व्वोक्तानामसम्भवे। तथा युध्येत संयत्तो विजयेत रिपून् यथा॥ २००॥

त्रयाणामित्यादि॥ २००॥ पूर्व्वोक्तानां त्रयाणामुपायानां सामदानभेदानामसम्भवे यथा रिपून् संग्रामे विजयेत॥ २॥ तथा संयत्तः समागतवान् सन् सन्नद्धो युध्येत॥ २॥ २००॥

जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्म्मिकान्। प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च॥ २०१॥

जित्वेत्यादि॥ २०१॥ राजा पररा्ष्ट्रं जित्वा देवान् सम्पूजयेत् तथा धार्म्मिकान् ब्राह्मणांश्च भूमिगोहिरण्यादिदानेन सम्पूजयेत्॥ १॥ परिहारांश्च तद्राष्ट्रवासिभ्यो दद्यात् सर्व्वप्रजास्वभयानि ख्यापयेत्॥ २॥ २०१॥

सर्व्वेषान्तु विदित्वैषां समासेन चिकीर्षितम्। स्थापयेत्तत्र तद्वंश्यं कुर्य्याच्च समयक्रियाम्॥ २०२॥

सर्व्वेषामित्यादि॥ २०२॥ एषां सर्व्वेषां तद्राष्ट्रवासिनां समासेन चिकीर्षितं विदित्वा तत्र राष्ट्रे तस्य शत्रोर्वंश्यं राजानं कृत्वा स्थापयेत्॥ १॥ यं राजानं स्थापयेत् तेन सह समयक्रियां कुर्य्यात् यथोक्त राजधर्म्मे वर्त्तेत इत्यादिरूपां स्थितिं॥ २॥ २०२॥

प्रमाणानि च कुर्व्वीत तेषां धर्म्मान् यथोदितान्। रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह॥ २०३॥

प्रमाणानीत्यादि॥ २०३॥ तेषां तद्देशवासिनां येषां ये धर्म्मास्तान् यथोदितान् धर्म्मान् प्रमाणानि कुर्व्वीत न तदतिक्रमं कुर्य्यात्॥ १॥ एनञ्च तद्राष्ट्रेऽभिषिक्तं तद्वंश्यं तद्राष्ट्रस्थैः प्रधानपुरुषैः सह रत्नैश्च पूजयेत् न गृह्णीयात्॥ २॥ २०३॥ कस्मादित्यत आह। आदानमित्यादि॥ २०४॥

आदानमप्रियकरं दानञ्च प्रियकारकम्। अभीप्सितानामर्थानां काले युक्तं प्रशस्यते॥ २०४॥

आदानमप्रियकरं यस्मात् द्रव्यस्य परजनेन ग्रहणं तस्याप्रियकरं स्यात् यदि दीयते तत्तस्य प्रियकरं स्यात्॥ १॥ तस्मादभीप्सितार्थानां यथाकाले युक्तं दानं प्रशस्यते॥ २॥ २०४॥

सर्व्वं कर्म्मेदमायत्तं विधाने दैवमानुषे। तयोर्दैवमचिन्त्यन्तु मानुषे विद्यते क्रिया॥ २०५॥

सर्व्वमित्यादि ॥ २०५ ॥ इदं सर्व्वं कर्म्म दैवमानुषे तु विधाने आयत्तं तयोर्मध्ये दैवमचिन्त्यं मानुषे चिन्ता क्रियास्ति ॥ १ ॥ २०५ ॥ अथ विजयफलमाह । सह वेत्यादि । २०६ ।

सह वापि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः । मित्रं हिरण्यं भूमिं वा सम्पश्यंस्त्रिविधं फलम् ॥ २०६ ॥

अथवा पि स एव राजा प्रयत्नात् सन्धिं कृत्वा युक्त एव सन् व्रजेत् सन्धिं तस्य किं फलमित्यत आह । १ । त्रिविधं संग्रामफलं मित्रं हिरण्यं भूमिप्राप्तिरिति त्रिविधं फलं सन्धौ सम्पश्यन् व्रजेत् । २ । सन्धिविधाने यदा मित्रं मे भावि तदा तन्मित्रं सम्पश्यन् यदि हिरण्यादिलाभः सन्धौ तदा तत्सम्पश्यन् व्रजेत् । ३ । यदि किंयदंशं राज्ये दत्वा सन्धत्ते तदा तां भूमिं सम्पश्यन् राजा व्रजेत् । ४ । २०६ ।

पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाक्रन्दं च मण्डले । मित्रादथाप्यमित्राद्वा यात्राफलमवाप्नुयात् ॥ २०७ ॥

पार्ष्णिग्राहं चेत्यादि ॥ २०७ ॥ अरिविजिगीषया यात्रां गच्छन् पार्ष्णिग्राहं सम्प्रेक्ष्य आगच्छन् तं स्व मित्रादमित्राद्वा पार्ष्णिग्राहं चाक्रन्दं च सम्प्रेक्ष्य । १ । राजा शत्रुं यात्राफलं भूमिं प्राप्नुयात् । २०७

हिरण्यभूमिसम्प्राप्त्या पार्थिवो न तथैधते । यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥ २०८ ॥

हिरण्येत्यादि । २०८ । पार्थिवः कृशमायतिक्षमं दीर्घकालं यावत् सम्पादकं मित्रं ध्रुवं मित्रं लब्ध्वा यथैधते हिरण्यादिप्राप्त्या तथा न वर्धते । १ । २०८ । कस्मादित्यत आह । धर्मज्ञमित्यादि । १ । २०९ ।

धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च । अनुरक्तं स्थिरारम्भं लघुमित्रं प्रशस्यते ॥ २०९ ॥

यस्मात् धर्मज्ञादिलघुं च दूरमपि मित्रं सर्व्वथा प्रशस्तं । १ । २०९ ।

प्राज्ञं कुलीनं शूरं च दक्षं दातारमेव च । कृतज्ञं धृतिमन्तं च कष्टमाहुररिं बुधाः ॥ २१० ॥

प्राज्ञमित्यादि । २१० । प्राज्ञत्वादिगुणयुक्तमरिं बुधाः सर्व्वथैव कष्टमाहुः । १ । २१० ।

आर्यता पुरुषज्ञानं शौर्यं करुणवेदिता । स्थौललक्ष्यं च सततमुदासीनगुणोदयः ॥ २११ ॥

आर्यतेत्यादि । २११ । आर्यतादिरुदासीनस्य गुणोदयः बुधैः उक्तः । १ । २११ ।

क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि । परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ २१२ ॥

क्षेम्यामित्यादि । २१२ । नृप आत्मार्थं क्षेम्यादिगुणयुक्तामपि भूमिं अविचारयन् परित्यजेत् । १ । कस्मादात्मार्थमेव भूमिं त्यजेदित्यत आह ।

आपदर्थं धनं रक्षेद्दारान्रक्षेद्धनैरपि । आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २१३ ॥

आपदित्यादि । १ । २१३ । यदापत्स्यात्तदुद्धाराय धनं रक्षेत् धनैर्दारान् रक्षेत् आत्मानं विपद्भ्यः सततं दारैरपि धनैरपि रक्षेत् । १ । २१३

वाक्पारुष्यं स्तेयञ्च ॥ ६ ॥ साहसं प्रसह्य धनदारादि*हरणं स्त्रीसंग्रहणं*परपुरुषसम्पर्कः* दायभागविभागः द्यूत*मद्यक्रीडाकरणं ॥ ७ ॥ आह्वयः पणपूर्व्वकं* हस्त्यश्वमेषादिप्राणि*योधनमिताष्टादश * व्यवहारस्थितेः पदानि भवन्ति ॥ ८ ॥ ७ ॥

एषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम्। धर्मं शाश्वतमाश्रित्य कुर्यात्कार्यविनिर्णयम् ॥८॥

एष्वित्यादि ॥ ८ ॥ एषु अष्टादशस्थानेषु भूयिष्ठं *विवादं चरतां नृणां *शाश्वतं धर्ममाश्रित्य*कार्यं विनिर्णयं कुर्यात् ॥ १ ॥ ८ ॥

यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम्। तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥९॥

यदेत्यादि ॥ ९ ॥ नृपतिर्यदा स्वयं कार्यदर्शनं *न कुर्य्यात् तदा तत्कार्य*दर्शने विद्वांसं वेद*विदं ब्राह्मणं नियुञ्ज्यात् ॥ १ ॥ ९ ॥

सोऽस्य कार्याणि सम्पश्येत्सभ्यैरेव त्रिभिर्वृतः। सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥१०॥

सोऽस्येत्यादि ॥ १० ॥ नृपतिना कार्यदर्शने नियुक्तः*सर्वे द्विजब्राह्मणस्तु*त्रिभिः सभ्यैः सह श्रेष्ठां*सभां प्रविश्यासीनो वा*दण्डवत्स्थित एव वा ॥ १ ॥ प्रत्यानुपूर्व्या व्यवहारे कार्याणि*सम्यक् समालोचयेत् ॥ १० ॥ के पुनः सभ्यास्तत्राह*उच्यते ।

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञश्चाधिकृतो विद्वान्ब्रह्मणस्तां सभां विदुः ॥११॥

यस्मिन्नित्यादि ॥ ११ ॥ वेदविदस्त्रयो विप्रा यस्मिन्देशे * निषीदन्ति सन्निहिता * भवन्ति विद्वान् ब्राह्मणश्च*राज्ञा कार्ये प्रधिकृतः ॥ १ ॥ वेदविद्भिस्त्रयराजाधिकृत*विद्वद्ब्राह्मणविशिष्टा * योऽसौ देशस्तां सभां पण्डिता विदुः*स्त्वत्क्षतास्ते सभ्याः ॥ २ ॥ ११ ॥

धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते। शल्यं चास्य न कृन्तन्ति विद्धास्तत्र सभासदः ॥ १२ ॥

धर्मो विद्ध इत्यादि ॥ १२ ॥ अधर्मेण विद्धस्तु धर्मो यत्र*खलु वादानादिषु सभायां*तिष्ठते उपस्थितो भवति ॥ १ ॥ यथा धर्म्मस्य वेधकरणं शल्यं *कण्टकभूतमधर्मं *तत्राधर्मेण विद्धास्तु*सभासदो न कृन्तन्ति ॥ २ ॥ इत्यर्थो यदि पदार्थे *त्वधर्मेन न विद्धास्ते*सभासदो भवन्ति ते*चाधर्म्मं शल्यं कृन्तन्ति ॥ ३ ॥ प्रमादी वैवान्य*भावः कामस्तया च वर्त्तत इति*विद्वत्सं वृति

देवात्*सभायव्दे नाभिमतेति ॥ ४॥ तद्दसाधुयस्मिनदेशदृत्येनेन*तद्विशिष्टदेशएव*सभास्वयस्मात्सभास्वदसाधु
५॥ तस्माद्धर्म्मविद्धाःसभासदो*नसभ्याउच्यान्ते वेद*विद्रोविप्राएवसभा*उक्तानद्याधर्म्मे णाविद्धास्तेच ॥१२॥

सभांवानप्रवेष्टव्यं वक्तव्यंवासमञ्जसम् । अब्रुवन्विब्रुवन्वापि नरोभवतिकिल्बिषी ॥ १३ ॥

सभामित्यादि ।१३। यत्राधर्म्मविद्धाःसभासदःसन्ति*तां सभां धार्म्मिकेणप्रवेष्टव्यं*भावेतव्यःप्रत्ययोऽयं।१।
यदिकश्चिद्धार्म्मिकः * सासभाप्रविष्टाचस्या * तदातेःसमञ्जसमेवक्तव्यं * नत्वसत्यंवर्णितव्यं ॥ २ ॥
कस्मात्सभां प्रविश्याधार्म्मिको*नरोनब्रुवन्विब्रुवन् * ब्रुवन्वाकिल्बिषीभवेत् । २ । १३ । कस्मादेवंस्यादि
त्यत्र्याह । यत्रेत्यादि । १४ ।

यत्रधर्म्मोह्यधर्म्मेण सत्यंयत्रानृतेनच । हन्यतेप्रेक्षमाणानां हतास्तत्रसभासदः ॥ १४ ॥

सभागताहिसभासदोभवन्ति*तेषां प्रेक्षमाणानान्तुसमक्षं यत्राधर्म्मेण * धर्म्मोहन्यते सत्यम*पानृतेनहिंस्य
न्ते । १ । ते सभासदोहताःभवन्ति*तस्मात्समक्षसंवाच्यं ।२ १४। कस्मादित्यत्राहधर्म्मएवेत्यादि ॥१५ ॥

धर्म्म एवहतोहन्तिधर्म्मोरक्षतिरक्षितः । तस्माद्धर्म्मोनहन्तव्योमानोधर्म्मोहतोवधीत् ॥ १५ ॥

येषां समक्षे धर्म्मोहतःस्याद्धर्म्म*स्तान्हन्तितैःरक्षित*स्तान्रक्षतितस्माद्धर्म्मोनहन्तव्यो*धर्म्मोहाहतोनोऽस्मान्
मावधीत । १ । १५ । अपरश्चाहवृषोहीत्यादि । १६ ।

वृषोहिभगवान्धर्म्मस्तस्ययःकुरुतेह्यलम् । वृषलंतंविदुर्देवास्तस्माद्धर्म्मंनलोपयेत् ॥ १६ ॥

भगवान्वृषपरमात्माणिवोहि*धर्म्मस्तस्ययोऽलंवार्य्यं कुरुतेतंदेवावृष* स्यालमितिवृषलं*शूद्रं विदुर्धर्म्म
लोपात् । १ । तस्माद्वृषलत्वप्राप्तिदोषभया* द्धार्म्मिकोधर्म्मं नलोपयेत् ।२।१६। वृषलत्वप्राप्तौकाद्धानिर्भवतो
*त्यतआहैकएवेत्यादि । १ । १७ ।

एकएवसुहृद्धर्म्मो निधनेऽप्यनुयातियः । शरीरेणसमंनाशंसर्व्वंमन्यद्धिगच्छति ॥ १७ ॥

एकएवधर्म्मोलोकानांसुहृद्*भवतियोनिधने पादयाति*द्वियस्मात्सर्व्वमन्यदन्यतस्याद * शरीरेणसहनाशं
गच्छति ॥ १ । १७ । नन्वयस्तुविचारकःस्यात्*इविचारेतस्यैवाधर्म्मोभवेत् * किंसभासदांत्याद्दित्य * तत्राह
पादइत्यादि । १ । १८ ।

पादोऽधर्म्मस्यकर्त्तारंपादःसाक्षिणमृच्छति.पादःसभासदःसर्व्वान्पादोराजानमृच्छति१८

व्यवहारस्याविचारे*यस्तु धर्मोभवति तत्*सर्वाधर्मस्य पादश्चतुर्थांशः*कर्त्तारं विचारकं अन्यं गच्छति ।१। पादः साक्षिणमनृतवादिनं याति*पादः सर्व्वान् सभासदो विद्र् वत*श्चाब्रु वतश्च गच्छति* पादोराजानं गच्छति*तस्मात् सम्यक् संवाच्यम् ।२।१८। मनुसमर्थवचने पियदि*विचारकोऽसमर्थाज्ञ्यं ।*तदासभासदां समर्थसवाक्ये *पाधर्म्मा प्राप्तिर्भवेत् ।१। किं स्यात्सम्यक् तद्वचनं नतेषा*मितातयाह । राजेत्यादि ।२।१९।

राजाभवत्यनेनास्तु मुच्यन्ते चसभासदः। एनोगच्छतिकर्त्तारं निन्दार्हो यत्रनिन्द्यते॥ १९॥

यत्रविचारालये पुरा राजाविचारे*साक्षिसभासद्‌समक्षे *निन्दार्हो हिविचारक*एवनिन्द्यते धर्मतः ।१। तं विचारकं कर्त्तारं*मे नोगच्छति राजास्यतेनाःस्यात्*सभासदः साक्षिणश्च*पापान्मुच्यन्ते ।१।१९।

जातिमात्रोपजीवीवाकामं स्याद्ब्राह्मणब्रुवः। धर्म्मप्रवक्तानृपतेर्नतु शूद्रःकदाचन॥ २०॥

नतुधर्म्मोविद्यते धर्म्मोऽस्तीति*तत्‌वचनं नाध्यापनीयं ।१। सर्व्ववर्णानांधर्म्मणां विचारएव*धार्म्मिकाविद्वांसः सभा*सदोधर्म्मप्रवक्तारः*भवितुम्हं शूद्रोपि*किं धर्म्मप्रवक्तासभासत्स्यात् ।२। तत्रोच्यते *जातिमात्रोप*जीवी*त्यादिश्लोकं ।१।२०। जातिमात्रोपजीवी*य:सम्यग्ब्राह्मणउक्तः * सोपिकामं नृपतेरिच्छयाधर्म्मप्रवक्ता स्यात्।१। यथवाब्राह्मणब्रुवो*योगर्भाधानादिसंस्कारवर्जो*नाध्यापयतिनाधीते *सोपिनृपतेःकाममिच्छतां*धर्म्मप्रवक्तास्यान्नतु*शूद्रःकदाचधर्म्मप्रवक्तास्यादिति ।१। शूद्रप्रतिषेधं नविद्वान्ब्रवियां*वैश्यायाप्रतिसिद्धःस्यात्।१।२०।

यस्यशूद्रस्तुकुरुते राज्ञो धर्म्मविचारणम् । तस्यसीदतितद्राष्ट्रं पङ्केगौरिवपश्यतः॥ २१॥

यस्येत्यादि ।२१। यस्यराज्ञोधर्म्मविचारणं शूद्रः*कुरुते तस्यपश्यतस्तद्राष्ट्रं*पश्यतःस्वामिनोगौः* पङ्के इवसीदतीति ।१।२१।

यद्राष्ट्रं शूद्रभूयिष्ठं नास्तिकाक्रान्तमद्विजम्। विनश्यत्याशुतत्कृत्स्नं दुर्भिक्षव्याधिपीड़ितम् २२

यद्राष्ट्रमित्यादि ।२२। राज्ञोयद्राष्ट्रं शूद्रभूयिष्ठं नास्ति*काक्रान्तं द्विजहीनञ्च * तत्तत्सर्वराष्ट्रं दुर्भिक्ष* व्याधिपीड़ितं सदे वाशुविनश्यति ।१।२२।

धर्म्मासनमधिष्ठायसंवीताङ्गःसमाहितः। प्रणम्यलोकपालेभ्यःकार्यदर्शनमारभेत् ॥ २३ ॥

धर्म्मासनेत्यादि।२३। राजाधर्म्माधिकर्तावा*धर्म्मासनमधिष्ठाय * संवीताङ्गोवस्त्रावृत* शरीरःसन्लोकपालेभ्यः*प्रणम्यकार्यदर्शनमारभेत् ।१।२३।

अर्थानर्थावुभौबुद्ध्वाधर्म्माधर्म्मौ चकेवलौ। वर्णक्रमेणसर्व्वाणिपश्येत्कार्याणिकार्यिणाम् २४

अर्थानर्थावित्यादि ।२४। राजाधर्म्माधिकर्त्तावाकार्यिणां वर्णानुक्रमेण ब्राह्मणा*दिक्रमेणकार्याणि*वाअर्थानर्थौ तन्मौचधर्म्माधर्म्मौ*बुद्ध्वा सर्व्वाणिपश्येत्।१।२४।

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्। स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥२५॥

बाह्यैरित्यादि। २५। नृणां कार्य्यसान्द्रष्टा विचारको * नृणां साक्षिणां कार्य्यिणाञ्चान्तर्गतं * भावं बाह्यैर्लिङ्गैः स्वर * वर्णेङ्गिताकारैरेवं। १। चक्षुषा चेष्टितेन च स्वसमावुद्ध्या * नुमानेन विभावयेत्। २। २५।

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च। नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ २६ ॥

आकारैरित्यादि। २६। नृणामन्तर्गतं मन * आकारादिभिर्लक्षणै * र्बुद्धिमता गृह्यते। १। २६।

बालदायादिकं रिक्थं तावद्राजानुपालयेत्। यावत्स स्यात्समावृत्तो यावच्चातीतशैशवः ॥२७॥

बालेत्यादि। २७। बालस्य पितरि मृते * मृतायाञ्च मातरि यत् * पित्रमातृसम्बन्धिरिक्थमन्यप्राप्तं * येषां मृतानां धनाधि * कारी नायं बालो भवेत्। १। तद्रिक्थं बालदायादिकं राजा त * त्तावत्कालमनुपालयेत्। २। स बालो यावत्कालं स * ब्रह्मचर्य्यं चरित्वैव * समावृत्तः स्यात् समावृत्तोपि स * द्विजबालः शूद्रबालश्च यावच्चातीतशैशवः * षोडशवर्षातीतवयस्कः स्यात् * तावत्तद्रिक्थं राजानुपालयेत्। ४। यदि कश्चिन्नाधीयीत * बालोऽर्व्वाक् षोडशवर्षात् * वयसोर्वेदमेकमधीतोऽपि * समावृत्तः स्यात्तदर्थं। ५। शूद्रबालकधनरक्षार्थं * दमतीतशैशवइति पुनरुक्तं। ६। २७। अपरञ्च

वशाऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च। पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥ २८ ॥

वशेत्यादि ॥२८॥ वशा वन्ध्यास्त्रीयस्या अपत्यसम्भवो नास्ति * अपुत्रा मृतपुत्राः। १। निष्कुलसपिण्डहीनाः पतिव्रताया स्त्रियां * विधवाया आतुरायाश्च तावद्धनं राज्ञा रक्षणं स्यात्। २। २८।

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः। ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥२९

जीवन्तीनामित्यादि। २९। जीवन्तीनां तासां वशादीनां स्त्रीणां * तद्रिक्थं ये स्वबान्धवा * उत्तराधिकारिणोपि * हरेयुर्धार्म्मिको राजा * तांश्चौरदण्डेन शिष्यात्। १। यस्तु यावद्रिक्थं हरेत् स यावच्चौरस्य यो दण्डस्तेन दण्डेन शिष्यात्। २। २९।

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्। अर्व्वाक् त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ॥ ३० ॥

प्रणष्टेत्यादि ॥ ३० ॥ यस्य विक्थस्य स्वामी नष्टस्तद्रिक्थं * राजा वर्षत्रयं निधापयेत् * स्थापयेद्रक्षेत्। अब्दत्रयमध्ये * रिक्थस्वामी यः स तद्धनं हरेत् ॥ १ ॥ वर्षत्रयादूर्ध्वं राजा तद्धनं हरेत् * यदा यदि तत्स्वामी त्वागच्छेत् स तत्प्राप्नुयात् । २ । ३० ।

ममेदमिति योब्रूयात्सोऽनुयोज्यो यथाविधि । संवाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति॥३१

ममेदमित्यादि ॥ ३१ ॥ सर्वाङ्कत्वादुदयः कश्चिदागत्य * ममेदं रिक्थमिति ब्रूयात् * स यथाविधानर्योज्यः * स्वस्य रिक्थस्य रूपादीन्जिज्ञासः ॥ १ ॥ तान्संवादकथयित्वा तत्स्वामी सम * स्तद्द्रव्यं नेतुमर्हति ॥२॥३१ ॥

अवेदयानो नष्टस्य देशं कालञ्च तत्त्वतः । वर्णं रूपं प्रमाणञ्च तत्समं दण्डमर्हति ॥ ३२ ॥

अवेदयानइत्यादि ॥ ३२ ॥ नष्टस्य स्वामिनो देशादीं स्तत्त्वतो * ऽज्ञापयन्वर्णादीं श्चाज्ञापयन्सद्भि * तत्सम समं दण्डमर्हतीति ॥ १ ॥ ३२ ॥ नतु राजा तद्रिक्थं य * वायद्रव्यं रक्षेत् न हि धर्मार्थं मे वाथ किं * लाभार्थमित्यत आह *आददीतेति तामेनोभयार्थं मेवेति ॥ १ ॥ ३३ ॥

आददीताथ षड्भागं प्रणष्टाधिगतान्नृपः । दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ ३३ ॥

अथ प्रनष्टाधिगतात् * प्रणष्टस्वामिकं रिक्थं * राज्ञा रक्षितमब्दत्रयात् तद्रिक्थं * स्वामिनैवागतादर्श * कालादिसर्वमावेद्य ॥ १॥ षड्भागमथास्मद्रिक्थात्षड्भागादिकं * सतां धर्ममनुस्मरन्नाददीत * तदवशिष्टं तत्स्वामिने प्रदद्यात् ॥ २ ॥ भागविकल्पस्तु द्रव्यमाधिक्येन * भिप्रायेण गुणसन्त * रिक्थात्षड्भागं वैश्यस्य * दशमं भागं क्षत्रियस्य * द्वादशमाददीत ब्राह्मणस्य नाददीत ॥ ३ ॥ ३३ ॥

प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् । यांस्तत्र चौरान्गृह्णीयात्तान्राजेभेन घातयेत् ३४

प्रणष्टाधिगतमित्यादि ॥ ३४ ॥ प्रणष्टाधिगतं द्रव्यं राज्ञा युक्तै * र्नियुक्तैर्जनै रधिष्ठितं सन्तिष्ठेत् * तत्र द्रव्ये चौरान्यान्राज * पुरुषो गृह्णीयात्तं ॥ १ ॥ राजा तांश्चौरानिभेन हस्तिनैव * हस्त्यादिना घातयेन्मारयेत् ॥ २॥३४ ॥

ममायमिति योब्रूयान्निधिं सत्येन मानवः । तस्याददीत षड्भागं राजा द्वादशमेव वा ॥ ३५ ॥

ममायमित्यादि ॥ ३५ ॥ निधिर्भूम्यादावन्तर्निहितं धनं * स्वामिरक्षितं केनचि * द्यदृच्छापाते निधिं * ममायमिति सत्येन * वाक्येन ममायं नच ॥ १ ॥ यो मानवो ब्रूयात्तस्य * निधेः षड्भागं वैश्याच्छूद्राच्च राजा * क्षत्रियाद्वा द्वादशं भागमाददीत * नब्राह्मणस्य गृह्णीयात्तिर्यगुणविशिष्टेषु । २ । ३५ ।

अन्नृतन्तु वदन्दण्ड्यः स्ववित्तस्यांशमष्टमं। तस्यैव वा निधानस्य सङ्ख्यायाल्पीयसीं कलाम् ॥३६॥

अनृतन्त्विति। ३६॥ अनृतन्तु वदन्स निधिलिप्सुः स्ववित्तस्याष्टमभागं राज्ञा दण्ड्यः स्यादथवा। १। तस्यैव निधानस्य निधेः स्वल्पीयसीं कलां भागं सङ्ख्याय दण्ड्यो भवति। २। ३६।

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्व्वोपनिहितं निधिम्। अशेषतोऽप्याददीत सर्व्वस्याधिपतिर्हि सः ॥३७

विद्वांस्त्विति॥ ३७॥ विद्वान्ब्राह्मणः पूर्व्वोपनिहितं निधिं दृष्ट्वा सर्व्वमेव निःशेषतयाददीत सर्व्वस्मात् सर्व्वस्य जगतोऽधिपतिः। १। ३७।

यस्तु पश्येन्निधिं राजा पुराणं निहितं क्षितौ। तस्माद्द्विजेभ्यो दत्त्वार्द्धमर्द्धं कोषे प्रवेशयेत्॥३८

यस्त्विति। ३८। यस्तु राजा क्षितौ निहितं पुराणं निधिं स्वयं पश्येत् स तस्मान्निधेरर्द्धं ब्राह्मणेभ्यो दत्त्वा स्वकोषेऽर्द्धं निवेशयेत्। १। ३८।

निधीनान्तु पुराणानां धातूनामेव च क्षितौ। अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः॥३९॥

निधीनामित्यादि। ३९। धातूनां स्वर्णादीनां निधीनां क्षितौ स्थितानां पुराणानामन्येषां अर्द्धभाग्राजा भवति रक्षणात्तु यस्मात्स राजा भूमेरधिपतिः ख्यातो ह्यर्द्धभाक्स्यात्। १। ३९।

दातव्यं सर्व्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम्। राजा तदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम्॥४०॥

दातव्यमित्यादि। ४०। सर्व्ववर्णानां येषां चौरैरपहृतं धनं चौरेभ्य आहृत्य तेभ्यः सर्व्ववर्णेभ्यो राज्ञा दातव्यं राजा तच्चौराद्धृतं स्वयमुपयुञ्जानश्चौरस्य तस्य किल्बिषं पापमाप्नोति। १। ४०।

जातिजानपदान्धर्म्मान्श्रेणीधर्म्मांश्च धर्म्मवित्। समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं तु प्रतिपादयेत्॥४१

जातीत्यादि ।४१। धर्म्मविद्राजा ब्राह्मणक्षत्रियवैश्यशूद्राणां जातिधर्म्मान्जानपदधर्म्मान् श्रेणीधर्म्मान् कुलधर्म्मांश्च समीक्ष्य तस्य तस्य धर्म्मं प्रतिपादयेत्। १। ४१।

स्वानि कर्म्माणि कुर्व्वाणा दूरे सन्तोऽपि मानवाः। प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्यवस्थिताः॥४२

स्वानीत्यादि। ४२। मानवाः स्वानि कर्म्माणि कुर्व्वाणाः स्वस्वे कर्म्मण्यवस्थिता दूरे सन्तोऽपि लोकस्य प्रिया भवन्ति नाप्रियाः। १। ४२।

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः । न चाप्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥ ४३ ॥

नोत्पादयेदित्यादि । ४३ । मानवो यदि स्वं स्वं कर्म न कुर्यात्* तदा मानवस्य कार्यं * राजा राज्ञः पुरुषो वा* न स्वयमुत्पादयेत् । १ । अन्येन प्रापितमर्थं *सखे दत्तं ग्राममनाः* कथञ्चन नैव ग्रसेत् ॥ २ ॥

यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् । नयेत्तथानुमानेन धर्मस्य नृपतिः पदम् ॥ ४४ ॥

यथेत्यादि । ४४ । मृगयुर्व्याधो यथा मृगस्यासृक्*पातैस्तं मृगस्य पदं स्थानं * नयति तथानुपलिङ्गानवत्धर्मस्यात्मानेन* तं मानवं पदं स्वधर्मं नयेत् । १ । ४४ ।

सत्यमर्थञ्च सम्पश्येदात्मानमथ साक्षिणः । देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥ ४५ ॥

सत्यमर्थञ्चेत्यादि ॥ ४५ ॥ व्यवहारविधौ स्थितो* राजा सत्यमर्थमात्मानं साक्षिणो * देशं रूपं कालञ्च सम्पश्येत् ॥ १ ॥ ४५ ॥ तत्संदृश्य यत्कार्यं तदाह सद्भिरित्यादि ॥ १ ॥ ४६ ॥

सद्भिराचरितं यत्स्याद्धार्म्मिकैश्च द्विजातिभिः । तद्देशकुलजातीनामविरुद्धं प्रकल्पयेत् ॥ ४६ ॥

धार्म्मिकैः सद्भिर्द्विजातिभि*राचरितं यत्स्यात्तद्देश*कुलजातीनामविरुद्धं *प्रकल्पं राजा कल्पयेत् ॥१॥४६॥ इति व्यवहारदर्शने प्रवृत्ते* मानसाराघ्रइतिकर्त्तव्यता*मुक्त्वा दृष्टिकृणादानमाह ॥ १ ॥ अधमर्णेत्यादि ॥ ४७ ॥

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः । दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

उत्तमर्णऋणदाता* तेन चोदितो भो राजन्* मह्यमयं शतमेकं * रजतमुद्राणां चिरं धारयति ॥ १ ॥ न स मह्यं प्रतियच्छतीति तच्च* दापयितुं निवेदया * नीतौ वं प्रेरितो राजा ॥ १ ॥ धनिकस्यातमर्थं प्रमाणेन* विभावितमधमर्णा*दादायतस्मै तं दापयेत् । २ । ४७ । कथं दापयेदित्यत आह यैर्यैरित्यादि । १ । ४८ ।

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः । तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥ ४८ ॥

उत्तमर्णो यैर्यैर्विचारान्तरविक्र*यादिभिरुपायैः स्वं त *मर्थं प्राप्नुयात्तैस्तैर् * तौपायैरर्थं संगृह्य*तमधमर्णं दापयेत् । १ । ४८ । कथमुत्तमर्णस्तत्स्वं *धनमधमर्णात्स्वयं साधयेदित्यत आह । धर्मेणेत्यादि ।१। ४९

धर्म्मेण व्यवहारेण छलेनाचरितेन च । प्रयुक्तं धारयेदर्थं पञ्चमेन बलेन च ॥ ४९ ॥

उत्तमर्णो नयदधमर्णो धनं *प्रयुक्तमृणं दत्तं तद्धर्मेण सुहृदादिवचनेन*सउत्तमर्णः साधयेत् । १ । आददात् उत्तमर्णः बृहस्पतिना * छलक्रमस्यापि सन्दिष्टैः सामप्रागमेन च । मायेणवा ऋणीदापयो धर्म्मएष उदाहृत

स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा। शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ ७० ॥

स्त्रियं तादि। ७०। स्त्रीणां विवादे साक्ष्यं स्त्रियामाचाकार्यं * स्त्रियोपाकम्भवे रुति * बालादिभिः साक्ष्यं कार्यं। १। ७०।

बालवृद्धातुराणाञ्च साक्ष्येषु वदतां मृषा। जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥ ७१ ॥

बालेत्यादि। ७१। साक्ष्ये पुवदतां बाल * वृद्धातुराणां वचनं * मृषा जानीयादुत्सिक्त * मनसामस्थिरचित्त नेतत्समनसां * वाचं मृषा जानीयात् ॥ १ ॥ ७१ ॥

साहसेषु च सर्व्वेषु स्तेयसंग्रहणेषु च। वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ ७२ ॥

साहसेष्वित्यादि। ७२। गृहदाहादिषु साहसीर्ने पुरुषेषु * संग्रहणे पुंचौरग्रहणेषु च * वाक्पारुष्ये दण्डपारुष्ये च न * साक्षिणः परीक्षेत तदुक्ता न्यतदग्राह्यं ॥ १ ॥ ७२ ॥

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ७३

बहुत्वमित्यादि ॥७३॥ नराधिपः साक्षिणां साक्ष्यवाक्यमा * द्वैधे द्विप्रकारे भूते * बहुत्वं बहूनां साक्षिणां यत्तद्वा * वाक्यं तत् परिगृह्णीयात् ॥ १ ॥ समेषु साक्षिषु द्वैधे * सति वाक्यं गुणोत्कृष्टान् परिगृह्णीयात् * गुणिद्वैधे द्विजोत्तमान् * परिगृह्णीयात् तद्वैधे गुणोत्कृष्टान्। २। ७३। न न साक्षिणः साक्षित्वं किन्त्वादि * तान तथाह समक्षेत्यादि ॥ १ ॥ ७४ ॥

समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्ध्यति। तत्र सत्यं ब्रुवन् साक्षी धर्म्मार्थाभ्यां न हीयते ॥७४॥

समक्षं चक्षुषा दर्शनादिभ्यां * कृतानां तत्तद्वाक्यप्रतिवाक्यानां * श्रवणाच्च साक्ष्यं साक्षिणां सिद्ध्यति ॥ १ ॥ सत्परस्त्वात्तत्तद्वाक्यप्रति * वाक्यानां श्रवणात् साक्ष्यं * साक्षिणां सिद्ध्यतीति ॥ २ ॥ तत्र साक्षी * सत्यं ब्रुवन् * धर्म्मार्थाभ्यां * न हीयते। ३। ७४ अनृतवचने तु * दोषमाह। साक्षीत्यादि ॥ १ ॥ ७५ ॥

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि। अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥७५॥

साक्षी स्वचक्षुषा यथा * दृष्टं स्वकर्णेन यथा * श्रुतं तद्वाक्यमन्यत्प्रतिप्रानमना * दार्य्याणां साधूनां * विप्राणां संसदि विब्रुवन् ॥१॥ प्रेत्य नरकमवाङ्भ्येति स्वर्गाच्च * हीयते न स्वर्गं याति ।७५।

यत्रानिबद्धोऽपीक्षेत शृणुयाद्वापि किञ्चन। पृष्टस्तत्रापि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥७६॥

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्भृशम् । विवशः शतमाजातीस्तस्मात्साक्ष्यं वदेदृतम ॥ ८२ ॥

साक्ष्येऽनृतमित्यादि । ८२ ॥ साक्ष्ये साक्षी अनृतं वदन् विवशः * शतमाजातीः जातीः शतं * जन्मपर्यन्तं परवशः वारुणैः पाशैर्भृशं दृढं * बध्यते तस्मादृतं वदेत् । १ । ८२ । सत्यमेव * नास्ति [illegible] * [illegible] * सत्येने त्यादि । १ । ८३ ।

सत्येन पूयते साक्षी धर्मः सत्येन वर्द्धते । तस्मात्सत्यं हि वक्तव्यं सर्व्ववर्णेषु साक्षिभिः ॥ ८३ ॥

साक्षी सत्येन वचनेन * साक्षी धर्म्म [illegible] वर्द्धते तस्मात् * सर्व्ववर्णेषु साक्षिभिः * सत्यं वक्तव्यमिष्ट [illegible] । १ । ८४ ।

आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः । मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ८४

आत्मैवेत्यादि । ८४ । [illegible] आत्मनः साक्षी [illegible] गतिरात्मा [illegible] नृणां साक्षिणमुत्तमम् । १ । [illegible] तथात्मानं [illegible] साक्षी [illegible] । २ । आत्मनः * आत्मा गतिः * [illegible] [illegible] धर्म्मं [illegible] । ३ । नृणामुत्तमं [illegible] स्वं [illegible] । १ । ८४ ।

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः । तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥ ८५ ॥

मन्यन्त इत्यादि । ८५ । कश्चिन्नोऽस्मान्न पश्यति [illegible] * [illegible] पापकृतो मनुष्याः देवास्तु * तान् प्रपश्यन्ति स्वस्यैवान्तरपूरुषश्च पश्यति । १ । ८५ ॥ [illegible] देवाः के [illegible] * आह द्यौर्भूमिरित्यादि । १ । ८६ ।

द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः । रात्रिः सन्ध्ये च धर्म्मश्च वृत्तज्ञाः सर्व्वदेहिनाम् ८६

द्यौरित्यादयो देवताः * सर्व्वदेहिनां वृत्तज्ञाः * आसां देवतानां समस्तं विज्ञानं * कोऽपि किञ्चित्कर्त्तुं न क्षमः । १ । ८६ । साक्ष्य करणप्रकारमाह * देवब्राह्मणेत्यादि । १ । ८७ ।

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् । उदङ्मुखान् प्राङ्मुखान् वा पूर्व्वाह्णे वै शुचिः शुचीन् ॥ ८७ ॥

वाक्गिरास्तमस्यन्धे किल्बिषीनरकं व्रजेत्। यः प्रश्नं वितथं ब्रूयात् पृष्टः सन् धर्मनिश्चये ॥९४॥

अवागितादि। ९४। यः साक्षी धर्मनिश्चये *क्रियमाणे प्रश्नं पृष्टः * सन् वितथं मिथ्या ब्रूयात् स किल्बिषी * तानावाक्गिराः स्मन्धे * तमसि नरके व्रजेत् । १ । ९४ । अपरञ्च ।

अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैः सह । यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥९५॥

अन्धइत्यादि । ९५ । यः साक्षी सभां गतः सन् *प्रत्यक्षमप्रत्यक्षमर्थं *पृष्टोऽर्थवैकल्यं मिथ्या * भाषते स नरो यथा * ... सहान्धो मत्स्यान् * नश्नाति तथा मिथ्या सह भाषते । १ । ९५ । अतो बमानमाह

यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते । तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥९६॥

यस्येत्यादि । ९६ । यस्य सर्वं प्राक्हृदि निर्मलं * विशदरूपो वर्त्तते *सत्यवचनं वदत आत्मा * विद्वान् यस्य साक्षी वद* नाभिशङ्कते निरभिशङ्कः स्यात् । १ । देवास्तस्मात् अन्नादन्यं पुरुषं * लोके ऽस्मिन् श्रेयांसं विदुः ।१।९६।

यावतो बान्धवान् यस्मिन् हन्ति साक्षी ऽनृतं वदन् । तावतः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्व्वशः ॥९७

यावन्तइत्यादि । ९७ । साक्षी वक्ता यस्मिन् वस्तुन्यनृतं * वदन् यावतो बान्धवान् * हन्ति तावतः सङ्ख्यया * ... स्मिन् वस्तुन्यानुपूर्व्व्यशः सौम्य शृणु । १ । ९७ ।

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते । शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ९८ ॥

पञ्चेत्यादि । ९८ । पशुविषयेऽभियोगे *यदानृतं साक्षी ब्रूयात् *तदा तस्मिन्ननृते तस्मै *पञ्च पश्वान्धवान् हन्ति । १ । गवानृते दशबान्धवान् हन्ति* अश्वानृते शतं बान्धवान् हन्ति* पुरुषानृते सहस्रं * बान्धवान् मिथ्यो.....न्ति ॥ २ ॥ ९८ ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् । सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वादीः ॥ ९९ ॥

हन्तीत्यादि । ९९ । साक्षी हिरण्याभियोगे *मिथ्या वदन् *जातानजातान् *बान्धवान् हन्ति भू*म्यभियोगे नृते तस्मै सर्वं हन्ति*तस्माद् भूम्यनृतं मा स्म वादीः ॥ १ ॥ ९९ ॥

अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने । अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च ॥ १००॥

अप्स्वित्यादि । १०० । अप्स्वप्यादिष्वभियोगेऽनृते *भूमिवत् सर्व्वं हन्तीत्यादिधर्मं* विदः परस्त्रीणां

भागे मे यूने च॥१॥ पञ्चे पुरले मुक्तादिपुत्रश्च*पाषाणमये पुमरकतादिषु*रत्ने एवं नृते भूमिवत्सर्व्वं हन्ति॥१॥१००

एतान्दोषानवेद्य त्वं सर्व्वाननृतभाषणे । यथाश्रुतं यथादृष्टं सर्व्वमेवाञ्जसावद ॥ १०१ ॥

एतानित्यादि ॥ १॥ हे कल्याणसाक्षिन् अनृतभाषणे त्वं*एतान् सर्व्वान् दोषानवेद्य ज्ञात्वा यथाश्रुतं यथादृष्टं सर्व्वमेवाञ्जसावद ॥ १ ॥ १०१ ॥

गोरक्षकान्वाणिजकांस्तथाकारुकुशीलवान्। प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान्शूद्रवदाचरेत्॥१०२॥

गोरक्षेत्यादि ॥ १०२ ॥ गोरक्षकादीन् ब्राह्मणान् *साक्षी शूद्रवदाचरेत्*ब्रह्मघ्नता दृष्टैःखु*सर्व्वैः पातकैः ग्राविर्तैः ॥ १ ॥ १०२ ॥ तदव्रभिन्नादिनाधर्माणामनुज्ञायां * मिथ्यासाक्ष्यभाषणे * दोषाभाव चाहे ॥ १ ॥ १०१ ॥

तद्वदन् धर्म्मतोऽर्थेषु जानन्नप्यन्यथानरः । नस्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ॥१०३॥

यर्थेषुपन्यासार्थेषु शूद्रादि*प्राणवधकरणेषु* धर्म्मतो जानन्नपि तं वदन्नन्यथावदन्नरःस्वर्गात् *लोकान्नच्यवते एव ॥ १ ॥ कस्मादित्यतउच्यते*दैवीं वाचं वदन्तितां*मितिसाक्षिवाग दैवीति*धर्म्मविरोधवदन्तीति ।२।१०३ के षुर्थे पित्यतआह* ॥

शूद्रविट्क्षत्रविप्राणां यत्रर्त्तोक्तौ भवेद्वधः । तत्रवक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥ १०४ ॥

शूद्रेत्यादि । १ । १॥१०४। यत्राभियोगे कर्त्तोक्तौ*शूद्रविट्क्षत्रविप्राणां *सदुक्तानां प्रमादात्स्खलनात् कर्म्मकर्तवतां वधः*प्राणनाविनाशोभवेत् । १ । तत्रसाक्षिभिर्यथार्थं प्राणे रक्षासादर्थं वानृत*मवश्यं वक्तव्यमात् ॥२॥ तद्धि यस्मात्प्राणरक्षाकृदनृतं *प्राणवधकारिसत्याद्विशिष्यते *प्राणवधकारिपापाद्धि प्राणरक्षा*कृतं पापं लघु स्यादितिभावः । ३ । चौरदस्युप्रभृतिना* सर्व्वप्राणिहिंसकानां *शूद्रविट्क्षत्रविप्राणां *बधार्ह कर्म्मकृता म*वधार्हकर्म्मणिसाक्षी *नैवानृतं वक्तव्यं स्यात् । ४ । गौतमेनाप्युक्तं हि*नानृतवदने दोषो यज्जीवनञ्चेद्धीनं*नपापीयसोजीवनम् ॥ ५ ॥ १०४ ॥ तदनृतवचने पापप्रायश्चित्तमाह ।

वाग्दैवतैश्चरुभिर्यजेरंस्ते सरस्वतीम् । अनृतस्यैनसस्तस्य कुर्व्वाणानिष्कृतिं पराम् ॥ १०५॥

वाग्दैवतैश्चेत्यादि । १ । १०५। तस्यानृतस्यैनसः परां निष्कृतिं*कुर्व्वाणास्ते साक्षिणोवा*ग्दैवतैश्चरुभिर्देवीं सरस्वतीं यजेरन् । १ । १ । १०५।

लोभादित्यादि । ११८ । लोभादितीयत्साक्ष्यं साक्षिभि * दृष्यते तदितय स्यात् । १ । ११८ । तद्दण्डं वक्तुं प्रति * जानीते ॥

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् । तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्व्वशः ॥११९ ॥

एषामित्यादि । १ । ११९ । स्पष्टार्थोऽयं श्लोकः । ११९ । लोभादितः साक्ष्ये ऽवधर्म्मे दण्ड * माह ।

लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्व्वन्तु साहसम् । भयाद्द्वौ मध्यमौ दण्डौ मैत्रात्पूर्व्वं चतुर्गुणम् १२०

लोभादित्यादि । १ । १२० । यथ प्राप्तिलोभात्साक्ष्यं * ब्रुवन्साक्षीपणानां सहस्रं दण्ड्यः स्यात् * साक्षा कथा तास्तासाम् * धर्म्मशास्त्रे कल्पनीया निवर्त्तन्ते । १ । तानियथासम्भवं कल्पयेत्पण * साक्ष्यादिमानं ब्रवीत । २ । मोहात्साक्ष्यं ब्रुवन्साक्षी * पूर्व्वं प्रथम साहसं * दण्ड्यो भवतिभयात् * मिथ्यासाक्ष्यं ब्रुवन् साक्षी द्वौमध्यमौसाहसौ दण्ड्यो भवति ॥ ३ ॥ मैत्रात्मित्रतासाक्ष्यं ब्रुवन्साक्षी * चत्वारिप्रथमसाहसानि दण्ड्यो भवेत् ॥ ४ ॥ १२० ॥

कामाद्दशगुणं पूर्व्वं क्रोधात्तु त्रिगुणं परम् । अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥१२१॥

कामादित्यादि । कामान्मिथ्यासाक्ष्यं ब्रुवन् * साक्षीदशप्रथमसाहसानि दण्ड्यः स्यात् ॥ १ ॥ क्रोधान्मिथ्यासाक्ष्यं ब्रुवन् * साक्षीत्रिगुणं प्रथम * साहसं दण्ड्यः स्यादज्ञानान्मिथ्या * साक्ष्यं ब्रुवन्साक्षी । पणे * द्वे शते पणानां दण्ड्यः ॥ २ ॥ बालिश्याद्दुर्भावान्मौर्ख्याग्निथ्या * साक्ष्यं ब्रुवन्साक्षीपण * शतमेव दण्ड्यो भवेत् ॥ ३ ॥ १२१ ॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः । धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च १२२

एतानित्यादि ॥ १२२ ॥ मनीषिभिः कौटसाक्ष्ये प्रोक्तान्दण्डान् * नेतान्धर्म्मस्याव्यभिचार * दोषार्थं मधर्म्मनियमाय च * सर्व्वमस्पष्टं यथाहुः । १ । १२२ ।

कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन्वर्णान्धार्म्मिको नृपः । प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत् १२३

कौटसाक्ष्यन्त्वित्यादि । १२३ । धार्म्मिको नृपः कौटसाक्ष्यं कुर्व्वाणां * स्त्रीन्वर्णान्क्षत्रियवैश्य * शूद्रान् दं वक्ष्यमाणं दण्डं * दण्डयित्वा स्वराज्यात्प्रवासयेत् । १ । ब्राह्मणन्तु कौटसाक्ष्यं * कुर्व्वाणं स्वराज्याद्विवासयेत् अथ * दं वक्ष्याने यदण्डयेत् । २ । १२३ । अथदं दण्डस्थानानिधामितानाह * ।

दशस्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् । त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥१२४॥

दशस्थानानीत्यादि ॥ १ ॥ १२४ ॥ त्रिषु वर्णेषु क्षत्रियवैश्यशूद्रेषु * कौटसाक्ष्यादौ देहिकादैहिकानि * दशस्थानानि यानि दण्डस्थानानि * दर्शनं स्वायम्भुवो मनुरब्रवीत् । १ । ब्राह्मणस्त्वक्षत एव व्रजेत् * दशस्थानेषु दण्डं न * कृत्वा ब्राह्मणं विवासयेत् । २ । १२४ । कानि तानि दशस्थानानीत्यत आह ।

उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् । चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥१२५॥

उपस्थमित्यादि । १ । १२५ । उपस्थोदरजिह्वाहस्तपाद * चक्षुर्नासाकर्णदेह * धनानीति दशदण्ड * स्थानानि देहिकादैहिकानि ॥ १ ॥ १२५ । न च कस्मिन्नपराधे * कस्मिन् स्थाने दण्डः कार्य इत्यत आह ।

अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः । सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥१२६॥

अनुबन्धमित्यादि । १ । १२६ । अनुबन्धं प्रयोजनं जातिं पितरं * तथा सत्कर्मणि प्रवृत्तिं परि * ज्ञाय सम्यग्ज्ञात्वा देशकालौ च * तत्त्वतो यथातत्त्वेन यस्मिन् काले । १ । सत्कर्मणि तं नीतस्य यथाज्ञात्वा * सारापराधौ च सारादीनष्टौ * सारान् अपराधांश्चालोक्य * दण्ड्येषु दण्डं पातयेत् । २ । १२६ ।

अधर्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम् । अस्वर्ग्यञ्च परत्रापि तस्मात्तत्परिवर्जयेत् ॥१२७॥

अधर्मेत्यादि ॥ १२७ । स्पष्टार्थोऽयं श्लोकः । १२७ ।

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् । अयशो महदाप्नोति नरकञ्चैव गच्छति ॥१२८॥

अदण्ड्यानित्यादि ॥ १२८ ॥ श्लोकोऽयं स्फुटार्थः । १२८ ।

वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् । तृतीयं धनदण्डन्तु वधदण्डमतः परम् ॥ १२९ ॥

वाग्दण्डमित्यादि । १२९ । यः कश्चिदसत्कर्मणि प्रवर्त्तते * राजा प्रथमं वाग्दण्डं * तस्य कुर्यात् त्वमिदं * कर्म परित्यजेति * तेनानिवृत्तस्याधिक्कारं कुर्यात् * तेनानिवृत्तस्य धनं दण्डयेत् * तेनानिवृत्तस्य वधं देहदण्डं कुर्यात् ॥ १ ॥ १२९ ॥

वधेनापि यदा त्वेतान्निग्रहीतुं न शक्नुयात् । तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥१३०॥

वधेनापीत्यादि । १३० । वधेनोपस्थादिषु दण्डेनापि * यदैतान् दण्ड्यान् निग्रहीतुं राजा * न शक्नुयात् तदैतच्चतुष्टयं सर्वं युगपदेवैषु समस्तं प्रयुञ्जीत ॥ १ ॥ १३० । नवदण्डे यत्साक्ष्यादिकं * तत्किंमानमित्यत आह श्लोकेत्यादि ।

धरणानि दश ज्ञेयः शतमानस्तु राजतः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥ १३७ ॥

धरणानीत्यादि । १३७ । द्वात्रिंशद्रत्तिकापरिमाणं रौप्यं धरणं * तानि दश धरणानि * विंशत्युत्तरत्रिशतरत्तिको * राजतः शतमानः स्यात् । १ । चतुःसौवर्णिको निष्कः * षोडशमाषाः सुवर्णः * उक्तास्तैश्चतुर्भिर्निष्पन्नः सर्व्वेषां * द्रव्याणां विंशत्युत्तरत्रिशतरत्तिको निष्कः । २ । १३७ ॥

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥ १३८ ॥

पणानित्यादि ॥ १३८ ॥ पणोऽशीतिरत्तिकस्तेषां पणानां * सार्द्धे द्वे शते प्रथमः साहसः स्यात् * सर्व्वतामुः पञ्चगुणानां विंशति * सहस्ररत्तिकापरिमाणं भवेत् । १ । पणानां पञ्चशतानि प्रथमः * साहसाद्द्विगुणो मध्यमः साहसः * पणानां सहस्रं मध्यमसाहसाद्द्विगुणं * उत्तमः साहसः संज्ञया भवति । २ । १३८ ।

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति । अपह्नवे तद्द्विगुणं तन्मनोरनुशासनम् ॥ १३९ ।

ऋणइत्यादि ॥ १३९ ॥ अधमर्णेन समायां * ऋणं मया देयं प्रतिज्ञाते सति * यथावत्कालं न दत्तं * तदयं पञ्चकं शतं दण्डमर्हति । १ । अपह्नुते माहमस्मै * धारये इति वदतः * तद्द्विगुणं दशकं साहसं दण्डं * मनुः तीतिमनोः शासनं । २ । १३९ ।

वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् । अशीतिभागं गृह्णीयान्मासाद्वार्द्धुषिकः शते १४

वशिष्ठेत्यादि । १४० । ऋणदाने वशिष्ठविहितां वित्त * विवर्द्धिनीं वृद्धिं सृजेत् * दशीतिभागं कभागं शते मासाद् * इह वार्द्धुषिकोऽपि गृह्णीयादिति । १ । १४० ।

द्विकं शतं वा गृह्णीयात्सतां धर्म्ममनुस्मरन् । द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्विषी ॥१४१

द्विकमित्यादि । १४१ । अथवा वार्द्धुषिकः शतं शतांश * स्वीकार्यं द्विकं द्विगुणं * पञ्चाशद्भागं स्वीकार्यं सतां धर्म्ममनुस्मरन् * मासाद्द्विं गृह्णीयात् । १ । द्विकं द्विशतांशवृद्धिं * गृह्णानो वार्द्धुषिको न * तदर्थकिल्विषी भवति । २ । १४१ ।

द्विकं त्रिकं चतुष्कञ्च पञ्चकञ्च शतं समम् । मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्व्वशः ॥ १४२

द्विकमित्यादि । १४२ । वार्द्धुषिको वर्णानामनुपूर्व्वशो * मासस्य वृद्धिं दत्तधनस्य * शतं शतांशस्वीकार्यं द्विकं ब्राह्मणाद् गृह्णीयात् । १ । त्रिकं त्रिगुणं क्षत्रियात् * चतुष्कं चतुर्गुणं वैश्यात् पञ्चकं * पञ्चगुणं शूद्राद् गृह्णीयात् । २ । १४२ ।

यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनम् । भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥१४७॥

यत्किञ्चिदित्यादि ।१४७। परैः गृहीताध्युपनिधिभिर्जनैः * यत्किञ्चित्क्षेत्रगृहादिकं धनं * दशवर्षाणि भुज्यमानं यस्तद्धनस्वामी सन्निधौ * तूष्णीमवारयन् प्रेक्षते । १ । स तद्धनस्वामी तत्सम्बन्धि धनं * न लब्धुमर्हति भोगात् । २ । १४७ । अपरञ्चाह ।

अजडश्चेदपोगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८॥

अजडश्चेत्यादि । १४८ । धनस्वामी यः सचेदजडो नाधि* विशेषेण क्रियासामर्थ्यहीनो * न स्यात् अर्थात् रोगी*अपोगण्डो बालो न स्यात् । १ । अस्य विषये चक्षुःश्रोत्रगोचरे *परैरुत्तमर्णैर्यत्किञ्चिदाध्युपनिधिवस्तुजातं द्रव्यं * भुज्यते न च तेनाजडेनापोगण्डेन स्वामिना निवार्यते । २ । तर्हि तद्व्यवहारेण तद्भोगेन*भग्नं स्यात् द्रव्यं भोक्ता वार्हति न च तत्स्वामी । बालआषोडशाद्वर्षात् पौगण्डश्चापि शब्द्यते । इति । नारदः । ३ । १४८ जडेनाथवापोगण्डेन यदि तद्धनमार्गेण भुज्यमानं पश्यता न निवार्यते तर्हि तद्भोगेन भग्नं स्यात् तद्भोक्ता तद्द्रव्यमर्हति ।

आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः । राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥१४९॥

आधिरित्यादि ॥ १४९ ॥ आधिप्रभृतिः परैर्भोगेन नैव*नश्यति पुनः प्राप्यः स्यात् । १ । १४९ । तथाऽऽह ।

यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः । तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥१५०॥

स्वामिनेत्यादि । १५० । योऽविचक्षणो मूर्ख आधिं तदाधि*स्वामिनाननुज्ञातं भुङ्क्ते । तेन वार्द्धुषिकेनार्द्धवृद्धिर्मोक्तव्या त्याज्या*वृद्धिस्तस्य भोगस्य निष्कृतिर्ज्ञेया । २ । १५० ।

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता । धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥१५१॥

कुसीदेत्यादि । १५१ । कुसीदं वृद्ध्यर्थं धनप्रयोगः*कुसीदं तस्य वृद्धिर्मासि मासि * नाहृता सकृदाहृता यदि स्यात् । १ । तदा मूलधनात् * द्वैगुण्यं नात्येति*क्रामति द्वैगुण्यपर्यन्तं प्राप्नोति । १ । धान्ये सदे वृक्षफले *लवे च्छेदार्होर्णादि*कृषिवस्तुनि बलादौ । २ । वाह्येऽश्वशकटादौ*यदि सकृदाहृता चेत्* पञ्चतां तस्य पञ्चगुणं शतं * नातिक्रामतीति पञ्चगुणीकृतं शतपर्यन्तमर्हति न त्वाधिकं स्वीय । ४ । १५१ ।

कृतानुसारादधिका व्यतिरिक्ता न सिद्ध्यति । कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ १५२ ॥

कृतानुसारादित्यादि । १५२ । अनतिक्रम्य ऋणकाले वृद्धिर्यावती* नियतकृतानुसाराधिकार्थं नाना* नसिकालिकसीद्पथंत माह* यद्वृद्ध्या पञ्चगुणं सत्यमतसङ्क भवति । १ । १५२ ।

नातिसांवत्सरीं वृद्धिं नचादृष्टां पुनर्हरेत् । चक्रवृद्धिःकालवृद्धिःकारिताकायिकाचया ॥१५३॥

नातीतादि । १५३ । वार्षिकाधिकःसां वत्सरी वृद्धिमतिक्रम्य* अधिकां नसकलद्रव्यहरणं गृह्णीयात्*तदधिककालसा वृद्धिं नप्राप्नुयात् । १ । अदृष्टां शास्त्रे निर्द्दिष्ट*दृष्टिरहितां यतो*तां ग्रन्थिकां अद्विलिखतः*पञ्चांशे भागोऽधिकां वृद्धिं नहरेत् । २ । यावत्कालं वृद्धिक्रियाकाल* वृद्धिर्निं यत्कालातीते सकृद्वृद्धिग्रहणं देयगुणाधिका भवेत् ३ । याद्वृद्धिरधमर्णेनापद्ग्रस्तेना*न्यापगामसम्भवादा*उत्तमर्णपीडनेनवा* स्वयंमाश्रित्याधिकाकृतावृद्धिः*सा वृद्धिःकारिताख्या । ४ । यावत्कायिकाश्च गकटादि*वाहनदण्डादिवन्धककृता* तां तां वृद्धिं वार्द्धुषिको नहरेत् । ५ । वृहस्पतिनाप्युक्तं च*कायिकाकायसंयुक्ताकालाधिकाचकालिका । वृद्धेर्वृद्धिश्चक्रवृद्धिःकारिताऋणिनाकृता इति । १५३ ।

ऋणंदातुमशक्तोयःकर्त्तुमिच्छेत्पुनःक्रियाम् । सदत्वानिर्जितांवृद्धिंकरणंपरिवर्त्तयेत१५४

ऋणमित्यादि । १५४ । योऽधमर्णो नियतकालमध्ये ऋणं* दातुमशक्तःसन्पुनः * क्रियां दानकालवृद्धिं* कर्त्तुमिच्छेत् सदानिर्जितां *वृद्धिं दत्वा परिवर्त्तयेत् । १ । १५४ । पूर्व्वलेखादिपरिवर्त्तने विशेषमाह ।

अदर्शयित्वातत्रैवहिरण्यंपरिवर्त्तयेत् । यावतीसम्भवेद्वृद्धिस्तावतींदातुमर्हति ॥१५५॥

अदर्शयित्वेत्यादि । १।१५५ । तत्राधौ पूर्व्वक्रियापरिवर्त्तने *कर्त्तव्ये यद्द्रव्यकं तदधमर्णं *नदर्शयित्वापूर्व्वलेखादिक्रियां परिवर्त्तयेत् । १ । तत्रवन्धकं हिरण्यं *मदर्शयित्वैवपरिवर्त्तयेत्*तद्वृद्धिमनावृत्त कालं * यावतीसम्भवेत् तावतीं दातुमर्हति । २ । १५५

चक्रवृद्धिंसमारूढोदेशकालव्यवस्थितः । अतिक्रामन्देशकालौनतत्फलमवाप्नुयात् ॥१५६॥

चक्रवृद्धिमित्यादि । १५६ । यस्मिन्देशे यस्मिन्काले चक्रवृद्धिर्व्यवस्थितामादेशकालव्यवस्थितां वृद्धिं समारूढो*वार्द्धुषिकश्चक्रवृद्धिं *देशकालौ * अतिक्रामंस्तत्फलं *चक्रवृद्धिफलं नावाप्नुयात् । १ । १५६ । तत्रव्यवस्थामाह ।

समुद्रयानकुशलादेशकालार्थदर्शिनः । स्थापयन्तितुयांवृद्धिंसातत्राधिगमंप्रति ॥ १५७ ॥

समुद्रेत्यादि। १५७। समुद्रयानकुशला*य समुद्रपथे गमनशीला वाणिजः *कुर्व्वन्ति नानादेशकालार्था मा*दर्शनशीला भवन्ति। १। ते तत्र वृद्ध्यर्थ कीया *वृद्धिमधिगमं माप्तिं* प्रतिस्थापयन्ति सैव * तस्मात् वृद्धेरधिगमः॥ ॥ २ ॥ १५७ ॥

योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन्स तं तस्य प्रयच्छेत्स्वधनादृणम् ॥ १५८॥

योयस्येत्यादि। १५८। इहऋणादाने यो मानवो यस्य *धमर्णस्य दर्शनाय* प्रतिभूः स्वीकारी तिष्ठेत्। १। स तमधमर्णमदर्शयन् तस्य *ऋणं स्वधनात् प्रयच्छेत् ॥ २ ॥ १५८ ॥

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्। दण्डशुल्कावशेषञ्च न पुत्रो दातुमर्हति ॥ १५९ ॥

प्रातिभाव्यमित्यादि। १५९। यस्मात् वृथादाने यः प्रतिभूः स्यात् द्यूतायस्य अक्षक्रीडायां * दानप्रतिभूर्भवति *सुरा मूल्यदाने प्रतिभूर्भवेत्। १। दण्डावशेषप्रदाने वा *शुल्कावशेषप्रदाने वा*प्रतिभूर्भवेत्तस्य* मृतस्य प्रातिभाव्यं* प्रतिभूनिमित्तं वृथादानादिकं दातुं पुत्रो नार्हति। २। १५९।

दर्शनप्रातिभाव्ये तु विधिः स्यात् पूर्व्वचोदितः। दानप्रतिभुवि प्रेते दायादानपि दापयेत्॥१६०

दर्शनेत्यादि ॥ १६० ॥ प्रतिभूर्द्विविधो दर्शनप्रतिभूः*दानप्रतिभूश्च तत्र*दर्शनप्रतिभाव्ये*पूर्व्वोक्तो विधिर्भवति ॥ १ ॥ यत्प्रागुक्तमदर्शयन्स तं तस्य*प्रयच्छेत्स्वधनादृणम् । २। इति। दानप्रतिभुवि प्रेते *खलु वृथादानाक्षिकसौरिकादण्डशुल्काद्य * भिन्ने ऽगतप्रातिभाव्ये *तद्दानप्रतिभुवो दायादान् दापयेत् ॥ २ ॥ १६० ॥

अत्र विप्रतिपत्तिवचनमाह ॥

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्। पश्चात्प्रतिभुवि प्रेते परीप्सेत् केन हेतुना ॥ १६१॥

अदातरीत्यादि ॥ १६१॥ दाता धनस्वोत्तमर्णः*खलु जानीते ऽयमस्य*ऋणदानप्रतिभूरिति *प्रकृतिं तु विज्ञातवान्॥ १ ॥ तस्मिन् विज्ञातप्रकृतावदातरि*प्रतिभुवि प्रेते पश्चात्*केन हेतुना तदृणं* परीप्सेत् जीवति तस्मिन्* परिविज्ञायाप्तुमिच्छेत् ॥ २ ॥ १६१ ॥ इत्येवं वि*प्रतिपत्ता*वाह ॥

निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः। स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥१६२॥

निरादिष्टेत्यादि ॥ १६२ प्रतिभूश्चेन्निरादिष्टधनो*निरादिष्टं यतो यत्तद्यापाय*दद्यस्मै देयं तत्सर्व्वं *निःशेषमादिष्टं येन। १। दायादेभ्यो दत्तं येन*सोऽलन्धनो निधनः स्यात्*तद्दानिरादिष्टोऽसौव*दायादः स्वधनादेव*तत

बलाद्दत्तमित्यादि। १६८। बलाद्दत्तं भुक्तं लेखितं चायत्त*तान्सर्व्वान्* वाधयेदिति मनुरब्रवीत्। १। १६८।

त्रयःपरार्थे क्लिश्यन्ति साक्षिणःप्रतिभूःकुलम्। चत्वारस्तूपचीयन्ते विप्रआढ्योवणिङ्नृपः॥१६९॥

त्रय इत्यादि। १६९। धर्म्मतावच्चारे साक्षिणःप्रतिभूः* कुलञ्च निश्चयःपरार्थे क्लिश्यन्ति * विप्रश्चाढ्योवणिङ्नृप*श्च तिचत्वारस्तूपचीयन्ते ॥ १॥ विप्रोराजाधिकतोप्राप्ततया*दण्डधना प्रत्याप्राप्ताबृत्ते *आढ्योधनीदृढोवणिक*वस्त्रकादिक्रयणेन २। १६९।

अनादेयंनाददीतपरिक्षीणोऽपिपार्थिवः। नचादेयं समृद्धोऽपिसूक्ष्ममप्यर्थमुत्सृजेत्॥१७०॥

अनादेयमित्यादि। १७०। स्पष्टार्थोऽयं श्लोकः। १७०। तत्रदोषमाहानादेयेत्यादि।

अनादेयस्यचादानादादेयस्यचवर्जनात्। दौर्बल्यं ख्याप्यतेराज्ञःसप्रेत्येहचनश्यति॥१७१॥

अनादेयमित्यादि।१७१। अनादेयग्रहणेराज्ञोधनतो*दौर्बल्यं लोके ख्याप्यते *आदेयानादाने राजाप्रेत्येह नश्यति। १॥ १७१॥

स्वादानाद्वर्णसंसर्गात्त्वबलानाञ्चरक्षणात्। बलंसंजायतेराज्ञःसप्रेत्येहचवर्द्धते॥१७२॥

स्वादानादित्यादि। १७२। स्वकीयाद्यथाधनसंग्रहादानाद्वर्णसा * स्वस्ववर्णसांसंसर्गा * दबलानां रक्षणाच्च राज्ञोबलं संजायते *राजाप्रेत्येहचवर्द्धते। १। १७२।

तस्माद्यमइवस्वामीस्वयंहित्वाप्रियाप्रिये। वर्त्तेतयाम्ययावृत्त्याजितक्रोधोजितेन्द्रियः॥१७३॥

तस्मादित्यादि। १७३। तस्मात्पूर्वदोषग्रहणात्*स्वामीराजाप्रियाप्रिये *हित्वास्वयं यमइव * जितक्रोधोजितेन्द्रियः*सन्याम्यायावृत्त्यावर्त्तेत। १। १७३।

यस्त्वधर्म्मेणकार्य्याणिमोहात्कुर्य्यान्नराधिपः। अचिरात्तंदुरात्मानंवशेकुर्व्वन्तिशत्रवः॥१७४॥

यस्त्वित्यादि॥ १७४। यस्तुनराधिपोमोहा * दधर्म्मेण कार्य्याणि कुर्य्यात्तंदुरात्मानंनराधिप * मचिरात्शत्रवोवशे कुर्व्वन्ति। १। १७४

कामक्रोधौतुसंयम्ययोऽर्थान्धर्म्मेणपश्यति। प्रजास्तमनुवर्त्तन्तेसमुद्रमिवसिन्धवः॥१७५॥

कामेत्यादि । १७५ । यो नराधिपस्तु कामक्रोधौ संयम्य धर्म्मेण सर्व्वानर्थान् पश्यतीत्यर्थः, नराधिपं सर्व्वाः प्रजा अनुवर्त्तन्ते सिन्धवो नद्यः समुद्रमिवेति । १ । १७५ ।

**यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे । स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥ १७६ ॥**

यः साधयन्तमित्यादि । १७६ । धनिकं उत्तमर्णं छन्देन स्वेच्छया अधमर्णात् स्वकं धनं साधयन्तं नृपे यस्तु अधमर्णो दुरात्मतया निवेदयेत् । १ । राज्ञा सदुपाय धनिकप्राप्य अधमर्णाद् यावद्धनं तच्चतुर्थभागैकभागं दण्डं तु दाप्यस्तस्य च धनिकस्य तद्धनं स्यात् ॥ २ ॥ १७६ ॥

**कर्म्मणापि समं कुर्याद्धनिकायाधमर्णिकः । समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः ॥१७७॥**

कर्म्मणापीत्यादि ॥ १७७ ॥ समः समजातिरवकृष्टजातिश्चाधमर्णिको धनं दातुमशक्तो धनिकाय कर्म्मणापि समं कुर्यात् स्वस्वजातिविहितकर्म्माणि कुर्यादित्यर्थः ॥ १ ॥ श्रेयानुत्कृष्टजातिश्चाधमर्णिकः शनैः क्रमेणैव दद्यात् । २ । १७७ ॥

**अनेन विधिना राजा मिथो विवदतां नृणाम् । साक्षिप्रत्ययसिद्धानि कार्याणि समतां नयेत् ॥१७८**

अनेनेत्यादि ॥ १७८ ॥ मिथो विवदतां विवादं कुर्व्वतां उत्तमर्णाधमर्णानां नृणामनेनोक्तेन विधिना राजा साक्षिप्रत्ययसिद्धानि । १ । साक्षिप्रमाणेन सिद्धानि निर्णीतानि कार्याणि तथा समतां साम्यं नयेदिति समाप्रमाणादानमिति । २ । १७८ । अथोद्देशक्रमान्निक्षेपमुच्यते ।

**कुलजे वृत्तसम्पन्ने धर्म्मज्ञे सत्यवादिनि । महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥ १७९॥**

कुलज इत्यादि । १ । १७९ ॥ बुधो धननिक्षेपमिच्छन् धनिनि सत्कुलजे सद्वृत्तसम्पन्ने सत्यवादिनि धर्म्मज्ञे महापक्षे बहुपरिवारे । १ । आर्ये ब्राह्मणे क्षत्रिये वैश्ये वा निक्षेपं स्थाप्यं धनं निक्षिपेत् स्थापयेदिति ॥ २ ॥ १७९ ॥ निक्षेपप्रकारमाह यो यथा निक्षिपेदित्यादि । १ । १८० ।

**यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः । स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥ १८० ॥**

यो मानवो यस्य हस्ते यमर्थं यथा निक्षिपेत् सोऽर्थस्तेन ग्रहीत्रा तथैव तस्मात् निक्षेप्त्रा ग्रहीतव्यः स यथा दायस्तथा ग्रहः ॥ १ ॥ अत्र दायशब्दो भावे दानं यथा निक्षेपस्य तथैव ग्रहणं कार्यम् ॥ २ ॥ १८० ।
तद्विवादमाह ।

अतद्दतादि ॥ २१५ ॥ अतोऽतिनियमेन*यत्कर्म्मणियोनियुक्तः * सयोऽनार्त्तो यथोदितं * कर्म्मदर्पान्न कुर्य्यात्। १। सकर्म्मवेतनयोरष्टरूपेण*स्वर्णकृष्णलमासा तासु सुवर्णैः*कृष्णलानिदण्ड्यःस्यात् * दद्यावेतनस्य च नेयं।२।२१५।

आर्त्तस्तुकुर्य्यात्स्वस्थःसन्यथाभाषितमादितः। सदीर्घस्यापिकालस्यतल्लभेतैववेतनम्॥२१६

आर्त्तस्त्वितादि। २१६। आर्त्तस्तु अतःस्वस्थःसन् * स्व दितीयथाभाषितं*कर्म्मतत्कुर्य्याद्दीर्घस्यापितदर्थं:* कालस्यावेतनं सर्व्वं लभेतैव।१।२१६।

यथोक्तमार्त्तःस्वस्थोवायस्तत्कर्म्मनकारयेत्। नतस्यवेतनंदेयमल्पोनस्यापिकर्म्मणः॥२१७॥

यथोक्तमित्यादि ॥ २१७ ॥ योऽसौयथोक्तानियुक्तः*यदिस्वस्थोवार्त्तो वा*तत्कर्म्मस्वेच्छयानकुर्य्यात्*कर्त्तापरेणापि नकारयेत्तदा। १। तस्याकर्म्मणोऽल्पोनस्यापि अल्पावशेषस्यापि*वेतनं नदेयं भवेत्। २।२१७।

एषधर्म्मोऽखिलेनोक्तोवेतनादानकर्म्मणः। अतऊर्द्ध्वंप्रवक्ष्यामिधर्म्मंसमयभेदिनाम्॥२१८

एषइत्यादि ॥ २१८ ॥ स्पष्टार्थोयंश्लोकः ॥ २१८ ॥ समयभेदविधानमाह।

योग्रामदेशसङ्घानांकृत्वासत्येनसंविदम्। विसंवदेन्नरोलोभात्तंराष्ट्राद्विप्रवासयेत्॥२१९

योग्रामइत्यादि। २१९। योग्रामस्यदेशस्यसङ्घस्य च*सत्येनसंविदं लेख्यादिकरणं*कृत्वापुनर्लोभादेव* विसंवदे * इत्थंभाषितेनतथाचरति। १। तं नरं राजाराष्ट्राद्विप्रवासयेत् * स्वदेशवासादुच्छिन्द्यात् ॥ २ ॥ २१९।

निगृह्यदापयेच्चैनंसमयव्यभिचारिणम्। चतुःसुवर्णान्षण्णिष्कांश्छतमानञ्चराजतम्॥२२०

नकेवलंविप्रवासयेद्दण्डञ्च*कुर्य्यादित्याहनिगृह्येति। १।२२०। एनंसमयव्यभिचारिणंनरं*राजानिगृह्य मस्मात्*रूपं षट्स्वर्णमासरूपासा*तान्मुसावतःसुवर्णान्*पणिष्कान्राजादापयेत्।१। राजतंशतमानञ्चतंसमय*व्यभिचारिणंदापयेत्।२।२२०।

एतंदण्डविधिंकुर्य्याद्धार्म्मिकःपृथिवीपतिः। ग्रामजातिसमूहेषुसमयव्यभिचारिणाम्॥२२१

एतमित्यादि। २२१। ग्रामजातिसमूहेषु*समयव्यभिचारिणा* मप्येतं दण्डविधिं * धार्म्मिकोभूपतिः कुर्य्यात्। १।२२१।

**त्वाविक्रीयवाकिञ्चिद्यस्येहानुशयोभवेत्। सोऽन्तर्दशाहात्तद्द्रव्यंदद्याच्चैवाददीतवा॥२२२**

क्रीत्वेत्यादि। २२२। यस्माद्द्रव्यस्यक्रीत्वाविक्रीयवा* पश्चात्तयोःप्रवृत्तिःस्यात्*सक्रेतायदिन्यहीत* नेच्छेद्वि क्रेतावितवा नेच्छेत्। १। तदान्तर्दशाहाद्दशाहाभ्यन्तरे *तद्द्रव्यंक्रेताविक्रेत्रे* दद्याद्विक्रेताक्रेतुराददी त। २२२।

**[प]रेणतुदशाहस्यनदद्यान्नाददीतवा। आददानोददच्चैवराज्ञादण्ड्यःशतानिषट्॥२२३॥**

परेणत्वित्यादि। २२३। दशाहस्यपरेणाव*क्रेतातद्द्रव्यंनदद्यात्*विक्रेताचनाददीत। १। विक्रेतापुनरा ददानः क्रेताच*पुनर्ददत्षट्शतानि*पणानांराज्ञादण्ड्यःस्यात्। २। २२३।

**[य]स्तुदोषवतींकन्यामनाख्यायप्रयच्छति। तस्यकुर्यान्नृपोदण्डंस्वयंषण्णवतिंपणान्॥२२४॥**

यस्त्वित्यादि। २२४। यस्तुकन्यांदोषवतीं*मयमन्याशेषइति*नाख्यायवरायप्रयच्छति तस्य* दण्डंषण्णवतिं पणान्*तामप्यास्वयंनृपःकुर्यात्। १। २२४।

**अकन्येतितुयःकन्यांब्रूयाद्द्वेषेणमानवः। सशतंप्राप्नुयाद्दण्डंतस्यादोषमदर्शयन्॥ २२५ ॥**

अकन्येत्यादि॥ २२५ ॥ यस्तुकन्यांद्वेषेणाकन्येतिक्षत*योनिरितिब्रूयात्सच *तस्याःकन्यायास्तद्दोष* मदर्शयन्पणानांशतं *दण्डंराजतःप्राप्नुयात्। १। २२५। कस्माद्दण्डंसप्राप्नुयादित्यत*आह।

**[प]ाणिग्रहणिकामन्त्राः कन्यास्वेवप्रतिष्ठिताः। नाकन्यासुक्वचिन्नॄणां लुप्तधर्मक्रिया हिताः॥ २२६ ॥**

पाणिग्रहेत्यादि॥ १। २२६। पाणिग्रहणिकामन्त्राः*अर्यमणंदेवंकन्या*अग्निमयक्षतेत्यादयोनृणां विवाहमन्त्राःकन्यास्वे*वाक्षतयोनिषुस्त्रीषु। १। प्रतिष्ठितानाकन्यासु*क्षतयोनिषुनारीषु * नृणांविवाहमन्त्रान प्रतिष्ठिताः। २। तस्मात्कन्यानामकन्यात्वापवादे *विवाहाभावात्ताःकन्या* हियस्मात्लुप्तधर्मक्रियाःतास्तस्मा*द कन्यात्वापवादीदण्डीस्यात्। ३। ननुक्षितिचक्षतयोनीनामपि*विवाहःसहोढ़पुत्र * लक्षणेस्वयंवक्ष्यते। ४। गर्भिणीसंक्रियते* ज्ञाताज्ञातापिवासती। वोढ़ुःसगर्भोभवतिसहोढ़इतिचोच्यते। ५। तथाकानीनपुत्रलक्ष णे*पितृवेश्मनिकन्यात*यंपुत्रंजनयेद्रहः। तंकानीनंवदेन्नाम्नावोढ़ुःकन्यासमुद्भवम्। ६। गान्धर्व्वविवाहश्च क्षतयोनेःस्या*दितिचेद्वचोसिद्धान्तः। ७। द्विविधोविवाहोमन्त्रैरमन्त्रैश्च* ब्राह्मणादिविषयेश्च*कन्यानां मन्त्रैःक्षतयोनीनांतासां*शूद्रकन्यानाञ्चामन्त्रैः। ८। तत्रामन्त्रके विवाहे धर्मकर्म*विधिर्हिजानांनैवास्ति*

ऋषीणां वाक्येनापि गर्भः सम्भवति तत्र मन्त्रप्रवृत्तिरस्ति यथा क्षेत्रपात्रमाता। गान्धर्वविवाहेऽग्निसाक्षिकत्वात्*मन्त्राः स्वविमन्त्रप्रवृत्तिः । ७ । २२६ । कन्यादमन्त्रविवाहे धर्म्मविधि नास्तीत्यत*आह ।

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥२२७॥

पाणिग्रहणेत्यादि । १ । २२७ । पाणिग्रहणिका मन्त्रा एव दार*लक्षणं नियतं नत्व*मन्त्रकविवाहक्रिया* तेषां मन्त्राणां समाप्ति*सप्तमे पदे गत्यागमात् । १ । २२७ ।

यस्मिन् यस्मिन् कृते कार्य्ये यस्येहानुशयो भवेत् । तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥२२८॥

यस्मिन्नित्यादिना उक्तसमय*भेदे विधानमतिदिश्यः ॥ १ ॥ २२८ ॥ संविद्व्यतिक्रमसङ्क्रमं पशूनां * स्वामिपालविवादं वक्त*मुपक्रमते पशुष्वित्यादि ॥ १ ॥ २२९ ॥ स्पष्टार्थोऽयं श्लोकः । २२९ ।

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे । विवादं संप्रवक्ष्यामि यथावद्धर्म्मतत्त्वतः ॥ २२९ ॥

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे । योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥ २३० ॥

दिवेत्यादि ॥ २३० ॥ गोमहिषाजाविप्रभृतिपशूनां*योगक्षेमे चारणादौ*पाले रक्षके दिवानाशानां दिवा व्यतिक्रमे जाते सति । १ । पाले रक्षके वक्तव्यता*गर्हणादिकर्त्तव्यता * रात्रौ स्वामिनि तद्गृहे व्यतिक्रमे वक्तव्यता । २ । अन्यथा स्वामिगृहादन्यत्र रात्रौ*चपि व्यतिक्रमे पालो*वक्तव्यतामियान्नस्वामी । ३ । २३० ।

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वरां । गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥२३१॥

गोप इत्यादि । २३१ । यस्तु गोपः क्षीरभृतः*स दशतो गोभ्यो वरां गां * गोस्वाम्यनुमते दुह्यात्*सा पालेऽभृते भृतिः स्यात् ॥ १ ॥ २३१ ।

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् । हीनं पुरुषकारेण प्रदद्यात्पाल एव तु ॥ २३२ ॥

नष्टमित्यादि । २३२ । नष्टादिकं गवा*दिपशुं तस्य*पाल एव तत्प*शुस्वामिने दद्यात् । १ । २३२ ।

विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति । यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥२३३॥

विघुष्येत्यादि । २३३ । पालस्तत्पशुरक्षको विघुष्य चौरैरसौ पशुस्तद्धृत इत्येवं घोषणां लोके कृत्वा * यदि देशे चादूरे वा देशे ॥ १ ॥ काले ज्ञापनकालानतिक्रमे स्वस्य*स्वामिनः शंसति वदति*तदा स पालस्तं न दातुमर्हति । २

प्रमादीवाचष्टे चौरैः*पटहादिना विघुष्य*हृतमिति तन्नसाधु*नहि विघुष्य हृतं व*चौर्य्यं कर्म्म भवतीति ।२।२३३

कर्णौ चर्म्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम् । पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत्॥२३४

कर्णावित्यादि । २३४ । पशुषु मृतेषु तेषां * कर्णादीनि तत्स्वामिनां पालो दद्यात् * तेषामङ्गानि च दर्शयेत् । १ । २३४ ।

अजाविके तु संरुद्धे वृकैः पाले त्वनायति । यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत्॥२३५॥

अजाविकमित्यादि । २३५ । अजाविके चरति सति*वृकैः संरुद्धे तत्र * तत्पाले नागच्छति । १ । तदा वृको यामजामविं वा हन्यात्*तद्दद्वकिल्बिषं पाले स्यात् ॥ २३५ ॥

तासाञ्चेदवरुद्धानां चरन्तीनां मिथो वने । यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥२३६

तासाञ्चेत्यादि । २३६ । पालेनावरुद्धानां रक्षितानां *तासामजानामवीनां * वने मिथः सङ्गतानां मध्यात् उत्प्लुत्य हननात्*पालस्तत्र न किल्बिषी । १ । २३६ ।

धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः । शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु ॥ २३७ ॥

धनुःशतमित्यादि ।२३७ ।चतुर्हस्तमानं धनुस्तेषां शतं चतुःशतहस्तमानं *ग्रामस्य चतुर्दिक्षु समन्ततश्च दिक्षु । १ । धनुःशतं चतुःशतहस्तमानं प्रतिदिशं शतहस्तमानं स्यात् शम्यापातात्समावपनात्परिहारः कार्यः । यष्टिकार्यादिचतुर्दिक्षु * ग्रामानवर्त्तन्ते तिसृषु दिक्षु *वर्त्तन्ते तदा त्रयस्तिसृषु दिक्षु *शतहस्तमानं त्रयः परीहाराः कार्याः । २ । नगरस्य तु समन्ततस्त्रिगुणः* परीहारः कार्य इति । २ । २३७ । ननु ग्रामस्य नगरस्य च*दिक्षु परित्यागे तु किं प्रयोजनं स्यादित्यत*आह ।

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥ २३८ ॥

तत्रापरीत्यादि । १ । २३८ । तत्र तावत्प्रमाणत्यागे भूमिषु चेत् धान्यं शस्यं वपेत्*परिवृतञ्च न कुर्य्याद्-यदापरिवृतं तद्धान्यं पशवो हिंस्युः । १ । तदा तत्र पशुरक्षिणां दण्डं नृपतिर्न प्रणयेदिति । २ । एतेनोक्तं तावत्परिमितं स्थानं त्यक्त्वा शस्यानि वपेत् परिवृतानि च कुर्य्यादिति॥२३८ । तर्हि तावत्प्रमाणत्यागेऽपि*परिवृतं कुर्य्यात् कथं *कुर्य्यादित्यत आह* ।

वृतिं तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत् । छिद्रञ्च वारयेत्सर्व्वं श्वशूकरमुखानुगम् ॥ २३९ ॥

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः । ज्यैष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥ २४५ ॥

द्वयोर्ग्रामयोः सीमां प्रति विवादे * समुत्पन्ने ज्यैष्ठे मासि * सुप्रकाशेषु सेतुषु * सीमां सीमां सां नयेत्प्राप येदिति ॥ १ ॥ २४५ ॥

सीमावृक्षांश्च कुर्व्वीत न्यग्रोधाश्वत्थ किंशुकान् । शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान् ॥ २४६ ॥

सीमावृक्षांश्चेत्यादि । २४६ । न्यग्रोधादीन्पादपान् * सीमावृक्षां स्तु कारयेत् * तथा सीमा न नश्यति * बहुकालजीवित्वात्तेषां वृक्षाणाम् ॥ १ ॥ २४६ ॥

गुल्मान्वेणूंश्च विविधान्शमीवल्लीस्थलानि च । शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥ २४७

गुल्मानित्यादि । २४७ । स्थलानि निम्नोन्नतानि * सेतुरूपाणि कुब्जकगुल्मान्नाम * वृक्षविशेषानिति । १ ।२४७।

तडागान्युदपानानि वाप्यः प्रस्रवणानि च । सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥ २४८ ॥

तडागानीत्यादि । २४८ । सीमासन्धिषु तडागादीनि यथा * सम्भवं कार्य्याणि राज्ञा । १ । २४८ ।

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् । सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्य्ययम् ॥ २४९ ॥

उपच्छन्नानीत्यादि । २४९ । उपच्छन्नान्यन्यानि च * सीमालिङ्गानि वक्ष्यमाणानि नृणां * सीमाज्ञाने लोके नित्यं * विपर्य्ययं वीक्ष्य कारयेत् । १ । २४९ ।

अश्मनोऽस्थीनि गोबालांस्तुषान्भस्म कपालिकाः । करीषमिष्टकाङ्गारांश्छर्करा वालुकास्तथा ॥ २५० ॥

यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् । तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥ २५१ ॥

अश्मनोऽस्थीनीत्यादि । २५० । २५१ । अश्मादीनि तत्प्रकाराणि यान्यद्रव्याणि * भूमिर्मृत्तिका कालाच्च न भक्षयेत् * तानि द्रव्याणि * ग्रामयोः * सन्धिषु सीमायामेव । १ । भूमौ गर्त्तं कृत्वा तत्र संस्थाप्यत्वा * प्रकाशानि कारयेत् । २ । २५० । २५१ ।

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः । पूर्व्वभुक्त्या च सततमुदकस्यागमेन च ॥ २५२ ॥

एतैरित्यादि। २५२। इत्येवं प्राक्कृतसीमालिङ्गैर्ग्रामे * सीमां प्रतिविवादे तु * राजा यथाकार्य्यं आचरेत् * एतैर्लिङ्गैरित्यादि। १। २५२। एतैर्लिङ्गै राजा सीमां * प्रतिविवदमानयोः * सीमां नयेत् प्रापयेत्। १। पूर्व्वभुक्त्या पूर्व्वं ययोः सीमां भुङ्क्ते * तयोः सीमां राजा नयेत् * उदकस्य सततमागमेन च * राजा सीमां नयेत् प्रापयेत्॥ २५२॥

यदि संशय एव स्यात् लिङ्गानामपि दर्शने। साक्षिप्रत्यय एव स्यात् सीमावादविनिर्णयः॥ २५३॥

यदीत्यादि। २५३। यद्येवं सीमालिङ्गदर्शने राज्ञः * संशयः स्यात् तदा साक्षि * प्रत्ययः सीमावादस्य * विनिर्णय एव स्यात्। १। २५३। कथं साक्षी नयेदित्यत आह * ।

ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥ २५४॥

ग्रामीयकेत्यादि। १। २५४। ग्रामीयजनसमूहस्य समक्षं साक्षिणः सीम्नि विषये तयोर्विवादिनोः सीमा * [illegible] प्रष्टव्याः। १। २५४।

ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम्। निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः॥ २५५॥

ते पृष्टा इत्यादि। २५५। ते समस्ताः सीम्नि साक्षिणो निश्चयं * यथा ब्रूयुस्तथा सीमां * तांश्च साक्षिणो नामतो * निबध्नीयात् लिखेत्। १। २५५।

शिरोभिस्ते गृहीत्वोर्व्वीं स्रग्विणो रक्तवाससः। सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्॥ २५६॥

साक्ष्यग्रहणप्रकारमाह * शिरोभिरित्यादि श्लोकं॥ १॥ ०॥ २५६॥ ० ॥ ते सीम्नि साक्षिणो मृद्भिः * स्रग्विणो रक्तवाससः * सन्त ऊर्व्वीं लोष्ट्रं शिरोभिर्गृहीत्वा * स्वैः स्वैः सुकृतैः शापिताः॥ १॥ यद्यनृतं ब्रूयात्तदा * सर्व्वं सुकृतं वो निष्फलं भवेदिति * त्वेवं शपथं कारिताः * सीम्नि समञ्जसं नयेयुः। २॥ २५६॥

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्॥ २५७॥

यथोक्तेनेत्यादि। २५७। ते सत्यसाक्षिणो यथोक्तेन समं * सीमां नयन्तः पूयन्ते * विपरीतं नयन्तस्ते * द्विशतं पणानां दण्डं * तान् राजा दापयेदिति। १। २५७।

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः। सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ॥ २५८॥

साक्ष्यभाव इत्यादि। २५८। समन्तभवाः सामन्ताः * साक्ष्यभावे तस्य ग्रामस्य * चतसृषु दिक्षु ये च। १। चत्वारो ग्रामास्तेष्वेव * सामन्तप्रदेशवासिनो * राजसन्निधौ प्रयताः * सन्तस्ते सीमाविनिर्णयं कुर्युः। २। २५८।

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्। इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥२५९॥

सामन्तानामित्यादि ॥ २५९ ॥ तद्ग्रामसीमाभिज्ञानां *सामन्तानां समन्ताद्वसतां नृणां* अभावे तद्ग्राम मध्ये *मूलभूतानां साक्षिणामप्यभावे ॥ १ । वनगोचरानिमान्वक्ष्यमाणान् *पुरुषाननुयुञ्जीत ॥ २ ॥ २५९ ॥

व्याधाञ्छाकुनिकान् गोपान्कैवर्तान्मूलखानकान्। व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः॥ २६० ॥

व्याधानित्यादि । २६० । स्पष्टार्थोऽयं श्लोकः ॥ २६० ॥

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम्। तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः॥२६१॥

ते पृष्टा इत्यादि ॥ २६१ ॥ ते व्याधादयः पृष्टाः सीमासन्धिषु *लक्षणं यथा ब्रूयुः *तथा राजा धर्मेणैव ग्रामयोर्द्वयोः सीमां स्थापयेदेव ॥ १ । २६१ ।

क्षेत्रकूपतडागानामारामस्य गृहस्य च। सामन्तप्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः॥ २६२ ॥

क्षेत्रेत्यादि । २६२ । क्षेत्रादीनां सीमासेतुविनिर्णयः *सामन्तप्रत्ययो ज्ञेयः । १ । २६२ ।

सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम्। सर्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम्॥२६३॥

सामन्ताश्चेदित्यादि । २६३ । क्षेत्रादीनां सेतौ विवदतां नृणां *सामन्ताश्चेद् मृषा *वदेयुस्तदा प्रत्येकं पृथक्पृथक्प्रत्येकं *सर्वे राज्ञा मध्यमसाहसं दण्ड्याः । १ । विवदतामिति परस्मैपदं * तदनुविधीनामनित्यत्वमा*चक्षिङ्कृताव*ज्ञानुबन्धेनज्ञापितत्वात् । २६३ ।

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः॥ २६४ ॥

गृहमित्यादि । २६४ । गृहादीनि भयप्रदर्शनेनापरेणाज्ञानतो हरन् * ताम्रपणानां शतानि*पञ्च राज्ञा दण्ड्यो भवति । १ । अज्ञानाद्गृहादीनि हरन् द्विशती * दमस्ताम्रपणानां द्विशतं दण्डः स्यात् । २ । २६४ ।

सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः॥२६५॥

सीमायामित्यादि । २६५ । सीमायां लिङ्गसाक्ष्यादिभावे च*अविषह्यायां निर्णेतुम्* अशक्यायां सत्यां धर्म*वित् राजा स्वयमेवैषां *विवादिनामुपकारात् । १ । यावत्सु भौमिवादे*स्तावतीं भूमिमनात *प्रदिशेत् प्रदद्यादिति विचारस्थितिः । २ । २६५ ।

अवनिष्ठीवत इत्यादि ।२८२। अपकृष्टज इति विभक्तिविपरिणामादनुवृत्तिः ।१। उत्कृष्टस्य गात्रे दर्पा*दव ष्ठीवतोऽपकृष्टस्य शूद्रस्य*द्वावोष्ठौ नृपश्छेदयेत् ॥ २॥ उत्कृष्टस्य ब्राह्मणादे * र्गात्रेऽवमूत्रयतोऽपकृष्टजस्य* शूद्रस्य मेढ्रं नृपश्छेदयेत् ॥ ३॥ उत्कृष्टस्य ब्राह्मणादेर्गात्रे पायु*नावशर्द्धयतोऽपकृष्टजस्य * शूद्रस्य गुदं नृपतिश्छेदयेत् ॥ ४ ॥ २८२ ॥

केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्। पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च ॥ २८३॥

केशेष्वित्यादि ॥ २८३ ॥ उत्कृष्टस्य ब्राह्मणादेः*हिंसार्थं केशेषु द्वयोः*पादयोर्दाढिकायां वा*ग्रीवायां वृषणेषु वा*गृह्णतोऽपकृष्टजस्य*शूद्रस्य हस्तौ छेदयेत् ॥ १ ॥ २८३ ।

त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः । मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः ॥ २८४ ॥

त्वग्भेदक इत्यादि । २८४ । उत्कृष्टस्य ब्राह्मणादे*र्विना रक्तपातं त्वग्भेदकोऽथवा* लोहितस्य दर्शको योऽपकृष्टजः शूद्रः स पणशतं दण्ड्यः । १ । यो मांसभेत्ता स षण्णिष्कान् दण्ड्यः स्यात् * योऽस्थिभेदकः स राष्ट्रात् * शास्त्ररत्नु प्रवास्यः । २ । इति वाक्पारुष्यदण्डपारुष्ययो*र्या द्विजशूद्रयोर्दण्ड*उक्तः समाधीतवेद* पारगे च ब्राह्मणे स्व*कर्म्मस्थे चाविधेयो भवे च ।३। नवममब्राह्मणे ब्राह्मणत्वे च*तत्र यथायोगं दण्ड*उन्नेयो नत्वयोमय *कुलपते लाङ्गच्छेदः । ४ । २८४ ।

वनस्पतीनां सर्व्वेषामुपभोगो यथा यथा। तथा तथा दमः कार्य्यो हिंसायामिति धारणा॥ २८५॥

वनस्पतीनामित्यादि । २८५ । वनस्पतीनां वटादीनां यथा*यथोपभोगस्तथा तथा दमः* कार्य्य इति हिंसायामवधारणम् । १ । २८५ ।

मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति। यथा यथा महद्दुःखं दण्डं कुर्य्यात्तथा तथा ॥ २८६॥

मनुष्याणामित्यादि । २८६। द्विजातिवर्ज्जं मनुष्याणां *पशूनाञ्च दुःखाय कृते *प्रहारे यथा यथा दुःखं *तथा तथा दण्डं कुर्य्यात् । १ । २८६ ।

अङ्गावपीडनायाञ्च व्रणशोणितयोस्तथा। समुत्थानव्ययं दाप्यः सर्व्वदण्डमथापि वा ॥ २८७॥

अङ्गावपीडनायाञ्चेत्यादि । २८७ । मनुष्याणां द्विजभिन्नानां पशूनां * चाङ्गावपीडनायां भङ्गादौ व्रण *

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः। प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥२९९॥

भार्य्येत्यादि ॥ २९९ ॥ भार्य्यादयः प्राप्तापराधा रज्ज्वा * वेणुदलेन वा ताड्याः स्युः । १ । २९९ ।

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन। अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥३००॥

पृष्ठतस्त्वित्यादि । ३०० । दण्डिकताड़नादौ दण्डः कर्त्तव्यः * शरीरस्य पृष्ठतस्ताड्या भवन्ति * न कदाचनोत्तमाङ्गे ॥ १ ॥ अतोऽन्यथा पृष्ठ * दन्यत्र प्रहरन् * चौरकिल्बिषं दण्डं प्राप्तो भवति । २ । ३०० ।

एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः। स्तेनस्यातः प्रवक्ष्यामि विधिं दण्डविनिर्णये ॥३०१॥

एष इत्यादि । एष इत्यादिना दण्डपारुष्यविषयस्योपसंहारः कृतः * ऊर्द्ध्वमतः स्तेनस्य * विधिर्दण्डनिर्णयश्चोच्यते ॥ १ ॥ ३०१ ॥

परमं यत्नमातिष्ठेत् स्तेनानां निग्रहे नृपः। स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्द्धते ॥ ३०२ ॥

परममित्यादि । ३०२ । नृपः स्तेनानां चौराणां निग्रहे * परमं यत्नमातिष्ठेत् * किमर्थं स्तेनानां निग्रहे कृतेऽस्य * यशो राष्ट्रञ्च वर्द्धते ॥ १ ॥ ३०२ ।

अभयस्य हि यो दाता स पूज्यः सततं नृपः। सत्रं हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥ ३०३ ॥

नन्वकिमर्थं स्तेननिग्रहे राजा * परमयत्नमातिष्ठेत् * इत्यत आहाभयस्येत्यादि । १ । ३०३ । हि यस्मात् स्तेनानां निग्रहे प्रजानां * भयं भवेदभयस्य * दाता यो भवति स च * नृपः सततं पूज्यः स्यात् । १ । कस्मात् हि यस्मात् तस्य * नृपस्याभयदक्षिणं * सत्रं वर्द्धते । २ । ३०३ । कथमित्यत आह ।

सर्वतो धर्म्मषड्भागो राज्ञो भवति रक्षतः। अधर्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥३०४॥

सर्वत इत्यादि ॥ ३०४ ॥ प्रजा रक्षतो राज्ञः सर्वतः * प्रजानां धर्म्मात् षड्भागो धर्म्मो * लब्धो भवतीत्यस्या * दभयदक्षिणं सत्रं स्यात् ॥ १ ॥ तस्मात् प्रजा अरक्षतोऽस्य * नृपस्य सर्वतः प्रजाभिः कृतात् * पापधर्म्मात् षड्भागोऽधर्म्मो लब्धः स्यात् । २ । ३०४ । कस्त्वधर्म्म * इत्यत आह ।

यदधीते यद्यजते यद्ददाति यदर्च्चति। तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥३०५॥

यदधीत इत्यादि ॥ १ ॥ ३०५ । ब्राह्मणः क्षत्रियो वैश्यः प्रजा * नित्यं यदधीते यद्वेदादीनग्नि * होत्रादिना

यजते यज्ञददाति ॥ १ ॥ यद्दर्शितिसाधायनादिषड्भागैकभागभाक्प्रजानां *समापजाणाद्राजासागात् । ३०५ ।

रक्षन्धर्म्मेण भूतानि राजा वध्यांश्च घातयन्। यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥ ३०६ ॥

रक्षन्नित्यादि। ३०६। राजा भूतानि धर्म्मेण* रक्षन्वध्यांश्च घातयन्तदात्मकैः सहस्रशतदक्षिणैः* यज्ञैः राजात्वहरहः* यजते इति नतनिग्रहेऽपि धर्म्मः । १ । ३०६ । प्रजानामरक्षणे दोषमाह । ।

योऽरक्षन्बलिमादत्ते करं शुल्कञ्च पार्थिवः। प्रतिभागञ्च दण्डञ्च स सद्यो नरकं व्रजेत् ॥ ३०७ ॥

योऽरक्षन्नित्यादि । १ । ३०७ । प्रजा अरक्षन्यः पार्थिवः करं *शुल्कं प्रतिदिनभागं दण्डञ्च* बलिमादत्ते स राजा *सद्यो नरकं व्रजेत् । १ । ३०७ ।

अरक्षितारं राजानं बलिषड्भागहारिणम्। तमाहुः सर्व्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥

अरक्षितारमित्यादि । ३०८ । प्रजानामरक्षितारं *बलिषड्भागादिहारिणं *तं राजानं धर्म्मज्ञाः सर्व्वलोकस्य *समग्रमलहारकं *आहुस्तस्मात्प्रजा रक्षेत् । १ । ३०८ ।

अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम्। अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥ ३०९ ॥

अनपेक्षितेत्यादि ॥ ३०९ । येन शास्त्रादिमर्य्यादा नापेक्षिता *विप्रलुम्पकं परस्वापहर्त्तारं *ईदृशं नृपमधोगतिं विद्यात् । १ । ३०९ ।

अधार्म्मिकं त्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः। निरोधनेन बन्धेन विविधेन वधेन च ॥ ३१० ॥

अधार्म्मिकमित्यादि । ३१० ॥ राजा त्रिभिर्न्यायैरधार्म्मिकं *प्रयत्नतो निगृह्णीयात् । प्रथमं निरोधनेन कारागारे बन्धनेन *द्वितीयं बन्धनेन *तृतीयं विविधेन *वधेन निष्पीडनेन निगृह्णीयात् । १ । अधार्म्मिकाश्चाटतस्करादयः *महासाहसिककायस्थादयस्तैः पीड्यमानप्रजारक्षणार्थमेव * राजा तांस्त्रिभिर्न्यायैर्निगृह्णीयात् । २ । उक्तं हि याज्ञवल्क्येन *चाटतस्करदुर्वृत्त * महासाहसिकादिभिः । पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः । इति । ३ । नतु कायस्थैः *विशेषतः* इत्युक्तं चाटतस्करादिभ्योऽपि *अधिकप्रजापीडकाः कायस्थाः । ४ । उक्ताः चाटतस्करादयो * न सन्ति सर्व्वजातिषु । पापवशात्* कश्चित्कश्चित्तथाविधो भवति । ५ । कायस्थास्तु प्रागुत्पत्तावेव जाता *लोलकुञ्जरपत्रवदिच्छाक्रूरत* स्वभावा एव भगवता सृष्टाः । ६ । तस्मात्कायस्थैर्विशेषतः प्रजाः राजा रक्षेदिति* योगेनसम्बन्धिताया* तेषां प्रागुत्पत्तौ तथात्वमुक्तं । ७ ।

तथाधरिममेयानांशतादभ्यधिके वधः । सुवर्णरजतादीनामुत्तमानाञ्चवाससाम् ॥ ३२१॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते । शेषेत्वेकादशगुणंमूल्याद्दण्डंप्रकल्पयेत् ॥३२२॥

तथेत्यादि । ३२१ । सुवर्णरजतादीनां *वाससामुत्तमानाञ्च*धरिमानीौलदण्डेनमेयानां * पलशतादभ्यधिके हृते चौरस्यतथावधः । १ । नवगुडकमेयानां *वधोऽत्रापिप्राणनाशो*नहस्तच्छेदनं तस्य* पञ्चाशतोधिके हृते विधानात् । २ । ३२१ । पञ्चाशतइत्यादि । ३२२ । सुवर्णरजतादीनां * वाससामुत्तमानाञ्चधरिममेयानां पलपञ्चाशतो* ऽभ्यधिके हृते चौरस्य*हस्तच्छेदनमिष्यते ॥ १ ॥ शेषे पलपञ्चाशत्पर्य्यन्ते सुवर्ण*रजतादीनां ससा* उत्तमानाञ्चहरणे चौरस्यहृतद्रव्यस्य*मूल्यादेकादशगुणं *राजादण्डंप्रकल्पयेत् । २ । ३२२ ।

पुरुषाणांकुलीनानांनारीणाञ्चविशेषतः । मुख्यानाञ्चैवरत्नानांहरणे वधमर्हति ॥ ३२३॥

पुरुषाणामित्यादि । ३२३ । सत्कुलीनानां पुरुषाणां *नारीणाञ्चसत्कुलीनानां *विशेषतोमुख्यानाञ्चैव * रत्नानां मरकतादीनां । १ । हरणे चौरोवधमर्हतिप्राण*नाशमेवनतुच्छेदनम् । २ । ३२३ ।

महापशूनांहरणे शस्त्राणामौषधस्यच । कालमासाद्यकार्य्यञ्चदण्डंराजाप्रकल्पयेत् ॥ ३२४।

महापशूनामित्यादि ॥ ३२४ ॥ महापशूनां हस्त्यश्वादीनां *शस्त्राणां खड्गादीनामौषध* स्यापिहरणे कालं च*कार्य्यञ्चासाद्यराजा । १ । कालानुरूपं कार्य्यानुरूपञ्च*दण्डविशेषं प्रकल्पयेत् ॥ २ ३२४ ।

गोषुब्राह्मणसंस्थासुच्छुरिकायाश्चभेदने । पशूनांहरणेचैवसद्यःकार्य्योऽर्द्धपादिकः ॥ ३२५

गोष्वित्यादि । ३२५ । ब्राह्मणसंस्थासुगोषु*ब्राह्मणानां स्वहे षुस्थिताsugोषु*छुरिकायाःक्षुद्रपशो* विशेषाभेदने ब्राह्मणगवामङ्गभङ्गे ॥ १ ॥ पशूनाञ्चहरणे ऽर्द्धपादिको * सद्यस्तत्क्षणमेवतस्यास्तु * तस्य पादस्यार्द्धं महीदण्डःकार्य्यःस्यात् ॥ २ ॥ ३२५ ॥

सूत्रकार्पासकिण्वानांगोमयस्यगुडस्यच । दध्नःक्षीरस्यतक्रस्यपानीयस्यतृणस्यच ॥ ३२६
वेणुवैदलभाण्डानांलवणानांतथैवच । मृन्मयानाञ्चहरणेमृदोभस्मनएवच ॥ ३२७
मत्स्यानांपक्षिणाञ्चैवतैलस्यचघृतस्यच । मांसस्यमधुनश्चैवयच्चान्यत्पशुसम्भवम् ॥३२८
अन्येषाञ्चैवमादीनांमद्यानामोदनस्यच । पक्वान्नानाञ्चसर्व्वेषांतन्मूल्याद्द्विगुणोदमः॥३

स्त्रोतेत्यादि ॥ ७२६ ॥ ७२७ ॥ ७२८ ॥ ७२९ ॥ छत्रादीनां पक्वान्नान्तानां हरणे * तम्मूल्यद्विगुणो दमो * मूल्यन्तु स्वामिने दाप्यो * दापास्तस्याचतद्गतमिताश्चः । १ । ३२६ । ३२७ । ३२८ । ३२९ ।

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च। अन्येष्वपरिपूतेषु दण्डःस्यात्पञ्चकृष्णलः ॥ ३३० ॥

पुष्पेष्वित्यादि । ३३० । हरिते हरिद्रादिकादौ * नद्दरिद्वर्णे धान्ये गुल्मादि * पूनां षुचापरिपूतेषु * पञ्च कृष्णलकादण्डःस्यात् । १ । ३३० ।

परिपूतेषु धान्येषु शाकमूलफलेषु च । निरन्वये शतं दण्डःसान्वयेऽर्द्धशतं दमः ॥ ३३१ ॥

परिपूतेष्वित्यादि । ३३१ । धान्येषु पुलाकादितः * परिपूतेषु शाकादिषु च परि * पूतेषु निरन्वये स्वामिने जन * हीने सति हृते षु । १ । कृष्णलानां शतं दण्डो ग्राह्यः कार्य्यः * सान्वये ऽर्द्धशतं दमः * पञ्चाशद्रक्तिकानाम् । २ । ३३१ । ननकार्य निरन्वये शतं दण्डः सान्वये ऽर्द्ध शतमित्यर्थ * तथाह ।

स्यात्साहसं त्वन्वयवत्प्रसभं कर्म्म यत्कृतम् । निरन्वयं भवेत्स्तेयं हृत्वापह्नूयते च यत् ॥ ३३२ ॥

स्यादित्यादि । १ । ३३२ । अन्वयवत्स्वामिजनान्वितं * प्रसभं हठात् यत्कर्म्मकृतं स्यात् तत्साहसमाप्तत्वात् साहसं स्यात् । १ ॥ १ । निरन्वयं स्वामिजनहीनं य * हृत्वा हृत्वापह्नूयते * तत्कर्म्मास्तं यं भवेदि * तौ प स्ते यसाहसयोर्भेद उक्तः । २ । ३३२ ।

यस्त्वेतान्युपकॢप्तानि द्रव्याणि स्तेनयेन्नरः। तमाद्यं दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥ ३३३ ॥

यस्त्वेतानीत्यादि । ३३३ । धान्यरस्त्वेतानि स्तव कार्प्पासादि * परिपूतशाकमूल * फलान्यानि द्रव्याणि * क्लृप्ता नि भोगार्थं क्लृप्तानि * कृतानि स्तेनयेच्चोरयेत् । १ । तं नरमाद्यं प्रथमं * साहसं राजा दण्डयेत् * मूल्याद्विगुणो दमस्तु तदपकृत * स्वत्वादिहरणे ग्राह्य । २ । यश्चोपकॢप्तमग्निं गृहादग्निगृहं * चोरयेत्तञ्चप्रथमं * साहसं राजा दण्डयेत् । ३ । ४ ३३३ ।

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते । तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः ॥ ३३४ ॥

येनेत्यादि नाङ्गेन * नृषु यथा विचेष्टते * विपरीतं चेष्टां करोति पार्थिवः * स्तस्य तस्य प्रत्यादेशाय । १ । पाश्चात्तत्कर्म्मकरणनिवारणाय तत्तदेवाङ्गं हरेत् । २ । ३३४ ।

पिताचार्यःसुहृन्माताभार्य्यापुत्रःपुरोहितः। नादण्ड्योनामराज्ञोऽस्तियःस्वधर्म्मेनतिष्ठति३३५

स्त्रियमित्यादि। ३५८। यः पुरुषः परस्त्रियं * अदेशे कालादौ परस्परं * स्पर्शं सहेत । १ । तथा परस्त्रियाचादेशे परः * दुर्दशं ग्रामादौस्पृष्टो मर्षयेत् * सर्व्वमेतत् स्त्रीसंग्रहणं स्मृतम् । २ । ३५८ । स्त्रीसंग्रहणे दण्डमाह ।

अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति। चतुर्णामपि वर्णानां दारारक्ष्यतमाः सदा ॥३५९॥

अब्राह्मणइत्यादि । १ । ३५९ । अब्राह्मणः क्षत्रियादिः परस्त्रीसंग्रहणेषु * प्राणान्तं दण्डमर्हति । १ । कस्मादेवं ॥ चतुर्णामपि वर्णानां * सदा रक्ष्यतमा दाराः । २ । ३५९ ।

भिक्षुकाबन्दिनश्चैवदीक्षिताःकारवस्तथा। संभाषणंसहस्त्रीभिकुर्युरप्रतिवारिताः॥३६०॥

भिक्षुकेत्यादि । ३६० । भिक्षुकादयश्चैते अप्रतिवारिताः * परस्त्रीभिः सह * संभाषणं कुर्य्युरिति १ । ३६० ।

नसंभाषांपरस्त्रीभिःप्रतिषिद्धःसमाचरेत । निषिद्धोभाषमाणस्तुसुवर्णं दण्डमर्हति ॥ ३६१॥

नसम्भाषामित्यादि । ३६१ । परस्त्रीभिस्सार्द्धं आलापे प्रतिषिद्धः संभाषां कोऽपि न * पुरुषो न समाचरेत् । १ । निषिद्धस्तु भाषमाणः सोऽन्यः पुमान् * सुवर्णं स्वर्णमाषकाः * षोडशदण्डमर्हतीति ॥ २ ॥ ३६१ ॥

नैषचारणदारेषुविधिर्नात्मोपजीविषु। सज्जयन्तिहितेनारीर्निगूढाश्चारयन्तिच ॥ ३६२ ॥

नैषइत्यादि । ३६२ । एष परस्त्रियं योऽभिवदेदित्यादि * दण्डमर्हतीतन्ते * सुता परस्त्रीसम्भाषा * प्रतिषेधसम्बन्धीविधिः । १ । सचारणदारेषु नटगायकप्रभृतीनां दारेषु * तथात्मोपजीविषु दारेषु * प्रतिषेधादिषु नास्ति । २ । कस्मात् स्त्रियस्तेषां चारणाः स्वा नारीः * सज्जयन्ति संसज्जयन्ति * कुर्व्वन्ति निगूढाः खलु * गोपनं चारयन्ति च । ३६२ ।

किञ्चिदेवतुदाप्यःस्यात्संभाषांताभिराचरन् । प्रैष्यासुचैकभक्तासुरहःप्रव्रजितासुच३६३

किञ्चिदित्यादि ।३६३। पुरुषस्ताभिश्चारणादि * स्त्रीभिः सहसंभाषामाचरन् कश्च * न प्रियोक्तस्य तदा स * किञ्चिदल्पमेव दण्डं राज्ञा दाप्यः । १ । एकभक्तासु प्रैष्यासु दासीषु च * संभाषां कुर्व्वन् रहसि * प्रव्रजितासु संन्यस्ता * स्वस्त्रासमाननारीषु * संभाषां कुर्व्वन् किञ्चिद्दाप्यः । २ । ३६३ ।

योऽकामांदूषयेत्कन्यांससद्योवधमर्हति । सकामांदूषयंस्तुल्योनवधंप्राप्नुयान्नरः ॥ ३६४॥

योऽकामामित्यादि । ३६४ । यः पुरुषः कन्यामनूढामकामां * दूषयेन्मैथुनं गच्छेत * स सद्यो वधमर्हति । १ । सकामां कन्यां वर्णोत्तम * स्तुल्यः पुरुषो दूषयन् * न वधमाप्नुयात् यदि * तत्र गर्भमापन्नायं * प्रसूते स चाण्डालः स्यात् ।२। ग्रासं नाभिक्रान्तं तद्यथा * कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः । ब्राह्मण्यां शूद्रतो जात * श्चाण्डालस्त्रिविधः स्मृतः । इति । २ । ३६४ ।

**कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत् । जघन्यं सेवमानां तु संयतां वासयेद्गृहे ॥३६५॥**

कन्यामित्यादि । ३६५ । सकामां कन्यामनूढां वर्णोत्तम * उत्कृष्टं पुरुषं भजन्तीं * किञ्चिदपि न दापयेत् । १ । तत्र सा यद्यापन्नगर्भा भवति * यद्प्रसूते स पितृ * वर्ण एव जातो भवेत् । २ । वचनात्स्वयं दण्डमेऽधार्य * अनुलोमतयो निषादानुलोमान * सम्भूता सा तयोग्ययास्त * एवं तेन दोषः । ३ । कन्यां सकामां वर्णोत्तमां * जघन्यं पुरुषं प्रातिलोम्येन सेवमानां गृहे संयतां वासयेत् । ४ । सा यदि तत्रापन्नगर्भा भवति * यं च प्रसूते तत्र प्रतिलोमजो * जातः स तादि भवति * शूद्रसमानधर्मा च । ५ । ३६५ । तत्र कन्यां गृहे वासयन् * पुरुषः किमदण्ड्यः स्यादिति * ।

**उत्तमां सेवमानस्तु जघन्यो वधमर्हति । शुल्कं दद्यात्सेवमानः समामिच्छेत्पिता यदि ॥३६६॥**

तत्र उत्तमामित्यादि । १ । ३६६ । वर्णोत्तमां जघन्यः पुरुष उत्तमां * सकामामकामां वा * कन्यां मैथुनेन सेव * मानो वधमर्हतीति ।१। कन्यादानात्तमर्हेत् * वर्णानुरूपमेव च्छेदन * भेदनदहनादिकमर्हति ।२। समां कन्यां सकामां सेवमानस्तु * सवर्णः पुरुषस्तस्याः * पिता यदि शुल्कमिच्छेत् तदा दद्यात् * स चाम त्यै स्ते न विवाहया । ३६६ ।

**अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः । तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥३६७॥**

अभिषह्येत्यादि । ३६७ । यो मानवः कन्यामकामां दर्पेणाभिषह्य * मैथुनं न कृत्वा प्रविष्टाङ्गुलियोनिं कुर्यात् तस्याशु । १ । द्वे अङ्गुली कर्त्ये छेदयितव्ये * षट्शतं स दण्डमर्हति ।२। कस्मात्कन्यादूषणं दारुणं यतः पाणिग्रहणिका मन्त्राः * कन्यास्वेव प्रतिष्ठिताः । नाकन्यासु क्वचिन्नृणां * लुप्तधर्मक्रिया हि ताः । इति । ३ । ३६७ ।

**सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् । द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये ॥३६८॥**

सकामामित्यादि ॥ ३६८ ॥ सकामां कन्यां तुल्यो वर्णो यो दर्पेणाभिषह्य मैथुनं न * कृत्वा द्वे वाङ्गुली योनौ * प्रवेश्य दूषयति स नत * दङ्गुलिच्छेदमाप्नुयात् ॥१॥ पुनः पुनस्तत्प्रसङ्गनिवृत्तये * ताम्रपणानां द्विशतं * दमन्तु राज्ञा दाप्यः स्यात् ॥ २ ॥ ३६८ ॥

*शूद्रस्य लिङ्गोद्धारः*सर्व्वस्वहरणञ्च*गुप्तायां द्वयोऽधिकः । २ । इति । ३७४ ।

**वैश्यः सर्व्वस्वदण्डः स्यात् संवत्सरनिरोधतः । सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥ ३७५ ॥**

वैश्य इत्यादि । ३७५ । वैश्यो हि जातवर्ण्णस्त्रीजनं रक्षा*गच्छेत् संवत्सरनिरोधतः संवत्सरं निरुध्य सह*सा वध्यतु सर्व्वस्वदण्ड्यः स्यात् । १ । क्षत्रियः संवत्सरनिरोधतः स * ह्यावसन्नु सहस्रं दण्ड्यः स्यात्*मूत्रेन मौण्ड्यञ्चार्हति नतु जलेन । २ । ३७५ ।

**ब्राह्मणीं यद्यगुप्तां तु गच्छेतां वैश्यपार्थिवौ । वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम् ॥ ३७६ ॥**

ब्राह्मणीमित्यादिनाविशेषमाह । ३७६ । वैश्यपार्थिवौ ब्राह्मणी*मगुप्तां यदि गच्छेतां* वैश्यं तामुपगतानां*पञ्चशतदण्डं कुर्यात् । १ । क्षत्रियं तामुपगतानां सहस्रिणं * सहस्रं दण्डं कुर्यादिति । २ । ३७६ ॥

**उभावपि तु तावेव ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ ३७७ ॥**

उभावपीत्यादि । ३७७ । तावेव वैश्यपार्थिवावुभावपि*गुप्तया ब्राह्मण्या सह*विप्लुतौ तस्याः कामाभावे स*तामुपगतौ स्यातां तदा*शूद्रवत्सर्व्वस्वं दण्ड्यौ ॥ १ ॥ अथवा कटाग्निना कटेनावेष्ट्य*तावुभावपि दग्धव्यौ । २ । ३७७ ।

**सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ॥ ३७८ ॥**

सहस्रमित्यादि । ३७८ । ब्राह्मणो गुप्तां विप्रां ब्राह्मणीं बला*द्व्रजन् पणानां सहस्रं * दण्ड्यो भवतीति ज्ञेयः* परस्परं वर्त्तयेच्छन्त्या*सङ्गतः पञ्चशतानि । १ । ३७८ । दण्डप्रकारमाह ।

**मौण्ड्यं प्राणान्तिके दण्डे ब्राह्मणस्य विधीयते । इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ ३७९ ॥**

मौण्ड्यमित्यादि । ३७९ । यत्र प्राणान्तिको दण्ड * उक्तस्तत्र ब्राह्मणस्य*मौण्ड्यं शिरोमुण्डनमेव वधः स्यात् । १ । इतरेषां क्षत्रियवैश्यशूद्राणां *तत्र प्राणान्तिक एव*दण्डो विधातव्यो मे यः । २ । ३७९ । ननु कस्मादेवं दण्डविभाग*मित्यत आह ।

**न जातु ब्राह्मणं हन्यात् सर्व्वपापेष्वपि स्थितम् । राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम् ॥ ३८० ॥**

न जात्वित्यादि । १ । ३८० । जातु कदाचिदपि*प्राणान्तिकादिसर्व्व* पापेष्वपि च स्थितं *ब्राह्मणं नैव हन्यात् । १ । तर्हि किं कुर्यादित्यत आह एनं पापिनं ब्राह्मणं समग्रधनान्वितं * अक्षतं देहे क्षतेन * कृत्वा राष्ट्राद्बहिः कुर्यात् । २ । ३८० । कस्मादहननादित्यत आह ।

नब्राह्मणवधाद्भूयानधर्म्मोविद्यते भुवि। तस्मादस्य वधं राजामनसापिनचिन्तयेत् ॥ ३८१ ॥

नब्राह्मणवधादित्यादि। १। ३८१। ब्राह्मणवधाद्भूयान्बहुतरो*भुविनाधर्म्मोविद्यते *तस्मादस्यब्राह्मणस्य वधं राजा*मनसापिनचिन्तयेत्। २। ३८१।

वैश्यञ्चेत्क्षत्रियांगुप्तां वैश्यांवाक्षत्रियोब्रजेत्। योब्राह्मण्यामगुप्तायां तावुभौदण्डमर्हतः ॥ ३८२ ॥

वैश्यश्चेदित्यादि। ३८२। वैश्यश्चेद् गुप्तां क्षत्रियां*मकामां बलाद् ब्रजेत्*क्षत्रियोवावैश्यां गुप्तां*मकामां बलाद् ब्रजेत्। १। योवा क्षत्रियोवैश्योवा*ब्राह्मण्यामगुप्तायामकामायां बला* द्व्रजन्यद्दण्डमर्हत्तावुभौक्षत्रिय*वैश्यौतद् दण्डमर्हतः। २। ३८२।

सहस्रं ब्राह्मणोदण्डं दाप्योगुप्ते तुते ब्रजन्। शूद्रायांक्षत्रियविशोःसाहस्रोवैभवेद्दमः ॥३८३

सहस्रमित्यादि। ३८३। ते क्षत्रियावैश्यौ द्वे*गुप्ते बलाद् ब्राह्मणोब्रजन्*ताम्रपणानां सहस्रं दण्ड दाप्यः। १। शूद्रायां गुप्तायामकामायां च*ब्रजतोःक्षत्रियविशो*स्ताम्रपणानां सहस्रं * दमोदण्डोभवतीति। २। ३८३।

क्षत्रियायामगुप्तायांवैश्ये पञ्चशतं दमः। मूत्रेणमौण्ड्यमिच्छेत्तु क्षत्रियेदण्डमेववा ॥३८४॥

क्षत्रियायामित्यादि। ३८४। अगुप्तायां क्षत्रियायां*मकामायां बलादेव*ब्रजतिवैश्ये ताम्रपणानां*पञ्चशतं दमःस्यात्। १। अगुप्तायां क्षत्रियायां*मकामायां बलाद् ब्रजतिक्षत्रिये *मूत्रेणमौण्ड्यं मुण्डन *मथवादण्डमेवदण्ड मिच्छेत्। २। ३८४।

अगुप्ते क्षत्रियावैश्ये शूद्रांवा ब्राह्मणोब्रजन्। शतानिपञ्चदण्ड्यःस्यात् सहस्रन्त्वन्त्यजस्त्रियम् ॥ ३८५ ॥

अगुप्ते इत्यादि। ३८५। अगुप्ते क्षत्रियां वैश्यां*शूद्रां वापरकामां बला*द्ब्राह्मणोब्रजन्ताम्रपणानां* पञ्चशतानिदण्ड्यःस्यात्। १। अन्त्यजस्त्रियं चण्डालादीनां स्त्रियं*ब्रजन्सहस्रं दण्ड्यःस्यात्। २। ३८५।

यस्यस्तेनःपुरे नास्तिनान्यस्त्रीगोनदुष्टवाक्। नसाहसिकदण्डघ्नौसराजाशक्रलोकभाक्॥३८६

यस्येत्यादि। ३८६। यस्यराज्ञःपुरे देशे *ग्रामनगरग्रामनादौ*स्तेनोनास्तिनास्तिचान्य*स्त्रीगामीनास्ति दुष्टवाक्। १। नचसाहसिकोनापि*दण्डघ्नोयोदण्डादिनापरान्हन्ति*सराजाशक्रलोकभाक्। २। ३८६।

मर्ल्याचात । १। तेषां बलाकारेण यद्रक्तिकमाघक* प्राणादिभाण्डादिकं*तत्प्रतीमानमिति। २। तत्सर्व्वं वलाच्चितमन्त्रं ना*नधिकतयैवलाच्चितं स्यात्*पुनरेवसर्व्वं घट ब*घट् कमाणे बुपरीक्षयेत्। १। ४०३।

पणं यानेतरे दाप्यं पौरुषोऽर्द्धपणं तरे। पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्॥ ४०४॥

पणमित्यादि। ३। ४०४। स द्रव्यद्यादितरे*याने दोलाहयादौ*वातरे पारकरणे नाविकाय*तामू गापणं दाप्यः। १।नृपोनिर्द्दिष्टे तपौरुषं पुरुषस्य तरे त्वर्द्धपणं दाप्यं। २। पादं पणमयानः पशुर्योषिच्च * तरे दाप्या रिक्तकोभारविहीनः*केवलः पुमान्पणस्यपादार्द्धं तरे दाप्यः। २। ४०४।

भाण्डपूर्णानियानानितार्य्यं दाप्यानिसारतः। रिक्तभाण्डानियत्किञ्चित् पुमांसश्चापरिच्छदः॥ ४०५॥

भाण्डेत्यादि। ४०५। पण्यभाण्डपूर्णानियानानि*शकटादीनिसारतःपण्य*द्रव्यसारोत्कर्षापकर्ष* वर्षज्ञात्वा तार्य्यं मातरं। १। दाप्यानिनृपोनिर्द्दिष्टेत् * रिक्तभाण्डानियानानि * किञ्चिद्दाप्यानिर्निर्द्दिष्टेत्। १। अपरिच्छदादरिद्रान*पुमांसश्चरिक्तपुरुषस्यापादार्द्धं पणं यथापिस्वल्पं किं*चित्तार्य्यं दाप्याभवन्ति। ३। ४०५।

दीर्घाध्वनियथादेशं यथाकालं तरोभवेत्। नदीतीरेषु तद्विद्यात्समुद्रे नास्तिलक्षणम्॥ ४०६॥

दीर्घाध्वनीत्यादि। ४०६। दीर्घाध्वनिदेशे तरे*यथादेशं यथाकालं तरीतरेत्*तथातत्कार्य्यं विद्यात्। १। नदीतारे पुनर्दीर्घाध्वनि*यथादेशं यथाकालं च*तथातार्यं विद्यात्समुद्रे* तार्य्यस्याल्पलक्षणं नैवास्ति। १ ४०६

गर्भिणीतुद्विमासादिस्तथाप्रव्रजितोमुनिः। ब्राह्मणालिङ्गिनश्चैवनदाप्यास्तारिकंतरे ४०७

गर्भिणीत्यादि। ४०७। सर्व्वत्रतारतारिकमातरं* द्विमासादिगर्भिणीप्रव्रजितो * भिक्षुकाश्रमीवनिर्वान प्रस्थः। १। लिङ्गिनोमेखलाजिनादिचिह्न*धारिणोब्राह्मणाश्चेते*नदाप्याभवन्तीति। २। ४०७।

यन्नावि किञ्चिद्दासानां विशीर्य्येतापराधतः। तद्दासैरेवदातव्यं समागम्यस्वतोंऽशतः॥ ४०८॥

यन्नावीत्यादि। ४०८। यस्यां नावि दाशानां कैवर्त्तानां तारकाणां*यस्यापराधतोयत्किञ्चिद्द्रव्यं* शीर्य्येत भज्यते तद्दासैःसर्व्वैः*समागम्यस्वतोंऽशतोदातव्यं। १। ४०८।

एषनौयायिनामुक्तोव्यवहारस्यनिर्णयः। दासापराधतस्तोये दैविकेनास्तिनिग्रहः॥ ४०९॥

एषइत्यादि। ४०९। नौयायिनामेषव्यवहारस्य*निर्णयःप्रोक्तस्तोये नद्यादौ*व* दैविकेनिपातनादौदाशापराधतोनिग्रहोनैविद्यते। १। ४०९।

अथोद्देशक्रमेणस्त्रीपुंधर्मं वक्तुं नवममध्यायमारभते * पुरुषस्य स्त्रियाश्चेत्यादि । १ । १ ।

**पुरुषस्य स्त्रियाश्चैव धर्मे वर्त्मनि तिष्ठतोः । संयोगे च वियोगे च धर्मान् वक्ष्यामि शाश्वतान् ॥१॥**

धर्म्ये वर्त्मनि तिष्ठतोः * स्त्रीपुंसयोः संयोगे च वियोगे च * पुरुषस्य स्त्रियाश्च शाश्वतान् धर्मान् * अहमधुना वक्ष्यामि ॥ १ । १ ।

**अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥२॥**

अस्वतन्त्रा इत्यादि ॥ २ ॥ स्वैः पुरुषैः स्त्रियोऽस्वतन्त्राः कार्याः * कथमित्यत उच्यते * विषयेषु च कर्म्मादिषु दिवानिशं सज्जन्त्यः * आत्मनो वशे संस्थाप्याः ॥ १ ॥ २ ॥ स्वैः पुरुषैरिति केन केनेत्यत आह ।

**पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३॥**

पिता रक्षतीत्यादि ॥ १ ॥ ३ ॥ पितेत्युपलक्षणात् * पिता तत्स्वजनश्च * कौमारे यावद्विवाहं * कन्यां स्त्रियं रक्षति । १ । ततो वराय दत्तां तां * यौवने भर्त्ता रक्षति * स्थविरे वार्द्धक्ये तां * पुत्रादयो रक्षन्ति ॥ २ ॥ इत्थं रक्ष्यमाणा स्त्री न कदापि * स्वातन्त्र्यमर्हतीति ॥ ३ ॥ ३ ॥

**कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः । मृते भर्त्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥४॥**

कालेत्यादि । ४ । काले विवाहयोग्ये कन्याया अदाता पिता * लोके भर्त्सनवाच्यः स्यात् ॥ १ ॥ उपगमनयोग्ये काले भार्यां * अनुपयन् अनुपगच्छन् पतिर्वाच्यः स्यात् भर्त्तरि मृते * मातुररक्षिता पुत्रो वाच्यः स्यात् । २ ।

**सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥५॥**

सूक्ष्मेभ्य इत्यादि । ५ । सूक्ष्मेभ्योऽपि कुकर्म्मणः प्रसङ्गेभ्यः * स्त्रियो विशेषतो रक्ष्याः स्वैः * हि यतस्ता अरक्षिताः सत्यो द्वयोः * कुलयोः शोकमावहेयुः । १ । ५ ।

**इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् । यतन्ते रक्षितुं भार्यां भर्त्तारो दुर्बला अपि ॥ ६॥**

इमं हीत्यादि । ६ । सर्ववर्णानां स्त्रीणामिममुत्तमं * धर्मं पश्यन्तो भर्त्तारो * दुर्बला अपि कृत्स्नामपि * भार्यां रक्षितुं यतन्ते । १ । ६ ।

स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च । स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन्हि रक्षति ॥ ७॥

स्वामितादि। ७। पुरुषः प्रयत्नेन जायां रक्षन्सन्*स्वप्रसूतादीन् रक्षति। १। ७। कथं जायां रक्षन् स्वप्रसूतादीन्*रक्षतीत्यत उच्यते।

पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते। जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ८॥

पतिर्भार्य्यामित्यादि। १। ८। पतिः खल्वात्मनः शरीरमिति * आत्मकः स्थूलपुरुषः *स्वरागक्रमरूपेणैव*भार्य्यां संप्रविश्य तस्याः*गर्भाशयं संप्रविश्य * गर्भो भूत्वेह जायते। १। भार्य्या च तं गर्भं प्रसूयते ततो* जायां रक्षन् स्वप्रसूतिं*रक्षति तस्या अविशुद्धं रक्षति*यतोऽस्या पुनर्जायते। २। तद्धि जायाया जायात्वं* तस्याः *व्यभिचारेण*दोषे तस्या जन्मस्थस्य*न विशुद्धं भवतीति*तस्मादात्मानं रक्षतीति। ३। ८। कथं कुलं रक्षतीत्यत आह।

यादृशं भजते हि स्त्री सुतं सूते तथाविधम्। तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥९॥

यादृशं भजतइत्यादि। १। ९॥ यादृशं पुरुषं स्त्री भजते * तथाविधं सुतं सूते * व्यभिचारेणान्यस्मात् *गर्भं स्त्री लभते तादृश * सुतप्रसवं कुलं नश्येत्। १। तस्मात्प्रजादिशुद्ध्यर्थं पुरुषः*प्रयत्नतः स्त्रियं रक्षेत्*जायां रक्षन् स्वप्रसूति*प्रभृतीन् रक्षतीति। २। ९।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्। एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ १०॥

न कश्चिदित्यादि। १०। कश्चिदपि पुरुषो योषितः*प्रसह्य बलेन वरक्षितुं *शक्तो न भवति तासु*योषितः खलु तं नैव। १। एतैरागामि उपाययोगैः*परिरक्षितुं पुंभिः शक्याः*अयतं चोच्यन्ते। २। १०।

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्। शौचे धर्म्मेऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥११॥ दे

अर्थस्येत्यादि। ११। एनां भार्य्यामर्थस्य संग्रहे धन*रक्षणे व्यये च पुमान्* नियोजयेत् शौचे तस्याः शरीरस्य*स्वशरीरशौचे नियोजयेत्। १। धर्म्मेऽग्निहोत्राग्निरक्षणादौ चैनां * नियोजयेदन्नपक्त्यां*नियोजयेत् परिणाहः स गृहोप*करणस्यावेक्षणे च। २। ११।

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः। आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२॥

अरक्षिता इत्यादि । १२ । या आत्मानमात्मना न*रक्षेयुः पुरुषैराप्त*कारिभिस्ता गृहे रुद्धा * अपि न रक्षि ताः । १ । यास्तु खल्वात्मानमात्मना रक्षेयु*स्ताः सुरक्षिता भवन्ति । २ । १२ ।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥ १३ ॥

पानमित्यादि । १३ । मद्यादिपानं दुर्जनसंसर्गश्च*पतिविरहोऽन्यगृहे इतस्ततोऽटनं * स्वप्नः स्वप्नेऽपुरुषसङ्गमा दिः*परस्य गृहेऽपि चिराच्चिरवासः । १ । एतानि षट्*नारीणां सं*दूषणानि*भवन्तीति । २ । १३ ।

नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ १४ ॥

नैता इत्यादि । १४ । एता मद्यपायिन्यो दुर्जनसंसर्ग*कारिण्यः पतिविरहिण्यः सर्व्वत्र * भ्रमणशीलाः स्व प्नदर्शिन्यः पर*गृहवासिन्यो नार्यो विनीता भवन्ति । १ । ताः पुंसां रूपं न परीक्षन्ते *वयसि यौवने संस्थितिर्न* चैता सां तथापि पुमा*नितिमत्वा सुरूपं वा*विरूपं वा ता भुञ्जते । २ । १४ ।

पौंश्चल्याच्चलचित्तत्वान्नैःस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्त्तृषु ता विकुर्व्वते ॥ १५ ॥

पौंश्चल्यादित्यादि । १५ । एता मद्यपानादियुक्ता भार्याः पतिः* यत्नतोऽपि रक्षिताः पौंश्चल्यात्चल * चित्तत्वान्नै स्नेह्यात् स्वभावतश्च भ*र्त्तृषु विकुर्व्वते विरुद्धं कुर्व्वते । २ । १५ ।

एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् । परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥ १६ ॥

एवमित्यादि । १६ । प्रजापतेर्निसर्गाज्जातमेवं*स्वभावमासां नारीणां * ज्ञात्वासां रक्षणं प्रति*पुरुषः परमं प्रयत्नमातिष्ठेत् । २ । १६ ।

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् । द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् ॥ १७ ॥

शय्येत्यादि । १७ । मनुः प्रजापतिः स्त्रीभ्यः स्त्रीलोकार्थं *शय्यादिकमकल्पयत् । १ । १७ ।

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥ १८ ॥

नास्तीत्यादि । १८ । स्त्रीणां धर्म्मार्थं क्रिया मन्त्रैर्नास्तीति*धर्म्मो वेदे व्यवस्थितः*तस्मान्निरिन्द्रिया इन्द्रः ईश्वरः परमात्मा*तदिन्द्रकार्य्यमिन्द्रियम् । १ । हि यस्मादमन्त्रास्तस्मा*दीश्वरकार्य्यविहीना * अतः स्त्रियोऽनृतं मिथ्येति स्थितिः । २ । १८ । तर्हि कथमासां निष्कृतिः स्यादित्यत आह ।

तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि। स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः ॥१९॥

तथा चेत्यादि । १ । १९ । तथा चैतादृशत्वे पि स्त्रीणां * तासां * स्वालक्षण्यपरीक्षार्थं * व्यभिचार* दोषगुण परीक्षार्थम् ॥ १ ॥ निगमेषु पि बह्व्यः श्रुतयो* निगीताः वर्त्तन्ते तासाञ्च * निष्कृतीर्दोषनाशिनी * रिमावाचः शृणु । २ । १९ । तद्यथा

यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता। तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ २०॥

यन्म इत्यादि । २० । यन्म इत्यादि पिता वृङ्क्तामित्यन्तो* मन्त्रः ऽसाव्यभिचारदोषशान्त्यर्थौ * निदर्शनमेतद्दृक् * मनाश्च तयोर्दृष्टान्ताः । २ । निदर्शनमात्रमेव* श्रुतिकाथने श्रुतयो* निष्कृतीरितिवचनं * नदोषमावहति २ । प्रमादोक्तिकवचनस्य* ख्याते बहुवचनं यथा भवेदिति * व्याचष्टे तन्न निदर्शनमित्युक्तं * कस्याश्चित्कश्चित्पुत्र आह मम माता खलु पतिव्रता सती* विचरन्ती यत्प्रलुलुभे तद्रेतो* रजो मम पिता वृङ्क्तां शोधयतु । ४ । २० ।

ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा। तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥२१॥

ध्यायत्यनिष्टमित्यादि ॥ २१ । पाणिग्राहस्य पत्युर्यत्*किञ्चिदनिष्टं भार्या मनसा ध्यायेत् * तस्य व्यभिचारस्य निह्नवो* स्वयासम्यगुच्यते । १ । २१ ।

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि। तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥

यादृगित्यादि । २२ । भर्त्रा यादृग् गुणेन स्त्री* यथाविधि संयुज्यते * सा स्त्री तादृग् गुणा भवति स्त्रीय* गुणान् जहाति तद्यथा* समुद्रेण निम्नगा नदी । १ । २२ । तत्रोदाहरणं दर्शयति ।

अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा। शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३॥

अक्षमालेत्यादि । १ । २३ । अधमयोनिजाऽक्षमाला नाम काचिद्वसिष्ठेन सह* संयुक्ता शारङ्गी नाम * काचिदधमयोनिजा* मन्दपालेन संयुक्ता । १ । अभ्यर्हणीयतां सर्व्वतोऽर्हतां *लोके जगाम वसिष्ठ* मन्दपालयोर्गुणयोगात् । २ । २३ ।

एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः। उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥२४॥
एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा। प्रेत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥२५॥

एता इत्यादि ॥ २४ ॥ स्पष्टार्थोऽयं श्लोकः । २४ । एषोदितेत्यादिश्च श्लोकः स्पष्टार्थः ॥ २५ ॥

प्रजनार्थं महाभागा:पूजार्हागृहदीप्तय:। स्त्रिय:श्रियश्चगेहे षु नविशेषोऽस्तिकश्चन ॥ २६ ॥

प्रजनार्थमित्यादि ॥ २६। महाभागाब्राह्मण्यादय:पूजार्हा विधिना*यथोक्तलक्षणा द्विजकन्याअप्रतिलोमजा: ॥ १ ॥ मन्त्रैरूढा:खेनैकीकता*स्वगोत्रवर्णादिभाजश्च* स्त्रिय:पत्युर्गृहदीप्तयो*गृहे श्रियश्चभवन्ति ॥ २ ॥ तेषां ब्राह्मणादीनां पत्नीनां ब्राह्मणादीनां सवर्णाजातलोमजानां तासांप्रजानार्थं * अपत्योत्पादनार्थं न*कश्च नविशेषोऽस्तीतिसर्व एवशूद्रावर्णा अपत्यं प्रजायन्ते॥ ३ ॥ २६ ॥

उत्पादनमपत्यस्यजातस्यपरिपालनम्। प्रत्यहंलोकयात्राया:प्रत्यक्षंस्त्रीनिबन्धनम्॥२७॥

उत्पादनमित्यादि। २७। अपत्यस्योत्पादनं पुंसां*स्त्रीनिबन्धनं प्रत्यक्षं*जातस्यापत्यस्यपरि* पालनं स्त्रीनिबन्धनं प्रत्यक्षं। १। प्रत्यहं लोक*यात्राया*गृहकर्म्मण:*साधनं*स्त्रीनिबन्धनं प्रत्यक्षम। २। २७।

अपत्यं धर्म्मकार्य्याणिशुश्रूषारतिरुत्तमा। दाराधीनस्तथास्वर्ग:पितृणामात्मनश्च ह॥२८॥

अपत्यमित्यादि। २८। अपत्यं दाराधीनं दाराधीनानि*चधर्म्मकार्याणिशुश्रूषा * चोत्तमारति*श्च दाराधीनासर्ग:*पितृणामात्मनश्च दाराधीन:स्यात्। १। २८। कं षां दाराणामधीनानीमानि*भवन्तीत्यत आह।

पतिं यानाभिचरतिमनोवाग्देहसंयता। साभर्तृलोकमाप्नोतिसद्भि:साध्वीतिचोच्यते॥२९॥

पतिमित्यादि। १। २९। यानारीमनोवाग्देहसंयता*परपुरुषाभिमुखता*पतिं नाभिचरति* सानारी भर्तृलोकानाप्नोति*साध्वीचेतिसद्भिरुच्यते। १। २९।

व्यभिचारात्तुभर्त्तु:स्त्रीलोके प्राप्नोतिनिन्द्यताम्। शृगालयोनिञ्चाप्नोतिपापरोगैश्चपीड्यते ॥ ३० ॥

व्यभिचारात्वित्यादि। ३०॥ स्त्रीभार्य्याभर्त्तुर्व्यभिचारा*र्ल्लोके बनिन्द्यतां प्राप्नोति*प्रेतायृगालयोनिं प्राप्नोतिपापरोगैश्चपीड्यते। १। ३०।

पुत्रं प्रत्युदितं सद्भि:पूर्व्वजैश्चमहर्षिभि:। विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥ ३१ ॥ वी

सद्भि:पूर्व्वजैर्महर्षिभि:पुत्रं * प्रत्युदितं विश्वजन्यं * सर्व्वजनसम्बन्धिनं* पुण्यमिमं वक्ष्यमाण*मुपन्यासं निबोधत। १। ३१। उपन्यासमाह।

भर्त्तु:पुत्रंविजानन्तिश्रुतिद्वैधन्तुभर्त्तरि। आहुरुत्पादकंकेचिदपरेक्षेत्रिणंविदु: ॥ ३२ ॥

भर्त्तरित्यादि। १। ३२। सर्व्वेजनाजानन्तिस्त्रियाभर्त्तु:पुत्रइतितत्रस्त्रियाभर्त्तरि * श्रुतिद्वैधन्तुवर्त्तते

तद्यथा। १। कश्चित्पूर्व्वं जामदग्न्यः क्षिया* अपतापगौत्पादकोयो* वोढावापोवोढातस्या* स्वं भर्त्तारं प्राप्तस्तथा तद्यपता। २। अपरं पूर्व्वं जामदग्न्यः यः खलु* क्षेत्रिणां क्षियावोढारं* भर्त्तारं विद्स्तथा व* क्षियामवोढारावाया* यस्त्वपतां जनयति। ३। वोढ्वपतामितिसर्व्वं जातस्त्व* नत्वगोढः पुत्रइति। ४। ततश्च व्रजः कानीनः मह्वोढः *वोढः पुत्रायदितल* कानीनप्रश्नभवतो* गर्भिणोष्वनकश्चिद्वहति। ५। तदाकानीनौद्वोजनयिष्टः पुत्रो* भवता मातामहस्य* वियास्त्रवलुकाडक्षवान्। ६। ३२।

क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्। क्षेत्रबीजसमायोगात्सम्भवः सर्व्वदेहिनाम् ॥ ३३ ॥

क्षेत्रभूतेत्यादि। ६१। स्पष्टार्थोऽयं श्लोकः। ३३।

विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित्। उभयन्तु समं यत्र सा प्रसूतिः प्रशस्यते ॥ ३४ ॥

विशिष्टमित्यादि। ३४। उभयं बीजं योनिश्चेति द्वयं* नृबीजं नृयोनिश्च गोबीजं गोयोनि* रिति वं नवपश्चबीजं पशुयोनिः। १। तत्रापि सामान्यविशेषाऽवधारणौ* यथाब्राह्मणसामन्वे* विवाहे ब्राह्मणक्षत्रियवैश्य* कन्याभिः साम्यं भवति। २। ३४। अस्तु बीजयोन्युभयसाम्ये* प्रस्तवणप्रस्ता बीजयोनि * वैषम्ये प्रस्तवःकीदृक्* स्यादित्यतः पुनराह।

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते। सर्व्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ ३५ ॥

बीजस्य चैवेत्यादि। ३५। बीजयोन्योर्मध्ये बीज* मुत्कृष्टं स्यादित्युच्यते* कुतइत्यतउच्यते* सर्व्वभूतप्रसूतिर्हीत्यादि। १। हियस्माद्बीजलक्षणं यं सर्व्व* भूतप्रसूतिरुत्पत्ति* र्नयोनिलक्षणात्तथापि। २। ३५। तदेवाह इति।

यादृशन्तूप्यते बीजं क्षेत्रे कालोपपादिते। तादृग्रोहति तत्तस्मिन्बीजं स्वैर्व्यञ्जितं गुणैः॥ ३६॥

यादृशमित्यादि। ३६। कालोपपादिते क्षेत्रे* यादृशं बीजमुप्यते* तद्बीजं तस्मिन्क्षेत्रे स्वैः* गुणैर्व्यञ्जितं लक्षितं* तादृगेव रोहतीति। १। ३६।

इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते। न च योनिगुणान्कांश्चिद्बीजं पुष्यति पुष्टिषु ॥ ३७॥

इयमित्यादि। ३७। हियस्मादियं भूमिर्भूतानां योनिः* शाश्वतीतत्रोप्तं बीजं * पुष्टिषु ङ्कुरादिक्रमात्*

इविषुक्तां यदि दृष्टोऽनयाख्या*भूमिगुणानुपश्यति । १ । ३७ । ननु दृश्यते क्वचि*दूषमायामुप्तं बीजं दोषं *पुष्टं च प्ररोहति क्वचिद्गुणौल्वनाय तानथाह* ।

भूमावप्येककेदारे कालोप्तानि कृषीवलैः । नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥ ३८ ॥

भूमावप्येकेत्यादि । १ । ३८ । भूमावपि कृषीवलैः *एककेदारे बीजानि * नानारूपाणि व्रीहिशालितिल*मुद्गादीनि कालोप्तानि*व्रीह्यादीनां वजायन्ते । १ । ३८ ।

व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः । यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥

तद्यथाचाद व्रीहय इत्यादि । ३९ । व्रीह्यादयो*यथाबीजं*प्ररोहन्ति*नलज्ञानि । १ । ३९ ।

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते । उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ४० ॥

अन्यदुप्तमित्यादि । ४० । अन्यदुप्तमन्यज्जातमित्येतन्नोप*पद्यते न हि व्रीहय * उप्ताः शालयो जायन्ते । १ । हि यस्माद्यद्बीजमुप्यते तदेव*च तत्प्ररोहतीति दृष्टं । २ । ४० । अस्त्वेवं बीजस्य प्राधान्यादपत्य*स्योत्पादक एवास्तु या*भर्तास्तयो वपुत्रश्च स्यात्कथमन्योत्पादितः पुत्र*क्षेत्रिणो भर्तुः पुत्रः स्यादि*त्यत आह ॥

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना । आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥ ४१ ॥

तदित्यादि । १ । ४१ । तत्तत्परयोषिता विनीतेन नापि * प्राज्ञेन ज्ञानविज्ञान*वेदिनायुष्कामेण*पुंसा परयोषिति न*जातु बीजं वाप्तव्यं स्यात् । २ । ४१ ।

अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः । यथा बीजं न वप्तव्यं पुंसा परपरिग्रहे ॥ ४२ ॥

वक्ष्यादित्यादि वायुगीताः गाथा*प्रदर्शयत इत्यादि । १ । ४२ । स्पष्टार्थोऽयं श्लोकः । ४२ । कावायुगीता गाथाः पर*क्षेत्रे बीजवपनप्रति*षेधार्था इत्यत उच्यते ।

नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः । तथा नश्यति वै क्षिप्रं बीजं परपरिग्रहे ॥ ४३ ॥

नश्यतीषुर्यथेत्यादि ।१।४३। यथा परेण विद्धं मृगमनु*पश्चाद्विध्यतो जनस्येषुर्बाणः*परशरेण विद्धे तस्य*मृगस्य खे छिद्रे सन्यथा नश्यति विफलीभवति । १ । तथा परपरिग्रहे *योषिति बीजमुप्तं क्षिप्रमेव नश्यतीति । २ । ४३ ।

ननु कस्माद्विद्धमनुविध्यतः इषुर्नश्यतीत्यत आह ॥ पृथोरित्यादि ॥

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः । स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम् ॥ ४४

पूर्व्वविदोमहं यथाः पृथिवी * मिमां पृथोराज्ञोभार्य्यां * विदुस्तस्यां पृथिव्यां व * जातश्च भूमेः स्थाणुं * च्छित्वा बके दारं कृतं । १ । तत् केदारं स्थाणुच्छेदस्य पुंस * एवाहुर्न पृथोस्तथामृगं * शल्यव्रतो जनस्याह * कृतवतां मृगं पश्चाद्विध्यतो जनस्यातः । २ । ४४ । कस्मात् परपरिग्रहे * बीजवतां मगवतीत्यतत्राह ।

**एतावानेव पुरुषो यज्जायात्मा प्रजेति ह । विप्राः प्राहुस्तथा चैतद्यो भर्त्ता सा स्मृताङ्गना ॥ ४५ ॥**

एतावानित्यादि । १ । ४५ । पुरुषः खलु यज्जायात्मा कृतदारो भवति * तदात्मा प्रजा भवतीति ह पारम्पर्य्योपदेशं विप्रा आहुः । तथा च तस्मिन् प्रकारे खल्वेतत् । यस्या यो भर्त्ता वोढा तदङ्गात्मिका सा चाङ्गना । २ । उक्तञ्च वाजसनेयसंहितायां * पाटितोऽहं द्विजः पूर्व्वमेकदेहः स्वयम्भुवा ॥ पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति श्रुतिः । ३ । यावन्न विन्दते जायां तावदर्द्धो भवेत् पुमान् । नार्द्धः प्रजायते सर्व्वः प्रजायेतेत्यपि श्रुतिः । इति । ४ । श्रुतिश्च वाजसनेय ब्राह्मणे * अर्द्धो ह वा एष आत्मनो * यज्जाया तस्माद्यावज्जायां * न विन्दते नतावत्प्रजायते ऽसर्व्वो हि तावद्भवति ॥ ५ ॥ अथ यदैव जायां * विन्दते ऽथ प्रजायते * तर्हि सर्व्वो भवति ॥ ६ ॥ इति । प्रजाजायामिति पत्नीं व्यासवचनात् पत्न्यो * यज्ञसंयोग इति न विधानात् ॥ ७ ॥ ब्राह्मणस्य तिस्रः पत्न्यो * ब्राह्मणक्षत्रियवैश्य * कन्याः क्षत्रियस्य द्वे * क्षत्रियवैश्यकन्ये स्त्री * वैश्यस्यैकावैश्यकन्या * मन्त्रे विवाहादेकात्मा स्यात् ॥ ८ ॥ विवाहमन्त्राहिस्म * पदीगमनान्ता दार * लक्षणमेव धर्म्मं स्यात् ॥ ९ ॥ ते च हि मन्त्रादिविधापाटितानां द्विज * वर्णानां भवन्ति ह्येकरूप * स्त्रीपुंसानां तु सन्धान * कृतो भवन्ति नामन्त्रे * विवाहे न चाविवाहे ॥ १० ॥ ते न द्विजानां शूद्राभार्य्या न धर्म्म्या न च परपत्न्या ऐकात्म्याभावात् ॥ तासु जाताः पुत्रा न धर्म्म्या भवन्ति ॥ ११ ॥ ४५ ॥ यदैव पत्नी पत्युश्छिन्ना भवति ततोऽस्यामात्मैव परपुंसः स्फुरेत इति ह यमपत्योत्पत्तौ बीजं तदुभयबीजलक्षणमपत्यं व्यक्तिं लक्ष्यते । ततश्च क्षेत्रिणः स्वबीजश्च स्वक्षेत्रे च तिनतजातमपत्यं क्षेत्रिण एव धर्म्म्यमिति । ननु कथमैकात्म्यं तयोः प्रतीयते इत्यत आह ॥

**न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते । एवं धर्म्मं विजानीमः प्राक् प्रजापतिनिर्म्मितम् ॥ ४६ ॥**

न विक्रय इत्यादि ॥ १ ॥ ४६ ॥ निष्क्रयेण विसर्गेण त्यागेन न * भार्य्या भर्त्तुर्विमुच्यते * लोके ह्याचाते ऽस्य कस्य भार्य्येति * क्रीतेयं त्यक्तेयमिति ॥ १ ॥ प्राक् प्रजापतिनिर्म्मितमेवं मन्त्रे विवाहात् स्त्री * पुंसयोरैकात्म्यं धर्म्मं विजानीमः ॥ २ ॥ तस्मान्निष्क्रीतायां त्यक्तायां वा स्त्रियां जनितमपत्यं बीजलक्षण * लक्षितमपि नोत्पादकस्य स्यात् ॥ ४६ ॥

**सकृदंशो निपतति सकृत् कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ४७ ॥**

क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ ५३॥

क्रियाभ्युपगमेत्यादि। १। ५३। यत्फलाभिसन्धिना क्षेत्रिकस्येह बीजं [illegible] तत्क्षेत्रं योनि गर्भोत्पत्त्यै यत्क्रियाभ्युपगमतः ॥ १॥ अस्मिन् धानबीजं तत्रापि [illegible] फलं स्यात् इति क्रियाभ्युपगमात् तद्बीजार्थं प्रदीयते। २। इह तस्य फलस्य भागिनौ बीजी च क्षेत्री च दृष्टौ तस्मात्फलाभिसन्धिना बीजाद् गरीयसी योनिः। १। ५३। फलानभिसन्धौ क्षेत्रिण फलं यथा तदाह।

ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्बीजं न वीजी लभते फलम् ॥ ५४॥

ओघेत्यादि। १। ५४। ओघेन वेगेन वातेनाहृतं बीजं कस्य तदभिसन्धिर्न भवति तत्तद्बीजं यस्य क्षेत्रे प्ररोहति। १। तद्बीजं फलञ्च क्षेत्रिणस्यैव भवति तद्बीजी फलं न लभते परपुरुषस्य क्रियाभ्युपगमाभावे क्षेत्रिणः पुत्रः स्यात्। २। ५४।

एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च। विहङ्गमहिषीणाञ्च विज्ञेयः प्रसवं प्रति ॥ ५५॥

प्रसङ्गाद् गवादिप्रसवभाग माह एष धर्म इत्यादि। १। ५५। यथा गोऽश्वादीनामित्यादि [illegible] प्रागुक्ताः। १। तासां विहङ्गीनाञ्च प्रसवं प्रति च यत्तत्फलानामनभिसन्धौ [illegible] क्षेत्रिण फलं भवति। २। फलाभ्युपगमे यथाभ्युपगमं फलभागित्वं स्यात् स्वामित्वे क्षेत्रिकः। १। ५५। उपसंहृत्याभिधेयमाह तद्वः सारफल्गुत्वमिति त्वमित्यादि। १। ५६।

एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्त्तितम्। अतःपरं प्रवक्ष्यामि योषितं धर्ममापदि ॥ ५६॥

बीजयोन्योः सारत्वं प्रधानत्वं फल्गुत्वञ्च तुच्छत्वमप्राधान्यमेतद्वः परस्परं उत्पादितं सन्तानभागित्वं उक्तम्। १। योषितामपुत्रकत्वात् [illegible] आपद्धर्मं वक्ष्यामि। २। ५६। [illegible] अपुत्रकत्वापदि यथा यतः पुत्रोत्पादस्य [illegible] माह।

भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य सा। यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा स्मृता ॥ ५७

भ्रातुरित्यादि। १। ५७। ज्येष्ठस्य भ्रातुर्भार्य्या सानुजस्य भ्रातुर्गुरुपत्नीमातेव भवति। १। यवीयसः कनिष्ठस्य भ्रातुर्भार्य्या सा खलु ज्येष्ठस्य भ्रातुः स्नुषेव भवतीति। २। ५७।

ज्येष्ठो यवीयसो भार्य्यां यवीयान्वाग्रजस्त्रियम्। पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ ५८

औद्वाहिकेषु मन्त्रेषु * क्षतयोनिविधवायामपि * नियोगः क्वचिदपि नास्त्येव * कीर्त्यते कन्यायाएव * हि विवाहमन्त्रोक्ता क्षतनियोगे । १ । विवाहविधौ क्षतायाविधवायाः * वेदनं न वचोक्तं । २ । ६५ ।

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥६६॥

ननु तर्हि प्रमादपरि * विधवायां नियोगः किं * प्रमत्तो धर्मस्तथात * उच्यते ऽयं द्विजैरित्यादि । १ । ६ । अयं विधवायाः क्षतयोनेरक्षतयोनेर्यथा * विधिर्देवरादिषु * परपुरुषे पुनर्नियोगो * विगर्हितः पशुधर्मः । १ । विद्वद्भिर्द्विजैर्मन्वादिभिरेव * वेने राज्ये प्रशासति * मनुष्याणामपि विधिः प्रोक्तः । ६६ । कस्मात्तदानीमेव पशुधर्मो मनुष्याणां विधिः प्रोक्तस्तत्राह ।

समहीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा। वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥ ६७ ॥

समहीमखिलामित्यादि । १ । ६७ । स राजर्षिप्रवरो वेणो नाम * राजा पुराऽखिलां महीं * भुञ्जन् पालयन् कामोपहतचेतनः * वर्णानां सङ्करं चक्रे । १ । प्रतिलोमादि * परस्त्रीषु पुरुषान् नियुज्यैव * सङ्करजाति पुत्रानजीजनदिति । २ । ६७ । ततः प्रभृति देवरादिषु विधिनानियोगः सङ्करहेतुत्वात् महर्षिभिर्विगर्हितः ॥

ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥६८॥

ततः प्रभृतीत्यादि । ६८ । ततो वेणराजात् प्रभृति यो * मोहात् प्रमीतपतिकां * विधवां क्षतयोनिं स्त्रियं पुत्रार्थं * देवरादिभ्योऽन्यस्मिन् । १ । नियोजयति तं जनं * साधवो विगर्हन्ति * नतु विधिना देवरप्रभृतिषु * पुत्रार्थं विधवानां * नियोक्तारं विगर्हन्ति । २ । प्रमादिनस्तु अयं द्विजैरित्युक्ते * त्वयमिति पदेन वेधोऽस्ति * सर्व एव नियोगः पशुधर्मो विगर्हितः * इति व्याचक्षिरे । ३ । तन्न साधु स्वयं मनूक्तस्य * योषितां धर्मस्यापत्ती तस्याः * नुपपत्ते र्गर्हितो हि * धर्मो न धर्म उच्यते । ४ । वर्णानां सङ्करं चक्रे * इत्यस्यानुपपत्तेः * न हि विधिना क्षतायां जातः पुत्रो * वर्णसङ्करो भवति । ५ । अनाथापि षण्ढादि * योनयो सङ्करा * नियोगः क्वचिद्विगर्हितः स्यात् । नतु प्रत्युक्तं सकृत् * कन्याप्रदीयत इति * सनामकं सकृत् रागादिभिः कन्या * दानं तया विधवायाः दत्तायाः यदि * पतिर्म्रियेत तस्याः किं न विवाहः स्यात् । १ । तत्राह ॥

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः ॥ ६९ ॥

यस्या इत्यादि । ६९ । यस्याः कन्यायाः पित्रादिना दाता वाचादिना * दाने सत्ये कृते सति * स भावि पतिः कथञ्चि *

दयद्भिर्म्रियेतत्तदातया*मनेननियोगविधिना। १। निजोदेवरोविन्देत*नतुसपिण्डोनोदेवरः* उत्तमवर्णः पुमान्वा। २। ६९। तर्हि किंनियोगविधानेनामन्त्रं * स्व.ग्रहीत्वाभार्यायाया*मिवोपभोगंकुर्यात्* दित्यत आह।

**यथाविध्यनुगम्यैनांशुक्लवस्त्रांशुचिव्रताम्। मिथोभजेताप्रसवात्सकृत्सकृदृतावृतौ॥७०॥**

यथेत्यादि। १। ७०। यथोक्तेननियोगविधिनैवैनां*वाग्दत्तांमृतसाभ्रातृ* भार्य्यां विवाहमन्त्रैरसंस्कृतां*शुक्लवस्त्रांशुचिव्रताम्। १। अनुगम्यापाकृतावृतौमिथः*सकृत्सकृदाप्रसवाद्भजेत * नत्वनृतावृतौचनपुनर्भजेत*नवागर्भाधानेजातेभजेत्। २। इत्यप्रसतांसकृत्कन्याप्रदाने*अयंधर्मोभवत्युक्तः*एतेनवाग्दत्तादीनां*सप्तानांकन्यानामापद्धर्मोव्याख्यातः। ३। नन्वादित्यपुराणे* देवरेणसुतोत्पत्तिर्दत्तकन्याप्रदीयते। दत्तौरसेतरेषान्तुपुत्रत्वेनपरिग्रहः। ४। कलेरादौव्यवस्थापर्व्वकांप्रति * प्रतिषेधःकृतःकथंकलौ * क्षेत्रजःपुत्रविधानमापद्धर्मःस्यादितिचेत्तत्रोच्यते। ५। कलौमनुष्यासामनश्चाञ्चल्या * दयथाविधिनियुक्तत्वेनदेवर* *स्याप्यशक्त्याप्रवृत्त्याप्रतिषेधेपि। ६। उत्तमवर्णात्पुत्रोत्पादनमेव*निर्दोषंसम्भवतीति। ७। ७०। ननुयदि कश्चिदीदृशीं वाग्दत्तां*कन्यांविधवामविधवां वानाम्ने*दद्यात्तदासधर्मोऽधर्मोवेत्यत*आह।

**नदत्वाकस्यचित्कन्यांपुनर्दद्याद्विचक्षणः। दत्वापुनःप्रयच्छन्हिप्राप्नोतिपुरुषानृतम्॥७१॥**

नदत्वाकस्यचिदित्यादि। १। ७१। विचक्षणःसज्जनःकन्यांकस्यचिज्जनस्य*वागादिभिर्दत्वातेन*सहसंस्कृतामकृत्वा*पुनरन्यस्यकस्यचिन्नदद्यात्। १। वागादिभिःकन्यामेकस्मैदत्वा*तेनसहसंस्कृतांच*नकृत्वापुनरन्यस्मै*प्रयच्छन्पुरुषानृतं*चौरदण्डञ्चप्राप्नोति। २। याज्ञवल्क्येनोक्तंहि*सकृत्प्रदीयतेकन्या* हरंस्तांचौरदण्डभाक्। दत्तामपिहरेत्पूर्व्वाच्छ्रेयांश्चेद्वरआव्रजेत्। ३। इतिपूर्व्ववराच्छ्रेष्ठवरस्य*त्वागमनेवागादिभि*र्दत्तकन्यायाअदानेदण्डाभाव*इतिचेत्तर्हिसाकन्या॥ ४॥ पुनरन्यस्मैदानेकिमदोषास्या*दितितत्रोच्यते पर*पूर्व्वत्वद्दोषवतीस्यात्। उक्तंह्याङ्गिरससंहितायांयथा। ५। अन्यदत्ताचयाकन्यापुनरन्यस्य दीयते। तस्याश्चान्नंनभोक्तव्यंपरपूर्व्वेतिगीयते। इति। ६। वशिष्ठेनचोक्तंस्वसंहितायां* अद्भिर्वाचाचदत्तायाम्रियेताथवरोयदि। नचमन्त्रोपनीतास्यात्कुमारीपितुरेवसा। ७। यावच्चेदाहृताकन्यामन्त्रैर्यदिनसंस्कृता। १ अन्यस्मैविधिवद्देयायथाकन्यातथैवसा। ८। इति। नन्वादित्यपुराणेदत्तकन्यायाः*पुनर्दानंकलौप्रति * निषिद्धंकथमेतत्सर्व्वयुगविधि*रूपपद्यतइतिचेत्। ९। तत्रोच्यतेसतांसर्व्व*युगेष्वेवपुनःकन्यादानस्य * प्रतिषेधःपुनर्दत्तायाःपरपूर्व्वकत्वदोषात्। १०। तद्दार्ढ्यार्थंपुनःकलौदत्तकन्या*दानप्रतिषेधःकृतः। ११। ७१।

**विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् । व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥ ७२ ॥**

विधिवदित्यादि ॥ १ ७२ । दावा विगर्हितां व्याधितां वा* विप्रदुष्टां वाया कन्यां* छद्मनं चोपपादितां* विधिवत्प्रतिगृह्यापि सम्पदीगमनान्त* क्रियामन्त्रैः संस्कृतां *वरोयदीच्छतितदा*त्याजे चत्रदोषोनास्ति । २ । ७२। ननेवं दत्वात्तस्याजःसयादित्य*तमाह ।

**यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् । तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः ॥ ७३**

यस्त्वित्यादि । १ । ७३ । यस्तु दुरात्माकन्यां *दोषवतीमनाख्याय*वरायदानमुपपादयेत्तस्य*दुरात्मनःकन्यादातु*स्तद्दानं वितथं कर्यात् ॥ १ । ७३ ।

**विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः। अवृत्तिकर्षिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ७४**

विधायेत्यादि । ७४ । कार्यवान्नरोयःकश्चित् * किमपिकार्यं साधयितुं प्रवासं* गन्तुमिच्छेत्तदासव * भार्यायाःवृत्तिं विधायप्रवसेत् । १ । अनाथात्ववृत्तिकर्षिताजीविका *विनाकर्षितासतीस्त्री * स्थितिमतीस्थैर्यवती भ्रत्याप.सम्मैमात्प्रदुष्येत् । २ । ७४ । तदामोषितभर्तृका*कथं वर्त्तेतेत्यतआह ।

**विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता । प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ७५**

विधायेत्यादिश्लोकं । १ । ७५ । वृत्तिं विधाय प्रोषिते भर्त्तरिस्त्री * मनोवाक्कायैः * नियममास्थिता जीवेत् । १ । वृत्त्यभावे यदिवृत्ति*मविधाय * वभर्त्ताप्रवसेत्तदा प्रोषिते भर्त्तरिसाध्वी * स्वयमगर्हितैःशिल्पैः* कर्मभिरथ मर्जयित्वाजीवेत् । ३ । ७५ । अविहितवृत्तिप्रोषितभर्तृका*कतिकालान् एवं जीवेदित्यतआह ।

**प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः । विद्यार्थं षड् यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥ ७६ ॥**

प्रोषितइत्यादि । १ । ७६ । अविहितवृत्तिक्रया*भार्यया धर्मकार्यार्थं * प्रोषितोनरोभर्त्ताष्टौ* समाःप्रतीक्ष्योऽस्यादय । १ । विद्यार्थं समार्थं वाप्रोषितोभर्त्ता*षट्समाःप्रतीक्ष्यःस्यात्कामार्थं धना* र्थाय प्रोषितोभर्त्ता त्रीन्*वत्सरान्प्रतीक्ष्यःस्यात् ॥ २ ॥ ७६ ॥

संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः। ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत्॥७७॥

संवत्सरमित्यादि॥७७॥ पतिः स्वं द्विषन्तीं योषितं *संवत्सरं प्रतीक्षेत* ततो यदि द्वेषं न जहाति तदा *संवत्सरादूर्द्ध्वमेनां *स्वं द्विषन्तीं योषितम्। १। दायं स्वदत्तं धनं हृत्वा तया च* सहनैव संवसेत्। २। ७७

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा। सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा॥७८

अतिक्रामेदित्यादि॥७८॥ या भार्य्या प्रमत्तं मत्तं रोगार्त्तं वा *पतिमतिक्रामेत् सा भार्य्या *भूषणपरिच्छदविहीना कृत्वा शासनार्थं त्रीन्मासान्परित्याज्या भवतीति। १। ७८।

उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्त्तनम्॥७९॥

उन्मत्तमित्यादि। ७९। उन्मत्तादीनेतान् पतीन् द्विषन्त्या * भार्य्याया स्त्यागो नास्ति दायस्य * पवर्त्तनञ्च नास्तीति। १। ७९।

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता साऽधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा॥८०

मद्यपेत्यादि। ८०। या भार्य्या मद्यपादीनां तमा पता *साख्यनुपरां परिणी* याधिवेत्तव्या भवति॥८०॥

वन्ध्याऽष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥८१॥

वन्ध्येत्यादि॥८१॥ वन्ध्या भार्य्या प्रथमर्त्तु *कालमवधीकृत्य ब *सप्तवत्सरान् प्रतीक्ष्य *तावत्कालमप्रसूतां तदा परां च भार्य्यां *परिणीयाधिवेदा स्यात्॥१॥ मृतप्रजा प्रजा भूत्वा भूत्वा यस्याः *म्रियते सा भार्य्या चापरां दशमे *वर्षे परिणीयाधिवेदा भवति॥२॥ या भार्य्या क्रमेणैव स्त्रीजननी स्यात् *स एकादशेऽब्दे त्वपरां *भार्य्यां परिणीयाधिवेद्या॥३॥ या भार्य्या त्वप्रियवादिनी भवति *सा सद्य एवापरां भार्य्यां *परिणीयाधिवेत्तव्या। ४। ८१

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ८२

रोगिणीत्यादि॥८२॥ या भार्य्या हिता रोगिणी *न प्रजां प्रसूते या च * शीलतः सम्पन्ना न प्रजां प्रसूते। १। सा त्वनुज्ञाप्यात स्यानुज्ञयाऽन्यां *परिणीयाधिवेत्तव्या *कर्हिचिन्नावमान्या॥२। ८२।

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्। सा सद्यः सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ८३

अधिविन्नेत्यादि॥८३॥ अधिविन्ना या नारी रुपिता सती *गृहान्निर्गच्छेत् सा सद्यः * सन्निरोद्धव्या निर्ग

उत्कृष्टाय*सदृशाय*वराय तस्मै प्राप्तायां*यथाविधि सम्प्रदद्यात् ॥ ८८ ॥

काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥८९

काममित्यादि ॥ ८९ ॥ इदं प्रवरस्यागुणा*ऋतुमत्यपि कन्या कामं यथेच्छ* आमरणात् गृहे तिष्ठेत् ।१। न त्वेनां कन्यां *गुणहीनाय*वराय कर्हिचित् *प्रयच्छेत् ।२।८९। यदि कन्यायाः *ऋतुविवाहः * तदा किं कर्तव्यं*तदाह ।

त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम्॥९०॥

त्रीणीत्यादि ।१।९०। ऋतुमती सती कुमारी पितरं*त्रीणि वर्षाणि उदीक्षेत * एतस्मात् वर्षात् कालात्*ऊर्ध्वं सवर्णं *स्वाभिमतरूपं वा ॥१॥ पतिं विन्देत स्वयं ग्रहणाय...त्रिवर्षादिति विशेषः ॥२।९०॥ ननु स्वयंवरे किं *कन्यायाः दोषो न भवेत् *इत्यत आह ।

अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम्। नैनः किंचिदवाप्नोति न च यं साधिगच्छति॥९१॥

अदीयमानेत्यादि ।१।९१। ऋतुमती कन्या दाता*अदीयमाना यदि त्रि*वर्ष प्रतीक्ष्य स्वयं *भर्तारमधिगच्छेत् तदा*किंचिदपि एनो नावाप्नोति ।१। यं च भर्तारमधिगच्छति न*सोऽपि किंचिदेनोऽवाप्नोति ॥ २ ॥ ९१ ॥

अलङ्कारं नाददीत पित्र्यं कन्या स्वयंवरा। मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत्॥९२

अलङ्कारमित्यादि ।९२। स्वयंवरा पितुरनुज्ञया* स्वयं पतिं वरा कन्या*पित्र्यं मातृकं भ्रातृदत्तं वा कञ्चिद् अलङ्कारं नाददीत ।१। कस्मात् यतस्तमलङ्कारं यदि*आहरेत् तदा स्तेना स्यात् * पित्रादिसम्मत्या स्वयंवरा तत्* अलङ्कारं हरेत् ।२।९२।

पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन्। स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात्॥९३

पित्रे नेत्यादि ।९३। ऋतुमतीं कन्यां हरन् उद्वहन् पुमान्* कन्यायाः पित्रे शुल्कं न * दद्यात् कस्मादिति यस्मात् *कन्यायाः पिता ऋतूनां प्रतिरोधात् ।१। कन्यायाः स्वाम्यादतिक्रामेदिति *क्रमात् स्वत्वहीनो वर्तते ।२।९३।

त्रिंशद्वर्षोद्वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः॥९४

नाद्यापि मे त्यादि ॥ १०० ॥ शुल्कसंज्ञेन मूल्येन * कन्याविक्रयं * यत्कृते एतदिह * पूर्व्व मुनिभिः श्रुतमिति ॥ १ ॥ १०० ॥

**अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः। एष धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥१०१॥**

अन्योन्यस्येत्यादि ॥ १०१ ॥ स्त्रीपुंसयोरामरणान्तिकोऽयं * स्त्रियोऽन्योन्यस्याव्यभिचारः * पतिर्भार्य्यां भार्य्या पतिं * यन्नैवाभिचरति ॥ १ ॥ स एष स्त्रीपुंसयोः समासेन * परो मुख्यो धर्म्मो ज्ञेयः ॥ २ ॥ १०१ ॥

**तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ। यथा नाभिचरेतां तौ वियुक्ताावितरेतरम् ॥१०२॥**

तथा नित्यमित्यादि। १०२। स्त्रीपुंसौ तया कृतक्रियौ सन्तौ * नित्यं यतेयातां यथा * तौ स्त्रीपुंसौ वितरेतरं वियुक्तौ * सन्तौ नव्याभिचरेताम् ॥ १ । १०२ ।

**एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः। आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ॥ १०३॥**

एष इत्यादि। १०३ । एष वो युष्माभिः स्त्रीपुंसयोः रति * संहितो धर्म्मो मयोक्तः * पुत्राभावरूपापदि च * स्त्रीपुंसयोः पत्यप्राप्तिर्मयोक्ता। १ । अथ क्रमेणोद्दिष्टं दायभागं * यूयं मत्तो निबोधत * तत्र कश्चित् प्रमादीनां चष्टे यथा। २। दीयत इति दायः पित्रादिधनं * तस्य विभागव्यवस्था श्रूयते इति * तदसाधु दायभागशब्देन * तद्व्यवस्थार्थ प्रतिपादना भावात्। ३। साधारणकर्म्मण्यर्थे * दायोऽपि विधानस्याभावाच्च * तत्रापरस्तु व्याचष्टे । ४ ॥ दायभागं निबोधत इत्युपक्रम्य * यावत्सर्व्वस्य धनस्य * विभागमुक्तवानतः । ५ । दीयत इति युत्पत्त्या दायशब्दो * ददातिधातुर्यो गस्य गौणस्य * मृतप्रव्रजितादि स्वत्वनिवृत्ति * पूर्व्वक परस्वत्वोत्पत्ति फलसामान्यात् । ६ । तत्र मृतादीनां तत्र त्यागोऽस्ति * ततः पूर्व्व स्वामि सम्बन्धाधीनं * तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं * तत्र निरूढो दायशब्द इति । ७ । एतद्व्याख्यानमसाधु भवति * मृतादीनां गृहाश्रमीयधनादौ * त्यागोऽस्ति न च स्वत्वं निवर्त्तते । ८ । ब्राह्मणस्यापुत्रकस्य * धन यद्वा सर्व्वथा * सम्भावे ब्रह्मस्वत्वेन * राज्ञः प्रतिषेधेन चापितत्वात् । ९ । त्यागो हि विभागजनकव्यापारः * सत्त सा शरीरादपि विभागः * शरीरस्यापि त्यागोद्भाते किं न * तस्य पुत्रकलत्रधनादित्यागः । ९ । एवं वानप्रस्थप्रव्र जितयो * गृहाश्रमत्यागात् किं गृहाश्रमीय * धनपुत्रादित्यागो न भवति * न च त्यागः पुत्रोऽस्य स्वत्वं करोतु । १० । अतएव मृतप्रव्रजितादीनां * मरणप्रव्रजनादिभ्यः पुत्र * कलत्रधनादीनि स्वयमेव हि * त्यजन्त्यतः स्तिष्ठतादीनां त्यागः । ११ । तत्त्यागजनानेव धनेषु तेषां * स्वत्वनिवृत्तिः पुत्राणां स्वत्वोत्पत्ति * र्युगपदेव भवती * ति तौ दायप्रयोगो स्वत्वः । १२। तर्हि दक्षिणादाकोऽपि विभावा * दभावे च दायो दानं * तस्याभागानुपपत्तौ * दानजन्यस्वत्वाश्र, ये

जातमात्रेण *शान्तं मोक्षमश्नुते ।१। स एव ज्येष्ठः पुत्रो धर्म्मजो यः* इतरान् द्वितीयादिपुत्रान् कामजान् * सर्व्वं महर्षयो विदुः *धर्म्मार्थमनावश्यकत्वात् ।२। विष्णुना चोक्तं स्व * संहितायां यथा* पुत्रः पितृवित्त*लाभेपि पिण्डं दद्यात् ।३। पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ।४। ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ।५। पुत्रेण लोकाञ्जयतीत्येव *वसिष्ठेनाप्युक्तं यथा ।६। ऋणमस्मिन् संनयति *अमृतत्वञ्च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ।८। अनन्ताः पुत्रिणां लोका * नापुत्रस्य लोकोऽस्तीति *श्रूयते *प्रजाः सन्त्वपुत्रिण इत्यपि शापश्च ।९। प्रजाभिरग्ने अमृतत्वमश्यां *मित्यपि नियमो भवति पुत्रेण लोकाञ्जयतीति ।१०। १०७।

**पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः। पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्म्मतः॥१०८**

पितेवेत्यादि।१०८। न केवलं यथैव पितरं पुत्रा*उपजीवन्ति तथैव * ज्येष्ठं सर्व्वे भ्रातर उपजीवेयुः।१। किन्तु ज्येष्ठोपि भ्राता गृहीत्वा पितेव * स्वधर्म्मानाचरन् यवीयसो भ्रातॄन्* पुत्रानिव पालयेत् ज्येष्ठे भ्रातरि *यवीयांसः पुत्रवच्च वर्त्तेरन्निति ।२। १०८। कस्मादित्यत आह ।

**ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः। ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥१०९**

ज्येष्ठ इत्यादि ।१०९। ज्येष्ठो भ्राता कुलं वर्द्धयति वा*विनाशयति वा लोके ज्येष्ठो भ्राता पूज्यतमः*पितेव सद्भिरविगर्हितः स्यात् ।१०९।

**यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः। अज्येष्ठवृत्तिर्यस्तु स्यात् स सम्पूज्यस्तु बन्धुवत्॥११०॥**

य इत्यादि ।११०। यो ज्येष्ठो भ्राता पितृवत् स्नेहमति * पालनादिज्येष्ठवृत्तिः * स्यात् स मातेव पितेव ।१। यस्तु ज्येष्ठो भ्राता ज्येष्ठवृत्तिर्न स्यात्*सोपि बन्धुवत् सम्पूज्यः ।२।११०। तर्हि किमेवमेव सर्व्वे भ्रातरः * सहैव वसेयुः पृथ * ग्वसेयुरित्यत * उच्यते ।

**एवं सह वसेयुर्व्वा पृथग्वा धर्म्मकाम्यया। पृथग्विवर्द्धते धर्म्मस्तस्माद्धर्म्म्या पृथक्क्रिया॥१११॥**

एवं सहेत्यादि ।१।१११। एवमुक्तरूपेण सर्व्वे भ्रातरः*पितृहीना मातापितृहीना वा * समेताः पैतृकं रिक्थं गृहीत्वा ।१। ज्येष्ठो वा पितृवत् रिक्थं गृहीत्वा* सह वसेयुर्व्वा धर्म्म * कामाया पृथग्भूत्वा * भ्रातरस्ते

नन्वेकाधिक्यं ज्येष्ठस्येत्युद्धारे दिनाद्यविषमांशकरणात्* तत्किं जङ्गमाजङ्गम * साधारणमित्यत आह।

अजाविकमित्यादि ॥ १ ॥ ११९ ॥ ज्येष्ठमध्यमकनिष्ठाः* भ्रातरो द्व्यंशाः* एकांशस्वरूपं* विषमं संक्ष्यमजाविकं जातु* कदाचिन्न भजेरन् ॥ १ ॥ समानांशं मध्यमकनिष्ठौ* भजेयातां ज्येष्ठः पुनरजाविकं* विषमं सार्द्धत्रभागानां द्वौ* भागौ भजेदेकमयमेषसमांशम् । २ । ११९ । विषमांशापवादे समानांश * प्रसङ्गाद्विषमांशे *समांशमुच्यते ।

यवीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद् यदि। समस्तत्र विभागः स्यादिति धर्म्मो व्यवस्थितः ॥ १२० ॥

यवीयानित्यादि । १२० । ज्येष्ठो यदि यवीयसो* भ्रातुरपुत्रकस्य भार्य्यायां नियुक्तया * पुत्रमुत्पादयति तत्र *विवादो नास्तीति तत्रोक्तं यवीयान् कनिष्ठो भ्राता *यदापुत्रकस्य ज्येष्ठस्य भार्य्यायां * धर्म्मतो नियुक्तायां * पुत्रमुत्पादयेत्तदा । १ । तत्र पुत्रे समांशविभागः स्यादिति * धर्म्मः शास्त्रे व्यवस्थितः । २ । १२० । कस्मात् क्षेत्रजः पुत्रः* पितृव्यानां समानांशं *भजेदित्यत आह* । उपसर्जनमित्यादि । २१ ।

उपसर्जनं प्रधानस्य धर्म्मतो नोपपद्यते। पिता प्रधानं प्रजने तस्माद्धर्म्मेण तं भजेत ॥ १२१॥

प्रधानस्योपसर्जनं* मप्रधानत्वं नोपपद्यते * कः प्रधानं कस्याप्रधानमित्यत आह पितेति । १ । प्रजने प्रजोत्पादने* पिता प्रधानं स च* ज्येष्ठो भ्राता तत्पतिनिमित्तनियोगात्* कनिष्ठो भ्राता तस्मात्* ज्येष्ठस्योपसर्जनं । २ । तस्मात्तस्यो वांशं तस्मात् क्षेत्रजः * पुत्रो धर्म्मेण भजेदि * तातेन नियोगात् क्षेत्रजः पूर्व्वः समांशभागिति ज्ञापितम् ३ । १२१ । अथैवं सवर्णजातानुलोमजाताः* स्वभार्य्यासु* जातानां पुत्राणां पित्रा * धनविभागे संशये *दृष्टान्तसिद्धान्तमाह ।

पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्व्वजः कथं तत्र विभागः स्यादिति चेत् संशयो भवेत् ॥१२२

पुत्रः कनिष्ठ इत्यादि । १ । १२२ । यस्य सवर्णजानुलोमजाश्च स्त्रियः* पत्न्यस्तासु मध्ये या सवर्णजा सा * चेत् पश्चादूढा स्यात्तदा सा* कनिष्ठा स्यात्तस्यां यः* पूर्व्वजः पूर्व्वं जातो ज्येष्ठः स पुत्रः । १ । एवमनुलोमजा पूर्व्वमूढा चेत्तदा ज्येष्ठा* तस्यां जातः कनिष्ठः* एवमथैव* पश्चादूढानुलोमजा कनिष्ठा* तस्यां पूर्व्वजः पूर्व्वं जायते पुत्रः । २ । पूर्व्वमूढा सवर्णजा ज्येष्ठा तस्यां जातः कनिष्ठः पुत्र * स्त्रक्रमात् ज्येष्ठो * किं पूर्व्वोत्पन्नः पुत्रः कनिष्ठोऽपि ज्येष्ठः स्यात् ॥ २ । अथवा पश्चादूढायाः कनिष्ठायाः* पूर्व्वजः पुत्रो ज्येष्ठः स्यात् * इति तत्र कथं विभागः स्यात्* इति चेत् संशयो भवेत् । १२२ ।

वाचाप्रक्षयन्नरायै दद्यात् * अभ्रातृकामभ्रातृका * दुहितरमहं ददे * यदस्यां पुत्रोभवेत् स * ममापि पौत्रोभवेदिति ॥ ६ ॥ ममयं दुहितापुत्रइवप्रति *, कविरितिपुत्रिकेति ॥ ७ ॥ यदिवरस्तत्सौज्यो दितोव * मनुमौयेतमहं तवातदा * मनसैवैवं पुत्रिका * कृत्वावरायप्रदद्यात् ॥ ८ ॥ ततोवाचाप्रकाश्य यादिमा * मह मनसापुत्रिकाकृत्वावभामइासमिति । ९ । गौतमेनोक्तमपिच * पितोत्सृजेत्पुत्रिकामनपत्यो ऽग्निं * प्रजापतिंचेष्ट्वाऽस्मदर्थमपत्यमितिसंवादा ।१०। अभिसन्धिमात्रा * दित्युक्तेतस्य यथा * नोपयच्छेत अभ्रातृकाम् । इति । ११ । वसिष्ठेनाप्युक्तं यथा * विज्ञायते ऽभ्रातृका * पुंसःपितॄनभ्येति * प्रतीचीनं गच्छति * पुत्रत्वं तदश्लोकः । १२ । अभ्रातृकां प्रदास्यामितुभ्यं कन्यामलङ्कृताम् । अस्यां योजायते पुत्रःसमे पौत्रोभवेदिति । १३ । इति । विष्णुनाप्युक्तं तद्यथा * यस्तस्याः पुत्रःसमे पौत्रोभवे * दितियापित्रादत्तासापुत्रिका । १४ । पुत्रिकाविधिनाप्रति * पादितापितृभ्रातृ * विहीनापुत्रिकेव । इति । १५ । एतेनपितृमरणेपि * माता * पुत्रिकां कर्त्तुमर्हतीति * विज्ञापितम् । १६ । वसिष्ठविष्णुवचनयो * र्विशेषेणपुत्रपदोपादानात् * नापत्यपदेनपौत्रो * विव क्षितोनदुहिता । १७ । १२७ । अत्रपुराकल्पं * दर्शयतानेनतु * विधानेनेत्यादि । १ । १२८ ।

**अनेनतुविधानेनपुराचक्रेऽथपुत्रिकाः। विवृद्ध्यर्थंस्ववंशस्यस्वयंदक्षःप्रजापतिः॥ १२८ ॥**

पुरादक्षःप्रजापति * रपुत्रकःस्वयं स्ववंशस्य विवृ * द्ध्यर्थं मनेनतुविधानेनैव * बह्वीःपुत्रिकाश्चक्रे यथा ॥१२८।

**ददौसदशधर्म्मायकश्यपायत्रयोदश। सोमायराज्ञेसत्कृत्यप्रीतात्मासप्तविंशतिम्॥ १२९ ॥**

ददावित्यादि । १२९ । सदक्षःप्रजापतिर्दशदुहितॄ * र्धर्म्मायपुत्रिकाःकृत्वा * ददौत्रयोदशकन्याःपुत्रिकाःकृत्वा कश्यपायददौ । १ । सप्तविंशतिंदुहितॄः * पुत्रिकाःकृत्वासोमाय * राज्ञेसत्कृत्यददौ । २ । १२९ । इतोव पुत्रिकाकृता * सतापितुरपुत्रस्य * धनंहरेत्पिण्डंदद्यात् * यथापुत्रस्तथायंहरःपिण्डदायी ॥ २ ॥ इतरथापुत्र पुत्रसाधनंसर्व्वं * भ्राताहरेत्तदभवेसपिण्डाद्रव्य * पुरुषात्परः * पञ्चमादिःपुरुषो * योवर्त्ततसहरेत्पिण्ड * मेकस्मैवैकोद्दिष्टश्राद्धं * चतस्मैदद्यात्तत्रविप्रतिपत्तिंदर्शयति ।

**यथैवात्मातथापुत्रःपुत्रेणदुहितासमा। तस्यामात्मनितिष्ठन्त्यांकथमन्योधनंहरेत् ॥ १३० ॥**

यथैवात्मातथेत्यादि ॥१॥१३०। आत्मावैजायतेपुत्र * इतियथात्मातथैव * पुत्रःपुत्रेणसमादुहिताभवेत् ।१। तस्यांदुहितरिखल्वात्मरूपायां * तिष्ठन्त्याममृतायांपुत्रिकायांसत्यां * कथमन्योविद्यमानो * यःसपिण्डा *

दनन्तरः पञ्चमादिः पूरुषः सधनं हरेत् ॥ पुत्रिकायामकृतायां कथं नानौ हरेत् ॥ २ ॥ १३० ॥ अस्यां विप्रतिपत्तौ सिद्धान्तमाह ।

**दुहितुर्यौतकं यत् स्यात् कुमारीभाग एव सः। दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥१३१॥**

दुहितुर्यौतकमित्यादि । १ । १३१ । अथया दुहिता न पुत्रिकाकृता * तस्या विवाहकाले * यत् पित्रा यौतकं धनं दीयते * स कुमार्या दायभागः स्यात् । १ । तस्या दत्तयौतकादवशिष्टं धनं * यत्तत् सर्व्वमौरसादिद्वादशपुत्र पौत्रप्रपौत्रैकजातभ्रातृपुत्रपौत्रप्रपौत्राणामेव भवति । २। तदभावे त्वपुत्रस्य * चस्यापुत्रकस्याकृतपुत्रिकस्य * धनं सपिण्डादनन्तरः पूरुषो हरेत् पिण्डमपि दद्यात् ॥ ३ ॥ कृतपुत्रिकस्य तु पुत्रिकैव * दुहिता धनं हरेन्नान्यः * पुत्रिकामरणे मातामहस्य । ४ । धनमखिलं दौहित्र एव पुत्रिकापुत्र * पौत्रवद्दौहित्रो हरेन्न त्वन्यो दौहित्रो नाप्यन्यः सपिण्डादनन्तरः । ३ । १३० । कस्मादित्यत उच्यते ।

**दौहित्रो ह्यखिलं मातुरपुत्रस्य पितुर्हरेत् । स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥१३२॥**

दौहित्र इत्यादि । ४ । १३२ । यस्मात् पुत्रिकापुत्रो दौहित्रो * मातुरपुत्रस्य पितुः * रखिलं रिक्थं हरेत् । १ । स एव पुत्रिकापुत्रः पौत्र एव दौहित्र * स्वस्य पित्रे यथैकं पिण्डं तथा * मातामहाय चैकं पिण्डमेकोद्दिष्टं चाब्दिके च दद्यादिति द्वौ पिण्डौ दद्यात् । २। ननु पुत्रवद्दुहितृप्रतिकृतिः पुत्रि * कोत्तासा कस्मान्न पित्रे * पिण्डोदकमेकोद्दिष्टं दद्यात् । ३ । उच्यते पूर्व्वमुक्तं नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मे व्यवस्थितः। निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिरिति । ४ । तस्मात् पौत्र एव पुत्रिकापुत्रो * मन्त्रैः पिण्डं दद्यान्न तु * पुत्रिका मन्त्रैः क्रियाविरहादिति ॥१३२॥ यावच्च पुत्रिकायाः पुत्रो न भवति तावत् पुत्रिकैव पिण्डं दद्यादिति । २ । ननु कस्मादेवं स्यादित्यत आह । पौत्रेत्यादि श्लोकम् । १ । १३३ ।

**पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्म्मतः । तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥१३३॥**

लोके धर्म्मतः पौत्रदौहित्रयोः * पौत्रस्य पुत्रिकापुत्रस्यैव दौहित्रस्य * विशेषो नास्ति कस्मात् * हि यस्मात्तयोः पौत्रदौहित्रयोः * पितरौ * पिता च माता च तिष्ठौ तद्देहसम्भूतौ । १ । १३३ । अथ तर्हि पौत्रस्य पितुस्तथा * दौहित्रस्य पुत्रिकापुत्रस्य मातुस्तदेकपितृ * सम्भूतत्वादेव पौत्रपुत्रिकापुत्रदौहित्रयोरविशेषः । ७ । तर्हि सर्व्वस्य एवं दुहितुः पुत्रो दौहित्रः पौत्रसमः स्यात् * किमर्थं तर्हि पुत्रिका * कर्त्तव्या स्यादित्यतोऽत्र वच्यते । ४ । पुत्रिकापुत्रादपरदौहित्राणां भेद एव मातुः प्रथमतः पिण्डमित्यादिना । ५ । । १२ । पुत्रिकापौत्रिकयोरभेदमाह ।

**पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते । समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥१३४**

ननिर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात्। स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया॥१९९

ननिर्हारमित्यादि ॥ १९८ ॥ स्त्रियो भर्तुरनाज्ञया * कुटुम्बबहुमध्यगात् * साधारणभूताद्धनात् * किञ्चिदपि निर्हरणं * न कुर्युः स्वकादपि च * वित्तान्न निर्हरणं कुर्युः। १। ० । १९९ ।

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्। न तं भजेरन् दायादा भजमानाः पतन्ति ते ॥२००॥

पत्यावित्यादि । २०० । स्त्रीभिः पत्यौ जीवति यो * ऽलङ्कारो धृतो भवेत् * तमलङ्कारं दायादाः पुत्रादयो न * भजेरन् भजमानास्ते * दायादाः पतन्तीति । १ । विष्णुनापि तद्वचनमुक्तमेव * ये पुत्रा न पितृधनात्मसात् प्रकुर्युः * स्त्रानाद्वा न' मित्यादि श्लोकेन । २०० ।

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥२०१॥

अनंशावित्यादि । २०१ । क्लीबस्य पतितस्य जात्यन्धस्य * जन्मबधिरस्योन्मत्तस्य जडस्य * मूकस्य ये च निरिन्द्रियाः पुत्राः । १ । खञ्जपङ्ग्वादयस्ते च * सर्व्वे नांशभागिनः स्युः । २ । अनंशवचनेनेदं * ख्यापितं क्लीबपतितादयो यदा नांऽशौ क्लीबत्वादि * दोषहीनो वर्त्तते । ३ । तदा नांशभाज एव * यदि न वर्त्तते ऽनंशो * केवल एक एवाधिकारी क्लीब * पतितादीनामनन्तमो वर्त्तते कोपि । ४ । तदा सर्व्विकं ग्रहरक्षुस्यात् * पिण्डदायित्वादितान * स्तद्भावे योऽधिकारी * स नन्दनं हरेदिति । ५ । विष्णुनाचोक्तमेवं * पतितक्लीबाऽचिकित्स्य * रोगविकलास्त्वभागहारिणः स्युः * रिक्थग्राहिभिस्ते भर्त्तव्याः । ६ । तेषां चौरसाः पुत्रा भाग * हारिणो * न तु पतितस्य * पतनीयं कर्म्म कृते * अनन्तरोत्पन्नाः पुत्राः । ७ । प्रतिलोमासूत्पन्ना * अभागिनस्तत्पुत्राश्च * पैतामहे पार्थेऽंश * ग्राहिभिस्ते भरणीयाः । ८ । इति । याज्ञवल्क्येनाप्युक्तं * क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः । अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्याः स्युर्निरंशकाः । ९ । औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः । सुतास्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः ॥ १० ॥ अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः । निर्व्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ॥ ११ ॥ इति ॥ २०१ ॥ एतदेवाह स्वयम् ।

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा। ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् २०२

सर्व्वेषाममपीत्यादि ॥ १ ॥ २०२ ॥ सर्व्वेषां क्लीबादीनां * ग्रासाच्छादनं तद्धन * हारिणा मनीषिणा * शक्त्या दातुं न्याय्यं सत्त * तददत्त्वन्नताच्च पतितो भवेत् ॥ १ ॥ २०२ ॥

यद्यर्थिता तु दारैः स्यात् क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥२०३॥

यद्यर्थितात्विति ॥२०३॥ अंशिनिसतिक्लीबादीनां कथञ्चि * दन्यहीतेर्दारैर्यदार्थितास्यित्वं * पुत्रार्थनाकारित्वं स्यात्तदा ॥ १ ॥ पुत्रोत्पादनेनोत्पन्नं तन्तुरूपं * भर्त्तुःपुत्रार्थित्वयेषां * तेषां दाराणां भर्त्तृनियोगेन * नियुक्तानामपत्यं ॥ २ ॥ क्षेत्रजातःपुत्रःपितामहस्य * दायमर्हतिनत्वपतनीये * कर्मणिकृतेतदनन्तरं तदुत्पन्नः ॥ ३ ॥ कृतदारस्यपश्चाद्ध्वजभङ्गादिनाक्लीबत्वे जाते नियोगात् * पुत्रःसम्भवतितथा ॥ ४ ॥ वशिष्ठेनोक्तं यथा * क्लीबोन्मत्तपतितादेःस्वभरणं * क्लीबोन्मत्तानांप्रेतपत्नीषण्मासं * व्रतचारिणी * क्षारलवणामिषं * भुञ्जानाधःशयने शयीत ॥ ५ ॥ ऊर्द्ध्वं षड्भ्योमासेभ्यःस्नाताश्राद्धन्तुपतेर्दद्यात् ॥ ६ ॥ विद्याकर्म्मगुरुयोनिसम्बन्धान् * सन्निपात्यतस्याःपिताभ्राता वा * नियोगं कारयेत्तपसे वानोन्मत्तामवशां व्याधितां वा ॥ ७ ॥ नियुक्तायाज्यायसीमपि * षोडशवर्षां नचेदामयाविनोस्यात्प्राजापत्येमुहूर्त्ते * पाणिग्रहणवदुप * चारःगाग्यामिनीस्यात् ॥ ८ ॥ उन्मत्तामवशां व्याधितां वा * ननियुञ्ज्यादेनाम्स्यापि * वाक्पारुष्यादण्डपारुष्याच्च * ग्रासाच्छादनस्नानादिषु च ॥इति ॥ ९ ॥ जातोऽस्यजन्मवधिरादेर्विवाहः * कथञ्चनसम्भवति * तेनौरसपुत्रश्चस्याद्यथाधृतराष्ट्रादेर्यौधिष्ठिरादिः ॥ १० ॥ २०३ ॥ धृतराष्ट्रपाण्डुप्रभृतिः ॥ १० ॥ अत्र कात्यायनःप्राह * अक्रमोढासुतश्चैव सगोत्राद्यस्तुजायते । प्रव्रज्यावसितश्चैव नरिक्थं तेषुचार्हति ॥ ११॥ अक्रमोढासुतस्तु रिक्थीसवर्णाजोयदापितः । असवर्णाप्रसूतश्चाक्रमोढायाङ्गयोभवेत् । इति ॥ १२॥ योब्राह्मणादिरनुलोमजां पूर्व्वं * समुद्वहतिपश्चात्सवर्णजां कन्यां * साद्यस्त्वक्रमोढापत्नीभवति ॥ १२ ॥ तयोर्द्विसगोत्राच्चक्षेत्रजःपुत्रःस्यात् * दस्श्चप्रव्राजावसितात्प्रव्रज्यां कृत्वा * पुनःस्वजायायांपुत्रं जनयति * सपुत्रःप्रव्रज्यावसिताज्जातस्तेषु रिक्थं नार्हतितत्राक्रमोढायाःसवर्णापत्नीतस्यां सगोत्राज्जातःक्षेत्रजश्चरिक्थीस्यादनुलोमजापुत्रः । यदानुलोमजाजायाक्रमोढास्यात्तस्यां सगोत्राज्जातः पुत्रश्चसवर्ण एवरिक्थीस्यादिति । अथस्त्रीपाज्जितधनभागमाह ।*

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति । भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥२०४॥

यत्किञ्चिदितात्यादिस्त्रीक्रम ॥ १॥२०४॥ पितरिप्रेते ज्येष्ठोभ्रातायत्किञ्चि * द्धनमधिगच्छतितत्रधने च * विद्यानुपालिनां विद्याभ्यासिनां * यवीयसां भागोवर्त्ततएव ॥१॥ यदिविद्यानुपालिनो * नावरजाभवन्ति न * चोपार्ज्जने गार्जयन्तितदान * यवीयांसस्तद्धन * भागमर्हन्तीतिज्ञेयं ॥ २ ॥ यान्येवकेनापितद्धनमुक्तं * तर्हि यदि विद्याहीना अपिकेना * प्रयापार्येनधनमर्जयन्ति * तदाकिंस्या * दित्यतआह ।

अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनं भवेत् । समस्तत्र विभागः स्या...॥२०५॥

अविद्यानामित्यादि। २०५। अविद्यानां शास्त्रविद्यारहितानां * भ्रातॄणां सर्वेषां धनार्थमीहया * योयत् धनमर्जयेत् * तान् वापाधिकं वा। १। तत्रापि त्रिस्वस्वोपार्जिते पितृधने * समोविभागः स्यादिति * धर्मशास्त्रेषु धारणा। २। याज्ञवल्क्येनोक्तञ्च * सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः। इति ॥ ३ ॥ २०५।

**विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्। मैत्र्यमौद्वाहिकञ्चैव माधुपर्किकमेव च ॥ २०६ ॥**

विद्याधनन्त्वित्यादि। २०६। भ्रातॄणां यस्य यद्विद्याधनं तस्यैव * तद्धनं नवै विभक्तव्यं भवेत् * विद्याधनं कात्यायनेनोक्तं यथा। १। परभक्तप्रदानेन प्राप्ताविद्यायदान्यतः। तयाप्रणवविधिना विद्याप्राप्तं तदुच्यते। २। उपन्यस्ते तु यल्लब्धं विद्यायापणपूर्वकम्। विद्याधनं तच्च विद्याद्विभागे न विभज्यते। ३। शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। ४। विद्याधनं तच्च प्राहुर्न विभागे विभज्यते ॥ नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्। ५। समविद्याधिकानान्तु देयं वैद्येन तद्धनमिति * अत्र वैद्येनेति विद्याब्रह्मचर्याश्रमविधिनाधीतानिःशेषेण समाप्याप्रशस्तास्ता सवेदाः गौतमेनाप्येवमुक्तम्। ६। स्वयमर्जितं वैद्यो * ऽवैद्येभ्यः कामोनदद्यात् * वैद्याः समं भजेरन्निति। ७। मैत्र्यालब्धं धनं विवाहे लब्धञ्च * मधुपर्के च लब्धं धनं * यस्य यत्तस्यैव तत् भ्रातृभिस्तद्विभक्तव्यमिति। ८। ततनै वाहिकं धन * मुक्तं तु बृहस्पतिना * वैवाहिकन्तु तद्विद्याद्भार्यया यत्सहागतमिति। ९। याज्ञवल्क्येनाप्युक्तं * पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्। मैत्र्यमौद्वाहिकञ्चैव दायादानां न तद्भवेत्। १०। दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च॥ इति॥ १० ॥ नारदेनचोक्तं यथा * शौर्यभार्याधने हित्वा यच्च विद्याधनं भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥ ११ ॥

॥ २०६ ॥

**भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा। स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम् ॥ २०७**

भ्रातॄणामित्यादि। २०७। भ्रातॄणां मध्ये यस्तु भ्राता शक्तः * स्वकर्मणा धनमीहते * तस्मात्स्वकादंशात् किञ्चिदुपजीवनं * किञ्चिद्दत्त्वा भ्रातृभिः स निर्भाज्यः। १। याज्ञवल्क्येनचोक्तं * शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया। इति। २ ॥ २०७।

**अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत्। स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥ २०८**

अनुपघ्नन्नित्यादि। २०८। भ्रातॄणां मध्ये यो भ्राता * पितृद्रव्यं नोपघ्नन् स्वयं श्रमेण * यदुपार्जयेत् तद्धनं * स्वे ...

भ्रातॄणामित्यादिश्लोकः । ४ । २१५ । अविभक्तानां भ्रातॄणां* पितुरिच्छया यदि सहवसतिः* वासाद्व्यस्थानं भवेत् । १ । तदा पिता स्वेच्छया धनं विभजेत्* विषममपि पुत्रभागं नैव* कथञ्चन* तेभ्यो दद्यात्* सममेव सर्व्वं भ्यो दद्यात् । २ । स्वयन्तु यावदिच्छेत् तावदेव* गृह्णीयादित्युक्तं पुत्र* भागं विषमं न कुर्य्यात्* इति वचनेन पितेति* स्वस्थचित्तो न कुपितादिः । ३ । कुपितादिः पिता हि न* स्वेच्छया पुत्राणां विभागे प्रभवति* तदुक्तं हि नारदेन ॥ ४ । व्याधितः कुपितश्चैव विषयासक्तचेतनः । अयथाशास्त्रकारी च न विभागे पिता प्रभुः ॥ ५ ॥ इति । याज्ञवल्क्येनाप्युक्तं । २ । विभागञ्चेत् पिता कुर्य्यात्* स्वेच्छया विभजेत् सुतान् । ज्येष्ठं वा श्रेष्ठभागेन* सर्व्वे वा स्युः समांशिनः । ४ । यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः ॥ न दत्तं स्त्रीधनं यासां * भर्त्रा वा श्वशुरेण वा ॥ ५ ॥ शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया । न्यूनाधिकविभक्तानां धर्म्म्यः पितृकृतः स्मृतः ॥ इति । ६ । अत्र ज्येष्ठं वा श्रेष्ठभागेनेत्* तानेन प्रागुक्तज्येष्ठोद्धारः पितृ*कृतविभागे नास्तीति ख्यापितम् । ७ । समानांशपक्षे भर्त्रा* श्वशुरेण वा तदत्तस्त्रीधनानां* पत्नीनां समानांश विधानमिदं* मनुनायन्नोक्तं तत् । ८ । भर्त्रा श्वशुरदत्तस्त्रीधनाश्च* पत्न्योऽपि तदभिप्रायेण* न वतासामंशप्रतिपत्तिः धर्म्मकृतः ॥ ९ ॥ यद्यपि पितापुत्राणां * भागो विषमो न कर्त्तव्य-स्तथापि* यदि कथञ्चित् क्रियते ॥ १० ॥ तदा स पितृकृतो न्यूनाधिक* भागो धर्म्म्य एव नाधर्म्म्यो भवति *स्वयं वा यथेष्टं गृह्णीयादितोक्त्वा* पदोपादानेनोक्त*मिति ज्ञेयम् ॥ ११ ॥ अत्र बृहस्पतिनाप्युक्तं जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमिति ॥ १२ ॥ नारदेनाप्युक्तमेवं* द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता । समांशहारिणी माता पुत्राणां स्यान्मृते पतौ ॥ १३ ॥ इत्यत्र च पितुरंशद्वय*मुक्तं तत् पितुरिच्छया न तु* नियमतो ह्यंशविधिः ॥ १४ । पितुरिच्छामन्तरेण हि भागो* पितुर्न विहितस्तस्य* कथं ह्यंशविधिर्नियतः स्यात्तस्मात्* ह्यंशविधिः पितुरिच्छातः । १५ विष्णुनाप्युक्तं स्वसंहितायां यथा* पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा *स्वयमुपात्तेऽर्थे पितामहे * त्वर्थे पिता पुत्रयोस्तुल्यं स्वामित्वम् इति ॥ १६ ॥ अथ पिता स्वेच्छया चेत् * पुत्रान् विभजेत् तदा तेषां विभागे * न्यूनाधिका-शकरणे * निजस्य तदर्थ ग्रहणे * तस्य स्वोपात्तेऽर्थे स्वेच्छा । १७ । तादृशेच्छायास्तादृश*मेवांशं विभज्य स्वयं * गृहीत्वा पुत्रेभ्यो दद्यात् तत्र * न्यूनाधिकभागो धर्म्म्यः ॥ १८ ॥ पैतामहे त्वर्थे पिता * पुत्रयोस्तुल्यं स्वामित्वं * न विषमांशं कृत्वा स्वयं गृह्णीयात् पुत्रेभ्यो वा दद्यात्तस्माद्ध्यंशग्रहणं स्वेच्छया ॥ १९ ॥ हारीतेनाप्युक्तमेवं जीवन्नेव वा पुत्रान् प्रविभज्य* वनमाश्रयेद् वृद्धाश्रमं वा गच्छेत् ।२। स्वल्पं वा विभज्य भूयिष्ठमादाय* वसेद् यद्यशक्त*पुनस्तेभ्यो गृह्णीयादिति* तस्मात्तस्य ह्यंशग्रहणं स्वेच्छया ॥ २१ ॥ ह्यंशविधानमेकस्मिन् पुत्रे वा स्वोपात्तधने विभागे तत्रापि ह्यंशग्रहणं *स्वेच्छयैव युक्तोपपन्नं न नियमात् । २२ । शङ्खलिखिताभ्यामुक्तः *स यद्येकपुत्रः स्याद्द्वौ भागावात्मनः कुर्य्यादिति ॥ २३ ॥ इदं प्रमादीवाचष्टे * स यद्येकपुत्र इति * एकस्य पितुः पुत्र इति तत् पुरुषः

त्रेतजादिद्विपितृकत्वाद्दत्तस्य ॥ २४ ॥ न पुनरेकएवपुत्रोयस्येति*बहुव्रीहिस्तस्यान्यपदार्थप्रधानत्वेन षष्ठी तत्*पुरुषापेक्षया दुर्बलत्वात्। २५। इतियत्त्वयुक्तिविरोधान्नहि*शास्त्रे समासानां बलाबलत्व* कल्पनास्तिस्वरतोहि*समासविशेषावाधःस्यात्। २६। यथेन्द्रशत्रोविवर्द्धस्वेत्यत्र*कर्म्मधारयस्वरेण*स्त्वाष्ट्रविनाशोऽभूत्। २७ इन्द्रस्त्वासौशत्रुरिति*नपुनरिन्द्रस्यशत्रु*र्नवाइन्द्रःशत्रुर्यस्येति*स्वरमविहाय समास * बलाबलमशास्त्रिकं वदतीति। २८। अपरस्तु क्षेत्रजादि*पुत्रो पौरसाभावे* सर्व्वस्यैवधनस्याधिकारीकस्मात् * सपिण्डधनविभागे * पुत्रेणसहद्व्यंशीनस्यात्। २९। तस्मादेकःपुत्रोयस्य * तो कपुत्रइतिसाधु*तत्पुरुषोऽत्रनयुक्तः। ३०। २१५।

नन्वेवं पितृकृतविभागेषु*पुत्रेषुयदिपुनः*पुत्रोजायते तदातस्यपुत्रस्य। १। पूर्व्वविभक्तभ्रातृधनांशःस्यान्नवेत्यतउच्यते।

## ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्। संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह॥ २१६॥

ऊर्द्ध्वं विभागादित्यादि ॥ २१६ ॥ पित्राकृतात्पुत्राणां विभागादूर्द्ध्वं*जातःपुत्रःपितरिमृते पित्र्य*मेवधनंहरेन्नविभक्तानां*भ्रातॄणां धनं विभज्यांशं हरेत्। १। न वा ते च भ्रातरःपुनरिदं * पित्र्यं धनं च विभज्य* भागं हरेयुरिति ॥ २ ॥ तत्रये तु भ्रातरःपित्रा*विभक्ताःपुनःपित्रासहसंसृष्टा*भवन्तितैर्भ्रातृभिःसह * सपश्चाज्जातः पुत्रः। ३। संसृष्टभ्रातृधनं पित्र्यं *धनञ्चसर्व्वं समं विभजेत न*ज्येष्ठोद्धारं पुनर्दद्यात्। ४। यास्त्रवल्क्यो [illegible] वमतं * विभक्ते पुत्रतीजातःसंसृष्टानां विभागभाक्। दृश्याद्वातोद्धभागःस्या*दायव्यायविशोधितात्। इति। ५। अत्रप्रमादिभिःसंसृष्टानामिति*नपठित्वासवर्णायां*मितिपठ्यते तदसत् * इष्टमनुवचनेसं*सृष्टाइत्युक्तविरोधात्। ६। विष्णुनाप्युक्तं तद्यथा*पितृविभक्ताविभागानन्तरोत्पन्नस्यभागं नदद्युः। ७। संसृष्टिनःसंसृष्टीसोदरस्यातुसोदरः। दद्यादपहरेच्चांशं जातस्यचमृतस्यच। इति। ८। एतदभिप्रायेणागौतमेनोक्तं*मातृनिवृत्तेरजसि*जीवतिचेच्छतिच*पितृधनविभागइति। ९। २१६। अथपितृकृतविभक्तानामेव*पुत्राणांमध्ये [illegible] *म्रियते तस्यचमाताजीवति*जीवतिचानिवृत्तरजस्कापत्नी। १। कस्तस्यधनं हरेदितिचेत्तत्र*पूर्व्वमत्रैवम्। २। संस्थितस्यानपत्यस्य* सगोत्रात्पुत्रमाहरेत्। पत्नीतद्रिक्थजातंयत्तस्मिन्प्रतिपादयेत्। इति। ३। अनपत्यस्यौरसादिपुत्रपौत्र * प्रपौत्राद्येकजातभ्रातृपुत्र * पौत्रप्रपौत्रादीहित्र*पर्यन्तरहितस्य। ४। अनिवृत्तरजस्कापत्नीधनं* हरेन्नियुक्ताधर्म्मेण*सगोत्रात् पुत्रं जनयेत्*तस्यातद्रिक्थजातंत*त्तस्मिन्पुत्रे प्रतिपादयेत्। ५। तत्रयदिदुहितास्यात्* तदादुहितैवसर्व्वं*[illegible]मातामहादन्यावजनयित्वा*पुत्रं तस्मैपुत्रायतत्*पितृधनं दद्यादिति। ६। यस्यापुत्रस्यैकजातभ्रातृ* पुत्रपौत्रप्रपौत्रपर्यन्ताभाव*

समातृमाताजीवति । ७ । मृतस्यास्य धनं को * हरेदित्यत्रचाह * ।

**अनपत्यस्यपुत्रस्यमातादायमवाप्नुयात् । मातर्य्यपिचवृत्तायांपितुर्माताहरेद्धनम् २१७**

अनपत्यस्यपुत्रस्ये ति ।८। २१७। अनपत्यस्यौरसादिपुत्रपौत्र* प्रपौत्रैकजातभ्रातृ*पुत्रपौत्रप्रपौत्रपर्य्यन्तहीनपुत्रस्य । १। मृतस्यधनं माताहरेन्मातरि*मृतायां पितामहीहरेत्*यस्माच्चैवमनपत्यस्यपिता*जीवतितस्यमृतस्यपिताहरेत् । २। तदुक्तंपूर्व्वं स्वयमेव*नभ्रातरोनपितरः*पुत्राऋक्थहराःपितुः । पिताहरेदपुत्रस्य*ऋक्थंभ्रातरएवचेति । ३ । इति । पितुरभावे एकजात*भ्रातातदभावे माता*तदभावे पितामही । ४ । तदभावेऽनेकजात * भ्रातातदभावेऽनेक जातभ्रातृ * पुत्रस्तदभावे चोक्तं । ५ । अनन्तरःसपिण्डाद्य * स्तस्यतस्यधनंभवेत् * अतऊर्द्ध्वं सकुल्यःस्या * दाचार्य्यःशिष्यएववा ॥ इति ॥ ६ । विष्णुनाप्येतदभिप्रायेणैव पुत्रप्रकरणे पूर्व्वं । ७ । एकोढानामप्येकस्याः * पुत्रःसर्व्वासांपुत्रएवचैकस्य * भ्रातृणामेकजातानाञ्चेत्युक्तं ॥ ८ ॥ पिताचेत्पुत्रान्विभजेत्तस्य * स्वेच्छास्वयमुपात्तेऽर्थे * पैतामहेत्वर्थे पि*ता*पुत्रयोस्तुल्यं स्वामित्वं ॥ ९ ॥ पितृविभक्ताविभागानन्तरोत् * पन्नस्यभागं तद्दद्यात् * ज्येष्ठोऽल्पिष्ठात्वासांसभागात्सित्यत हौये तद्धातस्यापिच ॥ १० ॥ अपुत्रपौत्रसन्ताने दौहित्राधनमावाप्नुयुः । पूर्व्वेषान्तुस्वधाकारे पौत्रादौहित्रकाः समाः । ११ । अपुत्रकस्यधनं पत्न्यभिगामित * दभावे दुहितृगामि * तदभावे पितृगामि * तदभावे मातृगामि*तदभावे भ्रातृगामि । १२ । तदभावे भ्रातृपुत्र*गामितदभावे बन्धु*गामितदभावे सकुल्यगामितदभावे सहाध्यायिगामि । १३। तदभावे ब्राह्मणधनवर्ज्जं *राजगामिब्राह्मणार्थोब्राह्मणानां *वानप्रस्थस्यधनमा* चार्य्यगामीयाच्छिष्यो वाइति ।१४। अत्रापुत्रस्यौरस*पुत्रपौत्रप्रपौत्रान्त*सन्तानहीनस्यपुत्रिकापुत्रो*योदौहित्रःसधनमाप्नुयात् ।पूर्व्वेषां पितृपितामहप्रपितामहानां स्वधाकारे यथापौत्रास्तथापुत्रिकापुत्राएवदौहित्रकादौहित्राइवप्रतिकृतयासमाःनत्वन्येदौहित्राइतिइतोवमेकजातभ्रातृपुत्रपौत्रप्रपौत्ररहितस्यापुत्रस्यधनं पत्न्यभिगामि ॥१५॥ पत्नीतनिवृत्तरजस्का*यानियोगात्पुत्रोत्पादने * समर्थाभवति ॥ १६॥ दुहिताचयासम्भा।वि*पुत्रानवन्ध्याविधवावा* पितराविति पितृरभावे माता ॥१७॥ इतोत्रपरमतमप्रतिषेधा*सपत्नीपुत्रेणस्त्रीणामेकजातभ्रातृपुत्रेणभ्रातृणां* पुत्रित्वमनुमतैव ।१८ ॥ एतदनुसृत्ययाज्ञवल्क्येनाप्युक्तं तद्यथा * विभागञ्चेत्पिताकुर्य्यात् * स्वेच्छयाविभजेत्सुतान् * ज्येष्ठंवाश्रेष्ठभागेनसर्व्वेवास्युःसमांशिनः । १७। यदिकुर्य्यात्समानांशान्पत्न्यःकार्य्याःसमांशिकाः । नदत्तंस्त्रीधनंयासांभर्त्राश्वशुरेणवा ।१८। विभक्तेषुसुतोजातःसवर्णायांविभागभाक् । दृश्याद्वाततद्विभागःस्यादायव्ययविशोधितात् । १९। पितृभ्यांयस्ययद्दत्तंतत्तस्यैवधनंभवेत् ॥ इत्यादनन्तरमपुत्रकस्य

दौहित्रपर्य्यन्ताभावमभिप्रेत्योक्तं यथा । १२ । पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः । १३ । एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः । स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः । १४ । वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः । क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः । इति । ॥ १५ ॥ नत्वपत्नीकस्याग्राह्यत्वस्याद्द्विज*वर्णजास्विस्वपत्नीसवर्णसाद्दे*पत्नीवेश्यस्य कार्व्येशा* शोक्तं नशूद्रा भार्य्या । १६ । शाद्रियस्य योगाभावाद्व पत्नी*पत्नीर्यीयस्य योग*इतिपत्नीन विधानात् ॥१७॥ कथं शूद्रस्यापत्र कस्य धनभाक्*स्यादित्यत उक्तं सर्व्व*वर्णेष्वयं विधिरिति ॥ १८ ॥ इत्येवं पित्राविभक्तस्याप्युत्रस्य* पितृमतोमातृमतश्चधन * विषयमिदं वचनं । १९। ननूद्र्पितस्यमातस्य विभक्त*स्याप्युत्रकस्य धनविषयं तस्याप्यूर्व्वं सत्यमनन्तरः*सपिण्डाद्यद्यत्यादि ॥२०॥ २१७ ॥ऋणाद्धीनयोर्म्मातापित्रोरूर्द्धं * धनविभागमुक्त्वाऋणवतो*र्धनविभागमुच्यते * ।

ऋणे धने च सर्व्वस्मिन् प्रविभक्ते यथाविधि। पश्चाद्दृश्येत यत्किञ्चित्तत्सर्व्वं समतां नयेत् २१८

ऋणे धने चेत्यादि ॥ २१८ ॥ पित्रादिधनस्वामिना*धारिते ऋणे च धने च*यथाविधिधनभाग* विधाने नम र्व्वस्मिंस्तु प्रविभक्ते । १ । ऋणतो धनात्पश्चादवशिष्टं यत्किञ्चिद्दृश्येत*तत्सर्व्वं समतां नयेत् * समानांशं विभज्य * सर्व्वे भ्रातरो नयेयुः । २ । याज्ञवल्क्येनोक्तं विभजेरन् सुताः पित्रोरूर्द्ध्वं ऋक्थमृणं समम् । मातुर्दुहितरः शेषमृणात्ताभ्य ऋते न्वयात् ॥ इत्या दातद्विभागःस्यादायव्ययविशोधितात् ॥ ३ ॥ इति ॥ २१८ ॥

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः । योगक्षेमं प्रचारञ्च नविभाज्यं प्रचक्षते ॥ २१९ ॥

वस्त्रमित्यादि ॥ २१९ ॥ वस्त्रं योयद्यावहरतितदृङ्क * योजितमुक्तं पत्रं * *वाहनमश्वगजादि* अलङ्कारमाभरणं *कृतान्नमोदनादिकम् ।१। उदकं वापिकूपादि*स्त्रियोदास्यः योगक्षेमं *भोजनासनशयनादिकं क्षेम*योगाह्य स्थाल्यादिशय्यासनादिकम् । २ । प्रचारं नगरादिप्रचरणं * पथ्यादिस्थानं नविभज्यं * पृथक्कृत्वनविभज्यम् । ३ द्विश्वुवचने चपुस्तकमिति*पाठोदृश्यते तेन*प्रचक्षते इतिनपाठः । ४ । प्रमादिभिस्तयद्यकुलवस्त्रा * लङ्कारादि विभागःकर्त्तव्य इति*व्याख्यातं तदयास्त्रीयं *तस्मात्त्यद्याह्यमिति ॥ ५ ॥ सामान्यतउक्तमिदं * मन्वन्तरवचनं न *निर्णीतयावीक्षत्य म । ४ । तत्रव्यासउवाचयथा * विद्याप्राप्तं शौर्य्यधनं यच्चसौदायिकं भवेत् । विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिकथिभिः । ५ । पितामहेनयद्दत्तं पित्रा वा प्रीतिपूर्व्वम् ॥ तस्यतन्नापहर्त्तव्यं मात्रा दत्तञ्च यद्भवेत् । ६ । अविभाज्यं सगोत्राणामासहस्रकुलादपि । याज्यं क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः । ५ । इति कात्यायनश्चोवाचेदं * गोप्रचारश्चरथ्या च वस्त्रं यच्चाङ्गयोजितम् । प्रयोज्यं नविभज्यं च्छिल्पार्थं न्तुः वृहस्पतिः । ६।

इति। अत्रप्रयोजनं प्रयगाह स्थाल्यादियोगक्षेमं *वस्त्रपात्रयोजितं यद्योग्यवहवतिनानात्॥ ७॥ अथकात्या यमउवाच * आवहूय यं यत्नप्रसभं कर्म्मकुर्व्वत। तस्मिन्कर्म्मणिदृष्टे नप्रसादः स्वामिनाकृतः॥ तत्रलब्धन्तुयत्किञ्चिद्धनं शौर्य्येणतद्भवेत्। ध्वजाहृतं भवेद्यच्च विभाज्यं नैवतत्स्मृतम्॥ ८॥ संग्रामादाहृतं यच्चविजितादिप्रतां बलम्। स्वामार्थं जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते। १०। वैवाहिकन्तुतद्विद्याद्भार्य्यायायत्सहागतम्। ११। इति याज्ञवल्क्येनोक्तञ्च * इमिं च धर्म्मकार्य्ये च व्याधौसम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्तानस्त्रियै दातुमर्हति॥ ११॥ अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्। नदत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम्। १२। शङ्खलिखिताभ्यामप्युक्तं *नवास्तुविभागोनोदकपात्रान्न*पमालङ्कारोपयुक्तस्त्रीवाससां * गवां प्रचाररथ्यानां *विभागश्चेतिप्रजापतिः॥ १३॥ अत्रवास्तुवसतिस्थानं यत्र*यस्यावदृवर्त्तते तत्स्थानं त*त्तस्यैवनात्र्यविभागः कर्त्तव्यः। १४। प्रमादोतूद्यानादिस्थानमपि*वाचष्टे तन्नवास्तुशब्दानभि*धेयत्वाल्लोकेपितन्नवस्तुच्यते॥१५॥ ॥ २१८॥ उपसंहरति

**अयमुक्तोविभागोवःपुत्राणाञ्चक्रियाविधिः। क्रमशः क्षेत्रजादीनां द्यूतधर्म्मान्निबोधत॥२२०॥**

अयमित्यादि॥ २२०॥ अयं दायभागं निवोधतं तारम्भ*प्रचपतद्दूतान्ते न*दायस्यविभागउक्तः। १। क्षेत्रजादीनां पुत्राणाञ्च*क्रमशः क्रियाविधिः*करणप्रकारउक्तः* इतऊर्द्ध्वं द्यूतधर्म्मान् निबोधत। २॥२२०॥ इतिदायभागः समाप्तः॥ *॥ *॥ *॥ *॥

---

अथोद्दिष्टं द्यूतमुच्यते॥

**द्यूतंसमाह्वयञ्चैवराजाराष्ट्रान्निवारयेत्। राजान्तकरणावेतौद्वौदोषौपृथिवीक्षिताम्॥२२१॥**

द्यूतमित्यादि॥ २२१॥ पदार्थाख्यातन्त्वयुक्तावद्यूत *शब्देनद्यूतसमाह्वयावुच्येते *क्रीडासामान्यात्तद्द्वौ राजाराष्ट्रान्निवारयेत्कस्मात्॥ १॥ यतः पृथिवीक्षितां राज्ञां राज्या * न्तकरणावेतौद्यूत * समाह्वयौद्वौ दोषौस्तः॥ २॥२२१॥ कथं दोषावित्यतआह।

**प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ। तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत्॥ २२२॥**

प्रकाशमेतदित्यादि। १। २२२॥ देवनसमाह्वयौद्वौ* पणपूर्व्वकक्रीडाभेदौ * यद्यस्मात्प्रकाशं तास्कर्य्यमेतत् * तयोः प्रतीघाते नित्यं * नृपतिर्यत्नवान्भवेत्। १॥ २२२॥ ननु किं द्यूतं कः समाह्वय इत्यत आह॥

**अप्राणिभिर्यत्क्रीड़ति तल्लोके द्यूतमुच्यते । प्राणिभिःक्रीड़ते यस्तु सविज्ञेयःसमाह्वयः ॥२२३॥**

अप्राणिभिरित्यादि । १ । २२३ । यदप्राणिभिःशलाकादिभिर्लोके * क्रीड़ति तद्द्यूतमुच्यते * प्राणिभिर ष्वादिभिर्यत्क्रीड़ति * ससमाह्वयोविज्ञेयः । १ ॥ २२३ ॥ असाद्दण्डकरणमाह ।

**द्यूतं समाह्वयं चैव यःकुर्य्यात्कारयेत्तथा । तान्सर्व्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः २२४**

द्यूतं समाह्वयं * यं चेत्यादि । १ । २२४ । योद्यूतं वा समाह्वयं वा कुर्य्यात् * राजा तान्सर्व्वान्घातयेत् * द्विजलिङ्गिन शूद्रांश्च*राजाघातयेदिति ॥ १ ॥ २२४ ॥

**कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान्। विकर्म्मस्थान्शौण्डिकांश्च क्षिप्रं निर्व्वासयेत्पुरात ॥ २२५ ॥**

कितवानित्यादि २२५ । नकेवलं द्यूतादिकारिणो*धूर्त्तान्*राजाघातयेत्सर्व्वानेव कितवान्*पुरान्निर्वासयेत्कुशीलवांश्च । १ । नृत्यगीतश्चत्यूपजीविनश्च* कुशीलवाविवक्षिताः *क्रूरान्कुटिलचित्तान्पाषण्डांश्च*वेदद्विषः शास्त्रव्रतिनः ॥ २ ॥ विकर्म्मस्थान्सम्प्रदायच्युतकर्म्म*विपरीतकर्म्मकृतः* शौण्डिकांश्चपुरात्क्षिप्रं* राजा निर्व्वासयेद्वास*स्थानान्निर्गमयेदिति । २ । २२५ । कस्मादेतान्निर्व्वासयेदित्यत आह* ।

**एते राष्ट्रे वर्त्तमाना राज्ञःप्रच्छन्नतस्कराः । विकर्म्म क्रियया नित्यं बाधन्ते भद्रिकाःप्रजाः ॥ २२६**

एत इत्यादि ।१ ॥ ॥ २२६। एते हि कितवादयःप्रच्छन्न*तस्कराराज्ञोराष्ट्रे वर्त्तमाना*विकर्म्मक्रियया विपरीतकार्य्य*करणेन भद्रिकाःप्रजाबाधन्ते । १ । २२६ । एते षु प्रधानं दोषमाह ।

**द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् । तस्माद्द्यूतं नसेवेत हास्यार्थमपि बुद्धिमान् ॥ २२७ ॥**

द्यूतमित्यादि । १ । २२७ । पुराकल्पे द्यूतं यदप्राणिभिः*क्रीड़नमेतन्महद्वैरकरं * दृष्टं तस्माद्बुद्धिमान् हास्यार्थमपि*द्यूतं कथञ्चनन सेवेत ॥ १ ॥ २२७ ॥ यदि सेवेत तदा किं स्यादित्यत आह ।

**प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत योनरः । तस्य दण्डविकल्पःस्याद्यथेष्टं नृपतेस्तथा ॥ २२८॥**

प्रच्छन्नमित्यादि ॥ १ ॥ २२८ ॥ यस्तद्द्यूतं प्रच्छन्नं वा* प्रकाशं वा निषेवेत * तस्य दण्डविकल्पो यथा नृपते * रिष्टमभीष्टं तथा स्यात् । १ । २२८ । अथा तद्दण्डप्रसङ्गात्* सर्व्ववर्णानां यत्यद्दण्डो * विधातव्यस्तदानं यथा कर्य्यात्तदाह ।

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्। आनृण्यं कर्म्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥२२९

क्षत्रेत्यादि। ०। २२९। क्षत्रियवैश्यशूद्रयोनिस्तु* दण्डं दातुमशक्नुवन् * कर्म्मणा शरीरपरि *श्रमेण*यथा योग्येनानृण्यं गच्छेत्। १। विप्रस्तु शनैः शनैर्दण्डमर्थं *दद्याच्छक्तः सद्योदद्यात्। २। २२९।

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम्। शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥२३०

स्त्रीत्यादि। २३०। स्त्रीबालादीनां दमः * हस्तशिफया विदलेन वा * रज्ज्वादिना वा नृपतिर्विदध्यात्। १। २३०।

ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्। धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः॥ २३१॥

येनियुक्तास्त्वित्यादि॥ २३१॥ येषां कार्यिणां कार्येषु नियुक्ताये *धनोष्मणा निजनिज*धनवत्ता बुद्ध्यागर्व्वोष्मणा पच्य*मानाविकृतिमापन्नाः॥ १॥ तेषां कार्याणि तानिकार्याणि हन्युः *नृपस्तान्निःस्वान्धना*न्निर्गतान्कारयेत्तेषां *धनानिहृत्वा निर्धनान्कारयेदिति॥ २॥ २३१॥

कूटशासनकर्त्तॄंश्च प्रकृतीनाञ्च दूषकान्। स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा॥ २३२॥

कूटेत्यादि। २३२। राजाप्रजानां विचारार्थं स्वेन* नियुक्तानां प्रकृतीनां * प्राड्विवाकादीनां धनं *दूषकान् कूटशासनकर्त्तॄन्जनान्। १। स्त्रीबालब्राह्मणघ्नान्स्वद्वेष*कारिसेविनश्च हन्यात्॥ २॥ २३२॥

तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्। कृतं तद्धर्म्मतो विद्यान्न तद्भूयो निवर्त्तयेत्॥ २३३॥

तीरीतञ्चेत्यादि॥ २३३॥ यत्र क्वचनपुरुषे * यत्कर्म्मानुशिष्टमिदं*मेवं कर्त्तव्यमिदञ्च * नैवं कर्त्तव्यमिति रूप*द्वेषेनकारितं यत्कर्म्मतीरीतं। १। समाप्तिंगतं भवेत्तत्*कर्म्मधर्म्मतस्तेनकृतं विद्यात्*भूयः पुनःकरणेन निवर्त्तयेन्नशारयेत्॥ २॥ २३३॥

अमात्याः प्राड्विवाकोवा यत्कुर्युः कार्य्यमन्यथा। तत्स्वयं नृपतिः कुर्यात्तान्सहस्रञ्च दण्डयेत्॥ २३४॥

अमात्याइत्यादि। २३४। राजकार्य्ये नियुक्ताः* अमात्याः प्राड्विवाकोवा * यत्कार्य्यमन्यथा कुर्युः *तत्कार्य्यं स्वयं नृपतिः*कुर्य्यात् सहस्रं पणानां तान्दण्डयेत्। १। २३४।

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः । एते सर्व्वे पृथग् ज्ञेया महापातकिनो नराः ॥ २३५ ॥

ब्रह्महेत्यादि । २३५ । ब्रह्महा च वै धसुरापश्च विप्रः * स्वर्णस्याकर्षमितस्यापि वस्तेयी च * गुरुतल्पगश्च गुरुपत्नीगामी ॥ १ ॥ एते चत्वारो नराः पृथक् प्रत्येकं * महापातकिनो ज्ञेयाः ॥ २ ॥ २३५ ॥

चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्व्वताम् । शारीरं धनसंयुक्तं दण्डं धर्म्म्यं प्रकल्पयेत् ॥२३६॥

चतुर्णामित्यादि ॥ २३६ ॥ एतेषां चतुर्णामपि * ब्रह्महादीनां प्रायश्चित्तमकुर्व्वतां धनसंयुक्तं शारीरं * धर्म्म्यं दण्डं प्रकल्पयेत् । १ । स्वधनाधिकारात् * बहिष्कृतान् एव * शरीरे चिह्नं कारयेत् । २ । २३६ । कथमित्यत आह

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः । स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान् ॥२३७॥

गुरुतल्पइत्यादि । १ । २३७ । शारीरदण्डमेवं कल्पयेद्यथा * गुरुतल्पगतस्य ललाटे * भगः स्त्रीयोन्याकारचिह्नं कार्य्यं । १ । सुरापाने सुराध्वजः * कार्य्यः स्वर्णस्य स्तेये नरे * श्वपदं कुक्कुराकृतिचिह्नं * कार्य्यं भवति । २ । ब्रह्मघातिनरे शिरो * हीनपुरुषाकृतिचिह्नं कार्य्यं * न केवलमिदमनाश्रोच्यते । ३ । २३७ ।

असम्भोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः । चरेयुः पृथिवीं दीनाः सर्व्वधर्म्मबहिष्कृताः २३८

असम्भोज्या इत्यादि । २३८ । ज्ञातिबान्धवादिभिस्ते * ह्यसंभोज्या असंयाज्या * असंपाठ्या अविवाहिनश्च सन्तः * सर्व्वधर्म्मबहिष्कृता * दीनाः पृथिवीं चरेयुः । १ । २३८ ।

ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः । निर्दया निर्नमस्कारास्तन्मनोरनुशासनम ॥२३९॥

ज्ञातीत्यादि । २३९ । एते चत्वारो यथोक्त * चिह्नै राज्ञा कृतचिह्ना * निर्दया दयातो निर्गता एवं * निर्नमस्कारा अन्येषां * नमस्कारान्निर्गताश्च । १ । ज्ञातिसम्बन्धिभिस्त्यक्तव्या भवन्ति * मनोरित्यनुशासनम् । २ । २३९ ॥

प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितम् । नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् २४०

प्रायश्चित्तमित्यादि ॥ २४० ॥ ब्रह्महादय एते चत्वारो महा * पातकिनः सर्व्वे वर्णाः * यथोदितं प्रायश्चित्तं * कुर्व्वाणा ललाटे राज्ञा * यथोक्ताङ्कैरङ्कनीयाः । १　उत्तमसाहसन्तु दण्डं ते राज्ञा * दाप्या दापनीयाश्च ताः । २ । २४० ।
तत्रविशेषउच्यते ।

आगःसु ब्राह्मणस्यैव कार्य्यो मध्यमसाहसः । विवास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ॥ २४१॥

आगःस्वित्यादि । १ । २४१ । आगःसु कामतोऽकामतःकृतेषु * ब्राह्मणस्य ब्रह्महत्यादि पापेषु * चतुर्षु प्रायश्चित्तं चकुर्व्वतो मध्यमःसाहसो दण्डो राज्ञा कार्य्यः । १ । अथवा मध्यमसाहसं दण्डं * न कृत्वा सद्रव्यः सपरिच्छद * एव सराज्ञा राष्ट्रात् द्विवास्यो भवेत् ॥ २ ॥ २४१ ॥

इतरे कृतवन्तस्तु पापान्येतान्यकामतः । सर्व्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥ २४२ ॥

इतर इत्यादि ॥ २४२ ॥ इतरे क्षत्रियवैश्यशूद्रा ब्रह्म * हत्यादीन्येतानि चत्वारि पापानि * त्वकामतः कृतवन्तः * सर्व्वस्वहारमर्हन्ति । १ । कामतस्त्वेतानि चत्वारि पापानि * कृतवन्तः प्रवासनम् । २ । उत्तमसाहसं दण्डं कृत्वा * सद्रव्याः सपरिच्छदा * राज्ञा कारितं स्वराष्ट्रात् * निर्गमनमर्हन्तीति ॥ २ ॥ २४२ ॥ नन्वेवं ब्रह्महत्यादिपातकिनः * कृतप्रायश्चित्ता अपि * कृतदण्डा राज्ञा स्वराष्ट्राद् बहिः * च्युता राजान्तरे वसन्तु । १ । यत्तद्धनं राजा दण्डयेन्न तत् किं * स्वयमुपभुञ्जीतेत्यत * आह ।

नाददीत नृपः साधुर्महापातकिनो धनम् । आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥ २४३ ॥

नाददीतेत्यादि । १ । २४३ । महापातकिनो धनं * साधुर्नृपो नाददीत * लोभात्तदादानस्तेन * महापातकदोषेण लिप्यते । १ । २४३ । तर्हि किं कुर्य्यादित्यत * आह ।

अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् । श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥ २४४ ॥

अप्सु प्रवेश्येत्यादि । १ । २४४ । राजा महापातकिनां दण्डं तं * मर्य्यमप्सु प्रवेश्य प्रक्षिप्य व * वरुणाय देवायोपपादयेत् । १ । अथवा श्रुतवृत्तोप * पन्ने ब्राह्मणे तं दण्ड * मर्थं प्रतिपादयेद् दद्यात् । २ । २४४ । कस्माद्वरुणायोपपादयेद् * ब्राह्मणे वा प्रतिपादये * दित्यत आह ।

ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः । ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः ॥ २४५ ॥

ईश इत्यादि । १ । २४५ । वरुणो देवो दण्डस्येशः स हि * यस्माद्राज्ञां दण्डधर * स्तस्मात्तस्यैवोपपादयेत् । १ । वेदपारगो ब्राह्मणः * सर्व्वस्य जगत ईश * स्तस्मात्तस्मिन् दण्डमर्थं प्रतिपादयेदिति । २ । २४५ । किमर्थं राजा महापातकिनां * दण्डमर्थं न गृह्णीया * दित्यत आह ।

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् । तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥ २४६ ॥

यत्रेत्यादि । १ । २४६ । यत्र देशे राजा पापकृद्भ्यो * धनागमं वर्जयते * तत्र देशे मानवाः कालेनैव * दीर्घजीविनो जायन्ते । १ । २४६ । अपरञ्चाह ।

निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक्। बालाश्च न प्रम्रियन्ते विकृतं न च जायते ॥२४७॥

निष्पद्यन्त इत्यादि । १ । २४७ । यत्र देशे राजा पापकृज्जनान् भो*धनागमं वर्जयते * तत्र देशे विशां यथोप्तानि पृथक् *तथा सस्यानि निष्पद्यन्ते । १ । न च तत्र देशे बाला म्रियन्ते*न च विकृतं जायते । २ । २४७ ।

ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्। हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८॥

ब्राह्मणानित्यादि ॥ २४८ ॥ ब्राह्मणान् कामाद्बाधमानमवर*वर्णजं शूद्रं नृपउद्वेजन* करैश्चित्रै राश्चर्य्यैर्वधोपायै * र्यदङ्गेन बाधयेत्तदङ्गच्छेदनात् । १ । २४८ । इतोऽन्यस्य हनने राज्ञः किं * पापं न स्यादित्यत* आह ।

यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे । अधर्म्मो नृपतेर्दृष्टो धर्म्मस्तु विनियच्छतः ॥ २४९ ॥

यावानित्यादि । १ । २४९ । अवध्यस्य वधे यावानधर्म्म * स्तावानधर्म्मो नृपते* र्वध्यस्य मोक्षणे दृष्टः * वध्यं विनियच्छतस्तु धर्म्मो दृष्टः । १ । २४९ । उपसंहरति ।

उदितोऽयं विस्तरशो मिथो विवदमानयोः । अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥

उदितइत्यादि । २५० । मिथो विवदमानयो*रष्टादशसु मार्गेषु * व्यवहारस्य निर्णयो * विस्तरशोऽय मुदितः । १ । २५० ।

एवं धर्म्म्याणि कार्य्याणि सम्यक् कुर्व्वन् महीपतिः । देशानलब्धान् लिप्सेत लब्धांश्च परिपालयेत् ॥२५१॥

एवमित्यादि । । २५१ । महीपतिरेवमनेन*प्रकारेण धर्म्म्याणि कार्य्याणि सम्यक् । *कुर्व्वन्नलब्धान् देशान् लिप्सेत लब्धान्*देशांश्च पालयेदिति । १ । २५१ ।

सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः । कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥

सम्यगित्यादि । २५२। महीपतिः सम्यङ्निविष्टदेशः*शास्त्रतः कृतदुर्गश्च*सन् कण्टकोद्धरणे * नित्यमुत्तमं यत्नमातिष्ठेदिति । १ । २५२ । तेन किं स्यादित्यत आह ॥

रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात् । नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥२५३॥

रक्षणादित्यादि ॥ १ ॥ २५१ ॥ नरेन्द्रराजानश्चाधर्मात्तानां *न त्यां रक्षणात्कण्टकानाञ्च तथा *शोधनात् प्रजापालने *तत्पराः सन्तोदिवं यान्ति ॥ १ ॥ २५२ ॥ कण्टकानाञ्च *शोरे किं स्यात् *इतितत्राह ।

**अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः। तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥ २५४॥**

अशासन्नित्यादि । १ । २५४ । यस्तु पार्थिवस्तस्करा *नशासन्प्रजाभ्योबलिं गृह्णाति *तस्य राष्ट्रं प्रक्षुभ्यते तैस्तस्करैः *सच स्वर्गात्प्रहीयते ॥ १ ।२५४ ।

**निर्भयन्तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम्। तस्य तद्वर्द्धते नित्यं सिच्यमान इव द्रुमः ॥ २५५॥**

निर्भयन्त्वित्यादि । २५५ । यस्य राज्ञोराष्ट्रं बाहु *बलाश्रितं निर्भयञ्च *भवेत् तस्य राष्ट्रं मद्भिः * सिच्यमानो द्रुम इव *नित्यं क्रमेण वर्द्धते । १ । २५५ । तत्कं पुनस्तस्करा इत्यत *आह ॥

**द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान्। प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः॥ २५६॥**

द्विविधामित्यादि । १ । २५६ । परद्रव्यापहारकान् *तस्करान्प्रकाशान प्रकाशांश्च द्वि* विधान्महीपतिः *चार *चक्षुश्चारैश्चक्षुर्भिर्वद्भिर्विद्यात् । १ । २५६ ।

**प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः। प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥ २५७॥**

प्रकाशेत्यादि ॥ २५७ । तेषां द्विविधानां तस्कराणां मध्ये *नानापण्योपजीविनोये मानवाः *ते प्रकाशवञ्चकास्तस्कराश्च याः । १ । ये मानवास्ते नाश्चाटविकाः पथि *दस्यवः श्चादिना *मागत्य वधबन्धनात् *धनहारकाद स्तेन *स्तु प्रकाशवञ्चकाः । २ । २५७ । कं पुनराटविकादय इत्यतत्राह ।

**उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा। मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥२५८**

उत्कोचकादित्यादि । १ । २५८ । २५९ । २६० । उत्कोचकादीनाद्यलिङ्गानाद्यन्तान् *प्रकाशान्लोककण्टकान् *तस्करान्राजा विजानीयात् ॥ १॥ उत्कोचकाः कार्यार्थिभ्योऽर्थं ये गृह्णीत *यथार्थमयथार्थमयथार्थं *यथार्थं कुर्वन्तिते चारुत्कोचकाः । २ । औपधिकाश्च ये लोकान् *भयं प्रदर्श्यार्थं तेभ्यो *गृह्णन्ति विना कारणं । ३ वञ्चकाः स्वर्णादिषुनात् *द्रव्यं मिश्रयित्वा दद्युः *कितवा धूर्त्ता मङ्गलादेशवृत्ता *पुत्रजन्मादिवार्त्तामा* दिश्य धनं गृह्णन्ति । ४ । भद्राः प्रकाशकल्याणाचाराश्चान्तः *परद्रव्यापहारकाः *ईक्षणिकाः सामुद्रिकादिशास्त्रैः करस्वादिदर्शकाः ५ ॥ २५८ ॥

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः । चतुष्पथाश्चैत्यवृक्षाःसमाजाःप्रेक्षणानिच ॥२६४॥
जीर्णोद्यानान्यरण्यानिकारुकावेशनानिच । शून्यानिचाप्यगाराणिवनान्युपवनानिच २६५
एवंविधान्नृपोदेशान्गुल्मैःस्थावरजङ्गमैः। तस्करप्रतिषेधार्थंचारैश्चाप्यनुचारयेत्॥२६६

सभेत्यादि । १ । २६४ । २६५ । २६६ । सभादीनुपवनान्तान्देशान्नृपः स्थावरैरेकस्थानस्थैर्जङ्गमैश्च पुनःपुनःकुटिलं गच्छद्भिर्गुल्मैः। १ । सैन्यैःसहैव चारैस्तस्कराणां प्रति * षेधार्थमनुचारयेत् । २ । २६४ । २६५ । २६६ ।

तत्सहायैरनुगतैर्नानाकर्म्मप्रवेदिभिः । विद्यादुत्सादयेच्चैवनिपुणैःपूर्व्वतस्करैः॥२६७॥

तत्सहायैरित्यादि । २६७ । राजाश्रयानुगतैस्तत्तदुपजीवितस्करादीनां सहायैस्तेषां * तेषां कर्म्मप्रवेदिभिः* निपुणैःपूर्व्वतस्करैः। १ । पूर्व्वं ये तस्करा आस*न्नधुनातास्कर्य्यं त्यक्ता * राजानुगतास्तैः श्चतान् *स्तस्करान्विद्यादुत्सादयेच्चैवेति । २ । २६७ । ॥

भक्ष्यभोज्योपदेशैश्चब्राह्मणानांचदर्शनैः । शौर्य्यकर्म्मापदेशैश्चकुर्युस्तेषांसमागमम ॥ २६८ ॥

भक्षेत्यादि । २६८ ॥ तेषां चौराणां सहाया*ये राजानुगताःपूर्व्व* तस्करास्ते भक्ष्यभोज्योपदेशा*त्रिमन्त्रणादिकरणात्*ब्राह्मणानां दर्शनैश्च । १। शौर्य्यकर्म्ममल्लक्रीडा*द्यपदेशै*स्तेषां समागमं कुर्य्युः । २६८ ।

ये तत्रनोपसर्पेयुर्मूलप्रणिहिताश्चये । तान्प्रसह्यनृपोहन्यात्समित्रज्ञातिबान्धवान् ॥ २६९

येतत्रेत्यादि ॥ २६९ ॥ तत्रभक्ष्यभोज्यादिषु*ये जनानोपसर्पेयुः*येचमूलं पूर्व्वतस्कर राज्ञा * नियुक्ताः प्रणिहितवन्तो*न वत्रोपसर्पन्ति १ नृपस्ताश्चौरान्विदित्वा*समित्रज्ञातिबान्धवान्*प्रसह्य सहसैव हन्यात् ॥२६९

नहोढ़ेनविनाचौरंघातयेद्धार्म्मिकोन्नृपः । सहोढ़ंसोपकरणंघातयेदविचारयन् ॥२७०

नहोढ़ेनेत्यादि ॥ २७० ॥ होढ़ं हृतद्रव्यं हरणोप*करणप्रस्त्रादिकञ्चपद्य*त्तेनविनाचौरमिति * मात्रवनेनमचौरम् ॥ १ ॥ धार्म्मिकोनृपोनघातयेत्*सहोढ़ंसोपकरणञ्च*चौरमविचारयन्धर्म्म * श्चानृपोघातयेदि २ ॥ २७० ॥

ग्रामेष्वपिचयेकेचिच्चौराणांभक्तदायकाः । भाण्डावकाशदाश्चैवसर्व्वांस्तानपिघातयेत् २

ग्रामेष्वपीत्यादि ॥ २७१ ॥ ग्रेष्वपि ग्रामेषु येऽपि * चौराणां भक्तदायका * चौराणां भाण्डादिद्रव्य * स्थापन स्थानदायकास्तानपि सर्व्वान्राजा घातयेत् ॥ १ ॥ २७१ ॥

राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान्। अभ्याघातेषु मध्यस्थान्शिष्याच्चौरानिव द्रुतम् ॥ २७२ ॥

राष्ट्रेष्वित्यादि ॥ २७२ ॥ राजा राष्ट्रेषु स्वराज्येषु रक्षार्थ * मधिकृतान्नियुक्तान् ये * ये च सामन्ताः समन्ताद्वसन्त * श्चौर्य्यार्थं चोदयन्ति तान् ॥१॥ ये च परद्रव्याणामभ्याघातेषु * मध्यस्थास्तांश्च चौरा * निव द्रुतं शिष्यादिति । २७२ ।

यश्चापि धर्म्मसमयात्प्रच्युतो धर्म्मजीवनः। दण्डेनैव तमप्योषेत्स्वकाद्धर्म्माद्धि विच्युतम् ॥ २७३

यश्चापीत्यादि ॥ २७३ ॥ यश्चापि धर्म्मजीवनो * धर्म्मसमयाद्धर्म्मेणकृतो यो नियमस्तस्मात् * च्युतः तमपि हि * यस्मात्स्वकाद्धर्म्मादि * च्युतं तस्माद्दण्डेनौषेत् ॥ १ ॥ २७३ ॥

ग्रामघाते हिताभङ्गे पान्थमोषाभिदर्शने। शक्तितो नाभिधावन्तो निर्व्वास्याः सपरिच्छदाः ॥ २७४

ग्रामघातइत्यादि ॥२७४॥ दस्युप्रभृतिभिरात्मभिर्ग्रामस्य घाते * द्रव्यापहरणपीड़नादौ कृते * हितानां सेतुप्रभृतीनामाभङ्गे । १ । पथिदस्युभिः कृतस्य * पान्थानां द्रव्यामोषस्याभिदर्शने * रक्षार्थं ये शक्तितो नाभिधावन्ति * ते सपरिच्छदा निर्व्वास्याः । २ । २७४ ।

राज्ञः कोषापहर्त्तृंश्च प्रतिकूलेषु च स्थितान्। घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥ २७५

राज्ञइत्यादि ॥२७५॥ राज्ञः कोषापहर्त्तॄन् राज्ञः प्रति * कूलेषु च स्थितान् राज्ञ * श्चारीणामुपजापकान् * यत् समीपे नारिराष्ट्र वर्ण्य * वाक्यं वदतो जनांश्च । १ । राजा विविधैर्दण्डैर्घातयेदिति * राजधर्म्मे व्यवस्थितम् ॥ २ ॥ २७५ ॥

सन्धिं छित्वा तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः। तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥ २७६ ॥

सन्धिमित्यादि । २७६ । ये तस्करा गृहस्थानां * गृहे सन्धिं छित्वा रात्रौ * चौर्य्यं कुर्व्वन्ति तेषां तु * हस्तौ छित्वा नृपस्तीक्ष्ण * शूले तान् निवेशयेदिति । १ । २७६ ॥

**अङ्गुलीर्ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे। द्वितीये हस्तचरणौ तृतीये वधमर्हति॥२७७॥**

अङ्गुलीरित्यादि। २७७। वस्त्रसुवर्णादिबन्धनग्रन्थे* र्भेदस्य चौरस्य प्रथमे तु* तद्ग्रन्थिच्छेदनार्थस्य* ग्रहणे ऽङ्गुलीश्छेदयेत्। १। यदि प्रथमापहरणे स ग्रन्थि* भिच्चौरो धृतो न भवे* त्ततो द्वितीये ग्रन्थिभेदे तस्य* हस्तचरणौ छेदयेत्। २। यदि द्वितीयेऽपि धृतो* न स्यात्तदा तृतीये ग्रन्थिभेदे* स चौरो वधमर्हति। ३। २७७।

**अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान्। संनिधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः॥२७८॥**

अग्निदानित्यादि। २७८। मोषस्य चौरस्याग्निदान्* भक्तदान् शस्त्रस्थापना* र्थं मन्त्रकाशस्थानदान्* चौरस्य संनिधिदान्* चौरमिव राजा हन्यात्। १। २७८।

**तडागभेदकं हन्यादप्सु शुद्धवधेन वा। यद्वापि प्रतिसंस्कुर्याद्दाप्यस्तूत्तमसाहसम्॥२७९॥**

तडागमित्यादि। २७९। जनानां स्नानपानाद्युपपत्तौ* तडागस्य भेदकं राजा देहे* ताडनेन हन्यादप्सु वा तत्तडागान्निर्गमितास्वप्सु सन्नेन वधेन हन्यात्। १। अथवा तां वापीं स प्रतिसंस्कुर्यात्* उत्तमसाहसञ्च स* राज्ञा दाप्यो भवतीति। २। २७९।

**कोष्ठागारायुधागारदेवतागारभेदकान्। हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन्॥ २८०॥**

कोष्ठेत्यादि। २८०। कोष्ठागारादिभेदकान्* हस्त्यश्वरथहर्तॄंश्च* राजा हन्यात्तत्र विचारो न कार्यः। १। २८०।

**यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत्। आगमं वाप्यपां भिन्द्यात् स दाप्यः पूर्वसाहसम्॥२८१॥**

यस्त्वित्यादि। २८१। प्रजानां स्नानपानाद्युपपत्तौ* पूर्वनिविष्टस्य कृतस्य* तडागस्योदकं यस्तु* नालादिना हरे दथवा ततोऽपामागमं भिन्द्यात्। १। जलसरणिं निरुन्ध्यात्* पूर्वसाहसं प्रथम* साहसं स राज्ञा दाप्यः। २। २८१।

**समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत्॥२८२॥**

समुत्सृजेदित्यादि। २८२। यस्त्वनापदि पुरीषाद्यमेध्यं* राजपथे समुत्सृजेत्* स द्वौ ताम्रस्य कार्षापणौ दद्यात्* तदमेध्यञ्च शोधयेत्। १। २८२।

**आपद्गतोऽथवा वृद्धो गर्भिणी बाल एव वा। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥ २८३॥**

आपद्गतइत्यादि । २८३ । आपद्गतःपुरीष*वेगादिधारणाशक्तोयुवा*वृद्धोवागर्भिणीवाबालएववा*राजमार्गेयदामेध्यं*पुरीषादिसमुत्सृजेत् । १ । तदापरिभाषणंतत्*कर्म्मपुनःकरणपरित्यागाय*भाषणमर्हन्तीति*तच्चामेध्यंशोध्यमितिभाषेत । २ । २८३ ।

**चिकित्सकानांसर्व्वेषांमिथ्याप्रचरतांदमः । अमानुषेषुप्रथमोमानुषेषुतुमध्यमः ॥ २८४**

चिकित्सकानामित्यादि । २८४ ॥ मिथ्याप्रचरतामयथाविधिना* चिकित्सांकुर्व्वतांचिकित्सकानां * अमानुषेषुहस्त्यश्वादिषुदमः*प्रथमःसाहसोराज्ञाकर्त्तव्यः । १ । मानुषेषुवमिथ्याप्रचरतां* चिकित्सकानांमध्यमः*साहसोदमःकर्त्तव्यः । २ । २८४ ।

**संक्रमध्वजयष्टीनांप्रतिमानाञ्चभेदकः । प्रतिकुर्य्याच्चतत्सर्व्वंपञ्चदद्याच्छतानिच ॥ २८५ ॥**

संक्रमेत्यादि । २८५ । संक्रमादोलारथशकटादय * स्तेषांध्वजयष्टीनाञ्चभेदकः*प्रतिमानां देवादिकप्रतिमूर्त्तीनांभेदकः ।१। तत्सर्व्वंप्रतिपुनस्त*द्रूपंकर्य्यात् पञ्चशत*शतानितामुकार्षापणानांदद्यात् । २ । २८५ ।

**अदूषितानांद्रव्याणांदूषणेभेदनेतथा । मणीनामपवेधेचदण्डःप्रथमसाहसः ॥ २८६ ॥**

अदूषितानामित्यादि । २८६ । यानिद्रव्याणिनदूषितानितेषां*केनचिद्दूषणेनदूषणेकृते*भेदनेवाकृते मणीनामपाप*वेधेकृतेप्रथमसाहसोदण्डः । १ । २८६ ।

**समैर्हिविषमंयस्तुचरेद्वैमूल्यतोपिवा । समाप्नुयाद्दमंपूर्व्वंनरोमध्यममेववा ॥ २८७ ॥**

समैर्हीत्यादि । २८७ । योरिक्रेतातत्तद्द्रव्यातःसमैः*विषमंचरेत्तद्द्रव्यंनद्दत्वातत्तुल्यद्रव्यं दत्त्वाविषमंनरं मूल्यातोवायश्चविषमंचरेत् । १ । येनसमूल्येनयद्द्रव्यं*विक्रेतुमवधारितं कृत्वाल्प*मूल्यंतथाविधंद्रव्यं*वञ्चयित्वादद्यादिति । २ । सनरःपूर्व्वंसाहसंमध्यमंवा*साहसंदमंप्राप्नुयात् । २ । २८७ ।

**बन्धनानिचसर्व्वाणिराजमार्गेनिवेशयेत् । दुःखितायत्रदृश्येरन्विकृताःपापकारिणः ॥ २८८**

बन्धनानिचेत्यादि । २८८ । विकृताश्चौर्य्यादिपापकारिणो*दुःखिताःसर्व्वजनैर्दृश्येरन्* यत्र तस्मिन्राजमार्गेसर्व्वाणि*बन्धनानिकारागाराणिनिवेशयेत् । १ । २८८ ।

**प्राकारस्यचभेत्तारंपरिखानाञ्चपूरकम् । द्वाराणाञ्चैवभङ्क्तारंक्षिप्रमेवप्रवासयेत् ॥ २८९**

प्राकारस्येत्यादि । २८९ । प्राकारस्य भेत्तारं * परिखाणां पूरकं * द्वाराणां भङ्क्तारं * क्षिप्रं वै प्रवासयेत् १ । २८९ ।

अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः । मूलकर्म्मणि चानाप्तैः कृत्यासु विविधासु च ॥२९०॥

अभिचारेष्वित्यादि । २९० । आभिचारिकेषु कर्म्मसु सर्व्वेषु * तत्कर्म्मकर्त्तुर्द्विशतः * कार्षापणानां नृपेण * दमो दण्डः कर्त्तव्यः । १ । उच्चाटनादिषु धनिना मूल्यस्य * स्वहादावनाप्तैः परैः * कीलकादेः खनने कर्म्मणि कृत्यासु * विविधास्वनिष्ट क्रियासु कृतासु । २ । कार्षापणानां द्विशतस्तत्कर्म्म * कारिणां दमः कर्त्तव्यः । ३ । २९० ।

अबीजविक्रयी चैव बीजोत्कृष्टं तथैव च । मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम् ॥२९१॥

अबीजेत्यादि । २९१ । बीजोत्कृष्टमिति वद * न्नबीजविक्रयी यस्तस्य * तथैव मर्य्यादायाः सीमायाश्चयो * भेदकः स वधं देहे * विकृतं रूपं प्राप्नुयात् । १ । २९१ ॥

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः । प्रवर्त्तमानमन्याये च्छेदयेल्लवशः क्षुरैः ॥ २९२ ॥

सर्व्वेत्यादि । २९२ । सर्व्वकण्टकपापिष्ठं हेमकारं स्वर्णकार * मन्याये प्रवर्त्तमानं * पार्थिवः क्षुरैर्लवशो * ऽल्पमल्पं च्छेदयेद्धस्तम् । १ । २९२ ।

सीताद्रव्यापहरणे शस्त्राणामौषधस्य च । कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥२९३

सीतेत्यादि । २९३ । सीता लाङ्गलपद्धति * स्तस्या अङ्गस्य द्रव्यस्यापहरणे * शस्त्राणामपहरणे * औषधानाञ्चापहरणे । १ । कालं कार्य्यञ्चासाद्य * राजा तस्य * पहर्त्तुर्दण्डं प्रकल्पयेत् । २९३ ।

स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा । सप्तप्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते २९४

स्वाम्यमात्यावित्यादि । २९४ । स्वामी राजा मन्त्रिप्रभृतिरमात्यः * पुरं राजाधिष्ठितं नगरं राष्ट्रं * देशः कोषो धनागारं * दण्डो हस्त्यश्वरथादिः । १ । सुहृत् सप्तमाध्यायोक्तं * त्रिविधं मित्रमेतास्तु * सप्तप्रकृतयो राज्यस्य भवन्ति * तस्मात् सप्ताङ्गं राज्यं * महर्षिभिरुच्यते । २ । २९४ ।

सप्तानां प्रकृतीनान्तु राज्यस्यासां यथाक्रमम् । पूर्व्वं पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत् ॥२९५

राज्यस्यासां सप्तानां प्रकृतीनां * व्यसनं वापत्तिर्यथा * क्रमं पूर्व्वं पूर्व्वं गुरु * तरं बुद्धिमान् जानीयात् । १ ।

कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम्। कर्म्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम्॥ ३०२

कलिरित्यादि। १। ३०२। स राजा प्रसुप्तः कलिर्भवति * मोहात्तत्त्वं तत्सपुनर्जाग्रतसन् * द्वापरं युगं भवति नत्वात्। १। ततः कर्म्मस्वभ्युद्यतः स राजा * त्रेतायुगं भवति ततः स राजा * विचरन् सन् कृतं युगं भवति। ३०२।

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्॥ ३०३

इन्द्रस्येत्यादि। ३०३। इन्द्रादीनां देवतानां * तेजोवृत्तं नृपश्चरेत् * स्वराज्यपरिपालनार्थं। १। ३०३ कथं तत्तेजो * वृत्तं राजाचरे * दित्यत आह॥

वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति। तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन्॥ ३०४

वार्षिकानित्यादि। १। ३०४। इन्द्रो यथा वार्षिकांश्चतुरो मासा * नभिसर्व्वतः प्रवर्षति तथेन्द्र * व्रतं चरन् राजा कामैः * स्वं राष्ट्रमभिवर्षेत्। १। ३०४।

अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत्॥ ३०५

अष्टावित्यादि। ३०५। आदित्यो यथाष्टौ मासा * न्रश्मिभिस्तोयं हरति * तथा राजा राष्ट्रात् करं * नित्यं हरेदित्येतद्धि * राज्ञो भवत्यार्कं व्रतं॥ १॥ ३०५॥

प्रविश्य सर्व्वभूतानि यथा चरति मारुतः। तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम्॥ ३०६॥

प्रविश्येत्यादि॥ ३०६। मारुतो यथा सर्व्वभूतानीमानि * प्रविश्य चरति तथा * राज्ञा चारैः सर्व्वराष्ट्रं * प्रवेष्टव्यमेतद्राज्ञो * हि मारुतं व्रतं ज्ञेयम्। १। ३०६।

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति। तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम्॥ ३०७।

यथा यम इत्यादि॥ ३०७॥ यमो यथा काले प्राप्ते प्रिय * द्वेष्यौ नियच्छति न * समतं तथैव राज्ञा * प्रजा नियन्तव्याः काले * न ज्ञामा इति यमव्रतं। १। ३०७॥

वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते। तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम्॥ ३०८।

वरुणेनेत्यादि। ३०८। यथा वरुणेन पाशैः * र्बद्ध एव सर्व्वोऽभिदृश्यते तथा * राजा प्रजाः पापान्निगृह्णीयादेत * द्राज्ञो वारुणं व्रतं स्यात्। १। ३०८।

परिपूर्णं यथाचन्द्रं दृष्ट्वाहृष्यन्तिमानवाः। तथाप्रकृतयोयस्मिन्सचान्द्रव्रतिकोनृपः ॥ ३०९ ॥

परिपूर्णमित्यादि ॥ ३०९ ॥ यथापरिपूर्णं चन्द्रं दृष्ट्वामानवाहृष्यन्ति*तथासर्व्वाःप्रकृतयोयस्मिन्राजनिसन्ततं दृष्ट्वामानवाहृष्यन्ति*सनृपश्चान्द्रव्रतिकोज्ञेयः । १ ॥ ३०९ ॥

प्रतापयुक्तस्तेजस्वीनित्यंस्यात्पापकर्म्मसु। दुष्टसामन्तहिंस्रश्चतदाग्नेयंव्रतंस्मृतम् ॥३१०॥

प्रतापेत्यादि । ३१० । अग्निर्यथानित्यमेव*प्रतापयुक्तस्तेजस्वी*तथाराजापापकर्म्मसु । १ । प्रतापयुक्तस्तेजस्वीचदुष्ट*सामन्तहिंस्रश्चस्यात*तदाग्नेयंव्रतंस्यात । १ । ३१० ।

यथासर्व्वाणिभूतानिधराधारयतेसमम् । तथासर्व्वाणिभूतानिविभ्रतःपार्थिवंव्रतम् ॥ ३११॥

यथासर्व्वाणीत्यादि । ३११ । धरापृथिवीयथासर्व्वाणीमानि* भूतानिसमंधारयतेनैवव*विषमंतथा सर्व्वाणिभूतानि*समंविभ्रतोराज्ञःपार्थिवंव्रतं । १ । ३११ ।

एतैरुपायैरन्यैश्चयुक्तोनित्यमतन्द्रितः स्तेनानराजानिगृह्णीयात्स्वराष्ट्रेपरएवच ॥ ३१२॥

एतैरित्यादि ॥ ३१२ । एतैरन्यादिभिरष्टाभिस्तेजोभि*रन्यैश्चोपायैर्युक्तोराजानित्य*मतन्द्रितःसन्स्वः स्व*राष्ट्रेस्तेनान्निगृह्णीयात् । १ । परं परमेवचनिगृह्णीयात्*प्रमादीत्वपरएवचेति*परित्वापरेराष्ट्रेच*स्तेनानितिवाचष्टे । २ । तत्रपरःकापुरुषः*सन्किंस्वराज्यस्थितान्स्तेनान्परेणराज्ञाभियात् । २ । ३१२ ।

परामप्यापदंप्राप्तोब्राह्मणान्नप्रकोपयेत् । तेह्येनंकुपिताहन्युःसद्यःसबलवाहनम् ॥३१३॥

परामपीत्यादि । ३१३ । राजापरामुत्कृष्टामत्यन्तमप्या*पदंप्राप्तोब्राह्मणान्नप्रकोपयेत्* हियस्मात्ते ब्राह्मणाःकुपिताएनं*नृपंसबलवाहनंसद्योहन्युः । १ । ३१३ ।

यैःकृतःसर्व्वभक्ष्योऽग्निरपेयश्चमहोदधिः । क्षयीचाप्यायितःसोमःकोननश्येत्प्रकोप्यतान्३१४

तद्दृष्टान्तानाहयैरित्यादि । ३१४ । यैर्ब्राह्मणैरग्निःसर्व्वभक्षःकृतो*लवणादीमहोदधिरपेयः*कृतःसोम श्चक्षयीकृतश्चाप्या*यितःकृतस्तान्प्रकोप्यकोननश्येत् । १ । ३१४ ।

लोकाननन्यान्सृजेयुर्येलोकपालांश्चकोपिताः । देवान्कुर्युरदेवांश्चकःक्षिण्वंस्तान्समृध्नुयात् ॥ ३१५ ॥

अपरञ्चाह लोकानित्यादि । ३१५ । ये ब्राह्मणा इन्द्रादिभिर्लोकपालैः* रपि कोपिता भूलोकादिभ्योऽन्यान्* लोकान् लोकपालांश्च सृजेयुः । १ । देवानदेवांश्च कुर्युः* कस्तान् ब्राह्मणान् क्षिण्वन् समृध्यात्* समृद्धिमाप्नुयादिति । २ ३१५ ।

यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा। ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः॥३१६

अपरञ्चाह यानित्यादि । ३१६ । यान् ब्राह्मणानुपाश्रित्य* भूर्लोकादयो लोकाश्च* देवाश्च सर्वदा तिष्ठन्ति वर्तन्ते* येषां ब्राह्मणानां धनं* ब्रह्म जिजीविषुः कस्तान् हिंस्यात् । १ । ३१६ । तर्हि किमीदृग्भक्ति* मतो ब्राह्मणाः नर्कोपयोगितात* आह ।

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ३१७॥

अविद्वांश्चैवेत्यादि । १ । ३१७ । अविद्वांश्च विद्वांश्च ब्राह्मणो महद्* दैवतं यथाग्निर्मन्त्रैः* प्रणीतश्चाप्रणीतश्च* महद्दैवतमेवेति । १ । ३१७ अपरञ्चाह ।

श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति । हूयमानश्च यज्ञेषु भूय एवाभिवर्द्धते ॥ ३१८॥

श्मशानेष्वित्यादि । ३१८ । तेजस्वी पावकः श्मशानेष्वपि* दुष्यति पुनर्यज्ञेषु च हूयमानो* भूय एवाभिवर्द्धते । १ । ३१८ ।

एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्व्वकर्म्मसु । सर्व्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥ ३१९ ॥

एवमित्यादि ।३१९। एवं सति यद्यपि ब्राह्मणा* अनिष्टेषु सर्व्वकर्म्मस्वपि* वर्त्तन्ते तथापि ब्राह्मणाः पूज्याः* सर्व्वथा ते हि [illegible] । १ । कस्मात् [illegible] यस्मात् ब्राह्मण एव* परमं श्रेष्ठं दैवतम् ॥ २ । ३१९ ॥

क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रति सर्व्वशः । ब्रह्मैव सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ॥३२०॥

क्षत्रस्येत्यादि । ३२० । अतिप्रवृद्धस्य क्षत्रियस्य* सर्व्वशः समाज्ञनियन्तृत्वं* ब्रह्मैव स्याद् यद्वा* स ब्राह्मणान् अतिवर्त्तते । १ । कस्मात् हि यस्मात् क्षत्रं क्षत्रियत्वं* ब्रह्मसम्भवं भवति । २ । ३२० ।

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् । तेषां सर्व्वत्रगं तेजः स्वासु योनिषु शाम्यति ३२१

अद्भ्य इत्यादि । ३२१ । यद्यपाग्नेः पापदृतिमाकुंगम* स्तथापाम्नस्य लघर्गं* ऽग्नेरपस्त्वप्रवेशात्तथा क्षत्रियात्मिका

थपीऽभिप्रेतार्थमिदम । १ । यद्योऽग्निरुत्थितोप्राणाः क्षत्र*समुत्थितमश्मनोलोहं समुत्थितं* तेषां निःक्षत्र तीक्ष्णानां तेजस्तु । १ । सर्व्वत्रगं सर्व्व वस्तु*अप्रतिहतवीर्य्यं * स्वासुयोनिषुशाम्यति । २ । अग्निरपश्चयांसाति ब्राह्मणेषु यदा क्षत्रमिन्द्रच्छत्र यामात्मानि * लौहं शाम्यतीतिक्षत्र*ब्रा ह्मणान्नकोपयेदिति । २ । ३२१ ।

नाब्रह्मक्षत्रमृध्नोतिनाक्षत्रं ब्रह्मवर्द्धते । ब्रह्मक्षत्रञ्च सं पृक्तमिहचा मुत्रवर्द्धते । ३२२ ।

नाब्रह्मेतादि । ३२२ । क्षत्रमब्रह्मब्राह्मणस्यब्रह्म * हीनं नऋध्नोत्यृद्धिं नाप्नोत्येव*नक्षत्रं क्षत्रं विनाब्रा ह्मणस्थं*ब्राह्मवर्द्धते तथात्वे सति । १ । ब्रह्मक्षत्रञ्चपरस्परं संपृक्त*मिहचामुत्रचवर्द्धते । २ । ३२२ ।

दत्वाधनन्तुविप्रे भ्यःसर्व्व दण्डसमुत्थितम । पुत्रे राज्यं समासृज्यकुर्व्वीतप्रायणं रणे । ३२३ ।

दत्वेत्यादि । ३२३ एवं राज्यं कृत्वाराजा*दण्डःसन्सर्व्वं दण्डसमुत्थितं *धनं विप्रे भ्योदत्वान्ते *राजा पुत्रे सम सृज्य *रणे प्रायणं कुर्व्वीत । १ । ३२३ ।

एवञ्चरन्सदायुक्तोराजधर्म्मेषुपार्थिवः। हिते षुसर्व्वलोकस्यसर्व्वान्भृत्यान्नियोजयेत । ३२४

एवं चरन्नित्यादि । ३२४ । एवमुक्तप्रकारेणाचरन्राज*धर्म्मेषुसदायुक्तःपार्थिवोराजा*लोकस्यहिते षुसर्व्वा न्*भृत्यान्नियोजयेदिति । १ । ३२४ । राजधर्म्म*मुपसं*हरति ।

एषोऽखिलःकर्म्मविधिरुक्तोराज्ञःसनातनः । इमं कर्म्मविधिं विद्यात्क्रमशोवैश्यशूद्रयोः । ३२५

एष*इत्यादि । १ । ३२५ । एषराज्ञोऽखिलःकर्म्म*विधिःसनातनउक्तः*अथवैश्यशूद्रोपचारंचेति* यदुद्दि ष्टं तदुच्यते* ।१। इमं वक्ष्यमाणं कर्म्मविधिं वैश्य*शूद्रयोःक्रमशोविद्यात् । १ । ३२५ । तत्रादौवैश्यस्यकर्म्म विधिमाह ।

वैश्यस्तुकृतसंस्कारःकृत्वादारपरिग्रहम् ।वार्त्तायांनित्ययुक्तःस्यात्पशूनाञ्चैवरक्षणे ।३२६।

वैश्यस्तुकृतेत्यादि । १ । ३२६ । वैश्यस्तुजातकर्म्मादि*पनयनान्ताःसंस्काराः*कृतायस्यसदारपरिग्रहं * कृत्वावार्त्तायां प्रवृत्तौ*जीविकायां नित्ययुक्तःस्यात् । १ । पशूनाञ्चगोमहिषादीनामेव * रक्षणे नित्ययुक्तः स्यात् । २ । ३२६ । कस्मात्पशूनां रक्षणे युक्तःस्यादि*त्यतआह ।

प्रजापतिर्हिवैश्यायसृष्ट्वापरिददेपशून । ब्राह्मणायचराज्ञेचसर्व्वाःपरिददे प्रजाः। ३२७

प्रजेत्यादि। १ ॥ ३२७। हियस्मात्पशून् सृष्ट्वा प्रजापतिर्वैश्याय ददौ सर्व्वास्तु प्रजाः सृष्ट्वा ब्राह्मणाय राज्ञे च परिददौ प्रदत्तवान्। १। तस्माद्वैश्यः पशून् रक्षेद् ब्राह्मणो राजा च प्रजा रक्षेदिति। २। ३२७। किमर्थं पशून् रक्षेदित्यत आह।

नच वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन। ३२८।

नच वैश्यस्येत्यादि। १। ३२८। पशून्नहं रक्षेयमिति कामो वैश्यस्य च न स्यात्तत्स्वभावादेव। १। वैश्ये रक्षितुमिच्छति सति नान्येन वर्णेन पशवः कथञ्चिद्रक्षितव्याः वैश्ये त्वनिच्छति रक्षितव्या इत्यन्ये मन्यन्ते इति। २। ३२८।

मणिमुक्ताप्रवालानां लौहानां तान्तवस्य च। गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्। ३२९।

मणीत्यादि। ३२९। मण्यादीनामर्घबलाबलं मूल्यन्यूनाधिक्यं वैश्यो विद्यात् ॥१॥ ३२९।

बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च। मानयोगञ्च जानीयात्तुलायोगांश्च सर्व्वशः। ३३०।

बीजानामित्यादि। ३३०। बीजानां वपनं यथा कर्त्तव्यं वैश्यस्तद्वित् स्यात् क्षेत्रदोषगुणस्य च वेत्ता च स्यात् मानयोगं रक्तिकादिपरिमाणम्। १। तुलायोगांश्च तौलयोजनाक्रियाः सर्व्वशो वैश्यो जानीयात् ॥ ३३०।

सारासारञ्च भाण्डानां देशानाञ्च गुणागुणान्। लाभालाभञ्च पण्यानां पशूनां परिवर्द्धनम्। ३३१।

सारासारञ्चेत्यादि ॥ ३३१ ॥ भाण्डादीनां द्रव्याणां सारासारं भद्राभद्रं देशानाञ्च गुणागुणान् पण्यानां लाभालाभं पशूनाञ्च परिवर्द्धनं वैश्यो जानीयादिति। १। ३३१।

भृत्यानाञ्च भृतिं विद्याद्भाषाश्च विविधा नृणाम्। द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च। ३३२।

भृत्यानामित्यादि। ३३२। यस्य भृत्यस्य यावती भृतिर्वेतनं तावतीं वैश्यो विद्यान्नृणां नानादेशीयानां विविधाश्च भाषा विद्यात्। १। द्रव्याणां यस्य द्रव्यस्य यत्र स्थापनं भद्रं स्यात् तत्स्थानयोगांश्च विद्यात् क्रयविक्रयञ्च विद्यात्। २। ३३२।

धर्म्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम्। दद्याच्च सर्व्वभूतानामन्नमेव प्रयत्नतः ॥ ३३३।

धर्म्मेणचेत्यादि। ३३३। वैश्यो धर्म्मेण द्रव्याणां मण्यादीनां वृद्धावुत्तमं यत्नं मातिष्ठेत् प्रयत्नतः सर्व्व

शमशनातिसततशास्त्रातिकिल्बिषम । २५ ॥ ब्राह्मणाशे दरिद्रत्वं क्षत्रियाणां पराजयम् ॥ वैश्यानां मनुष्यत्वं शूद्राणां नरकं ध्रुवम ॥ इति ॥ २४ । तस्मात्त्रिभिर्द्विजैः *लौकिकाम्नौपकैर्नाम्नेन*देवार्थं न शूद्रं बनकर्त्तव्याम् २७ । ७७७ ॥ शूद्रधर्मावृत्तिशूद्रधर्ममाह* ॥

विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम्। शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः । ३३४ ।

विप्राणामित्यादि श्लोकौ ॥ १७४ ॥ वेदविद्यादिलक्षणानां विप्राणां *शुश्रूषैव शूद्रस्य* परो नैःश्रेयसो धर्मः १ । ७७४ ॥

शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः। ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां जातिमश्नुते । ३३५ ।

शुचिरित्यादि । ११५ । शूद्रशो तिविभक्तिविपरिणामात्*यःशूद्रः शुचिः सन् सर्व्वदा वर्त्तते * ब्राह्मणादीनामुत्कृष्टानां शुश्रुषुः स्यात् । १ । मृदुवाक् सन्नहङ्कारशून्यः सन् * नित्यं ब्राह्मणाद्याश्रयश्च भवति * स उत्कृष्टां जातिं शूद्र*जातिप्रकृष्टतामश्नुते । २ । ७१५ । उपसंहरति ।

एषोऽनापदि वर्णानामुक्तः कर्म्मविधिः शुभः। आपद्यपि हि यस्तेषां क्रमशस्तन्निबोधत । ३३६ ।

एष इत्यादि । १ । १७६ । एष चतुर्णां वर्णानामनापदि* शुभः कर्म्मविधिरुक्तः* तेषामापद्यपि हि* यः कर्म्मविधिः सङ्कीर्णात्परं*तं क्रमशो निरोधत । १ । ७१६ ।

॥*॥*॥*॥ इति मानवे धर्म्मशास्त्रे *भृगुप्रोक्तायां संहितायां *नवमोऽध्यायः ॥*॥*॥*॥*॥

॥*॥*॥ इति मानवे धर्म्मशास्त्रे *भृगुप्रोक्तायां संहितायां* वैद्य गङ्गाधर कृतायां *प्रमादभञ्जन्यां टीकायां १ । नवमाध्यायस्य प्रमादभञ्जनी*इति नवमाध्यायः ॥ २ ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥

अथ यएव चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्रजातीनां धर्मास्तत्र यमाप्रश्न। इत्यन्ते द्विवद्गोजातयस्ता एव किं चतुर्षु वर्णेष्वन्तर्भूतास्तत उक्ताधर्माएव यथायथं सर्व्वासां जातीनामथवा चतुर्भ्योवर्णेभ्योऽतिरिक्ता अपराजातयो यद्यतिरिक्ताःस्युस्तदा तासां किं धर्म्मं क्रियाकर्म्मेति। एवमाशङ्कायां चतुर्भ्योवर्णेभ्योनातिरिक्तोवर्णोऽस्ति चतुर्ष्वेव वर्णेषु सर्व्वा जातयोऽन्तर्भूतास्तत्रयाचजातियत्रान्तर्भूता यदधिकं धर्म्मकर्म्मच तत्सर्व्वं वक्तुं दशमाध्याय मारभते॥

**अधीयीरंस्त्रयोवर्णाः स्वकर्मस्थाद्विजातयः। प्रब्रूयाद्ब्राह्मणस्त्वेषांनेतराविति निश्चयः॥१॥**

अधीयीरन्नित्यादि॥१॥ यथाविधि वेदध्यायिनः स्वकर्म्मस्थाः पञ्चमहा*यज्ञादिकर्म्मकारिण*स्वध्ययनाध्यापन भेदाद्द्विविधा * नातरब्रह्मयज्ञं कर्त्तव्योऽस्ति। १। त्रयएवद्विजातयोवर्णाःस्वय * मधीयीरन्स्वाध्यायं कुर्व्वीरं स्तेषां *त्रयाणां द्विजातीनां मध्ये ब्राह्मण*एवप्रब्रूयादध्यापयेन्नेतरौ। २। ब्राह्मणएवाध्यापनं ब्रह्मयज्ञं* कुर्यादितरौक्षत्रिय*वैश्यावध्यापनं ब्रह्म*यज्ञं नकुर्व्वीयातामित्येषनिश्चयएवोक्तः।३। तेनोपजीवनार्थमध्यापनं ब्रह्मयज्ञार्थमध्यापनञ्चविना*क्षत्रियवैश्यावध्याप*येतामितिपूर्व्वं उक्तं वीणा तानिनिवर्त्तन्ते* ब्राह्मणात्क्षत्रिय मतीति॥ ४॥०॥१॥०॥

**सर्व्वेषांब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि। प्रब्रूयादितरेभ्यश्चस्वयञ्चैवतथाभवेत्॥२॥**

सर्व्वेषामित्यादि।२।०। सर्व्वेषां वर्णानां यथाविधि *वृत्त्युपायान् ब्राह्मणोविद्यादि * त्यादितरेभ्यःस्वस्मा*दन्येभ्यः शास्त्रं प्रब्रूयात्।१। स्वयञ्चब्राह्मणस्तथानोनापित*शास्त्रमध्यापितोभवेत्।२।०। ।२।०। कस्माद्ब्राह्मणःसर्व्वेषां * वृत्त्युपायान् विद्यादित्यतउच्यते*।

**वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्यचधारणात्। संस्कारस्यविशेषाच्चवर्णानांब्राह्मणःप्रभुः॥३॥**

वैशेष्यादित्यादि॥ ३॥ वर्णानां हि प्रभुर्ब्राह्मणस्तस्मात्*सर्व्वेषां वृत्त्युपायान्विद्यात्कस्मात्*वर्णानां प्रभुरित्यत*आह वैशेष्यादित्यादि।१। सर्व्वेभ्योवर्णेभ्योब्राह्मणस्य * वैशेष्याद्गायत्रीछन्दसाम्* उत्कृष्टब्राह्मणा सृष्टत्वात्*प्रकृत्याःस्वभावाच्छ्रैष्ठ्यात्।२। दशविधस्यनियमस्यधारणात् * संस्कारस्योपनयनस्यविशेषात् * वर्णानां प्रभुर्ब्राह्मणः।२। दशनियमाउक्ताश्रमिणायथा*शौचमिज्यातपोदानं*स्वाध्यायोपस्थनिग्रहौ * व्रत

मौनोपवासाय * स्नानञ्च नियमाद्द्य। इति। ४।०।१। त्रयो वर्णा द्विजातय इति * यदुक्तं केषां वर्णाः ये तु * द्विजातयः कास्त्वावर्ण एक * जातिरित्यताह।

**ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः ॥ ४**

ब्राह्मण इत्यादि। ४। उक्तं प्रथमाध्याये * लोकानान्तु विवृद्ध्यर्थं * मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्। इति। १। यएष आदित्यो नारायणः स्वयं * मण्डलमध्यवर्त्ती पञ्चवदनो * महाब्रह्मा लोकविवृद्ध्यर्थं। २। स्वमुखबाहूरुपादतः क्रमात् * शुक्ललोहित पीतकृष्णानमूर्त्तान् * ब्राह्मणक्षत्रियवैश्य शूद्रसंज्ञां * श्चतुरो वर्णान्निरवर्त्तयदिति। ३। वसिष्ठेनात्र श्रुतिं * दृश्य एताभिहितं * तदत्र प्रदर्श्यते। ४ ब्राह्मणोऽस्य मुखमासीद् * बाहू राजन्यः कृतः * ऊरू तदस्य यद्वैश्यः * पद्भ्यां शूद्रोऽजायत। इति। ५। गायत्र्या छन्दसा ब्राह्मणमसृज * त्रिष्टुभा राजन्यं जगत्या वैश्यं न * केनचिच्छन्दसा शूद्र * मितासंस्कार्यो विज्ञायते। ६ इति। तत्र ब्राह्मणादयस्त्रयो वर्णा * ब्राह्मणक्षत्रियवैश्या * द्विजातयो द्विजाती * जन्मनी एषां भवतः। ७ अयं ते वर्णा ब्रह्मणा सृष्टा * ल्लेकैको वर्णो द्विधा पाटितस्य * स्यार्द्धं पतिरर्द्धं पत्नी * तद्वैव ब्रह्मणाऽकल्पि। ८ तदुक्तं व्याससंहितायां * पाटितोऽयं द्विजः पूर्व्वमेकदेहः स्वयम्भुवा। पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति श्रुतिः। ९। यावन्नविन्दते जायां तावदर्द्धं भवेत् पुमान्। नार्द्धं प्रजायते पूर्णः प्रजायेतेति च श्रुतिः। १० कल्पशरीरिणं पुरुषं * देवनरतिर्य्यग्योनिषु * कर्म्मफलेन तत्तद्बीजं प्रविश्य * स्त्रीपुरुषदेहमापद्यमानं। ११ चत्वारस्ते त्वमूर्त्ता वर्णाः प्रथमं * मातृगर्भाद् ब्राह्मणादि * जात्याभिव्यज्यन्ते स्त्री * मूर्त्त्या पुरुषमूर्त्त्या च। १२ ततस्ते ब्राह्मण क्षत्रियवैश्य * शूद्रा इत्यभिधीयन्ते। १३। तत्र त्रयो वर्णा ब्राह्मणक्षत्रिय * वैश्याश्चार्द्धार्द्धभूताः स्त्री * पुरुषरूपा वर्त्तन्ते। १४। तत्र पुमांस उपनयनेन * वेदे पुनर्जाता द्विजा भवन्ति * स्त्रियश्च मन्त्रे विवाहात् । १५। पत्न्यास्सहैकीभावमापन्नाः पत्या * एवं शरीररूपेण * पुनः श्वशुरकुले जायन्ते पति * गोत्राः पतिवर्णाः स्वधा। १६। एतत्स्त्रीणां द्वितीयं जन्म तेन * द्विजा भवन्ति दम्पती * रूपोऽयं पूर्णः सन् प्रजायते। १७। शूद्रस्तु वर्णेन द्विधा * कृतः स्वयम्भुवा पूर्व्वं * न मन्त्रैः संस्कारविधि * स्तेनैकजन्मतदेकजातिः शूद्रवर्णश्चतुर्थः भवति। १८ पूर्व्वसृष्ट्यभावात् पञ्चमो वर्णस्तु * नास्तीति मनुः प्रतिपद्य। १९। महाभारते चानुशासनपर्व्वणि चोक्तं भीष्मेण यथा सृष्टा यत्र वर्णाश्चत्वारः पञ्चमो नाधिगम्यते। इति। २०। ब्राह्मणक्षत्रियवैश्यैः * शूद्रास्वमन्त्राणां स्त्रीणां कृत्पदिताः * पुत्राः शूद्रसमानधर्म्मकत्वाच्छूद्राः * प्रतिलोमजाश्च शूद्राः। २१। स्वयमेव मनुनोक्तं * स्वजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः। शूद्राणाञ्च सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः। इति। २२। एतद्विस्मृत्या कश्चि

रन्तसानकारविधि*र्घ्यस्य संयोगे गम्यमाने । १६ । अन्ये विवाहे न ब्राह्मणस्य यत्र* विधानं ब्राह्मणकन्यायाः क्षत्रिय* कन्यायां वैश्यकन्यायाश्च स्त्रीत्वं ते न ब्राह्मणस्यातिचः पञ्चादयः । १७ । एवं क्षत्रियस्य क्षत्रियकन्या * वैश्यकन्या याश्च*मन्ये विवाहाद्यत्र विधानं वैश्य* कन्यायास्तु वैश्यस्य । १८ । ते न क्षत्रियस्यादि पत्नीत्व त्रिए * कन्या वैश्यकन्याच*वैश्यस्य कापशैवस्या* ब्राह्मणादिभ्यस्तासु पत्नीषु जाताः*पुत्राजातास्त एव पितृवर्णा एव स्युः ।२०। एवमेवोक्तमत्र*शासनपर्व्वणि*महाभारते भीष्मयुधिष्ठिरसंवादे दत्ताविंशदध्याये ।२१॥ तत्र विवाहकथनं तूक्तं *तिस्रो भार्य्या ब्राह्मणस्याद्वे भार्य्ये क्षत्रियस्य च । वैश्यः स्वजात्यां विन्देत तास्वपत्यं समं भवेत् ॥ २२ ॥ ब्राह्मणी तु भवेच्छ्रेष्ठा क्षत्रिया क्षत्रियस्य तु ॥ रत्यर्थमपि शूद्रां स्यान्नेत्याहुरपरे बुधाः ॥२३॥ अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः शूद्रायां जनयन् विप्रः प्रायश्चित्तीयते यतः । ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । एतेषु धर्म्मो विहितो ब्राह्मणस्य युधिष्ठिर ॥ वैषम्यादथवा लोभात् कामाद्वापि परन्तप । ब्राह्मणस्य भवेच्छूद्रा न तु धर्म्मार्थतः स्मृता ॥ त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर । वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत । एको विड्वर्ण एवाथ तथात्रैवोपलक्षितः ॥ त्रिषु वर्णेषु पत्नीषु ब्राह्मणाद्ब्राह्मणो भवेत् । ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः । क्षत्रियायाश्च यः पुत्रो ब्राह्मणः सोऽप्यसंशयः । तथैव ब्राह्मणः स्याच्च वैश्यायामपि ब्राह्मणात् । इति ॥ दायभागप्रकरणे च तत्रैव भीष्मेनोक्तं ॥ ० ॥ तिस्रः कृत्वा पुरः भार्य्याः पश्चाद्विन्देत ब्राह्मणीम् । सापि श्रेष्ठा सापि पूज्या सा भार्य्या स्याद्गरीयसी । लक्षणं दृषभं यानं यत् प्रधानतमं भवेत् । ब्राह्मण्यास्तद्धरेत् पुत्र एकांशं वापि पितृधनात् ॥ शेषन्तु दशधा कार्य्यं ब्राह्मणस्व युधिष्ठिर । तत्र तेनैव हर्त्तव्याश्चत्वारोंऽशाः पितुर्धनात् ॥ क्षत्रियायाश्च यः पुत्रो ब्राह्मणः सोऽप्यसंशयः । स च मातुर्विशेषात्तु त्रीनंशान् हर्त्तुमर्हति ॥ ब्राह्मणश्चैव जातस्तु वैश्यायां ब्राह्मणाच्च यः । द्विरंशस्तेन हर्त्तव्यो ब्राह्मणस्व युधिष्ठिर ॥ युधिष्ठिर उवाच ॥ ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः । क्षत्रियायां तथैव स्याद्वैश्यायामपि तथैव च । कस्मात्तु विषमं भागं भजेरन् नृपसत्तम । यतस्तु सर्व्वे पुत्रास्तु योक्ता ब्राह्मणा इति ॥ भीष्म उवाच ॥ दारा इत्युच्यते लोके नाम्नैकेन परन्तप ॥ प्रोक्तेन चैतेन नाम्नायं विशेषः सुमहान् भवेत् ॥ २८ ॥ तिस्रः कृत्वा पुरो भार्य्याः पश्चाद्विन्देत ब्राह्मणीम । सा श्रेष्ठा सा च पूज्या स्यात् सा च भार्य्या गरीयसी । इत्यादि उक्त्वा पुनरुवाच ॥ ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत् । राजन्विशेषो यस्त्वत्र वर्णयोरुभयोरपि ॥ ३० ॥ न तु जात्या समा लोके ब्राह्मण्याः क्षत्रियात्मजा । ब्राह्मण्याः प्रथमः पुत्रो भूयान् स्याद्राजसत्तम ॥ ३१ ॥ भूयो भूयोऽपि संहार्य्यं पितृवित्तं युधिष्ठिर ॥ यतो न सदृशो जातु ब्राह्मण्याः क्षत्रियात्मजा ॥ ३२ ॥ क्षत्रियायास्तथा वैश्यो न तावत् सदृशो भवेत् । इत्यादि । तथा पुनरपि भीष्म उवाच । आनुशासनिकपर्व्वणि चाष्टचत्वारिंशदध्याये ॥ ० ॥ भार्य्याश्चतस्रो विप्रस्य तासु स्यात्मा स जायते । आनुपूर्व्यात् तयोर्हीनामा

जातोऽभ्युदयते ॥ २१ ॥ पारशवो ब्राह्मणस्य ऽपि पुत्रः शूद्रापुत्रं पारशवं तमाहुः । शुश्रूषकः स्वजातीयस्य समात् स्वचारित्रानितो मय नं जह्यात् ॥ २४ ॥ तिस्रः क्षत्रियसम्बन्धाद् द्वयोरात्मास्य जायते । हीनवर्णस्तृतीयायां शूद्र उग्र इति स्मृतः ॥ २५ ॥ द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते । हीनवर्णो द्वितीयायां करणो नाम जायते ॥ २६ ॥ शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते । अतो विशिष्टस्त्वधमं गुरुदारप्रधर्षकः । पूर्व्वं पूर्व्वं भवास्त्वेवकाममोहात् परः परः । बाह्यं वर्णं जनयति चातुर्व्वर्ण्यविगर्हितमिति ॥ ७८ ॥ अत्र भार्याश्चतस्र इत्यादि ॥ विप्रस्य चतस्रो भार्य्या ब्राह्मणक्षत्रियवैश्याशूद्रकन्याः। आनुपूर्व्व्यादानुलोम्यात्तत्र द्वासु तिसृषु भार्य्यासु स्वस्याविमातास्वेव आत्मैवापत्यरूपेण ब्राह्मणो जायते ॥ आत्मशब्देन ब्राह्मणरूपत्वमपत्यानामुक्तं । ततो हीना शूद्राभार्य्या मातृजातौ प्रसूयते ॥ कं प्रसूयते तदुक्तं पारशव इत्यादिना पारशवमिति । अस्मिन् वचने क्वचित्पुस्तके प्रमादिलिखितं पाठान्तरं दृश्यते । तद्यथा ॥ भार्य्याश्चतस्रो विप्रस्य द्वयोरात्मा प्रजायते । आनुपूर्व्व्याद्द्वयोर्हीनौ मातृजातौ प्रसूयतः ॥ इति तद्दृष्ट्वा प्रमादी व्याचष्टे । विप्रस्य चतस्रो भार्य्यास्तयोर्द्वयोर्वानुपूर्व्व्यात् ब्राह्मणीक्षत्रिययोरात्मा ब्राह्मणः प्रजायते ॥ तयोः परिशेषाद्द्वे वैश्याशूद्रे भार्य्ये पूर्व्वाभ्यां हीनौ मातृजातौ प्रसूयत इति तदसाधु मन्दिपाठस्त्वप्रमादिना कृतः ॥ यतस्तिसृषु क्षत्रियसम्बन्धाद् द्वयोरात्मास्य जायते । इति परवचने पि द्वयोरित्युक्तं । द्वे चापि भार्ये वैश्यस्य द्वयोरात्मास्य जायते ॥ एतद्वचने पि तथाभिति स्थाने द्वयोरिति पठितं ॥ तेन क्षत्रियस्य क्षत्रियावैश्ययोरात्मा क्षत्रियरूपेण जायते इति भवतस्समाकं । वैश्यस्य द्वयोर्वैश्याशूद्रयोरात्मा वैश्यरूपो जायते इति विरुध्यते ॥ वैश्यस्य द्विशूद्रायां भार्य्यायां करणो नाम शूद्र एव जायते ॥ तदुक्तं श्लोकस्य न पठितः। यदि क्षत्रियमतादृयोः क्षत्रियावैश्ययोरात्मा क्षत्रिय एव यथा जायते वैश्यायामन्त्यविवाहात् क्षत्रियत्वप्राप्तिस्तथा ब्राह्मणेन वैश्यायामन्त्यविवाहाद् ब्राह्मणत्वप्राप्तौ तस्यां वैश्याकन्यायां भार्य्यायां ब्राह्मणाज्जातः पुत्रः कथं ब्राह्मणो न भूत्वा वैश्यः स्यात् । तथा त्वेवभीष्मस्य पूर्व्वमुक्तं वचनं विरुध्यते किं हि भीष्मो भ्रान्तो वा न्यतो वासीत् । युधिष्ठिरस्य च किमेवमनवधानमासीत् किमपि न विप्रतिपेदे । अपरञ्च तस्मिन्नपि पाठे त्वेष एवार्थो भवति । यथा क्षत्रियामन्त्रेण ब्राह्मणोदा ब्राह्मणी भवति तस्यां ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणो भवति । तथा ब्राह्मसेन मन्त्रेणोढा वैश्यापि ब्राह्मणी भवति सा वैश्याकन्या ब्राह्मणी मातृजाता ब्राह्मणजाता ब्राह्मणात् प्रसूयते ॥ शूद्रा त्वमन्त्रं ब्राह्मणेनोढा शूद्रैव मातृजात्या शूद्रं ब्राह्मणात् प्रसूयते इत्येवं पारिशेष्यात् द्वे भार्य्ये वैश्याशूद्रे हीनौ मातृजातौ प्रसूयत इत्यर्थो वैतस्मिन् कल्पे दूषणं कल्पेय इति ॥ तथाविधार्थे पिसच्चपाठो न युक्तः । मातृजात्याधिति जातो भवति इत्यर्थे यत्प्रत्ययविधानाभावादयं प्रयत इत्यपि परस्य पक्षमसाधु । अयश्च मनुनाप्युक्तं * यथात्रयाणां वर्णानां * द्वयोरात्मा प्रजायते । आनन्तर्य्यात् स्वयोन्यान्तु तथा बाह्येष्वपि क्रमादिति । अस्यायमर्थः । यथात्रयाणां वर्णानां पूर्व्वत्वाद् ब्राह्मणक्षत्रियवैश्यानां मध्ये द्वयो

ब्राह्मणक्षत्रिययोरात्मास्वएवानन्तर्यात्सवर्णा प्रजायते। ब्राह्मणस्यानन्तर्यात्मन्त्रविवाहेन सवर्णा क्षत्रियकन्यायां ब्राह्मण्यां वैश्याकन्यायाञ्च ब्राह्मण्यां पत्न्यां प्रजायते ऽपत्यरूपेणात्मएव ब्राह्मणोजायते क्षत्रियस्यानन्तर्यात् मन्त्रविवाहेन सवर्णा वैश्याकन्यायां क्षत्रियायां पत्न्यामात्मास्वएव क्षत्रियएव जायते तथा वाह्योऽपि प्रतिलोमजो ऽपिक्रमात् जायत इति॥ दायभागे च पूर्व्वमुक्तं॥ पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्व्वजः। कथं तत्र विभागः स्यादिति चेत् संशयोभवेत्॥०॥ एकं वृषभमुद्धारं संहरेत स पूर्व्वजः इति। ब्राह्मणस्य ज्येष्ठायां ब्राह्मणकन्यायाः पत्न्यां चेत् कनिष्ठः पुत्रोजायते। कनिष्ठायां क्षत्रियकन्यायां पत्न्यां वैश्याकन्यायां वा पत्न्यां पूर्व्वजः पुत्रोजायते। तदा ज्येष्ठांशो दायभागः कथं स्यात्॥ तत्रोक्तं॥ एकमित्यादि॥ स कनिष्ठायां जातः पूर्व्वजः एकं वृषभमुद्धारं ज्येष्ठांशं संहरेतेति। ज्येष्ठपुत्रत्वेन दायभाजने ज्येष्ठांशग्रहणं पितृश्राद्धकरणाधिकार उपनयन विवाहादौ च पूर्व्वकर्त्तव्यं ब्राह्मणाद्युक्तं। नहि पितृजातितो भिन्नजाता तत्सम्पद्यते। मन्त्रविवाहादि ब्राह्मणस्य क्षत्रियकन्या वैश्याकन्या च पत्नीभूता ब्राह्मणी जाता भवति॥ तस्यां ब्राह्मण्यां ब्राह्मणाज्जातः पुत्रः ब्राह्मणः स्यादिति। व्यासमंहितायाञ्चोक्तं॥ उद्वायान्तु सवर्णायामन्यां वा काममुद्वहेत्। तस्यामुत्पादितः पुत्रोनसवर्णात् प्रहीयते। उद्वहेत् क्षत्रियां विप्रो वैश्याञ्च क्षत्रियोविशं॥ न तु शूद्रां द्विजः कश्चिन्नाधमः पूर्व्ववर्णजाम्। विप्रवद्विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत्। जातः कर्म्माणि कुर्व्वीत वैश्याविन्नासु वैश्यवत्। वैश्याक्षत्रिय विप्रेभ्योजाताः शूद्रासु शूद्रवदिति॥०॥ तथा च। ब्राह्मणात्स्वोढायां ब्राह्मणकन्यायां पत्न्यां जातः पुत्रोब्राह्मणएव ब्राह्मणात्स्वोढायां क्षत्रियकन्यायां ब्राह्मण्यां पत्न्यां जातः पुत्रोमूर्द्धाभिषिक्तादिसंज्ञो ब्राह्मणएव। ब्राह्मणात्स्वोढायां वैश्याकन्यायां पत्न्यां ब्राह्मण्यां जातः पुत्रोऽम्बष्ठसंज्ञो ब्राह्मणएव॥ तथा क्षत्रियात् स्वोढायां क्षत्रियायां पत्न्यां जातः पुत्रः क्षत्रियएव क्षत्रियात्स्वोढायां वैश्याकन्यायां पत्न्यां क्षत्रियायां जातपुत्रोमाहिष्यसंज्ञः क्षत्रियएव। वैश्यात्स्वोढायां वैश्यायां जातः पुत्रो वैश्यएवेति षट्पुत्राः पत्नीषु यतः सम्भूता जातयातएवेति निश्चयं॥०॥ अथाक्षतयोनिषु। आनुलोम्येन सम्भूताजात्याज्ञेयास्तएवते। इति। यस्मात्तिभ्यो येभ्योऽनुलोमास्वक्षतयोनिष्वनूढासु क्षत्रियकन्यासु वैश्याकन्यासु च सम्भूता ये पुत्रास्ते कानीनाजातयातएव पितृजातयएव ज्ञेयाः॥ जातिरत्र न केवलं वर्णमात्रं किन्तु वर्णाभिव्यञ्जकं जरायुजाण्डजस्वेदजोद्भिद्योनिवर्णा यायादेवनरतिर्य्यग्योनयस्तासु सामान्यभूतं यज्जन्मसाजातिः। तत्रक्रमेणानुलोम्यं योनितोवर्णतश्च। तद्यथा देवजातितोऽनुलोमजाति नरजातिस्ततश्च तिर्य्यग्जातिरिति॥ तथा च। ब्राह्मणात्पराशरात् दक्षतयोनौ क्षत्रियायां जातः कृष्णद्वैपायनो व्यासः कानीनोब्राह्मणएव। देवात्सूर्य्यात् क्षत्रियात् क्षत्रियायां कुन्त्यां नरजाता वक्षतयोनौ जातः कानीनः कर्णो मातापित्रोर्वर्णतः सामान्ययोर्मिजजातितोऽनुलोमत्वात्मातः पितृजातिः

वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः। अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत् १०१

वैश्यवृत्तिमित्यादि । १ ॥ ॥ १०१ ॥ स्वे पथि धर्म्मे स्थितो ब्राह्मणः * स्ववृत्तिकर्षितो वैश्यवृत्ति * मनातिष्ठन् यः सीदन् सीदतितरामिमं * वक्ष्यमाणं धर्म्मं समाचरेत् ॥ १ ॥ ॥ १०१ ॥ कं धर्म्ममित्यत आह * ।

सर्व्वतः प्रतिगृह्णीयाद् ब्राह्मणस्त्वनयं गतः । पवित्रं दुष्यतीत्येतद्धर्म्मतो नोपपद्यते ॥ १०२ ॥

सर्व्वत इत्यादि । १ ॥ ॥ १०२ ॥ अनयमापद्‌गतो ब्राह्मणस्तु * इत्तिषु सर्व्वतः सदसज्जनेभ्यः * प्रतिगृह्णीयात् । नन्वेतत् किं न दोषमावहति ॥ १ ॥ तत्राह पवित्रं सम्पन्नं ब्राह्मणं * एतत् सर्व्वतः प्रतिग्रह कर्म्म * दूषयति मत्वपवित्रे विप्रे । कस्मात् विप्रे जने दूषणमेतन्नोपपद्यते इति ॥ १ ॥ ॥ १०२ ॥ यतो दूषणं नोपपद्यते तदाह ॥

नाध्यापनाद् याजनाद्वा गर्हिताद्वा प्रतिग्रहात् । दोषो भवति विप्राणां ज्वलनार्कसमाहिते १०३

नाध्यापनादित्यादि । १०३ । विपन्नानान्तु विप्राणां * गर्हिताद्ध्यापनाद्गर्हिताद् याजनाच्च * गर्हितात् प्रतिग्रहाच्च * न दोषो भवति कस्मादित्यत आह । १। ज्वलनार्कसमाहिते इति * हि यस्मात्ते विप्रा ज्वलनाग्नि* समाः अग्निसमाः इति * तस्माद्धि कैरपि न दोषः । १०३ । अपरञ्चाह

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । आकाशमिव पङ्केन न स पापेन लिप्यते ॥ १०४ ॥

जीवितेत्यादि । १०४ । योजनोऽन्नाभावे जीवितात्यय * उपस्थितप्राणनाश * मापन्नो यतस्ततोऽन्नमत्ति भुङ्क्ते * स पापेन न लिप्यते । १ । तत्र दृष्टान्त एव पङ्केन यथा * नाकाशं लिप्यते इति । १०४ । तत्र पुराकल्पं दर्शयति *

अजीगर्त्तः सुतं हन्तुमुपासर्पद् बुभुक्षितः । न चालिप्यत पापेन क्षुत्प्रतीकारमाचरन् ॥ १०५ ॥

अजीगर्त्त इत्यादि । १०५ । अजीगर्त्तो महर्षिर्बुभुक्षितः सन् * सुतं हन्तुमुपासर्पत् * क्षुत्प्रतिकारमाचरन् * स न पापेन आलिप्यत । १०५ । अपरञ्चाह

श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्म्माधर्म्मविचक्षणः । प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् १०६

श्वमांसमित्यादि । १०६ । वामदेवः स्वयं वामदेव एव * धर्म्माधर्म्मविचक्षणः * क्षुधयार्त्तः सन् प्राणानां * रक्षणार्थं श्वमांसमत्तुं * मिच्छन् पापेन न लिप्तवान् । १०६ । अपरञ्च ।

भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने । बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः ॥ १०७॥

भरद्वाज इत्यादि । १०७ । महातपा भरद्वाजः * सपुत्रः क्षुधार्त्तः सन् * विजने वने वृधुनाम्नस्तक्ष्णो * बह्वीर्गाः प्रतिजग्राह । १०७ । अपराञ्चाह

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् । चाण्डालहस्तादादाय धर्म्माधर्म्मविचक्षणः १०८

आपदि सर्व्वं प्राप्नुयादिति ॥ १ ॥ तत्र चतुर्दश विद्यास्थानानि याज्ञवल्क्येनोक्तानि यथा ॥ पुराणन्यायमीमांसा धर्म्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्म्मस्य च चतुर्दश ॥ इति ॥ ३ ॥ ... दोषनाशकं विद्या वेदविद्याव्यतिरिक्ता वेदाङ्गतर्कविद्या ... ॥ ४ ॥ ... विपणिः पण्यवीथिका ... भिक्षा ... कुसीदं ... इति ॥ ११६ ॥

ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत्। कामन्तु खलु धर्म्मार्थं दद्यात् पापीयसेऽल्पिकाम् ॥११७

ब्राह्मण इत्यादि ॥ ११७ ॥ ब्राह्मणो वा क्षत्रियो वा * नैव वृद्धिं प्रयोजयेत् * कामन्तु खलु इच्छया पापीयसे * शूद्राय अल्पिकां वृद्धिं निर्द्दिश्य दद्यात् ॥ ११७ ॥

चतुर्थमाददानोऽपि क्षत्रियो भागमापदि। प्रजा रक्षन् परं शक्त्या किल्विषात् प्रतिमुच्यते ॥११८

चतुर्थमित्यादि। ११८। आपदि क्षत्रियश्चतुर्थं भागं * माददानोऽपि परं शक्त्या प्रजा * रक्षन् किल्विषात् प्रतिमुच्यत इति। ११८।

स्वधर्म्मो विजयस्तस्य नाहवे स्यात् पराङ्मुखः। शस्त्रेण वैश्यान् रक्षित्वा धर्म्म्यमाहारयेद्बलिम् ॥११९

स्वधर्म्म इत्यादि। ११९। तस्य क्षत्रियस्य युद्धे विजयः * स्वधर्म्मः आहवे पराङ्मुखो न स्यात् * वैश्यान् शस्त्रेण रक्षित्वा * धर्म्म्यं बलिमाहारयेत् ॥ ११९ ॥ आपदि बलिमाह।

धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम्। कर्म्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ॥१२०

धान्येऽष्टममित्यादि ॥ १२० ॥ क्षत्रियो राजा ... धान्ये * त्वष्टममपि भागमाहारयेत् * सुवर्णादीनां शुल्कं विशां * विंशं विंशतितमं भागं * कार्षापणान्तम् आहरेत् ॥ १ ॥ शूद्राः कर्म्मोपकरणाः * ये यत् कर्म्म समर्थाः * तत्तत् कर्म्म राजा कारयेत्। २। तथा कारवो ये यत् कर्म्म जानन्ति * तान् तत् कर्म्म कारयेद् एवं शिल्पिनो * ये यच्छिल्पं जानन्ति तत्तान् कारयेत्। १२०।

शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि। धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥१२१

शूद्रस्त्वित्यादि। १२१। शूद्रो यदि क्षत्रं क्षत्रियं * माराधयेत् सेवेत तदा * तस्मात् वृत्तिमेव * जीविकामाकाङ्क्षेदिच्छेत्। १। धनिनं वैश्यं वाप्युपाराध्य शूद्रो * जिजीविषेदिति शेषः। २ १२१।

स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः। जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥१२२॥

स्वर्गार्थमित्यादि। १२२। स शूद्रः स्वर्गार्थं * मुभयार्थं वेति * ऐहिकधनार्थं पारत्रिकार्थं * विप्रानाराधयेत् कस्मात्। १। जातब्राह्मणशब्दस्य आराधनात् अस्य शूद्रस्य * हि यस्मात् * कृतकृत्यता स्वधर्म्मता स्यात्। २। उपनयनेन ब्राह्मणशब्दो * जातोऽस्येति स जात * ब्राह्मणशब्दस्तस्येति। ३। १२२।

विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्त्यते। यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ १२३ ॥

विप्रसेवैवेत्यादि। १२३। शूद्रस्य विप्रसेवैव * विशिष्टं कर्म्म कीर्त्त्यते * कस्मात् हि यस्माद् अतो विप्रसेवना * दन्यद् यत् कुरुते * तदस्य शूद्रस्य निष्फलम्। १। १२३।

प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः। शक्तिं चावेक्ष्य दाक्ष्यं च भृत्यानां च परिग्रहम्॥१२४॥

प्रकल्प्येत्यादि। १२४। तैर्विप्रैस्तस्य स्वसेविनः शूद्रस्य * शक्तिं सामर्थ्यं कर्म्मसु * दाक्ष्यं भृत्यानां पोषणीयानां * परिग्रहं पोष्यजनपोषणमवेक्ष्य। १। यथार्हतः स्वकुटुम्बात्स्वकीय * धनाद्वृत्तिः प्रकल्पनीया। २। १२४।

उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च। पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः॥१२५॥

उच्छिष्टमित्यादि। १२५। विप्रैः स्वपात्रोच्छिष्टमन्नं * तस्मै स्वदासाय शूद्राय * दातव्यं जीर्णानि वासांसि * स्वपरिहितवस्त्राणि तथा। १। धान्यानां पुलाका असारतण्डुलाः * जीर्णाश्च परिच्छदाः शय्यासनोपधी * प्रभृतीनि तस्मै * सायाणि दातव्यानि। २। १२५।

न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति। नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥१२६॥

न शूद्र इत्यादि। १२६। धर्म्मार्थं उक्तानामेव कर्म्मणा * मकरणे शूद्रे किञ्चि * दपि पातकं नास्ति यतः संस्कारं शूद्रो नार्हतीतस्मात्। १। अस्य शूद्रस्य धर्म्मेऽधिकारो नास्ति * तस्य धर्म्मार्थं उक्तकर्म्माकरणे * पातकं नास्ति धर्म्मात् * पाकयज्ञादिनिषेधो नास्ति। २। १२६।

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः। मन्त्रवर्ज्यं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च॥१२७॥

धर्मेप्सवस्त्वित्यादि। १२७। धर्म्मज्ञाः शूद्रा धर्म्मेप्सवः सन्तः * धर्म्ममद्वृत्ति मन्त्रवर्जमनुष्ठिताः सन्तो न दुष्यन्ति * प्रशंसाञ्च तत्कर्म्मणः प्राप्नुवन्ति। १। १२७।

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः। तथा तथेमञ्चामुञ्च लोकं प्राप्नोत्यनिन्दितः॥१२८॥

यथायथेत्यादि। १२८। अनसूयकः सन् ब्राह्मणादि यथा * सद्वृत्तमनुतिष्ठति तथा * तथैवानसूयकः सन् यः शूद्रः सद्वृत्तमनुतिष्ठति तथा तथा निन्दितः सन्निमञ्चामुञ्च * लोकं प्राप्नोतीति धर्म्मशास्त्रे स्थितिः। १। १२८।

शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः। शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते॥१२९॥

शक्तेनापीत्यादि। १२९। शूद्रेण शक्तेनापि धनसञ्चयो * न कार्यः कस्माद्धि यस्माच्छूद्रो धन * मासाद्य ब्राह्मणादीनान् * धनदानेन बाधते। १। १२९।

एते चतुर्णां वर्णानामापद्धर्म्माः प्रकीर्त्तिताः। यान् सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम्॥१३०॥

एत इत्यादि। १३०। चतुर्णां वर्णानामेते * आपद्धर्म्माः प्रकीर्त्तिताः * यान् धर्म्मानन्वतिष्ठन्तो * ब्राह्मणादयश्चत्वारो * वर्णाः परमां गतिमन्ते व्रजन्ति। १। १३०।

एष धर्म्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्त्तितः। अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम्॥१३१॥

एष इत्यादि। १३१। एष चातुर्वर्ण्यस्य कृत्स्नो धर्म्म * विधिः कीर्त्तितो भाषितः * अतः परं प्रायश्चित्त * विधिं शुभं प्रवक्ष्यामि। १। १३१। * * * *

॥ * ॥ * ॥ इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * दशमोऽध्यायः ॥ * ॥ १० ॥ * ॥ * ॥

इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * दशमाध्यायस्य प्रसाद * भाषा टीकायां दशमाध्यायः। *

अकामतः कृतं पापं वेदाभ्यासेन शुध्यति। कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ॥४६॥

अकामत इत्यादि। ४६। अकामतः कृते पापे * वेदाभ्यासेन शुध्यति * मोहात् कामतः कृते तु * पापे पृथग्विधैः प्रायश्चित्तैः शुध्यतीति। १। ४६।

प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा। न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥४७॥

प्रायश्चित्तीयतामित्यादि। ४७। इहजन्मनि दैवात् कृतेन वा * पूर्वजन्मनि कृतेन * पापेन तज्जनित * चिह्नेन इह दिनावाधिना। १। प्रायश्चित्तीयतां प्रायश्चित्तमर्हतां प्राप्य द्विजः खलु कृते * प्रायश्चित्ते * सद्भिः संसर्गं न व्रजेत्। २। ४७। न च पूर्वकृतं पापं * कथं विज्ञायत इति * तत्रचाह।

इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्ययम् ॥४८॥

इहेत्यादि। १। ४८। केचिद् दुरात्मानो नरा * इहजन्मनि दुश्चरितैः कर्मभिः * रूपविपर्ययं खलु प्राप्नुवन्ति * केचित् पूर्वजन्मकृतैः। १। ४८। किं रूपविपर्ययं प्राप्नोतीत्यत * आह।

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम्। ब्रह्महा क्षयरोगित्वं दौश्चर्म्यं गुरुतल्पगः ॥४९॥

सुवर्णेत्यादि। १। ४९। सुवर्णचौरो यः पूर्वजन्मनि स * इहजन्मनि कौनख्यं प्राप्नोति यस्तु * पूर्वजन्मनि सुरापः स * जन्मनि श्यावदन्ततां प्राप्नोति। १। यः पूर्वजन्मनि ब्रह्महा स इह * जन्मनि क्षयरोगित्वं प्राप्नोति * यः पूर्वजन्मनि गुरुतल्पगः स इह * जन्मनि दौश्चर्म्यं प्राप्नोति। २। ४९।

पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम्। धान्यचौरोऽङ्गहीनत्वमातिरैक्यं तु मिश्रकः ॥५०॥

पिशुन इत्यादि। ५०। पूर्वजन्मनि यः पिशुनः स इह * पौतिनासिक्यं प्राप्नोति * यः पूर्वजन्मनि सूचको * मिथ्यावादेन खलता स च यातस्य पूतिवक्त्रतां। १। यः पूर्वजन्मनि धान्यचौर इह स * सहीनत्वं प्राप्नोति। २। यः पूर्वजन्मनि मिश्रकः शूद्रधान्यामिश्रधान्योमयकारः स * इहाङ्गानामातिरैक्यं प्राप्नोति। ३। ५०।

अन्नहर्त्तामयावित्वं मौक्यं वागपहारकः। वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः ॥ ५१ ॥

अन्नहर्त्तेत्यादि। ५१। यः पूर्वजन्मनि अन्नस्य हर्त्ता स * इहामयावित्वं चिर * रोगित्वमेव प्राप्नोति। १। परं अनाज्ञममध्यापयतात् * मम दीयमानां वाचं * पूर्वजन्मनि यस्तु पहरति। २। स इहजन्मनि मौक्यं प्राप्नोति * यो वस्त्रापहारकः पूर्वजन्मनि च स इह श्वैत्र्यं वा रोगं प्राप्नोति। ३। यः पूर्वजन्मनि अश्वहारकः स * इहजन्मनि पङ्गुतां * प्राप्नोतीति सर्वोक्तिः॥ ४ ॥ ५१॥

एवं कर्मविशेषेण जायन्ते सद्विगर्हिताः। जडमूकान्धबधिरा विकृताकृतयस्तथा ॥ ५२ ॥

एवमित्यादि। ५२। एवमनेनप्रकारेण पापकर्म * विशेषेण पुरुषाः सद्विगर्हितास्तथा जडादयश्च जायन्त इति॥ १॥ ५२॥

णानां गृहे वासां नृपाणाम्। १। समागमे तेषामेनो ब्रह्महत्याकृतं पापं विख्याप्य कथयित्वा *ब्रह्महत्याव्रतो ब्रह्महत्यायाः विशुध्यति। २। यदि तेन क्रियमाणेऽश्वमेधे इह* शुध्यति तदा पुनरुक्तिर्भवति *यजेत वाश्वमेधेनेत्यु-क्तत्वात्। ३। ८२। कस्मादेव *विशुध्यति *इत्यत आह* ।

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते। तस्मात्समागमे तेषामेनो विख्याप्य शुध्यति ॥८३॥

धर्मस्येत्यादि। १। ८३। धर्मस्य ब्राह्मणो धर्मस्य* इत्यस्य मूलं याजन*कर्तृत्वात् राजन्यः अस्य अग्रं उच्यते* प्रकाशमानत्वात्। १। तस्मात् धर्मस्य मूलाग्राणां तेषां ब्राह्मणराजन्यानां समागमे* अश्वमेधे एनः पापं *विख्याप्य शुद्धो भवति। ८३। अतो धर्मस्य* मूल ब्राह्मणस्य* स्तुतिमाह।

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम्। प्रमाणं चैव लोकस्य ब्रह्मात्रैव हि कारणम् ॥८४॥

ब्राह्मण इत्यादि। १। ८४। सम्भवेन प्रादुर्भावेनैव खलु* ब्राह्मणो देवानां दैवतं ब्राह्मणः कृतं* लोकस्य प्रमाणं कुतो भवत्यस्मात्। १। तस्मादेव* धर्मे ब्रह्म* ब्राह्मणः* कारणम्। ८४। एवं ब्राह्मणो धर्मस्य मूलं भवति* यथा पापनिष्कृतिः स्यात्* तदाह।

तेषां वेदविदो ब्रूयुस्त्रयोऽप्येनःसु निष्कृतिम्। सा तेषां पावनाय स्यात् पवित्रं विदुषां हि वाक् ॥८५॥

तेषामित्यादि। १। ८५। तेषां ब्राह्मणानां मध्ये *त्रयो वेदविदो ब्राह्मणाः एनःसु* निष्कृतिं यद्ब्रूयुः सा वाक्। १। तेषामेनसां पावनाय स्यादिति कस्मात्* विदुषां हि वाक् पवित्रम्। २। अथ ब्रह्महत्याया देशान्तरेण* गमने सेतुस्पर्शनं च प्रायश्चित्तं यथा। ३। यावद्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके। समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत्। ४॥ सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्। वर्जयित्वा विकर्मस्थान् छत्रोपानद्विवर्जितः। ५। अहं दुष्कृतिकर्मा वै महापातककारकः॥ गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥ ६॥ गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च। तपोवनेषु तीर्थेषु नदीप्रस्रवणेषु च। ७। एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्। दशयोजनविस्तीर्णं शतयोजनमायतम्। रामचन्द्रसमादिष्टं नलसञ्चयसञ्चितम्। सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति ॥ ८॥ इति ॥ ८५ ॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते ॥८९॥

इयमित्यादि। ८९। द्विजं ब्राह्मणं क्षत्रियं * वैश्यं वाकामतः प्रमाप्य हत्वा * पापकारिणामियं द्वा- * दशवार्षिकव्रतादिः शुद्धिरुदिता। १। कामतो ब्राह्मणवधे * निष्कृतिः पापक्षालनं * वेदादिशास्त्रे विधी- यते। २। ८९। क्रमिकत्वादुक्तया * प्रायश्चित्तमुक्त्वा सुरापानपातकप्राय * श्चित्तमाह

सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबेत्। तया स्वकाये निर्दग्धे मुच्यते किल्बिषात्ततः॥९०॥

सुरामित्यादि। ९०। सुरामज्ञानं मोहात् पीत्वा द्विजो * ब्राह्मणः क्षत्रियो वैश्यः * सुरामेवाग्निनात्यन्त * म- ग्निवर्णां कृत्वा पिबेत। १। तयाग्निसन्तप्तया सुरया * पीतया स्वकाये निर्दग्धे * ततः सुरापानजातात् * किल्बि- षात् पापान्मुच्यते। २। ९०।

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा। पयो घृतं वा मरणाद्गोशकृद्रसमेव वा ॥ ९१ ॥

अपरञ्चाह गोमूत्रेत्यादि। ९१। अथवा मोहात् सुरापो * गोमूत्रमग्निनासन्तप्याग्निवर्णं * कृत्वा मरणात् पिबेत्। १। अथवोदकमग्निवर्णं पयो वा * घृतं वा गोशकृद्रसं * वा मरणात् पिबेदिति। २। ९१।

कणान्वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी ॥९२॥

अपरञ्चाह कणानित्यादि। ९२। मोहादेव सुरापः * सुरापानचिह्नपात्रादिभूतध्वजं * मेषादिलोमकृत- वासा जटावान् * सुरापानापनुत्त्यर्थम्। १। अब्दमेकं निशि सकृत् * तण्डुलानां कणान् भक्षयेदथवा * निशि पि- ण्याकं तिलसार * पिष्टं सकृदेव भक्षयेत्। २। ९२। ननु तर्हि किं सर्व्वेषां द्विजानामेव * सुरापानं प्रतिषिद्ध * मित्यत उच्यते।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥९३॥

सुरावाद्दित्यादि। १। ९३। अन्नानां मलमेव सुरा भवति * मलञ्च पाप्मोच्यते तस्माद्ब्राह्मणो * राजन्यो वैश्यश्च सुरां न पिबेत्। १। ९३। तर्हि किं तण्डुलकृतास्वेव मलं * सुरा न पिबेदित्यत * आह।

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः ॥९४॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। गुरुस्त्रीगमनीयं तु व्रतैरेभिरपानुदेत् ॥ १०२ ॥

एतैरित्यादि। १०२। उक्तैरेतैर्व्रतैर्द्विजो*ब्राह्मणःस्वर्णस्तेयजं* कृतं पापमपोहति। १। गुरुतल्पगमनीयं तु*पापं द्विजः एतैर्वक्ष्य*माणैर्व्रतैरपानुदेत्। २। १०२। कैर्व्रतैरित्यत आह।

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये। सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुध्यति १०३

गुरुतल्प इत्यादि। १। १०३। गुरुतल्पी द्विजः एनो*गुरुतल्पगमनजं* पापमभिभाष्य सूर्मीं लोहमयीं स्त्री प्रतिमा *मग्निना सन्तप्तां ज्वलन्तीमाश्लिष्य। १। लोहमये ऽग्निना तप्ते *शयने स्वप्यात् मृत्युना*स गुरुतल्पी विशुध्यति। २। १०३।

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ। नैर्ऋतीं दिशमातिष्ठेदानिपाताद् जिह्मगः॥१०४॥

अपरमाह स्वयं वेत्यादि। १०४। अथवा गुरुतल्पी स्वयं निजस्य*शिश्नवृषणौ स्वयमुत्कृत्य अञ्जलौ*चाधाय धृत्वा नैर्ऋतीं*दिशं जिह्मगः आतिष्ठेत्। १। आनिपातात् मरणकालपर्यन्तं*ततः स विशुध्यति। २। १०४ अपरमाह।

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने। प्राजापत्यं चरेत्कृच्छ्रमब्दमेकं समाहितः १०५

खट्वाङ्गीत्यादि। १०५। अथवा गुरुतल्पी द्विजःखट्वाङ्गी*खट्वाङ्गात् सन् श्मश्रुलः* चीरवासाः समाहितः १। विजने वने वसन् प्राजापत्यं*कृच्छ्रमब्दमेकं चरेत्। २। १०५ अपरमाह।

चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः। हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये १०६

चान्द्रायणमित्यादि। १०६। अथवा गुरुतल्पी द्विजस्त्रीन्मासान्*नियतेन्द्रियश्चान्द्रायणमभ्यसेत् *इयवा गुरुतल्पापनुत्तये। १। नियतेन्द्रियःसन् हविष्येण त्रीन् * मासान् यवाग्वा त्रीन् * मासान् व्रतमभ्यसेदिति २। १०६। उपसंहरति।

एतैर्व्रतैरपोहेयुर्महापातकिनो मलम्। उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः॥ १०७ ॥

एतैरित्यादि। १०७। महापातकिनएते*रुक्तैर्व्रतैः* मलं पापमपोहेयुः। १। उपपातकिनस्तु.* त्विभिर्वक्ष्यमाणैर्नाना*विधैर्व्रतैर्मलं पापमपोहेयुः। १०७। कैर्व्रतैरित्यतआह।

उपपातकसंयुक्तोगोघ्नोमासंयवान्पिबेत्। कृतवापोवसेद्गोष्ठे चर्म्मणातेनसंवृतः॥१०८॥
चतुर्थकालमश्नीयादक्षारलवणंमितम्। गोमूत्रेणाचरेत्स्नानंद्वौमासौनियतेन्द्रियः॥१०९॥
दिवानुगच्छेद्गास्तास्तुतिष्ठन्नूर्द्ध्वंरजःपिबेत्। शुश्रूषित्वानमस्कृत्यरात्रौवीरासनंवसेत्॥११०॥
तिष्ठन्तीष्वनुतिष्ठेत्तुव्रजन्तीष्वप्यनुव्रजेत्। आसीनासुतथासीतनियतोवीतमत्सरः॥ १११॥
आतुरामभिशस्तांवाचौरव्याघ्रादिभिर्भयैः। पतितांपङ्कमग्नांवासर्व्वोपायैर्विमोचयेत्॥११२॥
उष्णेवर्षतिशीतेवामारुतेवातिवाभृशम्। नकुर्व्वीतात्मनस्त्राणंगोरकृत्वातुशक्तितः॥११३॥
आत्मनोयदिवान्येषांगृहेक्षेत्रेऽथवाखले। भक्षयन्तींनकथयेत्पिबन्तंचैववत्सकम्॥११४॥
अनेनविधिनायस्तुगोघ्नोगामनुगच्छति। सगोहत्याकृतंपापंत्रिभिर्मासैर्व्यपोहति॥ ११५॥

उपपातकेत्यादि। १। १०८। गोघ्नो द्विज उपपातकसंयुक्तः*कृतवापोमासं यवान्* पेयाद्गोनिकृत्वापि बेत्। १। हतयागोर्गो...चर्म्मणा*संवृतगावःसन्*मासं चगोष्ठे वसेत्। २। १०८। १०९। ततःपरं द्वौमासौ*नियतेन्द्रियःसन्गोमूत्रेणस्नानं*चरेत्तत्र चतुर्थकालं। १। मध्याह्नकालमेवाक्षारलवणं * हविष्यान्नं मितमश्नीयात्। २। १०९। ११०। दिवेत्यादि। तस्मिनमासद्वयंदिवादिने*तास्तुगोष्ठे चरन्तीगाः*अनुव्रजन् तत्खुरोद्भूतं तिष्ठन्*ऊर्द्ध्वं रजोधूलिं पिबेत् रात्रौ*तागाःहस्तेन...युच। १। शुश्रूषित्वानमस्कृत्य*वीरासनं च*जाड्यं वसेदिति। २। ११०। तिष्ठन्तीत्यादि। १११। चरन्तीषुतासुगोषु*तिष्ठन्तीषुगोषु तिष्ठेत्* व्रजन्तीषुतासुगोषुव्रजेत्तथा* तासु गोषुआसीनास्वासीत*नियतोवीतमत्सरः १। १११। आतुरामित्यादि ११२। तासुगोषुयागौरातुरातां गां*चौरादिभयैरभिशस्तामीतां*तां यावत्सामर्थ्यं च पतितां तां गां। १। यावद्गौःपङ्कमग्ना तां* गोघ्नव्रतचारीसर्व्वोपायैरेव*विमोचयेत्। २। ११२। उष्णेत्यादि। ११३। उष्णं वहति यदिमेघोवर्षति *मेघेशीते वाहिमादौ*मारुते वाभृशं वाति॥ १॥ गोघ्नव्रतचारी*शक्तितोगोस्त्राणं* मकृत्वानात्मन*स्त्राणं कुर्व्वीतेति। २। ११३। आत्मनइत्यादि। ११४। गोघ्नव्रतचारीयदि*काचिद्गौरात्मनोऽन्ये*क्षेत्रे खले वाभक्षयेत् *तानापिवान्ये क्षेत्रे * खलेकिमपिभक्षयेत्॥ १। तां गां वत्समपि न कथयेदित्याह * पिबन्तं वत्सकं नापि * कस्मिञ्चन कथयेत्। २। ११४। अनेनेत्यादि॥ ११५॥ अनेनेति

गोरूपं ब्राह्मणस्याग्रे नमस्कृत्वा विसर्जयेत् ॥ २४ ॥ यदासम्पूर्णसर्व्वाङ्गो हीनदेहोभवेत्तदा। गोघातकस्य तस्याङ्गं प्रायश्चित्तं विनिर्द्दिशेत् ॥ २५ ॥ काष्ठलोष्ट्रकपाषाणैःशस्त्रेणैवोद्धतोबलात्। व्यापादयति गां यस्तु तस्य शुद्धिं विनिर्द्दिशेत् ॥ २६ ॥ चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्ट्रके। तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम ॥ २७ ॥ पञ्चसान्तपने गावः प्राजापत्ये तथा त्रयः तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २८ ॥ प्रमापणे प्राणभृतां दद्यात्तं प्रतिरूपकम्। तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः। २९। अन्नाद्यैकनलाभार्थं वाहने मोहने तथा। सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः ॥ ३० ॥ अतिदाहेऽतिवाहे च नासिका भेदने तथा। नदीपर्व्वतसञ्चारे प्रायश्चित्तं विनिर्द्दिशेत् ॥ ३१ ॥ अतिदाहे चरेत्पादं द्वौपादावतिवाहने ॥ नासिके पादहीनन्तु चरेत् सर्व्वं निपातने ॥ ३२ ॥ दहनाच्च विपद्येत तत्र बन्धो विपद्यन्ति ते। उक्तं पराशरेणैव ह्येकपादं यथाविधि ॥ ३३ ॥ रोधबन्धनयोक्त्रञ्च भारः प्रहरणं तथा ॥ दुर्गप्रेरणयोक्त्रञ्च निमित्तानि वधस्याष्ट ३४ ॥ बन्धपाश सुगुप्ताङ्गो म्रियते यदि गोपशुः। भवनतस्य नाथस्य पापे कृच्छ्रार्द्धमर्हति ॥ ३५ ॥ न नारिकेलैर्नचशाणवालैर्नचापि मौञ्जैर्नचबन्धशृङ्खलैः ॥ एतैस्तु गावो नच बन्धनीयाबद्धा तु तिष्ठेत्परशुं गृहीत्वा ॥ ३६ ॥ कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम ॥ पाशलग्नाग्निदग्धेषु प्रायश्चित्तं नविद्यते ॥ ३७ ॥ यदि तत्र भवेत् काष्ठं प्रायश्चित्तं कथं भवेत् ॥ जपित्वा पावनीं देवीं मुच्यते तत्र किल्विषात् ॥ ३८ ॥ प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन् ॥ गवाशनेषु विक्रीणं स्ततःप्राप्नोति गोवधम। ३९ ॥ आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत् ॥ श्रवणं हृदयं भिन्नं मग्नोवा कूपसङ्कटे। ४०। कूपादुत्क्रमणे चैव भग्नोवा ग्रीवापादयोः। सएव म्रियते तत्र त्रीन्पादांस्तु समाचरेत्। ४१। कूपे खाते तटोबन्धे नदीबन्धे प्रपासु च। पानीयेषु विपन्नानां प्रायश्चित्तं नविद्यते। ४२। कूपखाते तटीखाते दीर्घखाते तथैव च। अन्येषु धर्म्मखातेषु प्रायश्चित्तं नविद्यते। ४३। वेश्मद्वारे निवासेषु योनरः खातमिच्छति। स्वकार्य्यगृहखातेषु प्रायश्चित्तं विनिर्द्दिशेत्। ४४। निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च। अग्निविद्युद्विपन्नानां प्रायश्चित्तं नविद्यते। ४५। ग्रामघाते शरौघेण वेश्मबन्धनिपातने। अतिवृष्टिहतानाञ्च प्रायश्चित्तं नविद्यते। ४६। संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च। दावाग्निग्रामघातेवा प्रायश्चित्तं नविद्यते। ४७। यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने। यत्ने कृते विपद्येत प्रायश्चित्तं नविद्यते। ४८। व्यापन्नानां बहूनाञ्च बन्धने रोधने पि वा। भिषङ्मिथ्योपचारे च प्रायश्चित्तं विनिर्द्दिशेत्। ४९। गोवृषाणां विपत्तौ च यावन्तः प्रेक्षकाजनाः। नवारयन्ति तां तेषां सर्व्वेषां पातकं भवेत्। ५०। एकोहतोयैर्बहुभिः समेतैर्नज्ञायते यस्य हतोऽभिघातात्। दिव्येन तेषामुपलभ्य हन्ता निवर्त्तनीयोनृपसन्नियुक्तैः। ५१। एकाचेद्बहुभिःकापि दैवाद्व्यापादिता भवेत्। पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक

पृथक् । ५२ । हतेषु रुधिरं दृष्ट्वा व्याधिग्रस्तः कृशो भवेत् । नानाभवति दृष्टेषु एवमन्वेषणं भवेत् । ५३ । मनुना चैव मे कीर्तनमर्थं शास्त्राणि जानता । प्रायश्चित्तन्तु तेनोक्तं गोघ्नचान्द्रायणं चरेत् । ५४ । केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत् । द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् । ५५ । राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः । अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् । ५६ । यस्मान्न द्विगुणं दानं केशश्च परिरक्षितः । तत्पापं तस्य तिष्ठेत्तु वक्ता च नरकं व्रजेत् । ५७ । यत्किञ्चित् क्रियते पापं सर्व्वं केशेषु तिष्ठति । सर्व्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम् । ५८ । एवं नारीकुमारीणां शिरसो मुण्डनं स्मृतं । न स्त्रियः केशवपनं न दूरे शयनासनम् । ५९ । न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् । नदीषु सङ्गमे चैव अरण्येषु विशेषतः । ६० । न स्त्रीणामजिनं वासो व्रतमेवं समाचरेत् । त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा । ६१ । बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् । गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत् । ६२ । यः पुनर्गोवधं कृत्वा प्रच्छादयितुमिच्छति । स याति नरकं घोरं कालसूत्रमसंशयम् । ६३ । विमुक्तो नरकात्तस्मान्मर्त्यलोके प्रजायते । क्लीबो दुःखी च कुष्ठी च सप्तजन्मानि वै नरः । ६४ । तस्मात्प्रकाशयेत् पापं स्वधर्म्मं सततं चरेत् । स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विसर्जयेत् । ६५ । इति । ११६ ।

**एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः । अवकीर्णिवर्ज्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥११७॥**

अतिदिशति एतदेवेत्यादि । ११७ । उपपातकिनो द्विजा अवकीर्णि * वर्ज्जितमुपपातकस्य शुद्ध्यर्थं * मेतदेव गोघ्नव्रतं * यद्वा चान्द्रायणं कुर्युः । २ । ११७ ।

**अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे । पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥ ११८ ॥**

अवकीर्णीत्यादि । ११८ । अवकीर्णी काणेन गर्द्दभेन * निशि रात्रौ चतुष्पथे * पाकयज्ञविधानेन * नैर्ऋतिं देवतां यजेत् । १ । ११८ ।

**हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा । वातेन्द्रगुरुवह्नीनां जुहुयात्सर्पिषाहुतीः ॥११९**

हुत्वाग्नावित्यादि । ११९ । हुत्वाग्नावितिनिशि चतुष्पथे * काणेन गर्द्दभेन विधिवत्पाक * यज्ञविधाने न निर्ऋतिं देवता * मग्नौ होमान् हुत्वान्ततश्चेतान्ते । १ । समासिञ्चन्तु मारुता * इत्यनयर्चा वाय्वादीनां * माहुतीः सर्पिषा जुहुयात् । २ । ११९ । न तु कामतः पुनरवकीर्णी तानत * आह ।

**कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः॥ १२०॥**

कामत इत्यादि। १। १२०। व्रतस्थस्य द्विजन्मनो* ब्रह्मचर्य्याश्रमे वेदव्रतस्थस्य* ब्राह्मणस्य * क्षत्रियस्य वैश्यस्य च * कामतो रेतःसेकम। १। धर्म्मज्ञा ब्रह्मवादिनो * व्रतस्य वेदव्रतस्यातिक्रममवकीर्णमाहुः २। १२०। तत्र किं स्यादित्यत आह।

**मारुतं पुरुहूतञ्च गुरुं पावकमेव च। चतुरो व्रतिनोऽभ्येति ब्राह्मं तेजोऽवकीर्णिनः॥ १२१॥**

मारुतमित्यादि। १। १२१। इत्येवं व्रतिनस्तु द्विजन्मनः* कामतः स्त्रियां रेतसः* खलु अवकीर्णिनो ब्राह्म *तेजश्चतुरो मारुतादीनभ्येति। १। १२१। तत्र प्रायश्चित्तमुक्तं *काणगर्दभेनहोम* स्तथापरश्चोच्यते।

**एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनं। सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्त्तयन्॥ १२२**

एतस्मिन्नित्यादि। १। १२२। एतस्मिन्नुक्ते कामतो* रेतःसेकादेनसि प्राप्ते द्विजन्मा* ब्रह्मचारी गर्दभाजिनं* वसित्वा परिधाय। १। सप्तागारं स्वकर्म्म कामतो रेतः* सेकं कीर्त्तयन् भैक्षं चरेत्। २। १२२।

**तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकम्। उपस्पृशंस्त्रिषवणं त्वब्देन स विशुध्यति॥ १२३॥**

तेभ्य इत्यादि। १२३। सोऽवकीर्णी तेभ्यः सप्तभ्योऽगारेभ्यो* लब्धेन भैक्षेण एककालं भुक्त्वा* वर्त्तयन् त्रिषवणमुपस्पृशन्। १। अब्देन संवत्सरेण तद्व्रतेन* तस्मात् पापाद्विशुध्यति। २। १२३।

**जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया। चरेत् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया॥ १२४**

जातिभ्रंशेत्यादि। १२४। ब्राह्मणस्य रुजः कृत्वेत्यादि उक्तं *जातिभ्रंशकरं च * अन्यतमं कर्म्म द्विज * इच्छया कृत्वा सान्तपनं चरेत्। १। अनिच्छया कृत्वा* प्राजापत्यं *कृच्छ्रं चरेत्। २। १२४।

**सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्। मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम्॥ १२५॥**

सङ्करेत्यादि। १२५। खराश्वादिवधे सङ्करीकरणे *निन्दितेभ्यो धनादानादिषु अपात्रीकरणे सत्सु पापेषु उक्तेषु। १। द्विजानामैन्दवं चान्द्रायणं व्रतं * मासं कुर्व्वतां शोधनं॥ २॥ क्रिमिकीटवयोहत्यादिषु

एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत् । वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥१३०

एतदित्यादि ।१।१३०। अकामतस्तु शूद्रहा ब्राह्मण* एतदेव ब्रह्महणो* व्रतं षण्मासानुपामाद्भूतरं* वृक्षमूलनिकेतनः ।१। वसन्नियतोभैक्षाशी जटी स* न्नित्यं वं कृत्सं चरेत् * अथवा वृषभैकादशा* गा एक* शुभ्र सिता दद्याद्गा विप्रायदद्यात् ।१३०। अथ स[illegible]करणा* पालीकरणमलावहातिरिक्त* प्राणिहत्या प्रायश्चित्त* माह ।

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च । श्वगोधोलूककाकांश्च शूद्रहत्याव्रतं चरेत् ॥ १३१ ॥

मार्जारेत्यादि ।१।१३१। मार्जारादीन्हत्वा शूद्रहत्याव्रतं * ब्राह्मणादिश्चरेदिति ।१।१३१। अपरमाह ।

पयः पिबेत्त्रिरात्रं वा योजनं वाध्वनो व्रजेत् । उपस्पृशेत्स्रवन्त्यां वा सूक्तं वाब्दैवतं जपेत् ॥१३२

पयइत्यादि ।१।१३२। अथवा मार्जारादीन्हत्वा त्रिरात्रं * गव्यं पयः पिबेन्नाना* अध्वा धनीयोजनं व्रजेद् अथवा* स्रवन्त्यां नद्यामुपस्पृशेत् ॥१॥ अथवाब्दै* वतं सूक्तं * जपेदिति* चत्वारः कल्पाः ।२।१३२।

अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः । पलालभारकं षण्डे सीसकञ्चैकमाषकम् ॥१३३

अभ्रिमित्यादि ।१३३। सर्पमहिंवास्तिरिक्तं * भुजङ्गजातिविशेषं * हत्वा कार्ष्णायसीमभ्रिं * तीक्ष्णाग्रलोहदण्डं द्विजोत्तमो दद्यात् ॥१॥ षण्डे सर्पकृतवधे * पलालस तुच्छधान्यस्य भारं * माषपरिमितं सीसकं चदद्यादिति ॥२॥१३३॥

घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरौ । शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम् ॥१३४॥

घृतेत्यादि ॥१३४॥ वराहे स्वहते घृतकुम्भं दद्यात्* द्रिति पर्व्वणयोजनात्* तित्तिरौ हते तिलस्य* द्रोणं दद्यात् शुके हते * द्विहायनं व्रतं चरेत् वत्स गोवत्सं ॥१॥ क्रौञ्चं इह* द्वक हत्वा* त्रिहायणं * व्रतं चरेत् ॥१३४॥

हत्वा हंसं बलाकाञ्च वकं बर्हिणमेव च । वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम् ॥ १३५ ॥

हत्वेत्यादि ॥१३५॥ हंसं बलाकां काणवकी वकं *श्वेतवकं बर्हिणञ्च*वानरं श्येनं भासञ्च* हत्वा गां ब्राह्मणाय स्पर्शयेद्दद्यात् ॥१॥१३५॥

वासो दद्याद्धयं हत्वा पञ्च नीलान्वृषान्गजम् । अजमेषावनड्वाहं खरं हत्वैकहायनम् । १३६

वास इत्यादि ॥ १३६ ॥ हयमश्वं हत्वा वासो * वस्त्रं दद्यादिति सङ्करीकरणे * यदश्ववधप्रायश्चित्त * मुक्तं तस्य विकल्पोऽयम् ॥ १ ॥ गजं हत्वा पञ्च नीलान्वृषान्दद्यात् * वृषोत्सर्गे यन्नीलवृषः * परिभाषितो नात्र स विवक्षितः किन्तु कृष्णवृष इति कश्चित् ॥ २ ॥ अजादीन् हत्वैकहायनं वृषं दद्यात् * सङ्करीकरणे विकल्पोऽयं ॥ ३ ॥ १३६ ॥

क्रव्यादांस्तु मृगान्हत्वा धेनुं दद्यात्पयस्विनीम् । अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥ १३७ ॥

क्रव्यादांस्त्वित्यादि । १३७ । क्रव्यादान्मांसाशिनो मृगान् * व्याघ्रादीन्हत्वा पयस्विनीं धेनुं * दद्यादक्रव्यादान् मृगान् * हत्वा वत्सतरीं दद्यात् । १ । उष्ट्रं हत्वा स्वर्ण * साकृष्णलं दद्यात् * सङ्करीकरण * स्यायं विकल्पः । २ । १३७ ।

जीनकार्मुकबस्तावीन्पृथग्दद्याद्विशुद्धये । चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः १३८

जीनेत्यादि । १३८ । चतुर्णामपि वर्णानां * मनवस्थिता नारीर्व्यभिचारिणी * र्हत्वा विशुद्धये पृथ * ग्जीनादीन् यथाक्रमं दद्यात् । १ । अनवस्थितां ब्राह्मणीं * हत्वा जीनं चर्मपुटं * दद्यात्क्षत्रियनारीं हत्वा कार्मुकं धनु * र्वैश्यानारीं हत्वा बस्तं * छागं शूद्रनारीं हत्वा विं मेषं । २ । १३८ । एषु गतानां प्रायश्चित्तमाह ।

दानेन वधनिर्णेकं सर्पादीनामशक्नुवन् । एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये ॥ १३९ ॥

दानेनेत्यादि । १ । १३९ । अभ्रिं काष्णायसीं दद्या * दित्यादिभिः सर्पादीनां * वधे प्रायश्चित्तं यदा * द्दानमुक्तं तेन तेन * दानेन तत्तद्वधनिर्णेकमशक्नुवन् । १ । द्विजस्तत्पापापनुत्तये कृच्छ्र * मेकैकशः प्राजापत्य * मनाद्याकृच्छ्रं चरेत् । २ । १३९ ।

अस्थिमतां तु सत्त्वानां सहस्रस्य प्रमापणे । पूर्णे चानस्यनस्थ्नां तु शूद्रहत्याव्रतं चरेत् ॥ १४० ॥

अस्थिमतामित्यादि । १४० । अस्थिमतां सत्त्वानां तु मूषिकादीनां प्राणिनां * सहस्रस्य प्रमापणे घातने शूद्रहत्याव्रतं चरेत् । १ । अनस्थ्नां सत्त्वानां प्रमापणे * त्वनसि शकटे पूर्णे * शूद्रहत्याव्रतं चरेत् । १ । १४० ।

किञ्चिदेव तु विप्राय दद्यादस्थिमतां वधे। अनस्थ्नाञ्चैव हिंसायां प्राणायामेन शुद्ध्यति॥१४१॥

किञ्चिदित्यादि। १४१। अस्थिमतां प्राणिनामर्व्वाक् सहस्रात् * वधे विप्राय किञ्चिद्देयमानं * दद्यात् अनस्थ्नां प्राणिनां वधे च। १। प्रकटपरत्वान्नाने * प्राणायामेन शुद्ध्यति * प्राणायामः मन्त्रोपासनं यदुक्तः। २। १४१।

फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम्। गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधाम्॥१४२॥

फलदानामित्यादि। १४२। फलदानां वृक्षाणां छेदने च * सावित्र्याः ऋक्शतं जपेत् * तथा गुल्मवल्लीलता पुष्पितवी * रुधां छेदने सावित्र्याः ऋक्शतं॥ १॥ १४२॥

अन्नाद्यजानां सत्त्वानां रसजानाञ्च सर्व्वशः। फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम्॥१४३॥

अन्नाद्यजानामित्यादि। १४३। अन्नेषु आद्येषु जातानां * प्राणानामिक्षादिरसे * जातानां सर्व्वशः फल * पुष्पोद्भवानां प्राणिनां * हिंसायां घृतप्राशो विशोधनं स्यात्। १। १४३।

कृष्टजानामोषधीनां जातानाञ्च स्वयं वने। वृथालम्भेऽनुगच्छेद्गां दिनमेकं पयोव्रतः॥१४४॥

कृष्टजानामित्यादि। १४४। कृष्टक्षेत्रे जातानामोषधीनां * शूकधान्यशमीधान्य * श्यामाकादीनाञ्च फल * पाकान्तानां वने स्वयं * जातानामप्योषधीनाम्। १। वृथाप्रयोजनाभावाच्छेदे * दिनमेकं पयोव्रतः * पयोमात्रपायी सन् गाः * चरन्तीरनुव्रजेदिति। २। १४४॥ उपसंहरति।

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्। ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे॥१४५॥

एतैरित्यादि। १४५। हिंसासमुद्भवमेनः पापमेतैः * उक्तैर्व्रतैरपोह्यं स्यात् * अनाद्यभक्षणे कृतम् * ज्ञानाज्ञानकृताश्च * मेनो यैरपोह्यं तच्छृणुतः। १। १४५।

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति। मतिपूर्व्वमनिर्देश्यं प्राणान्तिकमिति स्थितिः॥१४६॥

अज्ञानादित्यादि। १४६। द्विजो विधिं विना वारुणीं सुरा * मज्ञानात् पीत्वा संस्कारात् * पुनरुप * नयनात्

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति॥ १४९॥

सोमपो ब्राह्मणः सुरापस्य मानवस्य * मुखादागतं गन्धमाघ्रायापसु * स्थितः सन् प्राणान् त्रीनायम्येति। १। त्रीन् वारान् प्राणायामं * कृत्वा गव्यं घृतं प्राश्य * तस्मात् पापाद्विशुध्यति। १४९।

अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च। पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ १५०॥

अज्ञानादित्यादि। १५०। द्विजातयो विण्मूत्रमज्ञानात् प्राश्य * सुरासंसृष्टं चद्रव्यं * मज्ञानात् प्राश्य पुनरे * वोपनयनसंस्कारमर्हन्तीति। १५०। ननु पुनःसंस्कारं कथं कुर्यात् * इत्यत आह। वपनं * मेखल तयादि श्लोकम्। १५१।

वपनं मेखला दण्डो भैक्षचर्या व्रतानि च। निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि॥ १५१॥

द्विजातीनां पुनः संस्कारकर्म्मणि * वपनादीनि पञ्च निवर्त्तन्ते * शेषं सर्व्वमुपनयनोक्तं कर्म्म। १५१। अथानाद्यान्नभोजने * प्रायश्चित्तमुच्यते *

अभोज्यानां तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च। जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान् पिबेत्॥ १५२॥

अभोज्यानामित्यादि। १५२। अभोज्यानां चतुर्थाध्याये पूर्व्वमुक्ता * नाश्नीयात् यज्ञे * इत्यादिभिः शस्त्रविक्रयिणो मल * मित्यन्तैः श्लोकैरुक्तानां। १। द्विजानामन्नं भुक्त्वा स्त्री * शूद्रोच्छिष्टञ्चान्नं भुक्त्वा * मांसञ्चाभक्ष्यं जग्ध्वा * सप्तरात्रं यवान् यवमण्डादीन् पिबेत्। २। भोज्याश्च साग्निकानां द्विजानामन्नं * उक्तं तद्यथा विष्णुसंहितादौ * उक्तं तदत्र दर्श्यते। ३। व्याससंहितायां यथा * कृतदारोऽग्निपत्नीभ्यां कृतं वा गृहं वसेत्। स्वकृतं वित्तमासाद्य वैतानग्निं न हापयेत्। ४। स्मार्त्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु। कर्म्म कुर्य्यात् प्रतिदिनं विधिवत् प्रीतिपूर्व्वकः। इति। ५। विष्णुसंहितायाञ्चोक्तं * गृहाश्रमी वैवाहिकाग्नौ पाक * यज्ञान् कुर्य्यात् सायं प्रातश्चाग्निहोत्रं देवताभ्यो जुहुयात्। इत्यादि। ६। याज्ञवल्क्येनाप्युक्तं च * कर्म्म स्मार्त्तं विवाहाग्नौ कुर्व्वीत प्रत्यहं गृही। दारकाले कृते नापि श्रौतं वैतानिकाग्निषु। इति। ७। इत्येतं वैवाहिकेऽग्नावेव पाकं * ब्राह्मणस्यान्नममृतं * क्षत्रियस्यान्नं पयोऽव * वैश्यस्यान्नमन्नमेव * तस्मात् त्रयाणामन्नं भोज्यं। ८। एतच्चापस्तम्बाङ्गिरोभ्यामुक्तं * अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं

पयःस्मृतं । वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् । ९ । वैश्वदेवेन होमेन देवताभ्यर्चनेन च ।
अमृतं तेन विप्रान्नम् ऋग्यजुःसामसंस्कृतम् । १० । व्यवहारानुरूपेण धर्म्मेण च्छलवर्जितम् । क्षत्रियान्नं
पयस्तेन भूतानां पालनेन च । ११ । स्वकर्म्मणा च वृषभैरुत्सृतात्मप्रमितः । खलयज्ञातिथित्वेन वैश्यान्नं
तेन संस्कृतम् । १२ । अज्ञानतिमिरान्धस्य मद्यपानरतस्य च । रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जि-
तम् । १३ । ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्व्वणि । वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन । १४ ।
दूनीवंसाग्निकानां ब्राह्मण * क्षत्रियवैश्यानां वैवाहिके * वह्निपक्कमन्नं सर्व्व * वर्णानां भोज्यमुत्तमम् । १५ ।
असंस्कृते वलौकिकेऽग्नौ पक्वः * निरग्नीनां ब्राह्मणक्षत्रियवैश्या * वर्णानामन्नमभोज्यं * तद्वृथापाक
इत्युक्तम् । १६ । अत्रिसंहितायां यथा * योऽन्नहीत्वाविवाश्नाति स्वद्मस्य इतिमन्यते । अन्नं तस्यानभोक्तव्यं
वृथापाको हि स स्मृतः । १७ । वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ॥ प्राणानप्सु त्रिराचम्य घृतं प्राश्य
विशुध्यतीति । १८ । आङ्गिरससंहितायामेतदन्न * विषयत्वमुक्तं यथा । १९ । दुष्कृतं हि मनुष्याणामन्न-
माश्रित्य तिष्ठति । योयस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् । २० । ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने
पशुत्वकम् । वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् । इति । २१ । अज्ञानविशेषेण प्रायश्चित्तमुक्तं स्व
संहितायां यथा । २२ । शूद्रस्य सततं भुक्त्वा षण्मासान् व्रतमाचरेत् । वैश्यस्य च तथा स्त्रीणां मासत्रयं
व्रतं चरेत् । २३ । क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ च व्रतं चरेत् । ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रतं चरेत्
। २४ । शूद्राणां ब्राह्मणो भुक्त्वा तथा रङ्गावतारिणः । वधकस्य च चौरस्य वैरायाश्च तथा स्त्रियाः । २५ ।
कर्म्मकारस्य वेणस्य क्षौरस्य पतितस्य च । रजकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च । २६ । कदर्यस्य
श्यमस्य वेश्यायाः कितवस्य च । गणान्नं पृथिपालान्नमन्नं चैवास्त्रजीविनः । २७ । सौमपान्नं क्षति
कान्नं * भुक्त्वा मासं व्रतं चरेदिति * मनुष्याणामभक्ष्यं य * त्त्वमितरा पितृणां देवानाञ्चाभक्ष्याम् । ८ । १५२ ।

**शुक्तानि च कषायांश्च पीत्वाऽमेध्यान्यपि द्विजः । तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः ॥१५३॥**

शुक्तानि चेत्यादि । १५२ । शुक्तानि सन्धानविशेषा अम्ल * संशुक्तानि कषायांश्च * विनाभेषजं क्वाथ
कषायानमे * ध्यान्यपि द्रवद्रव्याणि । १ । द्विजः पीत्वा तावदप्रयतोऽशुचि * र्भवति यावत्तज्जीर्णं * भूत्वा
नाधो व्रजतीति । २ । १५२ ।

**विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः । प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् १५**

विड्वराहेत्यादि। १५४। विड्भुग्वराहादीनां * मूत्रपुरीषाणि * द्विजःप्राश्य चान्द्रा * यणं चरेदिति। १। १५४।

**शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च। अज्ञातञ्चैव सूनास्थमेतदेव व्रतं चरेत्॥१५५॥**

शुष्काणीत्यादि। १५५। शुष्काणि भक्ष्यमांसानि * भौमानि कवकानि चेति * शुष्ककाकारेण जातानि प्रसर* विशेषान् सूनास्थं वध * स्थाने स्थितमज्ञातं मांसं। १। किं मृगालस्य किं छागस्येति वा * अज्ञातं मांसं भुक्त्वा द्विज * एतदेव चान्द्रायणं * व्रतं चरेत्। २। १५५।

**क्रव्यादसूकरोष्ट्राणां कुक्कुटानाञ्च भक्षणे। नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम्॥ १५६**

क्रव्यादेत्यादि। १५६। क्रव्यादादीनां मांसस्य भक्षणे द्विजानां तप्त * कृच्छ्रं तत्पापस्य विशोधनं भवेत्॥ १॥ १५६॥

**मासिकान्नं तु योऽश्नीयादसमावर्त्तको द्विजः। स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत्॥१५७॥**

मासिकान्नमित्यादि। १५७। असमावर्त्तको यो द्विजो ब्रह्म*चारी मासिक श्राद्धान्नमश्नीयात्*स त्रीण्यहान्युपवसे*देकाहञ्चोदके वसेत्। जलमात्रपायी स्यात्। १५७।

**ब्रह्मचारी तु योऽश्नीयान्मधु मांसं कथञ्चन। स कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत् ॥१५८॥**

ब्रह्मचारीत्यादि। १५८। यो ब्रह्मचारी कथञ्चन मधु*मांसं वाश्नीयात् स प्राकृतं कृच्छ्रं *प्राजापत्यं कृत्वा वेद *व्रतशेषं क्रमात् समापयेत्। १। १५८।

**बिडालकाकाखूच्छिष्टं जग्ध्वा श्वनकुलस्य च। केशकीटावपन्नञ्च पिबेद्ब्रह्मसुवर्चलाम्॥१५९**

बिडालेत्यादि। १५९। ब्रह्मचारी बिडालाद्युच्छिष्टं जग्ध्वा*केशकीटावपन्नञ्च*जग्ध्वा ब्रह्मसुवर्चलां* पर्णभक्षां सरसीकृतां पिबेत्। १। १। १५९।

**अभोज्यान्नमन्नात्तव्यमात्मनः शुचिमिच्छता। अज्ञानभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः॥१६०**

यमोजामित्यादि। १६०। आत्मनःशुचिमिच्छता * द्विजेनाभोज्यमन्नं भुञ्जानेनात्र वान्तव्यमज्ञानभुक्तं * वमनेनोत्सार्यमाणं* वापिशोधनैःशोध्यं स्यात् ॥ १। ५६०। उपसंहरति।

एषोऽनाद्यादनस्योक्तोव्रतानां विविधोविधिः। स्तेयदोषापहर्त्तॄणांव्रतानांश्रूयतांविधिः१३१

एषइत्यादि। १६१। अनाद्यादनस्य पापप्रशमार्थं *व्रतानामेषविविधो * विधिःप्रोक्तःस्तेयदोषापहर्त्तॄणां व्रतानां विधिःश्रूयताम्। १। १६१।

धान्यान्नधनचौर्याणिकृत्वाकामाद्द्विजोत्तमः। सजातीयगृहादेवकृच्छ्राब्देनविशुध्यति॥१६२

धान्येत्यादि। १६२। द्विजोत्तमोब्राह्मणःसजातीयस्य*ब्राह्मणस्यगृहात्कामात्*धान्यादिचौर्याणिकृत्वा* कृच्छ्राब्देनवर्षमेकं*कृच्छ्रव्रतेनविशुध्यति। १। १६२।

मनुष्याणान्तुहरणे स्त्रीणांक्षेत्रगृहस्यच। कूपवापीजलानाञ्चशुद्धिश्चान्द्रायणंस्मृतम्॥१६३॥

मनुष्याणामित्यादि। १६३। द्विजोत्तमस्यमनुष्याणां पुंसां * स्त्रीणांच क्षेत्रगृहस्यचकूपादेश्च*हरणे शुद्धिश्चान्द्रायणंस्मृतं। १। १६३।

द्रव्याणामल्पसाराणांस्तेयंकृत्वान्यवेश्मतः। चरेत्सान्तपनंकृच्छ्रंतन्निर्यात्यात्मशुद्धये१६४

द्रव्याणामित्यादि। १६४। अल्पसाराणामल्पमूल्यद्रव्याणां *स्तेयं कृत्वासान्तपनं चरेद्द्विजः * वेश्मान्तरस्थमल्पसारं द्रव्यं निर्याप्य*तात्मशुद्धये कृच्छ्रं व्रतं चरेत्। १। १६४।

भक्ष्यभोज्यापहरणे यानशय्यासनस्यच। पुष्पमूलफलानाञ्चपञ्चगव्यंविशोधनम्॥ १६५॥

भक्ष्येत्यादि। १६५। भक्ष्याणां घृतपूरादीनां भोज्यानां* मोदनादीनामपहरणे चौर्ये *यानादीनां पुष्पादीनाञ्चापहरणे *पञ्चगव्यं पीतं विशोधनं स्यात्। १। १६५

तृणकाष्ठद्रुमाणाञ्चशुष्कान्नस्यगुडस्यच। चैलचर्मामिषाणाञ्चत्रिरात्रंस्यादभोजनम्१६६

तृणेत्यादि। १६६। तृणादीनामपहरणेत्रिरात्र*मभोजनं विशोधनं। १। १६६।

मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च। अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ॥ १६७॥

मणीत्यादि। १६७। मणिमुक्तादीनामपहरणे द्वादशाहं कणान्नता भग्नक्षुद्रतण्डुलकणानां यवागूरादि कान्नभोजनं स्यात्। १। १६७।

कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहं पयः ॥ १६८ ॥

कार्पासेत्यादि ॥ १६८ ॥ कार्पासादीनामपहरणे त्र्यहं पयःपीतं विशोधनं स्यात्। १ ॥ १६८ ॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। अगम्यागमनीयन्तु व्रतैरेभिरपानुदेत् ॥ १६९ ॥

उपसंहरतिएतैरित्यादि ॥ १६९ ॥ द्विजो ब्राह्मणादिःस्तेयजं पापं एतैर्व्रतैरपोहेत् अगम्यागमनीयं तपापमेभिर्वक्ष्यमाणैरपानुदेत्। १। १६९।

गुरुतल्पव्रतं कुर्य्याद्रेतःसिक्त्वा स्वयोनिषु। सख्युःपुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥१७०॥

गुरुतल्पेत्यादि। १७०। स्वयोनिषु पूर्व्वं स्वगोत्रजासु नकेवलं सोदर्य्याभगिनीषु सख्युःपत्नीषु पुत्रपत्नीषु च पूर्व्वं भिन्नगोत्रजातत्वात् ॥ १ ॥ कुमारीषु स्वदर्शासु नात्र लोमाः स्वजातयोनिषु इत्यलोमा नहि सत्या जाता ये यास्तएव तेः यामिस्तथा च जातरजसां श्रवणात्। २। अन्त्यजासु चाण्डालीषु रेतःसिक्त्वा गुरुतल्पगमनपापव्रतं कुर्य्यात्। ३। १७०

पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणं चरेत् १७१

पैतृष्वस्रेयीमित्यादि ॥ १७१ ॥ पैतृष्वस्रेयीं भगिनीं मातःस्वस्रीया भगिनी सपिण्ड्यात्वा चान्द्रायणं चरेत्।१। एतेन विवाहे मातृस्वपिण्डत्वं नेनये प्राप्तौ विवाहे वर्जनमत्रोच्यते। २। मातुश्च भ्रातुस्तनयां मातुलतनयां मोहतो गत्वा चान्द्रायणं चरेत्। ३। मातृविवाहात्पूर्व्वावस्थायां खलु सपिण्डतया मातुलतनयाया विवाहे वर्जनसिद्धौ मोहाद्गमने प्रायश्चित्तमिदं प्रोक्तं ॥ ४ ॥ १७१ ॥ आसां विवाहे वर्जनमाह ॥

एतास्तिस्रस्तु भार्य्यार्थे नोपगच्छेत्तु बुद्धिमान्। ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः॥१७२

एतादृत्यादि ॥ १७२ ॥ एतास्तिस्रो भगिनीर्बुद्धिमान् भार्य्यार्थं नोपगच्छेत् कस्मात् इति तत्राह ज्ञातित्वेन तादृक्किमदः स्नेहकम् ॥ १ ॥ ताः पैतृष्वस्रेयी मातृस्वस्रीया मातुलकन्याः इति स्रोज्ञातित्वेनैव विवाहे नोपेयाः

या*यस्मात्तदुपयमनात्पतति ॥ २ । मातुलतनयायामातृ*सपिण्डत्वेनविवाहे* वर्ज्जनसिद्धौसत्यांपुन*रिहतद्व ज्जनवचनंनियमार्थं । ३ । ब्राह्मणएवैतास्तिस्रो*नविवहेत क्षत्रियादीनां * नांप्रतिषेधोनप्रतिषेध इति* मद्यमान्देस्तयाश्रुतेः । ४ । ५ । १७२ ।

अमानुषीषुपुरुषउदक्यायामयोनिषु । रेतःसिक्त्वाजलेचैवकृच्छ्रंसान्तपनंचरेत् ॥ १७३॥

अमानुषीष्वित्यादि ॥ १७३। इहलोकेत्वमानुषीषुच्छागी*प्रभृतिषुरेतःसिक्त्वा*उदक्यांरजस्वलायां मानुष्या न्तु*रेतःसिक्त्वातयास्त्रीणां*मयोनिषुरेतःसिक्त्वा ।१। जलेचरेतःसिक्त्वासान्तपनं*कृच्छ्रंपुरुषआचरेत् ।२।१७३ ।

मैथुनन्तुसमासेव्यपुंसियोषितिवाद्विजः । गोयानेऽप्सुदिवाचैवसवासाःस्नानमाचरेत्॥१७४

मैथुनन्त्वित्यादि । १७४ । द्विजःपुंसियोषितिवा*मैथुनसमासेव्य गो*यानेवार्मथेनचसमासेव्यापु वा* मैथुनंसमासेव्यदिवा*दिनेवासभासेव्य । १ । सवासास्तत्क्षणात् स्नानमाचरेदिति * तासांविमोचनं ज्ञेयं । २ । १७४ ।

चाण्डालान्त्यस्त्रियोगत्वाभुक्त्वाच प्रतिगृह्यच । पतत्यज्ञानतो विप्रोज्ञानात्साम्यन्तुग च्छति ॥ १७५ ॥

चाण्डालान्त्येत्यादि । १७५ । चाण्डालान्तानां*मन्त्यजानांस्त्रियोगत्वा*तेषामन्नंवाभुक्त्वातेषाम्प्रति* गृह्य किञ्चिद्विप्रःपतति । १ । ज्ञानाद्गत्वाभुक्त्वावाप्रतिगृह्यवा*तेषांसाम्यंगच्छतीति । २ । १७५ ।

विप्रदुष्टांस्त्रियंभर्त्तानिरुन्ध्यादेकवेश्मनि । यत्पुंसःपरदारेषुतच्चैनांचारयेद्व्रतम्॥१७६

विप्रदुष्टामित्यादि । १७६ । भर्त्ताविप्रदुष्टामिच्छयापर * पुरुषउपगतां स्त्रियमेक * वेश्मनिस्वस्याबास गृहे निरुन्ध्यात् । १ । पुंसःपरदारेषु गमनेय * व्रतंविहितंतद्व्रत * मेनां स्त्रियमाचारयेत् । १७६ ।

साचेत्पुनःप्रदुष्येत्तुसदृशेनोपयन्त्रिता । कृच्छ्रंचान्द्रायणञ्चैवतदस्याःपावनंस्मृतम्१७७

साचेदित्यादि । १७७ । एवमेकवेश्मनिनिरुद्धातत्त * द्व्रतंचरित्वापि * सास्त्रीचेत्पुनःसदृशेनपुं सोप * यन्त्रितायाचितासदृष्येत् । १ । तदातस्याःस्त्रियाः पावनं चान्द्रायणं * कृच्छ्रव्रतंधीरैःस्मृ तम् । २ । १७७ ।

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः । तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥१७८

यदित्यादि । १७८ । द्विजो ब्राह्मणादिरेक * रात्रेण वृषलीसेवनाद्यत्पापं * करोति तत्पापं भैक्ष भुक् भिक्षान्नभुक् ॥१। गायत्रीमष्टोत्तर * शतसहस्रं कृत्वो * नित्यं जपन् त्रिभि * र्वर्षैर्व्यपोहति । १७८ ।

एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः । पतितैः संप्रयुक्तानामिमाः शृणुत निष्कृतीः ॥१७९

उपसंहरति एषेत्यादि । १७९ । चतुर्णामपि वर्णानां * महापापादिपापकृतां नृणां निष्कृति * रेषा मयोक्ता शुश्रूषध्वम् । १ । पतितैः सह * सम्प्रयुक्तानां * पापान्निष्कृती * रिमाः शृणुत । १७९ ।

संवत्सरेण पतति पतितेन सहाचरन् । याजनाध्यापनाद्यौनात्सद्यो यानासनाशनात् ॥१८०

संवत्सरेणेत्यादि । १८० । पतितेन ब्रह्महत्यादिमहा * पातकचतुष्टयान्य * तमपातककारिणा * सह संवाससमाचरन् * संवत्सरेण पतति । १ । उक्तञ्च याज्ञवल्क्येन * एभिस्तु संवसेद्यो वै * वत्सरं सोपि तत्समः । इति । २ । याजनाध्यापनात्तथा यौनात्तथा * पुत्रकन्याविवाह * सम्बन्धात्तथा चैकत्र * यानासनाशनाच्च * सद्य एव पततीति । ३ । उक्तञ्च विष्णुसंहितायां * संवत्सरेण पतति पतितेन सहाचरन् । एकयानभोजनासनशयनै * र्यौनस्रौवमौखै * सम्बन्धात् सद्य एव । ५ । इति । देवलेनचोक्तं यथा * याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम् । कृत्वा सद्यः पतन्त्येते पतितेन न संशयः । इति । ६ । बौधायनेनचतथोक्तं * संवत्सरेण पतति * पतितेन सहाचरन् । याजनाध्यापनाद्यौनात् * सद्योऽन्नशयनाशनात् । ७ । इति । ४ । १८० ।

यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये ॥ १८१ ॥

यो येनेत्यादि । १८१ । एषां ब्रह्महत्यादि पातकचतु * ष्टयकारिणां चतुर्णां मध्ये येन * पतितेन सह यस्तु * मानवः संसर्गं याति । १ । स तत्पातकी तस्यैव पातकिन * उक्तं तत्तद्व्रतं तत्संसर्गपाप * विशुद्धये यथोक्तविधिना कुर्यात् । २ । ० । १८१ । ० । अथ यः पतितः स्यात्तस्याकृत * प्रायश्चित्तस्य किं कुर्यात् * दित्यत आह ।

पतितस्योदकं कार्यं सपिण्डैर्बान्धवैर्बहिः । निन्दितेऽहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ ॥१८२॥

पतितेति। १८२। पतितस्य ब्राह्मणादिपातकिनः * सपिण्डबान्धवैरेव * ज्ञातयादिसन्निधौनि न्दिते दिवसे * अनिमङ्गलवारादौ। १। मातादिसपिण्डैरुदकक्रियाः * तद्विधिरिहवक्ष्यते। १८२।

**दासीघटमपांपूर्णं पर्यस्येत्प्रेतवत्पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सह ॥ १८३ ॥**

तद्विधिमाह दासीत्यादि। १८३। प्रेतवदिति प्रेतं यथैव दग्ध्वा * यथा जलपूर्णं कुम्भं * पश्चात् कृत्वा पादेनैव* प्रक्षिपेत्तथा सपिण्डबान्धवैः सह तस्या दासी। १। ज्ञातयादिसन्निधौ मामाद्वित्वर्गत्वा * जलपूर्णं * घटं पदा पर्यस्येत् * । २। ततो बान्धवैः सर्व्वैः सहाहोरात्र * मशौचं सर्व्वे ज्ञात्यादयो जनाउपवसीरन् * ततो यत्कार्य्यं तदाह द्वाभ्यां श्लोकाभ्यां। १८३।

**निवर्त्तेरंश्चतस्मात्तु सम्भाषणसहासने। दायाद्यस्य प्रदानञ्च यात्राचैव हि लौकिकी॥ १८४॥**

निवर्त्तेरंश्चेत्यादि। १८४। तस्मात् पतितात् कृतदासीघटा * ज्जनात् सम्भाषणं च सहासनं च * दायादाप्रदानञ्च लौ * किकी यात्राचनिवर्त्तेरन् ॥ १८४ ॥

**ज्येष्ठताचनिवर्त्तेत ज्येष्ठावाप्यञ्च यद्धनम्। ज्येष्ठांशं प्राप्नुयाच्चास्य यवीयानगुणतोधिकः॥ १८५ ॥**

ज्येष्ठताचेत्यादि। १८५। तस्मात्पतिताद्दासीघटकृता * ज्ज्येष्ठताचनिवर्त्तेत * ज्येष्ठप्राप्यं धनञ्चनिवर्त्तेत * तस्य प्राप्यं ज्येष्ठांशन्तु। १। अस्य पतितस्य * यवीयान्यो भ्राता * गुणतोऽधिक * स्तात्सप्राप्नुयात्। २। १८५ ॥

**प्रायश्चित्ते तु चरिते पूर्णं कुम्भमपां नवम्। तेनैव सार्द्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ॥१८६**

प्रायश्चित्ते त्वित्यादि ॥ १८६ ॥ तेन पतितेन प्रायश्चित्ते चरिते तेनैव कृतप्रायश्चित्तेन सार्द्धं * ते सर्व्वे जनाः पुण्ये जलाशये ॥ १ ॥ स्नात्वा नवं नूतनं कुम्भमपां * पूर्णं प्रास्येयुः प्रक्षिपेयुरिति * ततो यत्कार्य्यं तदाह सत्व प्स्वित्यादि। १८६।

**सत्वप्सु तं घटं प्रास्य प्रविश्य भवनं स्वकम्। सर्व्वाणि ज्ञातिकार्य्याणि यथापूर्व्वं समाचरेत्१८७**

सइत्यादि ॥ १८७ ॥ सकृतप्रायश्चित्त * उक्तविधिना तं घट * मप्सु प्रास्य स्वकं भवनं प्रविश्य * यथापूर्व्वं पूर्व्ववत् सर्व्वाणि ज्ञातिकार्य्याणि समाचरेत् ॥ १ ॥ १८७ ॥

एतमेव विधिं कुर्य्याद्योषित्सु पतितास्वपि । वस्त्रान्नपानं देयन्तु वसेयुश्च गृहान्तिके ॥१८८॥

एतमेवेत्यादि ॥ १८८ ॥ पतितासु योषित्स्वपि एतमेवोक्तं दासीघटविधिं कुर्य्यात् विशेषस्त्वेषः ॥१॥ तथा योषितो वस्त्रान्नपानं देयं तथा गृहान्तिके सर्व्वं रक्षणार्थं वसेयुश्च ॥ २ ॥ १८८ ॥

एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित्समाचरेत् । कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्॥१८९

एनस्विभिरित्यादि ॥ १८९ ॥ एनस्विभिर्ब्रह्महत्यादि पापिभिः अनिर्णिक्तैरकृतप्रायश्चित्तैः सह किञ्चिदर्थं न समाचरेत् ॥ १ ॥ कृतनिर्णेजनान् पुनः कर्हिचिन्न जुगुप्सेत् त्वमेवं पापकृदित्याख्याय । २ । १८९ ।

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः । शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ १९० ॥

बालघ्नांश्चेत्यादि । १९० । बालघ्नान् कृतघ्नान् शरणागतहन्तॄन् स्त्रीहन्तॄंश्च यथाविधि प्रायश्चित्तं चरित्वा त्वापि धर्मतो विशुद्धानपि न संवसेत् ॥ १ । १९० ॥

येषां द्विजानां सावित्री नानूच्येत यथाविधि । तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥१९१

येषामित्यादि । १९१ । द्विजानामिति द्विजवर्णानामेव न तु संस्काराद्द्विजत्वादिति ततोपनयनानां तेषां सावित्र्यानुवचनात् । १ । येषां द्विजवर्णानां यथाविधि सावित्री नानूच्येत नोपनयनं भवति । २ । तान् व्रात्यान् व्रातपुत्रादीन् सर्व्वांस्त्रीन् कृच्छ्रान् प्राजापत्यसंज्ञकान् चारयित्वा यथाविधि आचार्य उपनाययेत् ३ । येषामित्यनिर्द्देशोक्त्या न केवलं व्रात्यानां व्रातपुत्र पौत्रादीनामपीत्युक्तम् ।४। अन्यथा ये व्रात्यास्तांस्त्रीन् कृच्छ्रांश्चारयित्वोपनाययेत् इत्युक्तं वसिष्ठेन भवेत् । ५ । तस्मात् प्रमादिना यदिदं व्याख्यातं येषां ब्राह्मण क्षत्रिय विशामातुक्काल्पिकः काले पुरा उपनयनं यथाशास्त्रं न स्यात् । ६ । तान् प्राजापत्यत्रयं चारयित्वा यथाशास्त्र उपनयेदिति ॥ ७ । तदसाधु ब्राह्मणादीनां ह्यष्टम वर्षैकादशद्वादश वर्षकालो मुख्यः स्तत्तद्द्विगुणकालो गौण आतुक्काल्पिकः । ८ । तत ऊर्द्ध्वमकालोऽमत्यनुकल्पकाल इति याज्ञवल्क्येनव्रात्यानामुक्तं सव्रात्यास्तोममर्हन्तीत्युक्तं नान्यः साधकं न हि सर्व्वः सर्व्वं प्रवक्ति । ९ । एतेन व्रात्यात् सवर्णायां भार्य्यायां प्रजाताः पुत्राः संस्कार्य्या न तु संस्कार्य्या इति स्थापितम् । १० । यदि व्रात्यस्य पुत्रपौत्रादीनां उपनयनं नास्तीत्याच्यते तत् हेयं प्रस्तुतप्रायश्चित्तं नैव सङ्गच्छते तदयथाप्रदर्शिते ।११। यस्य पितापितामहौ अनुपनीतौ स्यातां तस्य संवत्सरं त्रैविद्यकं व्रतं चर्य्याम् ।१२। यस्य प्रपितामहादेर्नानुस्मर्य्यत उपनयनं तस्य द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्य्यमिति ।

एतद्वचनं प्रमादिभिर्ज्ञातः* विषयतयाऽथमे इवा प्रपितामहादीनामनुपनयने पौत्रादिर्ब्रात्यः स्यात् अतद्यालात्
ये द्विब्रात्याः स्यात्। एवमनुपनीतानां उपनयनं वक्ष्यमाणेनैव स्यात्। १४। प्रकृतानि च कृतीनाञ्च* पा
पानामपनूतये। प्रक्रियाभावे पापापत्तप्रायश्चित्तं प्रकल्पयेत् * इतिवचनं नप्राय * श्चित्तं प्रकल्प्यं भवति। १५।
परवचनं नापित्वौनञ्च कृच्छ्रानुचारायदिति। १९१।

प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः। ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत् १९२

प्रायश्चित्तमित्यादि। १९२। ये द्विजा विकर्म्मस्थाः स्वस्वाकर्म्म* विपर्ययकर्म्मस्थाः सन्तः* प्रायश्चित्तं चिकीर्ष
न्ति॥ १॥ ये च द्विजा ब्रह्मणा वेदेन परित्यक्ता* उपनयनाभावेन* गायत्र्या वेदेन चहीनाः। २। अनधीतवेदाः*
प्रायश्चित्तं चिकीर्षन्ति। २। तेषां विकर्म्मस्थानामनधीत* वेदानामप्येतत्कृच्छ्र* त्रयं तत्* प्रायश्चित्तमादिश
दितिशेषम। ३। १९२।

यद्गर्हितेनार्जयन्ति कर्म्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुद्धन्ति जप्येन तपसैव च॥१९३॥

यद्गर्हितेनेत्यादि॥ १९३॥ ब्राह्मणा गर्हितेन कर्म्मणा धनं *यदर्जयन्ति तत्साधनस्यैव* त्यागेन शुद्धन्ति
गायत्रीजप्येन* च शुद्धन्ति तपसा चैव शुद्धन्ति॥ १॥ १९३॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः। मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्र
हात्॥ १९४॥

जपित्वेत्यादि। १९४। ब्राह्मणः खल्वसत्प्रतिग्रहात् गोष्ठे * मासं पयः पीत्वा तिष्ठन् * समाहितो गायत्र्या
स्त्रीणि * सहस्राणि जपित्वा मुच्यते। १९४। ततः किं कुर्य्यादित्यत आह

उपवासकृशं तन्तु गोव्रजात् पुनरागतम्। प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम् १९५

उपवासकृशमित्यादि। १९५। मासं तथाकल्पपयः पानमात्रे * णोपवासेन कृशं तं * गोव्रजात् पुनः
स्वगृह * मागतं गुरून् विप्रांश्च * प्रणतं तं कृतव्रतम्। १। हरवो विप्राः सौम्यादि * मत्तोभिः साम्यमिच्छसी *
तिप्र विपृच्छेयुरिति। १९५। तैः पृष्टः किं कुर्य्यादित्यत आह *

सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसं गवाम्। गोभिः प्रवर्त्तिते तीर्थे कुर्युस्तस्य परिग्रहम् १९६

सत्यमुक्त्वाऽप्रतिज्ञाय इत्यादि । १९६ । सत्यकृतप्रायश्चित्तः * स पुनरेवम्बिधेषु पुनरसत्प्रतिपन्नं * न करिष्यामीति प्रतिज्ञां कृत्वा । १ । गवां यवसं गोग्रासं * विकिरेत्तस्मिंश्च * गोभिः प्रवर्त्तिते यवसभक्षणे * स्थाने तीर्थीकृते तस्य * परिगृह्णन्ति विप्राः कुर्युः । । १९६ ॥

**व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च । अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥ १९७ ॥**

व्रात्यानामित्यादि । १९७ । व्रात्यानां व्रात्यस्तोमादि * प्रायश्चित्तमकृत्वा ये * व्रात्याश्रमिणो भवन्ति । १ । तेषां याजनं कृत्वा त्रिभिः कृच्छ्रैः * स तत्पापं व्यपोहतीति । २ । व्रात्यानां व्रात्यस्तो * मादिप्रायश्चित्तं * कारयित्वोपनायने न पापं भवेत् । ३ । अन्यथा ब्रह्महत्यादि *पापप्रायश्चित्तं दत्वा* याजने पि पापं भवेत् । ४ । येषां द्विजानां सावित्रीत्यादिपूर्व्वं * वचनविरोधश्च स्यात् । ४ । परेषामन्यातीनामन्त्यकर्म च* प्रेतकर्म दाहकाले * पिण्डदानकर्म कृत्वा * तत्पापं त्रिभिः कृच्छ्रैर्व्यपोहति । ५ । अहीनं नामाभिचारं * कृत्वा च त्रिभिः कृच्छ्रैः स तत् * पापं द्विजो व्यपोहति । ६ । एतत्प्रायश्चित्तविधानं साग्निका * धीतवेदानां निरग्नि * निर्वेदानां न्तु त्रैदान * धायनप्रात्ययाजनात् * दाखिलप्रायश्चित्तं कार्य्यं । ७ । १९७ ।

**शरणागतं परित्यज्य वेदं विप्लाव्य च द्विजः । संवत्सरं यवाहारस्तत्पापमपसेधति ॥ १९८ ॥**

शरणागतमित्यादि । १९८ । यो द्विजः शरणागतं * परित्यज्य स रक्षेत्तस्य * यश्च द्विजो वेदं विप्लावयेद्यश्च * यथाश्रमे यावद्वेदाध्ययनकाले । १ । तावदध्यापनं न कृत्वा * शिष्यं समावर्त्तयेत्तस्य * संवत्सरं यवाहारः * संस्तत्पापमपसेधति ॥ १९८ ॥

**श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च । नराश्वोष्ट्रवराहैश्च प्राणायामेन शुध्यति ॥ १९९ ॥**

श्वशृगालेत्यादि । १९९ । श्वशृगालादिभिर्दष्टो यो द्विजः स * प्राणायामेन शुद्ध्यति ॥ १९९ ॥

**षष्ठान्नकालता मासं संहिताजप एव वा । होमाश्च शाकला नित्यमपाङ्क्त्यानां विशोधनम् ॥ २०० ॥**

षष्ठान्नेत्यादि ॥ २०० ॥ अपाङ्क्त्यानामिति ये स्तेनपतिताः क्लीव* इत्याद्युक्तानां पङ्क्तितो भोजने *मासं षष्ठान्नकालता विशोधनं । १ । द्वाहमुपोष्य तृतीये दिने मध्याह्ने * पिन भुक्त्वा सायं कुर्वीत तावत् * मासमेकं कार्या । २ । अथवा मासं वेदस्य संहितायाः * शाखायाजपोऽस्य वा पाठः । ३ । मासं नित्यं शाकला होमाश्च कार्याः * देवकृतस्यैनसोऽवयजनम * सीत्यादिभिरष्टाभिः * मन्त्रैरष्टौ होमाः कार्याः । ४ । इतित्रिविधं प्रायश्चित्तं भवति * तदपाङ्क्त्यसहभोजने । २०० ।

उष्ट्रयानंसमारुह्यखरयानञ्चकामतः। स्नात्वातुविप्रोदिग्वासाःप्राणायामेनशुध्यति॥२०१॥

उष्ट्रेत्यादि।२०१। कामतउष्ट्रपृष्ठयानं * खरपृष्ठयानं चसमा * रुह्यविप्रोदिग्वासास्तु *स्नात्वाप्राणाया मेनशुद्ध्यति।२०१

विनाद्भिरप्सुवाप्यार्त्तःशारीरंसन्निवेश्यच। सचेलोवहिराप्लुत्यगामालभ्यविशुध्यति॥२०२

विनाद्भिरित्यादि।२०२। आर्त्तोमूत्रपुरीषवेगार्त्तोद्विजोयद्यद्भिर्विनाशारीरं * मूत्रंपुरीषंवासंविमृज्य जेत् * अथवाप्सुजलेशारीरंच्छलं * पुरीषंवासंविमृत परित्यजेत्।१। तदासचेलोवहिः शरीर माप्लुत्य * स्नात्वागामालभ्य * स्पृष्ट्वाविशुद्ध्यति।२०२।

वेदोदितानांनित्यानांकर्म्मणांसमतिक्रमे। स्नातकव्रतलोपेचप्रायश्चित्तमभोजनम्॥२०३॥

वेदोदितानामित्यादि।२०३। यदिकदाचिन्नित्यानां * वेदोक्तकर्म्मणां समतिक्रमःस्यात् * इत्यथवास्नात कव्रत * लोपःस्यात्तदात्वभोजनं शुद्धिः।२०३।

हुङ्कारंब्राह्मणस्योक्त्वात्वंकारञ्चगरीयसः। स्नात्वानश्नन्नहःशेषमभिवाद्यप्रसादयेत्॥२०४॥

हुंकारमित्यादि।२०४। लोकव्यवहारे ब्राह्मणसम्बन्धे * क्रोधेनहुमितिकृत्वा * गरीयसोजनस्य च * सम्बन्धेत्वंकारंकृत्वा।१। स्नात्वातदहःशेषमनश्नंस्तत्र * ब्राह्मणंगरीयांसञ्च *. प्रणम्यप्रसादये दिति।२०४। अथात्रिसंहितायां॥ एकवृक्षसमारूढश्चाण्डालोब्राह्मणस्तथा फलान्यत्तिस्थितस्तत्र प्रायश्चित्ती कथंभवेत्। ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत्। अहोरात्रोषितोभूत्वापञ्च गव्येन शुद्ध्यति।४१॥ चाण्डालेनतु संस्पृष्टे स्नानमेव विधीयते। उच्छिष्टस्तेनसंस्पृष्ट स्त्रिरात्रेण विशुद्ध्यति।४४। बहूनामेकलग्नानामेकश्चेदशुचिर्भवेत्। अशौचमेकमात्रस्यानेतरे षां कथञ्चन।४५। एकपङ्क्त्युपविष्टानां भोजनेषु पृथक् पृथक्। यद्येकोलभते नीलीं सर्व्वतेऽशुचयःस्मृताः॥ ४६॥ यस्यपटे पटक्षत्रे नीलीरागोहिदृश्यते। त्रिरात्रं तस्यदातव्यं शेषास्त्वेोपवासिनः।४७। आदितोऽस्तमि तेऽस्पृश्यां स्पृशन्नीरोदिवाजलम्। तेनैवसर्व्वशुद्धिःस्याच्छुनस्पृष्टन्तु वर्जयेत्।४८। देशंकालं वयःशक्तिं पापञ्चा वेक्ष्ययत्नतः। प्रायश्चित्तं प्रकल्प्यं स्याद्यत्रचोक्तानिष्कृतिः।४९। अनादिष्टेषुपापेषुचान्द्रायणमथोदितम्

योऽश्नीयाद्विवाहाग्नि ब्रह्मघ्न इति स्मर्यते। अन्नं तस्यानभोक्तव्यं श्वपाकोच्छिष्टसम्भृतः। ५०। श्वपाकश्च भुञ्जानःप्रायश्चित्तं चरेद्द्विजः। प्राणानप्सु त्रिरायम्य घृतं प्राश्य विशुध्यति। ५१। महापातकिसंस्पृष्टे स्नानमेव विधीयते। संस्पृष्टश्च यदा भुङ्क्ते स्नानमेव विधीयते। ५२। पतितैः सह संसर्गं मासार्द्धं मासमेव वा। गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति॥ ५३॥ कृच्छ्रार्द्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः। अबुद्धिपूर्वं तद्भुक्त्वा कृच्छ्रं सान्तपनं चरेत्। ५४। पतितान्नं यदा भुङ्क्ते भुङ्क्ते चाण्डालवेश्मनि। मासार्द्धं तु पिबेद्वारि इति शातातपोऽब्रवीत्। ५५। यश्चाण्डालीं द्विजो गच्छेत् कथञ्चित्काममोहितः। त्रिभिः कृच्छ्रैर्विशुद्ध्येत प्राजापत्यानुपूर्व्वशः॥ ५६॥ पतितात्तान्नमादाय भुङ्क्ते च ब्राह्मणो यदि। कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्द्दिशेत्॥ ५७॥ अनाहृतास्तु शूद्रेभ्यश्छित्वा काष्ठलोष्ट्रतृणानि च। न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत्। ५८। चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम्। द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत्ततःपरं न भुञ्जीत त्यक्त्वान्नं स्नानमाचरेत्॥६०॥ भुञ्जानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा। त्रिरात्रेण विशुद्धिः स्यादुच्छिष्टस्तु दिनेन तु। ६१। आरूढो नैष्ठिकं धर्म्मं यस्तु प्रच्यवते पुनः॥ चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत्॥ ६२॥ पश्वेश्याभिगमने प्राजापत्यं विधीयते। गोगमने मनुप्रोक्तं व्रतं चान्द्रायणं चरेत्॥६३॥ उदक्या सूतिका वापि अन्त्यजा स्पृशते यदि। त्रिरात्रेण विशुद्धिः स्यादिति धर्मः पुरातनः॥ ६४॥ संसर्गं यदि गच्छेत्तु उदक्या वा तथान्त्यजैः। प्रायश्चित्ती स विज्ञेयः पूर्व्वं स्नानं समाचरेत्॥ ६५। एकरात्रं चरेन्मूत्रे पुरीषे तु दिनद्वयम्। दिनत्रयं तथा पाने मैथुने पञ्च सप्त वा॥ ६६॥ भोजने त्वप्रक्षालितानां प्राजापत्यं विधीयते। दन्तकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः ६७॥ रजस्वला यदा स्पृष्टा श्वानचाण्डालवायसैः। निराहारा भवेत्तावत्स्नात्वा कालेन शुध्यति॥ ६८॥ रजस्वला यदा स्पृष्टा उष्ट्रजम्बुकगर्द्दभैः। पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति॥ ६९। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या। एकरात्रं निराहारा पञ्चगव्येन शुध्यति॥ ७०॥ स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या क्षत्रिया च या। त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा। ७१। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मणी वैश्यसम्भवा। चतूरात्रं निराहारा पञ्चगव्येन शुध्यति। ७२। स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रसम्भवा। षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः। ७३। अकामतश्चरेदेवं ब्राह्मणी सर्व्वतः स्पृशेत्। चतुर्णामपि वर्णानां शुद्धिरेष प्रकीर्त्तिता ७४। उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः। भोजने मूत्रउच्चारे शङ्खस्य वचनं यथा। ७५। स्नानं ब्राह्मण संस्पर्शे जपहोमौ तु क्षत्रिये। वैश्ये नक्तञ्च कुर्व्वीत शूद्रे चैव उपोषितम्। ७६। चर्म्मकारो रजको वेणो धीवरो नटकस्तथा। एतान्स्पृष्ट्वा द्विजो मोहादाचामेत्प्रयतोऽपि सन्। ७७। एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत्। उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुध्यति। ७८। यस्तु छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति।

तत्स्नानं प्रकुर्व्वीत घृतं प्राश्य विशुद्ध्यति । ७९ । अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत् । मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा । ८० । वृथा मिथ्योपयोगेन भ्रूणहत्याव्रतं चरेत् । अब्भक्षो द्वादशाहेन पराकेण विशुध्यति । ८१ । शठञ्च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् । निर्गुणं सगुणो हत्वा पराकव्रतमाचरेत् । ८२ । उपपातकसंयुक्तो मासमेकं पिबेद् यदि । तस्यास्य संस्कारकर्त्ता च प्राजापत्यद्वयं चरेत् । ८३ । अभुञ्जानोऽतिकृच्छ्रं कदाचित् स्पृशति द्विजः । त्रिरात्रमाचरेन्नक्तं निशि द्वन्द्वमथाचरेत् । ८४ । पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणो यः सुरां पिबेत् । उभौ तौ तुल्यदोषौ च वसतो नरके चिरम् । ८५ । ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् । ८६ । राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम् । स्वसुतान्नञ्च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् । ८७ । स्वसुतालप्रजातायामश्नीयाच्चेद्‌ यदि पिता । अन्नं भुक्त्वा त्वमायायां पूयं स नरकं व्रजेत् । ८८ । अधीत्य चतुरो वेदान् सर्व्वशास्त्रार्थतत्त्ववित् । नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः । ८९ । नवश्राद्धे त्रिपक्षे च षण्मासे मासिकाब्दिके । पतन्ति पितरस्तस्य यो भुङ्क्ते नापदि द्विजः । ९० । चान्द्रायणं नवश्राद्धे पराकोमासिके तथा । त्रिपक्षे चैव कृच्छ्रः स्यात् षण्मासे कृच्छ्रमेव च । आब्दिके पादकृच्छ्रः स्यादेकाहं पुनराब्दिके । ९१ । ब्रह्मचर्य्यमनाधाय मासश्राद्धेषु पर्व्वसु । द्वादशाहे त्रिपक्षाब्दे यस्तु भुङ्क्ते द्विजोत्तमः । पतन्ति पितरस्तस्य ब्रह्मलोकं गता अपि । ९२ । एकादशाहे ऽहोरात्रं भुक्त्वा सञ्चयने त्र्यहम् । उपोष्य विधिवद्विप्रः कुष्माण्डैर्जुहुयाद्‌ घृतम् । ९४ । पक्षे वा यदि वा मासे यस्यान्नाश्नन्ति वै द्विजाः । भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् । ९५ । हीनवर्णे च यः कुर्य्यादज्ञानादभिवादनम् । तत्स्नानं प्रकुर्व्वीत घृतं प्राश्य विशुद्ध्यति । ९६ इति । विष्णुसंहितायाञ्च ब्रह्महत्यादिपातकेषु प्रायश्चित्तमुक्त्वा चोक्तं तद्‌ यथा । ९७ । यदुक्तं तत्प्रकीर्णं प्रकीर्णपातकं ज्ञात्वा गुरुत्वमथ लाघवम् । प्रायश्चित्तं बुधः कुर्य्याद् ब्राह्मणानुमतः सदा । ९८ । इति । याज्ञवल्क्येनाप्युक्तं अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन च । धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकताम् । ९९ । देशं कालं वयः शक्तिं पापञ्चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद्‌ यत्र चोक्ता न निष्कृतिरिति । १०० । अविद्याञ्च लक्ष्यीकृत्योक्तमेतदेक वचनं प्रसिद्धं नताभ्यां रचितं । १०१ इत्येवं मनुादिभिर्यस्य पापस्य यत्प्रायश्चित्तमुक्तं तत् पापी यदि तत्प्रायश्चित्तं न कृत्वा म्रियते । १०१ । समृत्वा तत्तन्नरकं गत्वा तन्नरकभोगावसाने च दुष्टमनुष्येषु पुनर्जायते स तत्तत्पापचिह्नवान् स्यात् । १०२ । तच्चिह्नं पूर्व्वमुक्तं तच्चिह्नं दृष्ट्वा स्व तत्पापप्रायश्चित्तं कुर्य्यादिति शातातपवचनेन निर्णयं । १०४ । शातातपेन चतत्तच्चिह्नोक्ता प्रायश्चित्तं यद्‌ यदुक्तं तद्विकल्प इति निर्णयं तत्प्रदर्शयते यथा । १०५ । प्रायश्चित्तविहीनानां महापातकिनां नृणाम् । नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥ १०६ ॥

ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा । विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०५

ताडयित्वेत्यादि ॥ २०५ ॥ ब्राह्मणं गरीयांसं वा * क्रोधेन तृणेनापि ताडयित्वा * कण्ठे वा वाससा वा बध्वा । १ । विवादे विनिर्जित्य वा प्रणिपत्य * स्तुतिवाक्यात् प्रसादयेत् । २०५ ।

अवगूर्य त्वब्दशतं सहस्रमभिहत्य च । जिघांसया ब्राह्मणस्य नरकं प्रतिपद्यते ॥ २०६ ॥

अवगूर्येत्यादि । २०६ । ब्राह्मणस्य जिघांसया त्ववगूर्य * दण्डाद्युद्यम्य वर्षाणां शतं * शतमभिहत्य वर्षाणां सहस्रं * अकृतप्रायश्चित्तस्तु * नरकं प्रतिपद्यते । २०६ ।

शोणितं यावतः पांसून्संगृह्णाति महीतले । तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत् ॥ २०७ ॥

शोणितमित्यादि । २०७ । अभिहतस्य ब्राह्मणस्य शोणितं * महीतले पतितं यावतः पांशून * संगृह्णाति तावन्त्यब्दसहस्राणि * तदुक्तपातककर्त्ता नरके वसेत् । २०७ ।

अवगूर्य चरेत्कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥ २०८ ॥

अवगूर्येत्यादि । २०८ । ब्राह्मणमवगूर्यैव * कृच्छ्रं प्राजापत्यं चरेत् * निपातने दण्डाद्यभिघाते कृते * ब्राह्मणमतिकृच्छ्रं व्रतं चरेत् । १ । विप्रस्य शोणितमुत्पाद्य पुरुषः * कृच्छ्रातिकृच्छ्रौ कुर्वीत । २०८ ।

अनुक्तनिष्कृतीनां तु पापानामपनुत्तये । शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत् ॥ २०९ ॥

अनुक्तेत्यादि । २०९ । इहमनूपदिष्टेष्वप्रोक्ते * धर्म्मशास्त्रेषु येषां पापानां न * निष्कृतिरुक्तास्तेषाम * अनुक्तनिष्कृतीनां पापानां । १ । अपनुत्तये पापिनां * शक्तिञ्चावेक्ष्य पापञ्चावेक्ष्य विद्वान् * प्रायश्चित्तं प्रकल्पयेत् । २ । इदमुक्तं मनुसंहितायां * धर्म्मवक्तारो ऽत्रिविष्णु * प्रभृतयो ऽत्रानुक्तपापनिष्कृति * स्वः स्वसंहितायां । ३ । तत्रापानादिष्टपाप प्रायश्चित्तं * मतिपूर्व्वकाभ्यां चान्द्रायणं * उक्तं तथानान्तम सर्व्वं * क्रमेणात्रपद्यते । ४ । तद्यथात्रिसंहितायां * ब्रह्महा प्रथमश्चैव * द्वितीयो गुरुतल्पगः । तृतीयस्तु सुरापो ऽथ * चतुर्थः स्तेन उच्यते । ५ । पापिनाञ्चैव संसर्गः * पञ्चमं पातकं महत् । एषामेव विशुद्ध्यर्थं चरेद् द्वुपाण्यनुक्रमात् । ६ । त्रीणि कृच्छ्राणि कामश्चेद् ब्रह्महत्यां व्यपोहति । अर्द्धन्तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते । ७ । षड्भागो द्वादशश्चैव विट्शूद्रयोर्वधे भवेत् । त्रीन्मासान् नक्तं भुञ्जीयाद्भूमौ शयनमेव च । ८ । स्त्रीघाती पञ्चाशत्पापं चरेत्कृच्छ्राब्दमेव च । रजकः शैलूषश्चैव वेणुकर्म्मोपजीविनः । एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत् । ९ । सर्व्वान्त्यजानां गमने भोजने संप्रवेशने । पराकेण

द्विजः। कृच्छ्रपादेन शुद्ध्येत आपस्तम्बोऽब्रवीन्मुनिः ॥ २८ ॥ श्लेष्मोपानह्विण्मूत्र स्त्रीरजोमद्यमेव च। एभिः सन्दूषिते कूपे तोयं पीत्वा कथं शुचिः ॥ २९ ॥ एकं द्व्यहं त्र्यहञ्चैव द्विजातीनां विशोधनम्। प्रायश्चित्तं पुनस्त्वेवनक्तं शूद्रस्य दापयेत् ॥ ३० ॥ सद्योवान्ते सचेलस्तु विप्रस्तु स्नानमाचरेत्। पर्युषिते त्वहोरात्रमति रिक्ते दिनत्रयम् ॥ ३१ ॥ शिरःकण्ठोरुपादेषु सुरया यस्तु लिप्यते। दशषट् चतुरेकाहं चरेदेवमनुक्रमात् अत्राप्युदाहरन्ति ॥ ३३ ॥ प्रमादान्मद्यपिष्टं वा सकृत्पीत्वा द्विजोत्तमः। गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति ॥ ३४ ॥ मद्यपस्य निषादस्य यस्तु भुङ्क्ते द्विजोत्तमः। न देवा भुञ्जते तस्य न पिबन्ति च पितृजलम् ॥ ३५ ॥ चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधिता। प्राजापत्येन शुद्ध्येत ब्राह्मणान् भोजयेद्दश ॥ ३६ ॥ ये च प्रव्रजिता विप्राः प्रव्रज्याग्निजलावहाः। अनाशकान्निवर्त्तन्ते चिकीर्षन्ति गृहस्थितिम् ॥ ३७ ॥ धारयेत्त्रीणि कृच्छ्राणि चान्द्रायणमथापि वा। जातकर्मादिकं प्रोक्तं पुनः संस्कारमर्हति ॥ ३८ ॥ नाशौचं नोदकं नाम नोपवासस्तु कल्पते। ब्रह्मदण्डहतानान्तु न कार्यं कटधारणम् ॥ ३९ ॥ स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत्। गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ॥ ४० ॥ चाण्डालस्य च संस्पृष्टं विण्मूत्रस्पृष्टमेव वा। त्रिरात्रेण विशुद्धिः स्याद्भुक्त्वोच्छिष्टं तथाचरेत् ॥ ४१ ॥ उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च। प्रायश्चित्तं चरेत्पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥ ४२ ॥ वर्णबाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः। प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचकम् ॥ प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥ १०७ ॥ महापातकजं चिह्नं सप्तजन्मानि जायते। उपपापोद्भवं पञ्चत्रीणि पापसमुद्भवम् ॥ १०८ ॥ रोगा दुष्कृतिजा नृणां शान्तिचोपक्रमैः शमम् ॥ जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ १०९ ॥ पूर्वजन्मकृतं पापं नरकस्य परिक्षये। बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः ॥ ११० ॥ कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा। मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥ १११ ॥ दुष्टव्रणो गण्डमाला पक्षाघातोऽक्षिनाशनम् ॥ इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ ११२ ॥ जलोदरं यकृत्प्लीहा शूलरोगो व्रणास्तथा ॥ श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ॥ ११३ ॥ रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः ॥ दण्डापतानकश्चित्रवपुःकम्पविचर्चिकाः ॥ ११४ ॥ वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥ अर्श आद्या नृणां रोगा अतिपापोद्भवन्ति हि ॥ ११५ ॥ अन्ये च बहवो रोगा जायन्ते वर्णसङ्कराः। उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात् ॥ ११६ ॥ महापापेषु सर्वं स्यात्तदर्द्धमुपपातके ॥ दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ॥ ११७ ॥ अथ साधारणं तेषु गोदानादिषु कथ्यते ॥ गोदाने वत्ससंयुक्ता गौः सुशीला च पयस्विनी ॥ ११८ ॥ वृषदाने शुभोऽनड्वान् शुक्लाम्बरः सकाञ्चनः ॥ निवर्त्तनानि भूदाने दश दद्याद्द्विजातये ॥ ११९ ॥ दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्त्तनम् ॥ दश तान्येव गोचर्म्म दत्वा स्वर्गे महीयते ॥ १२० ॥

सुवर्णं शतनिष्कञ्च तदर्द्धं वा यथाबलम्। अन्नदाने च भूयश्च शय्यां सोपस्करां ददेत् ॥ १२१ ॥ महिषीं च महिषीदाने दद्यात् स्वर्णायुधान्विताम्। दद्यादेतं महादाने सुवर्णफलसंयुतम् ॥ १२२ ॥ लक्षचम्पकपुष्पैश्च दद्याद्वै व्रतार्चने। दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ १२३ ॥ रुद्रं जपेल्लक्षपुष्पैः पूजयित्वा त्र्यम्बकम्। एकादशजपे रुद्रान् दशांशं गुग्गुलुघृतैः ॥ १२४ ॥ हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्वरुणदैवतैः। शान्तिकं गणशान्तिश्च ग्रहशान्तिक्रमपूर्व्वकम् ॥ १२५ ॥ धान्यदाने शुभं धान्यं खारीषष्टिमितं स्मृतम्। वस्त्रदाने पट्टवस्त्रद्वयं कर्पूरसंयुतम् ॥ १२६ ॥ दशपञ्चाष्टचतुरस्त्रयश्चाथ द्विजान् शुभान्। विधायार्घ्यं च तेषां पूजां सङ्कल्प्य निजकामया ॥ १२७ ॥ धेनुं दद्याद्द्विजातिभ्यो दक्षिणाञ्चापि शक्तितः। अलङ्कृताय यथाशक्ति वस्त्रालङ्कारगं द्विजाय ॥ १२८ ॥ यावेद्दन्नप्रमाणेन प्रायश्चित्तं यथोदितम्। तेषामनुज्ञया कुर्यात् प्रायश्चित्तं यथाविधि ॥ १२९ ॥ पुनस्तान् परिपूर्णार्थान् सर्वे वै द्विजवरान् द्विजान्। सन्तुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे ॥ १३० ॥ जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि। सर्व्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः ॥ १३१ ॥ ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः। सर्व्वदेवमया विप्रा न तद्वचनमन्यथा ॥ १३२ ॥ उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः। विप्रैः सम्पादितं सर्व्वं सम्पन्नं तस्य तत्फलम् ॥ १३३ ॥ सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत् ॥ १३४ ॥ ब्राह्मणा जङ्गमं तीर्थं निर्जलं सर्व्वकामिकम्। तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः ॥ १३५ ॥ तेभ्योऽनुज्ञामभिप्राप्य प्रणम्य च तथा शिरः। भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः ॥ १३६ ॥ इति शातातपीये कर्म्मविपाके साधारणविधिः प्रथमोऽध्यायः ॥ १ ॥ ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते। प्रायश्चित्तं प्रकुर्व्वीत स तत्पातकशान्तये ॥ १ ॥ चत्वारः कलशाः कार्य्याः पञ्चरत्नसमन्विताः। पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः। अश्वस्थानादिमृद्युक्तास्तीर्थोदकप्रपूरिताः। कषायपञ्चकोपेता नानाविधफलान्विताः। सर्व्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः। रौप्यमष्टपलं पद्मं मध्यकुम्भोपरि न्यसेत्। तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्मुखम्। पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्म्मितम्। अर्च्चयेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम्। यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि। पूर्व्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिणः। पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनैः ॥ दशांशेन ततो होमो ग्रहशान्तिपुरःसरम्। मध्यकुम्भे विधातव्यो घृताक्तैस्तिलहेमभिः। द्वादशाहमिदं कर्म्म समाप्य द्विजपुङ्गवः। तत्र पीठे यजमानमभिषिञ्चेद् यथाविधि। ततो दद्याद् यथाशक्ति गोभूहेमतिलादिकम्। ब्राह्मणेभ्यस्तथा देयमाचार्य्याय निवेदयेत्। आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः। प्रीताः सर्व्वे व्यपोहन्तु मम पापं सुदारुणम्। इत्युदीर्य्य तत्कर्म्मक्रान्तममाचार्य्यं समापयेत्। एवं विधाने विहिते श्वेतकुष्ठी विशुद्ध्यति ॥ २ ॥ १ ॥ कुष्ठी गोवधकारी स्यान्नरकान्ते ऽन्त्यजनि

ष्कृतिः। स्नापयेद् घटमेकन्तु पञ्चोदकसंयुतम्। रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम्। रक्तकुम्भन्ततः कृत्वा स्थापयेद्दक्षिणां दिशम्। ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम्। तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम्। यजेत् पुरुषसूक्तेन पापं मे शाम्यतामिति। यमपारायणं कुर्य्यात्तत्काले सामवित्। इमां मंस ग्रंथेर्नमापावमानीभिषेचने। विहिते धर्म्मराजं तमाचार्य्याय निवेदयेत्। यमोपि महिषारूढो दण्डपाणिर्भयावहः। दक्षिणाशापतिर्देवो मम पापं व्यपोहतु। इत्युच्चार्य्य विसृज्यैनं मासं रुद्रं जपन्नाचरेत्। ब्रह्मगोवधरोगेभ्यः प्रायश्चित्तं न निष्कृतिः। २। पितृहा चेतनाहीनो मातृहान्धः प्रजायते। नरकान्ते प्रकुर्व्वीत प्रायश्चित्तं यथाविधि। ३। प्राजापत्यानि कुर्व्वीत त्रिंशच्चैव विधानतः। व्रतान्ते कारयेन्नावं ४० वर्णपलसम्मिताम्। कुम्भं रूप्यमयञ्चैव ताम्रपात्राणि पूर्व्ववत्। निष्कद्वयन्तु कर्त्तव्यो देवः श्रीवत्सलाञ्छनः। पट्टवस्त्रेण संवेष्ट्य पूजयेच्च विधानतः। नावं द्विजाय तां दद्यात्सर्व्वोपस्करसंयुताम्। वासुदेव जगन्नाथ सर्व्वभूताशयस्थित। पातकार्णवमग्नं मां तारय प्रणतार्त्तिहृत्। इत्युदीर्य्य प्रणामाथ ब्राह्मणाञ्च विसर्जयेत्। अन्येभ्योपि यथाशक्ति विप्रेभ्यो दक्षिणां ददेत् ॥ ३ ॥ स्वसृघाती तु बधिरो नरकान्ते प्रजायते। मूको भ्रातृवधे चैव तस्येयं निष्कृतिः स्मृता॥ सोपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणं व्रतम्। व्रतान्ते पुस्तकं दद्यात् सुवर्णफलसंयुतम्। इमं मन्त्रं समुच्चार्य्य ब्राह्मणीं तां विसर्जयेत्। सरस्वति जगन्मातः शब्दब्रह्माधिदेवते। दुष्कर्म्मकरणात् पापात्पाहि मां परमेश्वरि। ४। बालघाती च पुरुषो मृतवत्सः प्रजायते। ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्धये। श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि। महारुद्रजपश्चैव कारयेच्च यथाविधि॥ षडङ्गैकादशैरुद्रै रुद्रः समभिधीयते। रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्त्तितः॥ एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते। जुहुयाच्च दशांशेन दूर्व्वयायुतसंख्यया। एकादश स्वर्णनिष्काः प्रदातव्याः सदक्षिणाः। पलान्येकादश तथा दद्याद्द्विजाय भारत। अन्येभ्योपि यथाशक्ति द्विजेभ्यो दक्षिणां दिशेत्॥ स्नापयेद्दम्पती पश्चान्मन्त्रैर्वरुणदैवतैः। आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च॥ ५ ॥ गोत्रहा पुरुषः कुष्ठी निर्व्वंशश्चोपजायते॥ स च पापविशुद्ध्यर्थं प्राजापत्यशतं चरेत्। व्रतान्ते मेदिनीं दत्वा शृणुयादथ भारतम्॥ ६ ॥ स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश। दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान्॥ ७ ॥ राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः। गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः। घृतधेनुप्रदानेन तिलधेनुप्रदानतः। इत्यादिनाक्रमेणैव क्षयरोगः प्रशाम्यति॥ ८ ॥ याज्ञवल्क्येनतूक्तं * ब्रह्महा क्षयरोगी स्या* दिति पुनरत्र च ब्रह्मघ्नः क्षयरोगित्व* मिति पूर्व्वमुक्तं ततो* राजहेति विरुध्यते ॥९॥ नैवं यागस्थक्षत्रियवधेपि * ब्रह्महत्यासमपापात्। रत्नाम्बुहीनेभाहन्ता जायते सच मानवः। प्राजापत्यानि

चत्वारि समयानानिवोत्सृजेत् ॥ ९ ॥ दुष्टापतानकयुतः शूद्रहन्ताभवेन्नरः। प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणां ॥ १० ॥ कासृणाश्च वधे चैव रूक्षभावः प्रजायते। स मत्तत्पापशुद्धार्थं दातव्योऽष्टभःस्थितः ॥ ११ ॥ सर्व्वकार्य्येषु सिद्धार्थो गजघातीभवेन्नरः। प्रासादं कारयित्वा तु गणेश प्रतिमां न्यसेत्। गणनाथस्य मन्त्रन्तु मन्त्रोक्तलक्षमितं जपेत्। कुलावसमार्कैः पुष्पैश्च गणशान्तिपुरःसरम ॥ १२ ॥ उष्ट्रे विनिहते चैव जायते विकृतास्वरः। सतत्पाप विशुद्ध्यर्थं दद्यात्कर्पूरकं फलम् ॥ १३ ॥ अश्वे विनिहते चैव वक्रतुण्डः प्रजायते। शतं पलानि दद्याच्च चन्दनानामघत्तये ॥ १४ ॥ महिषीघातने चैव कृष्णगुल्फः प्रजायते। खरे तिनिहते चैव खररोमाप्रजायते। निष्कत्रयस्यप्रकृतिं सम्दद्याद्विशार्यीम् ॥ १५ ॥ तरक्षौ निहते चैव जायते केकरेक्षणः। दद्याद्रत्नमयीं धेनुं सतत्पातकशान्तये ॥ १६ ॥ शूकरे निहते चैव दन्तुरोजायतेनरः। सदद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम ॥ १७ ॥ हरिणे निहते खञ्जः शृगाले विपादिकः। अश्वस्तेन प्रदातव्यः स्वर्णपलनिर्म्मितः ॥ १८ ॥ अजाभिघातने चैव अधिकाङ्गः प्रजायते। अजातेन प्रदातव्या विचित्रवस्त्रसंयुता ॥ १९ ॥ उरभ्रे निहते चैव पाण्डुरोगी प्रजायते। कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥ २० ॥ मार्जारे निहते चैव पीतपाणिः प्रजायते। पारावतंससौवर्णं प्रदद्यान्निष्कमात्रकम ॥ २१ ॥ शुकसारिकयोर्घातेनरः स्खलितवाग्भवेत्। सच्छास्त्र पुस्तकं दद्यात् सविप्राय सदक्षिणम ॥ २२ ॥ बकघाती दीर्घनासोदद्याद्गां धवलप्रभाम् ॥ २३ ॥ काकघातीकर्णहीनोदद्याद्गामसितप्रभाम् ॥ २४ ॥ हिंसायां निष्कृतिरियं ब्राह्मणे सम्प्रदाहृता। तदर्द्धार्द्धप्रमाणेन क्षत्रियादिषु तुक्रमात् ॥ २५ ॥ इतिशातातपीये कर्म्मविपाकेहिंसाप्रायश्चित्तविधि र्द्वितीयोऽध्यायः ॥ * ॥ २ ॥ * ॥ सुरापःश्यावदन्तःस्यात् प्राजापत्यं चरेत्तथा। शर्करायास्तुलाः सप्तदद्यात् पापविशुद्धये। जपित्वा च महारुद्रं दशांशं जुहुयात्तिलैः। ततोभिषेकः कर्त्तव्योमन्त्रैर्वरुणदैवतैः ॥ १ ॥ मद्यपोरक्तपित्तीस्यात् सदद्यात् सर्पिषोघटं। मधुनोऽर्द्धघटं चैव सहिरण्यं विशुद्धये ॥ २ ॥ अभक्ष्यभक्षणेचैव जायते क्रिमिलोदरः। यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥ ३ ॥ उदक्यावीक्षितं भुक्त्वा जायते क्रिमिलोदरः। गोमूत्रयावकाहार स्त्रिरात्रेणैव शुध्यति ॥ ४ ॥ भुक्त्वा चास्पृश्य संस्पृष्टं जायते क्रिमिलोदरः। त्रिरात्रं समुपोष्याथसतत् पापात्प्रमुच्यते ॥ ५ ॥ परान्नविघ्नकरणादजीर्णमस्यजायते। लक्षहोमं सकुर्व्वीत प्रायश्चित्तं यथाविधि ॥ ६ ॥ मन्दोदराग्निर्भवति सतिद्रव्यात्कदन्नदः। प्राजापत्यत्रयं कुर्याद्भोजयेच्च शतं द्विजान् ॥ ७ ॥ विषदःस्याच्छर्द्दिरोगीदद्याद्दश पयस्विनीः ॥ ८ ॥ मार्गहापादरोगीस्यात् सोऽश्वदानं समाचरेत्। ९। पिशुनोनरकस्यान्ते जायते श्वास कासवान्। घृतं तेन प्रदातव्यं सहस्रपलसम्मितम। १०। धूर्त्तोऽपस्माररोगीस्यात् सतत्पापविशुद्धये। ब्रह्मकाष्ठम

पुरुषो जायते नीललोचनः । ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम । १८ । कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते । देवतायतनं कार्यमुद्यानं तेन शाम्यति । १९ । सौगन्धिकस्याहरणाद्दुर्गन्धाङ्गः प्रजायते । सलक्षमेवपद्मानां जुहुयाज्जातवेदसि । २० । दारुहारीच पुरुषः खिन्नपाणिः प्रजायते । प्रदद्याद्विशेषतो काश्मीरजपलद्वयम । २१ । विद्यापुस्तकहारीच किल मूकः प्रजायते । न्यायेतिहासं दद्यात्स ब्राह्मणाय सदक्षिणम । २२ । वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात् प्रजापतिम । हेमनिर्म्मितम्बैववस्त्रयुग्मं द्विजातये । २३ । ऊर्णाहारी लोमशः स्यात्सद्दद्यात् कम्बलान्वितम । स्वर्णनिर्म्मितं हेमवह्निं दद्याद्द्विजातये । २४ । पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः । तेनधेनुः प्रदातव्या विशुद्ध्यर्थं द्विजन्मने । २५ । औषधस्यापहरणे सूर्य्यावर्त्तः प्रजायते । सूर्य्यायार्घः प्रदातव्यो माषं देयञ्च काञ्चनम । २६ । रक्तवस्त्रप्रवालादि हारी स्याद्वातरक्तवान् । सवस्त्रां महिषीं दद्यान्मणिरागसमन्विताम । २७ । विप्ररत्नापहारीचाप्यनपत्यः प्रजायते । तेन कार्य्यं विशुद्ध्यर्थं महारुद्रजपादिकम् । कृतवत्सोदितः सर्व्वो विधिरत्र विधीयते । दशांशहोमः कर्त्तव्यः पलाशेन यथाविधि । २८ । देवस्वहरणाच्चैव जायते विविधज्वरः । ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च । ज्वरे रौद्रं जपेत् कर्णं महारुद्रं महाज्वरे । अतिरौद्रं जपेद्रौद्रे [illegible] जपेत् । २९ । नानाविधद्रव्यचोरो जायते ग्रहणीगदी । तेनान्नोदकवस्त्राणि हेमदेयं प्रशाम्यतः । ३० । इति शातातपीये कर्म्मविपाके प्रायश्चित्तं नाम चतुर्थोऽध्यायः । ४ । मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति । चाण्डालीगमने चैव हीनकोषः प्रजायते । तस्य प्रतिक्रियां कर्त्तुं कुम्भं तत्र तु नासयेत् । कृष्णवस्त्रसमाच्छन्नं कृष्णमालाविभूषितम् । तस्योपरिन्यसेद्देवं कांस्यपात्रे धनेश्वरम । सुवर्णनिष्कपट्टेन निर्म्मितं नरवाहनम । यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम । अथर्व्ववेदविद्विप्रो ह्याथर्व्वणं समाचरेत् । सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् । । निधीनामधिपो देवः शङ्करस्य प्रियः सखा । सौम्याशाधिपतिः श्रीमान्मम पापं व्यपोहतु । इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि । दद्याद्देवं हीनकोषलिङ्गनाशविशुद्धये । १ ॥ गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते । तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्म्मणा । स्थापयेत् कुम्भमेकन्तु पश्चिमायां शुभे दिने । नीलवस्त्रसमाच्छन्नं नीलमालाविभूषितम । तस्योपरिन्यसेद्देवं ताम्रपात्रे प्रचेतसम् । सुवर्णनिष्कपट्टेन निर्म्मितं यादसां पतिम । यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम । सामविद्ब्राह्मणस्तत्र सामवेदं समाचरेत् । सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया । दद्याद्विप्राय संपूज्य निष्पापोऽहमिति ब्रुवन् । यादसामधिपो देवो विश्वेषामपि पावनः । संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे । इमं मन्त्रं समुच्चार्य्याचार्य्याय यथाविधि । दद्याद्देवमतः कृच्छ्रं तामूत्रकृच्छ्रं प्रशान्तये । २ ।

अनेकादशवर्षस्य पञ्चवर्षात्परस्य च। प्रायश्चित्तं चरेद्भ्राता पिता वान्योऽपि बान्धवः। २। अतो बालस्य सापि नापराधो न पातकम्। राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते। ३। अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च। ४। इत्येवमाद्यन्यमहर्षिप्रोक्तञ्च * प्रायश्चित्तं तत्रतत्र विज्ञातव्यं * मत्वा विस्तरत्वान्न प्रदर्शितमिति। ५। * । २०९। * । तत्रतत्र प्राजापत्यादिविधि प्राजापत्यादि कृच्छ्रस्तु * तद्विधिः कीदृशो भवतीत्यत * उच्यते।

यैरभ्युपायैरेनांसि मानवो व्यपकर्षति। तान्वोऽभ्युपायान् वक्ष्यामि देवर्षिपितृसेवितान्॥ २१०॥

यैरभ्युपायैरित्यादि। २१०। मानवो यैरुपायैरेनांसि पापं * कर्षति देवर्षिपितृसेवितांस्तान् * स्तानुपायान्वो युष्मभ्यं वक्ष्यामि यथा॥ २१०॥ तानुपायानाह।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यं चरन् द्विजः॥ २११॥

त्र्यहमित्यादि॥ २११॥ द्विजः प्राजापत्यं व्रतमाचरन् * त्र्यहं प्रातः प्रथमाशनकाले * एकवारान्नं द्विस्तत स्त्र्यहं सायं। १। रात्रौ पूर्व्वयाममध्ये * एकवारान्नं दिने ततः * त्र्यहमयाचितं यदा * योऽन्नं स्वयं ददाति तदा दिने वारान्तौ वान्नकाले सकृद्द्यात्। २। ततः परं त्र्यहं नाश्नीयात् * इत्युपरमे दिति प्राजा * पत्यव्रतविधिः। ३। प्रथमम्येतद्वृत्तोपरि प्रादुर्भव * यत्र कृच्छ्रविधिस्तत्रतत्र प्राथ * मिकत्वादेतत्प्राजा * पत्यं कार्य्यमिति ज्ञापितम्। ४। वशिष्ठसंहितायामुक्तं * त्र्यहं प्रातस्त्र्यहं सायं त्र्यहं भुङ्क्ते त्वयाचितम्। त्र्यहं परञ्च नाश्नीयात् प्राजापत्यविधिः स्मृतः। सायन्तु द्वादशग्रासाः प्रातः पञ्चदश स्मृताः। अयाचिते चतुर्विंशतिः परेऽनशनं स्मृतम्। कुक्कुटाण्डप्रमाणं स्याद्यावद्वास्यं विशेत्। एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनमिति। ७। याज्ञवल्क्येनाप्युक्तं * एकभक्तेन नक्तेनतथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः। ८। यथाकथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते। इति मनुयाज्ञवल्क्याभ्यां ग्रास * सङ्ख्यानुक्ताऽवशिष्ठोक्ता * तस्मात् यावद्ग्राससंख्यं विधेदिति ग्रासशब्दार्थत्वात् मनुयाज्ञवल्क्याभ्यामभिप्रायात् प्राजापत्यस्य द्वैधं ज्ञापितम्। ९। । २११। सान्तपनमाह।

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्॥ २१२॥

गोमूत्रमित्यादि । २१२ । गवां मूत्रपुरीषक्षीरदधिसर्पींषि पीत्वा* इत्युक्तं कुशोदकं च * पञ्चगव्यानि * एकस्मिन्नहनि पीत्वा पूर्व्वदिनं उपवसेत् * इति सान्तपनं कृच्छ्रं ।१। इति गोमूत्रादि क्रमेणैकैकं प्रत्यहं पिबेत् सप्तमे ऽहन्युपवसेदिति * महासान्तपनविधिः । २ । उक्तञ्च याज्ञवल्क्येन * पृथक् सान्तपनद्रव्यैः षडहःसोपवासकः । सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः । २१२ । अतिकृच्छ्रमाह ।

**एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्व्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन् द्विजः॥२१३**

एकैकमित्यादि ॥ २१३ ॥ द्विज एवातिकृच्छ्रं चरन् पूर्व्ववत् * त्रिदिनप्रातस्त्र्यहाणि * एकैकं ग्रासमश्नीयात् त्र्यहाणि * सायमेकैकं ग्रासमश्नीयात् ।१। त्र्यहाणि अयाचितमेकैकं ग्रासं * भक्षयेदिति त्रीणि त्र्यहाणि * कृत्वान्त्यं त्र्यहमुपवसेदिति ॥ २१३ ॥

**तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः॥२१४**

तप्तकृच्छ्रमित्यादि ॥ २१४ ॥ विप्रो विप्रादिर्द्विजस्तप्तकृच्छ्रं * चरन् सकृत्स्नायी समाहितः सन् * प्रतित्र्यहं त्र्यहं त्र्यहं उष्णान् जल * क्षीरघृतानिलान् पिबेन्नान्यत् । १ । अत्रिसंहितायामुक्तं * त्र्यहमुष्णं पिबेदाप स्त्र्यहमुष्णं पिबेत् पयः * त्र्यहमुष्णं घृतं पीत्वा * वायुभक्षो दिनत्रयम् । २ । षट्पलानि पिबेदाप स्त्रिपलन्तु पयः पिबेत् । पलमेकन्तु वै सर्पिस्तप्तकृच्छ्रं विधीयते । ३ । अत्र परास्वरीयदपि प्राणिनां * वधमधिकृत्य सान्तपनादिषु * गोदानं गोमूल्यदानञ्चोक्तं तथा * पानान्ताभिरपितद्विधेयं वेदितव्यं । ३ । तद्यथा ॥ पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः । तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ ४ ॥ प्रमापणे प्राणभृतां दद्यात् प्रतिरूपिकाः । तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ इति ॥ २१४ ॥

**यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनं। पराकोनामकृच्छ्रोऽयं सर्व्वपापापनोदनः॥२१५॥**

यतात्मानइत्यादि ॥ २१५ ॥ यतात्मनो द्विजस्याप्रमत्तस्य * द्वादशाहमभोजनं * सर्व्वपापापनोदनः * पराकोनामायं कृच्छ्रः ॥ २१५ ॥ अत्रातिपापिनामपराणि कृच्छ्राणि * प्रतिवाक्यानि भवन्तीति * न्यायात्र प्रदर्शन्ते । १ । दध्ना च त्रिदिनं भुक्त्वा त्र्यहं भुक्त्वा च सर्पिषा । क्षीरेण तु त्र्यहं भुक्त्वा वायुभक्षो दिनत्रयम् ।२। त्रिपलन्तु दधिक्षीरं पलमेकन्तु सर्पिषः । एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते ॥ ३ ॥ कृच्छ्रातिकृच्छ्रः

चान्द्रायणं स्मृतम्। इति। याज्ञवल्क्येनाप्युक्तं यथा*तिथिवृद्ध्याचरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्। एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्। ९। अथ गौतमसंहितायां तत्राथ*अथातश्चान्द्रायणं* तस्योक्तो विधिः कृच्छ्रे *वपनं व्रतं चेत् श्वोभूतां*पौर्णमासीमुपवसेत्। १। आप्यायस्व सन्ते पयांसि*नवो नव इति चैताभिः* तर्पणमाज्यहोमो हविषश्चानुमन्त्रणमुपस्थानं। २। चन्द्रमसो यद्देवा देवहेलन*मिति चैताभिराज्यं जुहुया*द्देवकृतस्येति चान्ते समिद्भिः। ३। ओंभूर्भुवः स्वस्तपः सत्यं*यशः श्रीरूर्गिरौज*स्तेजः पुरुषो धर्मः शिवः इत्ये ४। इत्येतैर्ग्रासानुमन्त्रणं*प्रतिमन्त्रं मनसा नमः*स्वाहेति सर्व्वं ग्रास* प्रमाणमास्याविकारेण। ५। चरुभैक्षसक्तुकण*यावकशाकपयोदधिघृत*मूलफलोदकानि*हवींषि उत्तरोत्तराणि प्रशस्तानि। ६। पौर्णमास्यां पञ्चदश*ग्रासान् भुक्त्वैकापचयेना*परपक्षमश्नीयादमा*वास्यायामुपोष्यैकोप*चयेन पूर्व्वपक्षं * विपरीतमेकेषाम् ७। एवं चान्द्रायणो मासो*मासमाप्त्वा विपापो*विपाप्मा सर्व्वमेनो हन्ति। ८। द्विमासमाप्त्वोदश पूर्व्वान्*दशावरानात्मानञ्चैकविंशं* पङ्क्तिं च पुनाति। ९। संवत्सरञ्चाप्त्वा चन्द्रमसः सलो*कतामाप्नोतीति। १०। २१७। नामान्तरेणप्रकारान्तरमाह।

**अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते। नियतात्मा हविष्याशी यतिचान्द्रायणं चरन्॥ २१८॥**

अष्टावष्टावित्यादि। १। २१८। मध्यन्दिने स्थिते नियतात्मा द्विजो * यतिचान्द्रायणं चरन् मासमेकं* शुक्लप्रतिपद्दिनमारभ्य हविष्याशी सन् प्रतिदिनमष्टा*वष्टौ पिण्डानश्नीयात्। १। २१८।

**चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः। चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं स्मृतम्॥ २१९॥**

चतुर इत्यादि। २१९। विप्रो विप्रादिर्द्विजः समाहितः सन्* शुक्लप्रतिपद्दिनमारभ्य प्रातर्मध्यन्दिने चतुरः पिण्डा*नश्नीयादस्तमिते सूर्य्ये *चतुरः पिण्डानेवं मासमेकमिति*शिशुचान्द्रायणं स्मृतम्। १। २१९।

**यथाकथञ्चित् पिण्डानां तिस्रोऽशीतीः समाहितः। मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्॥ २२०॥**

यथाकथञ्चिदित्यादि। २२०। समाहितो द्विजो यथा*कथञ्चित्प्रकारेणैव * हविष्यस्य तिस्रोऽशीतीः*पिण्डानां मासेनाश्नन्स*श्चरितचान्द्रायणः स *चन्द्रस्य सलोकतामेति। १। याज्ञवल्क्येनचोक्तं यथा*यथाकथञ्चित् पिण्डानां *चत्वारिंशच्छतद्वयं। मासेनैवोपभुञ्जीत चान्द्रायणमथापरम्। २। कुर्य्यात्त्रिषवणस्नायी कृच्छ्रं चान्द्रायणं तथा। पवित्राणि जपेत् पिण्डान् गायत्र्या चाभिमन्त्रयेत्। ३। अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु। धर्म्मार्थं यश्चरेदेतच्चन्द्रस्यैति सलोकतामिति। ४। २२०। अत्र पुराकल्पमाह।

**एतद्रुद्रास्तथादित्या वसवश्चाचरन् व्रतम्। सर्व्वाकुशलमोक्षाय मरुतश्च महर्षिभिः॥ २२१॥**

एतदित्यादि १।२२१ एतच्चान्द्रायणं व्रतं *सर्व्वाऽकुशलमोक्षाय* रुद्राआदित्या वसवो *मरुतश्च महर्षिभिः सहाचरन्। १। २२१। अथ सर्व्वकृच्छ्रेषु यत्कर्त्तव्यं तदाह।

**महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्। अहिंसा सत्यमक्रोधमार्जवञ्च समाचरेत्॥२२२**

महेत्यादि श्लोकैः ।२२२। प्राजापत्यादिव्रतमाचरता स्वयं *मन्वहं* महाव्याहृतिभिर्होमः *कर्त्तव्यः सदा हिंसा सत्यमक्रोध*मार्जवञ्चनिता मे तत्समाचरेत्। १। २२२।

**त्रिरह्नस्त्रिर्निशायाञ्च सवासा जलमाविशेत्। स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित्॥२२३॥**

त्रिरह्नः। २२३। अहरह्नि त्रिर्निशायां त्रिरिति पट*वस्त्रः सवासा जलमाविशेत्तथा* कर्हिचित् स्त्रीशूद्रादीन्नाभिभाषेत। १। २२३।

**स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा। ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः॥२२४**

स्थानासनाभ्यामित्यादि। २२४। व्रतीद्विजो ब्रह्मचारी* गुरुदेवद्विजार्च्चकः *सन् कचित् स्थानं कचिदासनमिति *ताभ्यां विहरेत् तत्राशक्तः *क्षचिदधः शयीतेति॥ १॥ २२४॥

**सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः। सर्व्वेष्वेव व्रतेष्वेवं प्रायश्चित्तार्थमादृतः॥२२५॥**

सावित्रीञ्चेत्यादि। २२५। सव्रतो नित्यं शक्तितः* सावित्रीं पवित्राणि च नित्यं जपेत् *एवं विधः प्रायश्चित्तार्थं सर्व्वे*ष्वेव व्रतेष्वादृतः स्यात्। १। २२५।

**एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्॥२२६॥**

एतैरित्यादि। २२६। आविष्कृतैनसां लोकैर्विख्यात*पापाद्विजातय एतैः *प्राजापत्यादिभिर्व्रतैः* शोध्या भवन्ति। १। अनाविष्कृतपापांस्तु द्विजान् राजा *मन्त्रैर्होमैश्च शोधयेत्। २। २२६।

**ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि॥ २२७॥**

ख्यापनेनेत्यादि। २२७। यो यत्पापं करोति स* तत्पापमहमकार्षमिति लोकान् ज्ञापयित्वा यदि *ख्यापयति स पापकृत्* तेन ख्यापनेन तस्मात् पापान्मुच्यते। १। पापकृत् पापं कृत्वा सन्तापेन* तस्मात् पापान्मुच्यते तथा तपसा* वेदस्याध्ययनेन तथा गवादेर्दानेन तस्मात् पापान्मुच्यते इति। २। २२६।

**यथा यथा नरोऽधर्म्मं स्वयं कृत्वानुभाषते। तथा तथा त्वचेवाहिस्तेनाधर्म्मेण मुच्यते॥ २२८॥**

यथायथेत्यादि। २२८। नरो यथा यथाधर्म्मं कृत्वा तु *पश्चाद्भाषते तथा तथैव तेन *धर्म्मेणाहिरिव त्वचा मुच्यते। १। २२८।

যথাযথা মনস্তস্য দুষ্কৃতং কর্ম্ম গর্হতি। তথাতথা শরীরং তত্তেনাধর্ম্মেণ মুচ্যতে ॥ ২২৯ ॥

যথাযথেত্যাদি। ২২৯। তস্য পাপকারিণো নরস্য মনঃ * স্বকৃতং দুষ্কৃতং কর্ম্ম যথা যথা * গর্হতি তথা তথা তচ্ছরীরং তেন * স্বকৃতেনাধর্ম্মেণ খলু মুচ্যতে। ১। ২২৯।

কৃত্বা পাপং হি সন্তপ্য তস্মাৎ পাপাৎ প্রমুচ্যতে। নৈবং কুর্য্যাং পুনরিতি নিবৃত্ত্যা পূয়তে তু সঃ ॥ ২৩০ ॥

কৃত্বেত্যাদি। ২৩০। যঃ পাপং কৃত্বা সন্তপ্য * তস্মাৎ পাপাৎ মুচ্যতে * যঃ পাপং কৃত্বা পুনর্নৈবং কুর্য্যা-মিতি নিবর্ত্ততে তয়া * নিবৃত্ত্যা স পূয়তে ইতি ॥ ২৩০ ॥

এবং সঞ্চিন্ত্য মনসা প্রেত্য কর্ম্মফলোদয়ং। মনোবাঙ্মূর্ত্তিভির্নিত্যং শুভং কর্ম্ম সমাচরেৎ ॥ ২৩১

এবমিত্যাদি। ২৩১। প্রেত্য পরলোকে ফলোদয়ং কর্ম্ম মনসা পুমানেবং সঞ্চিন্ত্য * মনোবাঙ্মূর্ত্তিভিঃ শুভং * কর্ম্ম নিত্যং সমাচরেৎ। ২৩১।

অজ্ঞানাদ্যদি বা জ্ঞানাৎ কৃত্বা কর্ম্ম বিগর্হিতম্। তস্মাদ্বিমুক্তিমন্বিচ্ছন্ দ্বিতীয়ং ন সমাচরেৎ ॥ ২৩২ ॥

অজ্ঞানাদিত্যাদি ॥ ২৩২ ॥ পুমান্ গর্হিতং কর্ম্ম যদ্যজ্ঞানা * দথবা জ্ঞানাৎ কৃত্বা তস্মাৎ পাপা * দ্বিমুক্তি-মন্বিচ্ছতি তদা দ্বিতীয়ং * পুনস্তদ্গর্হিতং কর্ম্ম ন সমাচরেৎ ॥ ২৩২ ॥

যস্মিন্ কর্ম্মণ্যস্য কৃতে মনসঃ স্যাদলাঘবম্। তস্মিংস্তাবত্তপঃ কুর্য্যাদ্যাবত্তুষ্টিকরং ভবেৎ ॥ ২৩৩

যস্মিন্নিত্যাদি ॥ ২৩৩ ॥ যস্মিন্ কর্ম্মণি কৃতে সতি * জনস্যাস্য মনসোঽলাঘবং * গুরুতা স্যাত্তস্মিন্ মনো গৌরবে * তাবত্তপঃ কুর্য্যা দ্যাবৎ * তত্তপস্তুষ্টিকরং স্যাৎ ॥ ২৩৩ ॥

তপোমূলমিদং সর্ব্বং দৈবমানুষকং সুখম্। তপোমধ্যং বুধৈঃ প্রোক্তং তপোঽন্তং বেদদর্শিভিঃ ॥ ২৩৪ ॥

তপ ইত্যাদি। ২৩৪। ইদং দৈবং সুখং মানুষকং ঐহিকং যৎ * সুখং সর্ব্বং তপোমূলং * তপোমধ্যং তপোঽন্তঞ্চ * বেদদর্শিভির্বুধৈঃ প্রোক্তং ॥ ২৩৪ ॥

ব্রাহ্মণস্য তপো জ্ঞানং তপঃ ক্ষত্রস্য রক্ষণম্। বৈশ্যস্য তু তপো বার্ত্তা তপঃ শূদ্রস্য সেবনম্ ॥ ২৩৫ ॥

ব্রাহ্মণস্যেত্যাদি ॥ ২৩৫ ॥ ব্রাহ্মণস্য তপঃ সর্ব্বং * ভাবানাং তত্ত্বজ্ঞানং * কার্য্যাকার্য্যবিজ্ঞানঞ্চ। ১। ক্ষত্রস্য ধর্ম্মঃ প্রজানাং রক্ষণং * তপো বৈশ্যস্য কৃষ্যাদিবাণিজ্যং * তপঃ শূদ্রস্য বিপ্রসেবনং তপঃ ॥ ২৩৫ ॥

ऋषयः संयतात्मानः फलमूलानिलाशनाः । तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥२३६॥

ऋषय इत्यादि ॥ २३६ ॥ संयतात्मानः फलमूलानिला * शना ऋषयस्तपसैव सच * राचरं त्रैलोक्यं हि प्रपश्यन्ति ॥ २३६ ॥

औषधान्यगदो विद्या दैवी च विविधा स्थितिः । तपसैव प्रसिध्यन्ति तपस्तेषां हि साधनम् ॥२३७

औषधानीत्यादि ॥ २३७ ॥ तपसैवौषधान्यगदश्च *विद्या च दैवी च विविधा स्थितिः * प्रसिध्यन्ति हि यस्मा त्तेषां सर्व्वेषा मौषधादीनां * साधनं तपो भवति ॥ २३७ ॥

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम् । सर्व्वन्तु तपसा साध्यं तपो हि दुरतिक्रमम् ॥२३८॥

यद्दुस्तरमित्यादि ॥ २३८ ॥ दुस्तरादिकं सर्व्वं तपसा साध्यं भवति* यतो दुरतिक्रमं तपः ॥ २३८ ॥

महापातकिनश्चैव शेषाश्चाकार्य्यकारिणः । तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः ॥ २३९॥

महेत्यादि ॥ २३९ ॥ एते ब्रह्महत्यादिमहापातकि * जना अन्ये चाकार्य्यकारिणश्च * पातकादयस्तत सुतप्तेन तपसा * तत्किल्बिषान्मुच्यन्ते ॥ २३९ ॥

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च । स्थावराणि च भूतानि दिवं यान्ति तपोबलात् ॥ २४० ॥

कीटाश्चेत्यादि ॥ २४० ॥ कीटादयोपि * तपोबला * द्दिवं स्वर्ग * लोकं यान्ति । २४० ॥

यत्किञ्चिदेनः कुर्व्वन्ति मनोवाङ्मूर्त्तिभिर्ज्जनाः । तत्सर्व्वं निर्द्दहन्त्याशु तपसैव तपोधनाः ॥ २४१ ॥

यत्किञ्चिदित्यादि ॥२४१॥ तपोधना ये जना मनोवाङ्मूर्त्तिभि* र्यत्किञ्चित्पापं कुर्व्वन्ति*तपोधनास्ते तत् सर्व्वं * पापं तपसैवाशु दहन्ति ॥ २४१ ॥

तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः । इज्याश्च प्रतिगृह्णन्ति कामान् संवर्द्धयन्ति च ॥२४२ ॥

तपसैवेत्यादि ॥ २४२ ॥ ब्राह्मणस्य तपसैव विशुद्धस्य * इज्या यज्ञान् दिवौकसः * प्रतिगृह्णन्ति पात्र * कामान् संवर्द्धयन्तीति ॥ २४२ ॥

प्रजापतिरिदं शास्त्रं तपसैवासृजत्प्रभुः । तथैव वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४३॥

प्रजापतिरित्यादि ॥ २४३ ॥ प्रभुः प्रजापतिर्ब्रह्मा * तपसैवेदं शास्त्रमसृजत् तथा *वेदानृषयस्तपसा* सर्व्वं प्रतिपेदिरे ॥ २४३ ॥

इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते । सर्व्वस्यास्य प्रपश्यन्तस्तपसः पुण्यमुत्तमम् ॥२४४॥

इत्येतदित्यादि ॥ २४४ ॥ अस्य सर्वस्य पुण्यस्य तत उत्तमं * पुण्यं तपसो जातं प्रपश्यन्तो देवा इत्येतद्वचः * मयाऽकं महाभाग्यस्य * तत्तपसोऽभूदिति प्रचक्षते ।१। ॥ २४४ ॥

**वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रिया क्षमा । नाशयन्त्याशु पापानि महापातकजान्यपि॥२४५॥**

वेदाभ्यास इत्यादि ॥ २४५ ॥ यथाशक्त्याऽन्वहं वेदाभ्यासो महा * यज्ञानां पञ्चानां क्रिया * क्षमा चेत्येतानि महा * पातककर्मब्रह्महत्यादिजानि । १ । महापापान्यन्यानि पापानि * सर्वाण्याशु नाशयन्ति ॥ २४५ ॥

**यथैधस्तेजसा वह्निः प्राप्तं निर्दहति क्षणात् । तथा ज्ञानाग्निना पापं सर्वं दहति वेदवित्॥२४६॥**

यथैध इत्यादि । २४६ । यथा वह्निस्तेजसैधः * प्राप्तं क्षणान्निर्दहति * तथा वेदवित्सर्वं पापं * ज्ञानाग्निना दहति । २४६ ।

**इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि । अत ऊर्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥२४७॥**

उपसंहरतीत्येतदित्यादि । २४७ । मया यथाविध्येनसां * प्रायश्चित्तमित्येतदुक्तं * अत ऊर्ध्वं रहस्यानां * अप्रकाशितानामेनसां * प्रायश्चित्तं निबोधत । २४७ ।

**सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश । अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः ॥२४८॥**

सव्याहृतीत्यादि ।२४८। सव्याहृतिप्रणवका इति सप्तव्याहृतिसहितं * ब्रह्मशिरःसमेतं सप्रणवं * मित्येतन्मन्त्रं पठन्नसौ * वायोः पूरणं । १ । कुम्भकं रेचनं च कुर्यात् * इति प्राणायाम उक्तः * तथाविधास्तु षोडश * प्राणायामा नित्यं कृताः । २ । मासाद्भ्रूणहनमपि ब्रह्महणं * नरं च पापिनं पुनन्ति । २४८ ।

**कौत्सं जप्त्वाप इत्येतद्वासिष्ठं च प्रतीत्यृचं । माहित्रं शुद्धवत्यश्च सुरापोऽपि विशुद्ध्यति ॥२४९॥**

अपरञ्चाह कौत्समित्यादि । २४९ । कौत्सेन कृतं दृष्टं * अप नः शोशुचदघम् * मित्येतत्सूक्तं वासिष्ठं * वसिष्ठेन दृष्टं * प्रतिस्तोमेभिरुषसं वसिष्ठाः । १ । इत्येतदृचं माहित्रं * महि त्रीणामवोऽस्त्वित्येतत्सूक्तं * शुद्धवत्यश्चेति शुद्धवत्य एता * इन्द्रं स्तवाम इति । २ । एतस्य कृचो मासमहरहः * षोडशकृत्वो जपित्वा * सुरापोऽन्यपापश्च विशुद्ध्यति । २४९ ।

**सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च । अपहृत्य सुवर्णं तु क्षणाद्भवति निर्मलः ॥ २५० ॥**

सकृदित्यादि । २५० । ब्राह्मणस्य सुवर्णमपहृत्यास्य * वामीयमस्य वामस्य पलितस्य * त्येतत्सूक्तं शिव सङ्कल्पश्च यत् । १ । वाजसनेयशाखायां पठि * तं यज्जाग्रतो दूरमित्येतत् * मासमहरहः सकृज्जप्त्वा क्षणान्निर्मलः स्यात् । २ । २५० ।

हविष्पान्तीयमभ्यस्य नतमंह इतीति च । जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥ २५१ ॥

हविष्पान्तीत्यादि ।२५१। हविष्पान्तीयमिति हविष्पान्तमजरं स्वर्विदि*इत्येकोनविंशतिमृचोऽभ्यस्य*नतमंहो दुरितमि*त्यष्टावृचः ।१। इति चेति इतिमे मनः शिवसङ्कल्पमस्त्विति*सूक्तं चाभ्यस्य पौरुषं सूक्तं च*सहस्रशीर्षा पुरुष*इत्यादिपुरुषसूक्तं ।२। जपित्वा गुरुतल्पगस्तत्समपातकाच्च मुच्यते ।१।२५१।

एनसां स्थूलसूक्ष्माणां चिकीर्षन्नपनोदनम् । अवेत्यृचं जपेदब्दं यत्किञ्चिदमितीति वा ॥२५२

एनसामित्यादि ।२५२। स्थूलसूक्ष्माणामेनसा*मपनोदनं चिकीर्षन्नब्दमेकं* अवतिहेडो वरुणयोः ।१। इत्येतदृचं यत्किञ्चिदमिति*वरुणदैवीजनदू*त्येतदृचं वा जपेत् ।२।२५२।

प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम् । जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात् ॥२५३

प्रतिगृह्येत्यादि ।२५३। अप्रतिग्राह्यं प्रतिगृह्य*विगर्हितमन्नञ्च भुक्त्वा*तरत्समन्दीयम ।१। तरत्स मन्दीधावतीत्येतदृचां*चतुष्टयं ब्राह्मणैः*त्र्यहमहस्स्तु कृत्वा जपन्मानवः*त्र्यहात्पूयते तदपराधादिति ।२।२५३

सोमारौद्रन्तु बह्वेना मासमभ्यस्य शुद्ध्यति । स्रवन्त्यामाचरन्स्नानमर्यम्णामिति च त्र्यृचम् २५४

सोमारौद्रमित्यादि ।२५४। बह्वेना बहुपापः पुमान्*सोमारुद्रा धारयेथामसुर्य*मित्येतदृचचतुष्टयं*मासमभ्यस्य स्रवन्त्यां नद्यां*स्नानमाचरन्शुद्ध्यति ।१। अर्यम्णामिति चेति*अर्यमणं वरुणं*मित्रमिति च त्र्यृचं ।२। मासमेकमभ्यस्य*स्रवन्त्यां स्नानमाचरन्बह्वेना शुद्ध्यति ।२।२५४।

अब्दार्द्धमिन्द्रमित्येतदेनस्वी सप्तकं जपेत् । अप्रशस्तन्तु कृत्वाप्सु मासमासीत भैक्षभुक् २५५

अब्दार्द्धमित्यादि ।२५५। एनस्वीयं कर्मपि*पापानं कृतवान्सन्*इन्द्रमित्रं वरुण*मग्निमित्येतदृचां ।१। सप्तकं सप्तर्च्चोऽब्दार्द्धं जपेत्*अप्सु मूत्रादप्रशस्तं*कृत्वा भैक्ष्यभुक्सन्मासमासीत ।२।२५५।

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः । सुगुर्व्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम् ॥२५६

मन्त्रैरित्यादि ।२५६। द्विजो ब्राह्मणादिः सर्व्वैः*शाकलहोमीयैर्मन्त्रैः*देवकृतस्येत्यादिभि*रेतमब्दं हुत्वा सुगु*र्व्वपि पापमपहन्ति ।१। नम इन्द्रश्चे*त्येतामृचं वाब्दं*जप्त्वा सुगुर्व्वपि*पापमपहन्ति ।२।२५६।

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः । अभ्यस्याब्दं पावमानीर्भैक्ष्याहारो विशुद्ध्यति २५७

महापातकेत्यादि ।२५७। महापातकसंयुक्तः पुरुषः*समाहितः सन्नब्दमेकं भैक्ष्या*हारः पावमानीरिषो ऽभ्यस्य ।१। प्रतिदिनं चरन्तीर्गा अनुगच्छे*त्ततः समहापापा*त्तस्माद्विशुद्ध्यति ।२।२५७।

अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् । मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिः २५८

अरण्ये वेत्यादि । २५८ । द्विजः प्रयतः सन्नरण्ये वात्र्येद* संहिताः शाखामेकां त्रिरभ्यस्य * सर्व्वैः पातकैर्विमुच्यते ॥ १ ॥ त्रिभिः पराकैः शोधितः सन् द्विजः * सर्व्वैः पातकैर्मुच्यते ॥ २ ॥ २५८ ॥

त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्व्वैस्त्रिर्जपित्वाघमर्षणम् ॥२५९

त्र्यहन्त्वित्यादि ।२५९। युक्तः सन् द्विज एकस्मिन्नह्नि त्रिस्त्रीन् * वारानपोऽभ्युपयन् उपगच्छन् स्नानं कुर्व्वन् * अघमर्षणं त्रिर्जपित्वा त्र्यह* उपवसेत् सर्व्वैः पापैर्मुच्यते ॥ १ ॥ २५९ ॥

यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः । तथाघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥ २६० ॥

यथाश्वमेधेत्यादि ॥२६०॥ यथा क्रतुराड् अश्वमेधः * सर्व्वपापापनोदनः स्यात् तथा अघमर्षणं सूक्तन्तु * सर्व्वपापापनोदनं स्यात् ॥ १ ॥ २६० ॥

हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः । ऋग्वेदं धारयन् विप्रो नैनः प्राप्नोति किञ्चन ॥२६१॥

हत्वेत्यादि ॥ २६१ ॥ विप्र इमांस्त्रीनपि लोकान् हत्वा * यतस्ततोऽपि अश्नन् ऋग्वेदं धारयन् * किञ्चनापि एनः पापं न प्राप्नोति । १ । २६१ ।

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः । साम्नां वा सरहस्यानां सर्व्वपापैः प्रमुच्यते ॥२६२॥

ऋक्संहितामित्यादि ॥ २६२ ॥ विप्रः समाहितः सन् ऋक्संहितां * त्रिरभ्यस्य यजुषां संहितां वा * त्रिरभ्यस्य सरहस्यानां साम्नां वा * संहितां त्रिरभ्यस्य सर्व्वपापैः प्रमुच्यते । १ । २६२ ।

यथा महाह्रदं प्राप्य क्षिप्रं लोष्टं विनश्यति । तथा दुश्चरितं सर्व्वं वेदे त्रिवृति मज्जति ॥२६३॥

यथेत्यादि । २६३ । यथा लोष्टं महाह्रदं * प्राप्य विनश्यति तथा * दुश्चरितं सर्व्वं पापं * त्रिवृति वेदे मज्जति १ । २६३ । कीदृशः पुनः स त्रिवृद्वेदः स्यादित्यत आह।

ऋचो यजूंषि चान्यानि सामानि विविधानि च । एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित् ॥२६४॥

ऋच इत्यादि । १ । २६४ । ऋचश्च यजूंषि च सामानि च * विविधानि यानि स एष ज्ञेयः * त्रिवृद्वेदो यः एनं त्रिवृद्वेदं * वेद स वेदविद्भवतीति शेषः । १ । २६४ ।

आद्यं यत्त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित् ॥२६५॥

आद्यमित्यादि । २६५ । सर्व्ववेदानामाद्यं * त्र्यक्षरमकारोकारमकारात्मकं * ब्रह्मवाचकत्वात् सा त्रयी वेद* त्रयी यस्मिन् द्विजे * प्रतिष्ठिता भवति । १ । स ओङ्कारोऽस्य * गुह्यस्त्रिवृद्वेदः * यस्तं योऽर्थतो वेद * स द्विजो वेदवित् । २ । २६५ ।

॥*॥*॥ इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * मेकादशोऽध्यायः ॥१॥*॥११॥*॥

इति मानवे धर्म्मशास्त्रे * भृगुप्रोक्तायां संहितायां * मेकादशेऽध्याये । १ । तेदरा गङ्गाधर राय कविरत्न * कृतायां प्रमादभञ्जन्यां * मेकादशाध्यायप्रमादभञ्जनी । * । * । * ।

अथोद्देशक्रमात् प्रायश्चित्तात्परं * कर्म्मसम्भवं त्रिविधं * संसारागमनमाह ॥ १ ॥ तत्रऋषीणां प्रश्नः ॥

**ऋषय ऊचुः ॥ चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्म्मस्त्वयाऽनघ । कर्म्मणां फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥ १ ॥**

ऋषय ऊचु * चातुर्वर्ण्यस्येत्यादि ॥ २ ॥ १ ॥ भो अनघ महर्षे भगोस्त्वया * चातुर्वर्ण्यस्याय कृत्स्नो * धर्म्मउक्तःकर्म्मणां परां फलं * निर्वृत्तिं तत्त्वतो नः शंस ॥ १ ॥ १ ॥ एवं पृष्टः ॥

**स तानुवाच धर्म्मात्मा महर्षीन्मानवो भृगुः । अस्य सर्व्वस्य शृणुत कर्म्मयोगस्य निर्णयम् ॥ २ ॥**

स तानित्यादि ॥ २ ॥ महर्षिभिरेवं पृष्टः स धर्म्मात्मा * मानवो भृगुस्तान् * महर्षीन् उवाच ॥ १ ॥ भो महर्षयः सर्व्वस्यास्य कर्म्म * योगस्य निर्णयं शृणुत ॥ २ ॥ २ ॥

**शुभाशुभफलं कर्म्म मनोवाग्देहसम्भवम् । कर्म्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ ३ ॥**

शुभाशुभेत्यादि ॥ ३ ॥ मनोवाग्देहसम्भवं * कर्म्म शुभाशुभफलं * नृणामुत्तमाधममध्यमास्त्रिधा * गतयः कर्म्मजाश्च याः ॥ ३ ॥

**तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः । दशलक्षणयुक्तस्य मनो विद्यात्प्रवर्त्तकम् ॥ ४ ॥**

तस्येहेत्यादि ॥ ४ ॥ देहिनस्त्र्यधिष्ठानस्य * मनोऽधिष्ठानस्य वागधिष्ठानस्य * देहाधिष्ठानस्य चेति ॥ १ ॥ त्रिविधस्येतस्य दश * लक्षणयुक्तस्य शुभाशुभ * फलस्य कर्म्मणः खलु * प्रवर्त्तकं मनो विद्यात् ॥ २ ॥ मनःशब्देनेह बुद्धिरुच्यते * तात्पर्य्यान्नहि मनो मनः * कर्म्मणः प्रवर्त्तकं स्यात् ॥ ३ ॥ यदा हि बुद्धिर्भावा स्वेनपथा * यदा मनो न परद्रव्यं * नाभिध्यायति परस्य * निष्टं न चिन्तयति न * वितथमभिनिविशति ॥ ४ ॥ तत्तस्य दर्शितमा बुद्ध्याधिष्ठितेनैव * मनसा संयुक्ता च वाक् * पारुष्यमनृतं पैशुन्यं वचनं * असम्बद्धालापं न कुर्य्यात् ॥ ५ ॥ तथैवमनसा युक्ता * मिन्द्रियं देहस्तोनादत्तां * नयान्नादत्तं नयाविधानतोऽन्यान् * हिंसति न परदारानवासेवते ॥ ६ ॥ इति शुभफलं दशलक्षणकर्म्म ॥ यदा सैव बुद्धिर्भावा * न तत्त्वेन पथा याति पश्यति तु * मिथ्यावानस्य वा तिवा ॥ ७ ॥ तदा तया वृद्धया मनोऽशुभफलं * कर्म्माचरति तया युक्तेन च * मनसा युक्ता वाग * शुभफलं वाक्यमाह ॥ ८ ॥ तथैवमनसा युक्तमिन्द्रिय * मशुभफलं * कर्म्माचरति ॥ ९ ॥ * ॥ ४ ॥ तच्चिह्नयथावत्पश्यन्त्या वृद्धया * युक्तं मनो वाग्देहं कि * माचरतीत्यत आह *

परद्रव्येष्वभिध्यानंमनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधंकर्म्म मानसम्॥ ५॥

परद्रव्येष्वित्यादिद्वयं। ५। अयथावत्प्रयत्नादन्याययुक्तेन * मनसापरद्रव्येष्वभिध्यानं * अहमिच्छा परस्यानिष्टचिन्तनम्। १। वितथेऽनृतेऽभिनिवेशश्चेति त्रिविधंमानसमशुभफलं कर्म्म। २। ५।

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्व्विधम्॥ ६॥

पारुष्यमित्यादि। ६। पारुष्यं कर्कशवाक्यं * अनृतं मिथ्यावचनं * सर्व्वशः पैशुन्यं खलो * क्तिलो कप्रतासम्बन्ध * प्रलापश्चेति वाङ्मयं * चतुर्धा कर्म्माशुभफलं॥ १॥ ६॥

अदत्तानामुपादानं हिंसाचैवाविधानतः। परदारोपसेवाचशारीरं त्रिविधं स्मृतम्॥७॥

अदत्तानामित्यादि। ७। अदत्तानां द्रव्याणां हस्तेनादानं * अविधानतो हिंसाच * पाणिपादादिभिः पर * दारोपसेवाचाशुभ * तान्कर्म्मैरितित्रिविधं तु। १। अशुभफलं शारीरं * कर्म्म स्मृतमितिसंक्षेपो विस्तरेण मनोवाग्देहसम्भव * मशुभफलं कर्म्मज्ञेयं। २। ७।

मानसंमनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचावाचाकृतंकर्म्म कायेनैवचकायिकम्॥८॥

मानसमित्यादि। ८। मानसं शुभाशुभं कर्म्मफलं * मनसैवायं कर्त्ता कालान्तरउप * भुङ्क्ते वाचाकृतं शुभाशुभं कर्म्म * वाचैवोपभुङ्क्ते नतन्नान्येनेति। १। कायिकं शुभाशुभं कर्म्मफलं * कायेनैवोपभुङ्क्ते। २। ८।

शरीरजैःकर्म्मदोषैर्यातिस्थावरतांनरः। वाचिकैःपक्षिमृगतांमानसैरन्त्यजातिताम्॥९॥

शरीरजैरित्यादि। ९। कर्म्माण्यैहिकालान्तरफलानिच * यथातण्डुलादिपाकः * कालान्तरे यथरोग * धातून् पुष्यतिनसद्यो * गोदोहनाग्निदाहवत्। १। तथाशरीरजाःकर्म्मदोषायदा * परिणमन्तःफलोन्मुखोभवन्ति * तदानरकावसाने नरःपुमान्। २। तैःशरीरजैःकर्म्मदोषैरिह * स्थावरतां वृक्षादित्वं * यातिवाचिकैःकर्म्मदोषैः * पक्षित्वं मृगत्वं याति। ३। मानसैःकर्म्मदोषैरन्त्यजातितां * चाण्डालादिशूद्रत्वं प्राप्नोति। ४। ९।

वाग्दण्डोऽथमनोदण्डःकायदण्डस्तथैवच। यस्यैते निहिताबुद्धौत्रिदण्डीतिसउच्यते॥१०॥

वाग्दण्डइत्यादि। १०। वाग्दण्डोमनोदण्डःकायदण्ड * इतित्रयोदण्डायस्य * बुद्धौनिहिताःसपुमान् * त्रिदण्डीत्याचार्यैर्भाष्यते। १। १०।

**विदग्धमेतन्निक्षिप्य सर्व्वभूतेषु मानवः। कामक्रोधौ तु संयम्य ततः सिद्धिं विगच्छति॥ ११॥**

विदग्धमित्यादि। ११। यो मानवः कामक्रोधौ*संयम्य सर्व्वभूतेषु तद्विदग्धं * निक्षिप्य विहाय यदा*वर्त्तते तदा सिद्धिं विगच्छति। १। ११। ननु य एष पुरुषः कर्म्माणि यैः* वाङ्मनःशरीरैः करोति तानि तु * म्रियमाणो विहाय लोकान्तरं*गच्छति कथमिह तत्फलं भुङ्क्ते। १। इत्यत उच्यते योऽसावा*त्मनः कार* ।

**योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः॥१२॥**

यइत्यादि। २। १२। अथ जागरितस्थानस्य स्वप्न * स्थानस्य चात्मनो जागरिते स्वप्ने * यः कर्म्माणि कारयिता*तं क्षेत्रज्ञं प्रचक्षते। १। कः कर्म्माणि तेन प्रयुक्तः करोती*त्यत आह य इत्यादि। २। यो जाग्रदित्र कर्म्माणि करोति यश्च*स्वप्ने कर्म्माणि करोति*स द्विविधो भूतात्मोच्यते। ३। जागरितस्थानो वैश्वानरो नाम* भूतात्मा बहिःप्रज्ञः सप्ताङ्ग एको*नविंशति मुखः स्थूल*भुक् प्रथमः पादश्चात्मा। ४। स्वप्नस्थानस्तैजसो नाम भूतात्मा*सोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंश* मुखः प्रविविक्त*भुक् द्वितीयः पादश्चात्मा। ५। भूतानां यात्मा भूतात्मा*न तु भूतानामात्मेति*स्वरूपात्मत्वप्रसङ्गात्। ६। यानि खल्विमानि पञ्च*स्थूलानि भूतानि पूर्व्व*पूर्व्वभूतानुप्रविष्टानि कानि चित् चतुःपञ्च*महाभूतात्मकानि खं*वायुर्ज्योतिरापः पृथ्वी। ७। तानि सप्ताङ्गो वैश्वानरो नाम * जागरितस्थानो भूतात्मा। ८। तेषां भूतानां पञ्चानां *यत्त्वात्मकं तेजोभूतं *तद्द्विवाभूतमेकं यैश्वानरस्य*मूर्द्धा सुतेजा नाम स्यात्। ९। द्वितीयं वैश्वानरस्य*चक्षुर्विश्वरूपो नाम * योऽसौ द्वाभ्यां वायुः स*पृथग्वर्त्मा नाम प्राणो*वैश्वानरस्यात्मन इति। १०। योऽसावाकाशः कालविशिष्ट एव*शब्दतन्मात्र स्थूलता* मापन्नः स बहुलो नाम सन्देहो * वैश्वानरस्यात्मन इति। ११। यास्ताश्चत्वरात्मिका आपः सरयि*र्णाम वैश्वानरस्य वस्तिर्या पृथिवी* पञ्चात्मिका सा प्रतिष्ठा*नाम वैश्वानरस्य पादौ। १२। इति सप्ताङ्गो वैश्वानरो नाम* भूतात्मास्य मुखानि कोनविंशतिः * पञ्च प्राणादयः बाह्यानीन्द्रियाणि*चत्वार्य्याभ्यन्तराणि मनो*बुद्धिरहङ्कारश्चित्तमित्येकोनविंशतिस्तै र्मुखैः ॥१३॥ पञ्चशब्दादयोऽर्थाभोगाय एव बहिः*प्रज्ञः स्थूलविषयभुक्॥ १४। यानि शब्दमात्रादीनि * पञ्चमहाभूतानि ता* नाविस्वप्नस्थानस्तैजसो नाम * भूतात्मा पूर्व्ववत् सप्ताङ्ग * एकोनविंशतिमुखः। १५। अन्तःप्रज्ञः प्रविविक्त * खल्वाभ्यन्तरे स्वप्ने तु * विषयान् शब्दादीन् भुङ्क्ते इति द्विधा भूतात्मा। १६। नन्वेतौ यत् स्थूलविविक्तभुजौ तत् कथं भुङ्क्ते इत्यत आह ॥

**जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनाम्। येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु॥१३॥**

जीवेत्यादि। १। १३। सर्व्वदेहिनामन्तरात्मा जीवसंज्ञः क्षेत्रज्ञभूतात्मभ्यामन्यः * सहजः सूक्ष्मशरीर

सर्गेजातः । १ । येनान्तरात्मनाजीवसंज्ञेन*जन्मसुखंदुःखंच*सर्व्वभूतात्मानौद्वौ*विदुः सक्षेत्रज्ञोलोकेतौव वेदयते । ११ । ननुकोऽसौजीवसंज्ञ*इत्यतआह ।

**तावुभौभूतसंपृक्तौमहान्‌क्षेत्रज्ञएवच । उच्चावचेषुभूतेषुस्थितंतंव्याप्यतिष्ठतः॥ १४ ॥**

तावित्यादि । १ । १४ । जीवसंज्ञोऽसौमहान्‌क्षेत्रज्ञश्च*तौ तौयौतावुभौभूत*संपृक्तौभूतात्मनियुक्तौ । १ । कस्मिन्‌भूतेसंपृक्तावित्यतआह । २ । उच्चावचेष्वित्यादि । २ । उच्चावचेषुखलुइहत्*क्षुद्रेषु भूतेषुप्राणिषु * स्थितंतंभूतात्मानंव्याप्यातिष्ठतइतिवेदितव्याम् । २ । १४ । ननुसुषुप्तौकःकिंकुर्य्यादिति चेद्रुच्यते विज्ञेयं * यत्रसुप्तोनकञ्चन*कामंकामयतेनच * कञ्चनस्वप्नंपश्यति*तत्सुषुप्तिस्थानमिति । १७ । सुषुप्तिस्थानएकीभूतः प्रज्ञानघनएवानन्द* मयआनन्दभुक्‌चेतो*मुखःप्राज्ञस्तृतीयःपादःइतिसुषुप्तौभूतात्मनोरहङ्कारेलयान्नकर्म्मणांकर्त्ता वर्त्ततेनचक्षेत्रज्ञःकारयतिचेतःप्रज्ञासुखेनानन्दंभुङ्क्ते । १८ । ननुयोऽयंप्रज्ञयाविशिष्टःप्राज्ञःसएनावेवद्वौ * भूतात्मानावक्षयो* द्वयोःकर्म्माणिकारय * तीत्यपेक्षेत्रज्ञआत्मोच्यते ॥ १८ । १२ । सचकेनकर्म्माणिकार यती*त्यतआह ।

**असङ्ख्यामूर्त्तयस्तस्यनिष्पतन्तिशरीरतः । उच्चावचानिभूतानिसततंचेष्टयन्तियाः ॥ १५ ॥**

असंख्येत्यादि । १५ । तस्यचक्षेत्रज्ञस्य * खल्वात्मनःशरीरत*स्त्वसङ्ख्यामूर्त्तयएव*निष्पतन्तियामूर्त्तय *उच्चावचानिभूतानि*सततमेवचेष्टयन्ति । १ । मुण्डकोपनिषदिचोक्तमेवेदं * यथासुदीप्तात्पावकाद्विस्फुलिङ्गाः*सहस्रशःप्रभवन्तिसरूपाः । तथाक्षराद्विविधाःसौम्यभावाः*प्रजायन्तेतत्रचैवापियन्ति । इति । २ । १५ ।

**पञ्चभ्यएवमात्राभ्यःप्रेत्यदुष्कृतिनांनृणाम् । शरीरंयातनार्थीयमन्यदुत्पद्यतेध्रुवम् १६॥**

पञ्चभ्यएवेत्यादि । १६ । दुष्कृतिनांनृणांप्रेत्य * स्थूलशरीरिष्वेनवर्त्तमानानां * पञ्चभ्यएवमात्राभ्य । १ । आकाशादिभ्योभूतेभ्यो * यातनार्थीयमन्यच्च * शरीरमेकंध्रुव * मनश्वरंस्थिरमुत्पद्यते ॥ १६ ॥

**तेनानुभुयतायामीःशरीरेणेवयातनाः । तास्वेवभुतमात्रासुप्रलीयन्तेविभागशः ॥ १७ ॥**

तेनेत्यादि । १७ । तेनयातनार्थीयेन शरीरेण * तायामीयातनाश्चव * भूयावसानेतेषांनृणां * तानियातनार्थीयानि * शरीराणि । १ । विभागशस्तास्व * भूतमात्रास्वेव * यतोयत्तत्ततदिदेवंप्रलीयन्ते ॥ २ ॥ १७ ॥

एतादृतादि । २३ । अस्य जीवस्य एता गतीः * धर्मतः धर्माधर्माभ्याम् * गतीः स्वेनैव चेतसा दृष्ट्वा पुमान् * सदा धर्मे मनो दध्यात् । २३ ॥

**सत्वं रजस्तमश्चैव त्रीन् विद्यादात्मनो गुणान् । यैर्व्याप्येमान् स्थितोभावान्महान् सर्व्वानशेषतः ॥ २४ ॥**

सत्वमित्यादि । २४ । सत्त्वादीन् त्रीनात्मनो महतो गुणान् विद्यात् * महानात्मा यैः गुणैः इमान् सर्व्वान् * भावान् अशेषतो व्याप्य स्थितः स्यात् । २४ ।

**यो यदैषां गुणो देहे साकल्येनातिरिच्यते । स तदा तद्गुणप्रायं तं करोति शरीरिणम् ॥ २५ ॥**

यो यदेषामित्यादि । २५ । यो गुण एषां मध्ये * देहे यदा साकल्येन अतिरिच्यते * तदा स गुणस्तद्गुण * प्रायं तं शरीरिणं नरं करोति । २५ ।

**सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् । एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः ॥ २६ ॥**

सत्वमित्यादि । २६ । सत्त्वं गुणो ज्ञानं ज्ञानजनकत्वात् * तमोगुणस्त्वज्ञानं मोहात्मकत्वात् * रजोगुणो रागद्वेषौ तज्जनकत्वात् । १ । एषां सत्त्वादीनां त्रयाणां गुणानां * व्याप्तिमदव्यभिचारविशिष्टं * सर्व्वभूताश्रितमेतद्वपुर्भवतीति । २६ ।

**तत्र यत्प्रीतिसंयुक्तं किञ्चिदात्मनि लक्षयेत् । प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥ २७ ॥**

तत्रेत्यादि । २७ । तत्र त्रिगुणव्याप्ते शरीरे प्रीति * संयुक्तं यत्किञ्चित्प्रशान्तमिव * शुद्धाभमात्मनि लक्षयेत् सत्त्वगुणात्मकमित्युपधारयेत् । २७ ।

**यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः । तद्रजोऽप्रतिघं विद्यात्सततं हारि देहिनाम् ॥ २८ ॥**

यत्त्वित्यादि । २८ । तत्र त्रिगुणव्याप्ते वपुष्यात्मनि * आत्मनोऽप्रीतिकरं * दुःखसमायुक्तं यत्तु * अप्रतिघमक्रोधं । १ । सततं देहिनां हारि तद्रजो * रजोगुणकृतं विद्यात् । २८ ।

**यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम् । अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २९ ॥**

यत्तु स्यादित्यादि । २९ । तत्र त्रिगुणव्याप्ते वपुष्यात्मनि * यत्तु किञ्चिदव्यक्तं मोहसंयुक्तं * विषयात्मकमप्रतर्क्यमविज्ञेयं * तत्तमस्तमोगुणकृतं विद्यात् । २९ ।

**त्रयाणामपि चैतेषां गुणानां यः फलोदयः । अग्र्यो मध्यो जघन्यश्च तं प्रवक्ष्याम्यशेषतः ॥ ३० ॥**

त्रयाणामित्यादि।३०। एषां त्रयाणां गुणानां * यः फलोदयः कर्म्मणां * समग्रेण यतस्तं * संक्षेपतः प्रवक्ष्यामि।३०।

वेदाभ्यासस्तपोज्ञानं शौचमिन्द्रियनिग्रहः। धर्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम्॥३१॥

वेदाभ्यास इत्यादि।३१। वेदाभ्यासादिकं सात्त्विकं * गुणलक्षणं * वेदितव्यम्।३१।

आरम्भरुचिताऽधैर्यमसत्कार्यपरिग्रहः। विषयोपसेवा चाजस्रं राजसं गुणलक्षणम्॥३२॥

आरम्भेत्यादि।३२। आरम्भरुचि * प्रभृतिकं * राजसं गुण * लक्षणं स्यात्।३२।

लोभः स्वप्नोऽधृतिः क्रौर्यं नास्तिक्यं भिन्नवृत्तिता। याचिष्णुता प्रमादश्च तामसं गुणलक्षणम्॥३३॥

लोभ इत्यादि।३३। लोभादिकं * तामसमेव * गुणलक्षणं * वेदितव्यम्।३३।

त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम्। इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम्॥३४॥

त्रयाणामित्यादि।३४। एतेषां सत्त्वादीनां त्रयाणामेव * गुणानां क्रमश उक्तं * यद्यद् गुणलक्षणं तत् * इदं सामासिकं समस्तं त्रिषु गुणेषु तिष्ठतां ज्ञेयं।३४।

यत्कर्म कृत्वा कुर्वंश्च करिष्यंश्चैव लज्जति। तज्ज्ञेयं विदुषा सर्वं तामसं गुणलक्षणम्॥३५॥

यत्कर्मेत्यादि।३५। यो यत्कर्म कृत्वा कुर्वन् * करिष्यंश्च लज्जते तत् * सर्वं तामसं गुण * लक्षणं विदुषा ज्ञेयं।३५।

येनास्मिन्कर्मणा लोके ख्यातिमिच्छति पुष्कलाम्। न च शोचत्यसम्पत्तौ तद्विज्ञेयं तु राजसम्॥३६॥

येनेत्यादि।३६। येन कर्म्मणा क्रियमाणेन * कृतेन करिष्यमाणेन च * लोकेऽस्मिन् पुष्कलां शुभां * ख्यातिं पुरुष इच्छति।१। असम्पत्तौ यथाविधि * सम्पन्नत्वाभावे सति * न शोचति तद्राजसं * गुणलक्षणं विज्ञेयं।३६।

यत्सर्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन्। येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम्॥३७॥

यत्सर्वेणेत्यादि।३७। यत्कर्म्म कृत्वा कुर्वन् करिष्यंश्च * पुरुषः सर्वेण प्रकारेण ज्ञातु * मिच्छति यच्चाचरन्न लज्जति।१। येन कर्म्मणास्य * कर्त्तुरात्मा च * तुष्यति तत्सत्त्वगुणलक्षणं स्यात्।३७।

तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते। सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम्॥३८॥

तमस इत्यादि।३८। यद्यपि कामो रजोगुणकार्य्यः * स तमस्तमनी रजस्कं वर्त्तते * नित्यसम्बन्धं रज

श्मवक्रः। १ \। तमसः रजोऽववन्धतमःकाय। ३*कामीरजसीलक्षण * मव्यःकमसलक्षणं। २। धर्मीएषां तथाकां* कामार्थधर्म्माणा उत्तरोत्तरं श्रेष्ठं भवति ॥ १८ ॥

येनयांस्तुगुणैर्जीवःसंसारान्प्रतिपद्यते। तान्समासेनवच्याम्यसर्व्वस्यास्ययथाक्रमम् ३९

येनेत्यादि। ३९। योऽयमएषां गुणानां *येनगुणेनयान्संसारान्*पुनःपुनर्जन्ममरणाभ्यामिह * चागम नाविपरव*मध्ये प्रतिपद्यते १।१ सर्व्वस्यास्यतान् संसारान्समासेन*यथाक्रमं प्रवक्ष्यामि।२।३९।

देवत्वंसात्त्विकायान्तिमनुष्यत्वञ्चराजसाः। तिर्य्यक्त्वंतामसानित्यमित्येषात्रिविधागतिः ४०

देवत्वमित्यादि। ४०। सात्त्विकाजनादेवत्वं * यान्तिराजसाजना*मनुष्यत्वमिहयान्ति। १। तामसाज नास्तिर्य्यक्त्वं यान्तीति एषा*नित्यं त्रिविधागतिःस्यात्। २। ४०।

त्रिविधात्रिविधैषातुविज्ञेयागौणिकीगतिः। अधमामध्यमाग्र्याचकर्म्मविद्याविशेषतः॥४१॥

त्रिविधेत्यादि। ४१। एषागुणात्रिविधा तु*गतिर्गौणिकीत्रिविधा*कर्म्मविद्याविशेषतो* भवत्यधमाच मध्यमाचाग्र्याच। १। ४१।

स्थावराःक्रिमिकीटाश्चमत्स्याःसर्पाःसकच्छपाः। पशवश्चमृगाश्चैवजघन्यातामसीगतिः॥४२॥

स्थावरादीत्यादि। ४२। तामसास्तिर्य्यक्त्वं यान्तीतियदुक्तं*तत्रकर्म्मविद्याहीनाः*स्थावरादयोभवन्ति * साजघन्यातामसीगतिः। १। ४२।

हस्तिनश्चतुरङ्गाश्चशूद्राम्लेच्छाश्चगर्हिताः। सिंहाव्याघ्रावराहाश्चमध्यमातामसीगतिः॥४३॥

हस्तिनश्चेत्यादि। ४३। कर्म्मविद्यामध्यमत्वात्तिर्य्यक्त्वं *हस्त्यादयोये भवन्ति*सातेषां मध्यमातामसी गतिः। १। ४३।

चारणाश्चसुपर्णाश्चपुरुषाश्चैवदाम्भिकाः। रक्षांसिचपिशाचाश्चतामसीषूत्तमागतिः॥ ४४॥

चारणाश्चेत्यादि। ४४। चारणादयोऽपितिर्य्यक्त्वे*तत्तिर्य्यक्त्वेऽपि एषामुत्तमैव* तामसीगतिर्विद्याकर्म्मा धिक्यात्। १। ४४।

झल्लामल्लानटाश्चैवपुरुषाःशस्त्रवृत्तयः। द्यूतपानप्रसक्ताश्चजघन्याराजसीगतिः॥ ४५॥

झल्लादीत्यादि। ४५। मनुष्यत्वञ्चराजसा*इतियदुक्तं तत्र*ये हीनकर्म्मविद्याराजसास्ते * झल्लादयोभवन्ती ति एषां*जघन्याराजसीगतिः। १। ४५।

राजानःक्षत्रियाश्चैवराज्ञश्चैवपुरोहिताः। वादयुद्धप्रधानाश्चमध्यमाराजसीगतिः॥ ४६॥

राजानइत्यादि । ४६ । मध्यमकर्म्मविद्याविशेषादेव * राजादयोभवन्तीत्येषा * मध्यमाराजसी गतिः । १ । ४६ ।

गन्धर्व्वागुह्यकायक्षाविबुधानुचराश्चये । तथैवाप्सरसःसर्व्वाराजसीषूत्तमागतिः॥ ४७॥

गन्धर्व्वाइत्यादि । ४७ । येराजसाःपूर्व्वजन्मन्युत्तमकर्म्मविद्यावन्तः * ते गन्धर्व्वादयोभवन्तीत्येषा * राजसीषुगतिषुमध्ये उत्तमाराजसीगतिःस्यात् । ४७ ।

तापसायतयोविप्रायेचवैमानिकागणाः । नक्षत्राणिचदैत्याश्चप्रथमासात्त्विकीगतिः॥४८॥

तापसाइत्यादि । ४८ । येसात्त्विकाहीनकर्म्म * विद्याविशेषाःपूर्व्वजन्मनि * ते तापसादयोभवन्तीत्येषा * प्रथमाखल्वधमैव * सात्त्विकीगतिरुच्यते । १ । ४८ ।

यज्वानऋषयोदेवावेदाज्योतींषिवत्सराः। पितरश्चैवसाध्याश्चद्वितीयासात्त्विकीगतिः॥४९॥

यज्वानइत्यादि । ४९ । येसात्त्विकाःपूर्व्वजन्मनिमध्यमकर्म्मविद्या * विशेषास्तेयज्वादयो * भवन्तीत्येषा द्वितीया * मध्यमासात्त्विकीगतिः । १ । ४९ ।

ब्रह्माविश्वसृजोधर्म्मोमहानव्यक्तमेवच । उत्तमांसात्त्विकीमेतांगतिमाहुर्मनीषिणः॥ ५०॥

ब्रह्मेत्यादि । ५० । येसात्त्विकाःपूर्व्वजन्मन्युत्तमकर्म्मविद्या * विशेषास्तेब्रह्मादयो * भवन्तीत्येषा उत्तमा * मेतां सात्त्विकीं गतिं * मनीषिणोबुधाआहुः । १ । ५० । उपसंहरति ।

एषसर्व्वःसमुद्दिष्टस्त्रिप्रकारस्यकर्म्मणः। त्रिविधस्त्रिविधःकृत्स्नःसंसारःसार्व्वभौतिकः॥५१॥

एषइत्यादि । ५१ । एषकर्म्मणस्त्रिप्रकारस्यफलात् * सार्व्वभौतिकस्त्रिविध * स्त्रिविधःकृत्स्नःसंसारः * सर्व्वएव समुद्दिष्टः ॥ १ ॥ नन्वत्रजिज्ञासायोऽसौब्रह्माविश्वसृजोमन्वादयःप्रजा * पतयोधर्म्मश्चमहा * नात्माद्योऽव्यक्त योक्तौ * यथावाङ्गउक्तं प्राक् । यस्तत्कारणमव्यक्तं नित्यं सदसदात्मकमितितत्कथमुत्तमसात्त्विकं वक्तुं चेत् नाम्नामधिष्ठानमित्यतआह * ... ॥२॥ एते किंयेपूर्व्वजन्मन्युत्तमकर्म्माचारेण * उत्तमविद्यावन्तश्च * तेपुनरिह जज्ञिरे * एतीगतिषुभिहिताः ॥ २ ॥ सत्यमेतत्सर्व्वं यथा * तमूषामानं शृणुत * महासर्गोऽयमनन्तकालएव *

बहूनित्यादि । ५४ । महापातकिनः दुष्कृतमाय* विस्तारबहून्वर्षगणान्घोरान्*नरकान्प्राप्य नरक भोगक्षयात्*पुनरिमान् संसारान्प्रतिपद्यन्ते । १ ॥ ५४ ।

श्वसूकरखरोष्ट्राणांगोऽजाविमृगपक्षिणाम् । चाण्डालपुक्कसानाञ्चब्रह्महायोनिमृच्छति ५५

श्वशूकरेत्यादि ॥ ५५ ॥ ब्रह्महानरकभोगावसाने * श्वशूकरादीनां यो*निं क्रमशऋच्छति । १ । ५५ ।

कृमिकिटपतङ्गानांविड्भुजाञ्चैवपक्षिणाम् । हिंस्राणाञ्चैवसत्त्वानांसुरापोब्राह्मणोव्रजेत् ५६

क्रिमीत्यादि । ५६ । अविधिनासुरापोब्राह्मणोनर*कावसाने क्रिमिकीटा* दीनां योनिंक्रमाद्व्रजेत् । ५६ ।

लूताहिशरटानाञ्चतिरश्चाञ्चाम्बुचारिणाम् । हिंस्राणाञ्चपिशाचानांस्तेनोविप्रःसहस्रशः ५७

लूतेत्यादि ॥ ५७ ॥ ब्राह्मणस्वर्णस्तेनो*विप्रोनरकभोगाव * साने सहस्रशोलूता*दीनांयोनिं क्रमाद्व्रजेदितिपूर्व्वेणान्वयः । १ । ५७ ।

तृणगुल्मलतानाञ्चक्रव्यादंष्ट्रिणामपि । क्रूरकर्मकृताञ्चैवशतशोगुरुतल्पगः ॥ ५८ ॥

तृणेत्यादि । ५८ । गुरुतल्पगोनरक* भोगावसाने शतश*स्तृणादीनां योनिं क्रमशो व्रजेत् ॥ ५८ ।

हिंस्राभवन्तिक्रव्यादाःक्रिमयोऽभक्ष्यभक्षिणः । परस्परादिनःस्तेनाःप्रेतान्त्यस्त्रीनिषेविणः ५९

हिंसाइत्यादि । ५९ । स्तेनाब्राह्मणस्वर्णस्तेनादन्ये*चौरानरकावसाने*हिंस्रादयोभवन्तीति ॥१॥५९

संयोगंपतितैर्गत्वापरस्यैवचयोषितम् । अपहृत्यचविप्रस्वंभवतिब्रह्मराक्षसः ॥ ६० ॥

संयोगमित्यादि ॥ ६० ॥ पतितैर्महापातकिभिःसह*संयोगं गत्वापञ्चम०महापातकीनरःपरस्य*योषितां गत्वाविप्रस्वमपहृत्य ॥ १ ॥ नरकभोगावसाने पुनविह*ब्रह्मराक्षसोभवति ॥ २ ॥ ६० ॥

मणिमुक्ताप्रवालानिहृत्वालोभेनमानवः । विविधानिचरत्नानिजायतेहेमकर्तृषु ॥ ६१ ॥

मणीत्यादि । ६१ ॥ मानवोलोभेनमणि * मुक्तादीनिहृत्वानरकावसाने* हेमकर्तृषुस्वर्ण* कारवंशेषु जायते ॥ १ ॥ ६१ ॥

धान्यंहृत्वाभवत्याखुःकांस्यंहंसोजलंप्लवः । मधुदंशःपयःकाकोरसंश्वानकुलोघृतम् ॥ ६२

वाताः हृत्वामद्यनाग्यवताम्रं तां सु * कंबलिकां वा हृत्वा च सोभवति * अन्नं हृत्वा मवोभक्कोभवति । १ । मधु हृत्वा दंशोमावशिका * भवतिपयोहृत्वाकाकोभवति * रसमिक्षुवत्वादिकं हृत्वाश्वा * भवतिघृतं हृत्वानकुलः स्यात् । ६१ ।

मांसं गृध्रो वपां मद्गुस्तैलं तैलपकः खगः । चीरीवाकस्तु लवणं बलाका शकुनिर्दधि ॥ ६२ ॥

मांसमित्यादि । ६२ । मांसं हृत्वा गृध्रो भवेत् * वपां हृत्वा मद्गुर्भवेत् * तैलं हृत्वा तैलपः पक्षी भवति । १ । लवणं हृत्वा चीरीवाको भिल्ली * रवः कीटोभवति दधि हृत्वा * बलाका नाम पक्षी भवति । ६२ ।

कौशेयं तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः । कार्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४

कौशेयमित्यादि । ६४ । कौशेयं कोशकारवस्त्रादि * हृत्वा तित्तिरिर्भवति * क्षौमं उमावस्त्रादिकं हृत्वा * दर्दुरो भेकविशेषः स्यात् । १ । कार्पासतान्तवं वस्त्रादिकं हृत्वा * क्रौञ्चो बकविशेषः स्यात् * गां हृत्वा गोधा भवति * गुडं हृत्वा वाग्गुदो वाग्गुदो नाम स्यात् । ६४ ।

छुच्छुन्दरिः शुभान्गन्धान्पत्रशाकं तु बर्हिणः । श्वावित्कृतान्नं विविधमकृतान्नं तु शल्यकः ॥ ६५

छुच्छुन्दरिरित्यादि । ६५ । शुभान्गन्धान्हृत्वा छुच्छुन्दरिर्भवेत् * पत्रशाकं हृत्वा बर्हिणः स्यात् * कृतान्नं पक्वमन्नं हृत्वा * श्वाविद्गात्रविशेषः स्यात् । १ । अकृतमन्नं विविधं * तण्डुलविदलसमितादिकं * हृत्वा शल्लको भवति । ६५ ।

बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम् । रक्तानि हृत्वा वासांसि जायते जीवजीवकः ॥ ६६ ॥

बक इत्यादि । ६६ । अग्निं हृत्वा नरकावसाने बकः * पक्षी भवति गृहस्य * यद्यदुपस्करः उप * करणं सूर्प घटादि । १ । तत्तद्धृत्वा गृहकारी * कीटविशेषो भवति * रक्तवर्णानि वासांसि * हृत्वा जीवजीवकः पक्षी जायते । ६६ ।

वृको मृगेभं व्याघ्रोऽश्वं फलमूलं तु मर्कटः । स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः ॥ ६७ ॥

वृक इत्यादि । ६७ । मृगमिभञ्च हृत्वा वृकः कुक्कुरो * व्याघ्रो जायते ऽश्वं हृत्वा * व्याघ्रो जायते फलञ्च * मूलञ्च हृत्वा मर्कटो भवतीति । १ । स्त्रीं हृत्वा ऋक्षो भल्लुको * भवति वारि हृत्वा चातको भवति * यानानि हृत्वा उष्ट्रो भवति * पशून् हृत्वा ऽजश्छागः स्यात् । ६७ ।

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः । अवश्यं याति तिर्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ ६८ ॥

यद्वा तद्वेत्यादि । ६८ । नरो यद्वा तद्वा परस्य द्रव्यं * बलादपहृत्य तथा * यज्ञविनं कृतं तदविश्वज्जग्ध्वा * तिर्यक्त्वमवश्यं याति । ६८ ।

**स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः। एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः॥ ६९॥**

स्त्रिय इत्यादि। ६९। स्त्रियोऽप्युक्तां स्वां स्वामनुहृत्वा एतेनोक्तेन* कल्पेन दोषं पापं* प्राप्य नरकमाप्नुयुः। १। नरकभोगावसाने इति* तेषां मध्ये तत्तत्पाप* नरकभोगावसाने। २। पुनर्द्विजजातानामेतेषामेव* हिंस्र-प्रभवादादीनां जन्तूनां ताः स्त्रियः* स्त्रियो भूत्वा भार्यात्वमुपयान्ति। ६९॥

**स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि। पापान् संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु॥ ७०॥**

स्वेभ्य इत्यादि। ७०। अनापदि वर्णा ब्राह्मणक्षत्रिय* वैश्य-शूद्राः स्वेभ्यः स्वेभ्यः* कर्मभ्यश्च्युता नरका* वसाने पापान्* संसारान् संसृत्य शत्रुषु* प्रेष्यत्वं दासत्वं यान्ति। ७०॥

**वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात् स्वकाच्च्युतः। अमेध्यकुणपाशी च क्षत्रियः कटपूतनः॥ ७१**

वान्ताशीत्यादि। ७१। स्वकाद्धर्माच्च्युतो विप्रः* प्रेतो भूतस्तत उल्कामुखो* नामवान्ताशी पिशाचः स्यात्। १। क्षत्रियः स्वकाद्धर्माच्च्युतः प्रेतो* भूतः सन् कटपूतनो* नामामेध्यकुणपाशी* पिशाचो भवतीति। ७१।

**मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक्। चैलाशकश्च भवति शूद्रो धर्मात् स्वकाच्च्युतः॥ ७२**

मैत्राक्षेत्यादि। ७२। वैश्यः स्वकाद्धर्माच्च्युतः* प्रेतो भूतः सन् पूयभुक्* कृमिर्मैत्राक्षज्योतिको* नाम पिशाचः स्यात्। १। शूद्रश्च स्वकाद्धर्माच्च्युतः प्रेतो* भूतमात्रं चैलाशको* नाम पिशाचो भवति* तेन तत् पिशाचत्वमोचने* सपिण्डीक्रियान्ता क्रिया द्विवः। ७२।

**यथा यथा निषेवन्ते विषयान् विषयात्मकाः। तथा तथा कुशलता तेषां तेषूपजायते॥ ७३॥**

यथा यथेत्यादि। ७३। विषयात्मकाः पुरुषाः* यथा यथा विषयान् निषेवन्ते* तेषां तेषु विषयेषु तथा तथैव* कुशलतोपजायते। ७३॥

**तेऽभ्यासात् कर्मणां तेषां पापानामल्पबुद्धयः। सम्प्राप्नुवन्ति दुःखानि तासु तास्विह योनिषु॥ ७४**

तेऽभ्यासादित्यादि॥ ७४॥ तेऽल्पबुद्धयो विषयात्मकास्तेषां* पापानां कर्मणामभ्यासादिहैव* तासु तासु योनिषु* दुःखानि सम्प्राप्नुवन्ति॥ ७४॥ अथ नरकादुच्यन्ते।

**तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम्। असिपत्रवनादीनि बन्धनच्छेदनानि च॥ ७५॥**

तामिस्रादीत्यादि॥ ७५॥ उग्रेषु तामिस्रादिषु नरकेषु* विवर्त्तनं प्राप्नुवन्ति तथैव* बन्धनच्छेदनानि यत्र तान्यसि* पत्रवनादीनि प्राप्नुवन्ति॥ ७५॥

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि । समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१ ॥

सर्व्वेत्यादि । ९१ । निष्कामत्वे द्विजः कर्म्म* कृत्वा द्विजोत्तमः सर्व्व* भूतेषु आत्मानं स्वमात्मनि च सर्व्व* भूतानि पश्यन्नात्मयाजी* स्वाराज्यमधिगच्छति । १ । ९१ ।

यथोक्तान्यपि कर्म्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥ ९२

यथोक्तानीत्यादि । ९२ । द्विजोत्तमो ब्राह्मणो* यथोक्तान्यपि कर्म्माणि* परिहाय आत्मज्ञाने शमे च वेदे* अभ्यासे च यत्नवान् स्यादिति । १ । ९२ ।

एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥ ९३ ॥

एतदित्यादि । ९३ । द्विज एतदात्मज्ञानं* शमं वेदाभ्यासं प्राप्य * विशेषात् कृतकृत्यो भवति नान्यथा* न कृतकृत्यो भवति । १ । विशेषतो हि ब्राह्मणस्य एतत्* आत्मज्ञानं शमं वेदा*भ्यासं जन्मनः साफल्यं * तस्मात्तत्र यत्नवान् स्यात् । २ । ९३ । तत्र वेदाभ्यासं प्रशंसति*

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् । अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः ॥ ९४ ॥

पितृदेवेत्यादि । १ । ९४ । पितृणां देवानां मनुष्याणाञ्च* सनातनं नित्यं चक्षुः* वेदो भवति नित्यत्वात् । १ वेदशास्त्रं यतो मनुष्यैः कैरपि* कर्त्तुं यतश्चाप्रामाण्यं* लौकिकैः प्रमाणैर्न वि* अशक्यमिति व्यवस्थितिः । २ । ९४ ।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ ९५

या इत्यादि । ९५ । वेदबाह्या याः स्मृतयो* याश्च काश्च लोकानां कुदृष्टयः ता* ताः सर्व्वाः प्रेत्य निष्फलाः । १ कस्माद्विशेषात् वेदबाह्या एव* स्मृतयः कुदृष्टयश्च* तमोनिष्ठा बुधैः स्मृताः । २ । ९५ ।

उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् । तान्यर्व्वाक्कालिकतया निष्फलान्यनृतानि च ॥ ९६ ॥

उत्पद्यन्त इत्यादि । ९६ । अतो वेदोक्तकर्म्मभ्योऽन्यानि यानि* कानिचित् तान्युत्पद्यन्ते * च्यवन्ते चार्व्वाक्कालिकतया खलु* निष्फलानि चानृतानि भवन्ति । १ । ९६ ।

चातुर्व्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यञ्च सर्व्वं वेदात्प्रसिध्यति ॥ ९७

चातुर्व्वर्ण्यमित्यादि । ९७ । चातुर्व्वर्ण्यं त्रयो लोका* चत्वारः पृथगाश्रमा* भूतं भव्यं भविष्यदिति त्रिकालं * सर्व्वं वेदात्प्रसिध्यति । १ । ९७ ।

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः । वेदादेव प्रसूयन्ते प्रसूतिर्गुणकर्म्मतः ॥ ९८ ॥

शब्द इत्यादि । ९८ । शब्दादयः पञ्चार्था वेदादेव * प्रकृतिगुणकर्म्मतः * प्रसूयन्ते जायन्ते । १ । ९८ ।

बिभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम् ॥ ९९ ॥

बिभर्त्तीत्यादि । ९९ । सनातनं वेदशास्त्रं * सर्व्वभूतानि बिभर्त्ति * तस्मादेतद्वेदशास्त्रं * परं श्रेष्ठं मन्ये यत् * वेदशास्त्रमस्य जन्तोः सर्व्वकर्म्मणां साधनं स्यात् । १ । ९९ ।

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च । सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ १०० ॥

सैनापत्यञ्चेत्यादि । १०० । सैनापत्यादिकं सर्व्वं * वेदशास्त्र * विज्ञोऽर्हति । १ । १०० ।

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान् । तथा दहति वेदज्ञः कर्म्मजं दोषमात्मनः ॥ १०१ ॥

यथेत्यादि । १०१ । जातबलो वह्निर्यथा * द्रुमानार्द्रानपि दहति तथैव * वेदज्ञ आत्मनः कर्म्मजं * दोषं पापं दहतीति । १ । १७१ ।

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् । इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥ १०२ ॥

वेदेत्यादि । १०२ । वेदशास्त्रस्यार्थतत्त्वज्ञो जनो * यत्र तत्राश्रमे ब्रह्माश्रमे वना * श्रमे वा चतुर्थाश्रमे * वसन्निहैव लोके तिष्ठन् * ब्रह्मभूयाय कल्पते । १ । १०२ ।

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः । धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः ॥ १०३ ॥

अज्ञेभ्य इत्यादि । १०३ । अज्ञेभ्यः शास्त्रानभिज्ञेभ्यः * श्रेष्ठा ग्रन्थिनो भवन्ति * ग्रन्थिभ्यो जनेभ्यो वराः * स्वद्ग्रन्थमभ्यासात् कण्ठे धारिणो जनाः । १ । ग्रन्थस्य धारिभ्यो जनेभ्यः श्रेष्ठाः * स्वद्ग्रन्थार्थज्ञानिनो जना भवन्ति ज्ञानिभ्यः * श्रेष्ठास्तद्[illegible]व्यवसायिनः । २ । १०३ ।

तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

तप इत्यादि । १०४ । तपो विद्या च विप्रस्य * परं श्रेष्ठं निःश्रेयसकरं भवेत् * तत्र तपसा किल्बिषं पापं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ १०५ ॥

प्रत्यक्षमित्यादि । १०५ ॥ धर्मशुद्धिमभीप्सता पुरुषेण * प्रत्यक्षं चानुमानञ्च * विविधागमं शास्त्रञ्च तित्रय सुविदित * मवगम्य मित्यन्तं कार्यं ॥ १०५ ॥

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ १०६ ॥

आर्षमित्यादि ॥ १०६ ॥ यो वेदशास्त्राविरोधिना तर्केण * खल्वार्षं धर्मोपदेशं *मनुसन्धत्ते स एव * धर्मं वेद नान्यितरः ॥ १०६ ॥

नैःश्रेयसमिदं कर्म यथोदितमशेषतः । मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥

नैःश्रेयसमित्यादि । १०७ । नैःश्रेयसं कर्म यथा भवतीति * यदेतदशेषतः उदितं । १ । मानवस्यास्य शास्त्रस्य * रहस्यं गोप्यं यन्निःश्रेयसं कर्म * तदत्र उपदिश्यते ॥ १०७ ॥

अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ १०८

अनाम्नातेष्वित्यादि । १०८ । इह संहितायाममनाम्नाता अनोक्ता * ये धर्मास्तेषु धर्मेषु * कथं वर्त्तमानः स्यादि* ति चेद्भवेत् जिज्ञास्यते । १ । यं धर्मं शिष्टा ब्राह्मणा ब्रूयुः * स खलु अशङ्कितो धर्मः स्यात् ॥ २ ॥ १०८ ॥ शिष्टा कीदृशा इत्याह ।

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥ १०९ ॥

धर्मेणेत्यादि । १०९ । यैस्तु खलु धर्मेण * ब्रह्मचर्येण वेदः खलु * सपरिबृंहणोऽधिगत * स्ते शिष्टा ब्राह्मणा ज्ञेयाः । १ । कस्मात् यतस्ते श्रुतिप्रत्यक्षस्य * हेतवो लोके भवन्ति ॥ १०९ ॥

दशावरा वा परिषद्यं धर्मं परिकल्पयेत् । त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥ ११० ॥

दशावरेत्यादि । ११० । दशपण्डिता अवरा * न्यूनकल्पे यस्याः सा परिषद्दशादिपण्डितानाञ्च * दश भ्यो न्यूनाः सा यं धर्मं परि * कल्पयेत् स्थवाथा च । १ । वृत्तस्था त्र्यवरा परिषद् यं धर्मं * कल्पयेत् तं धर्मं न विचाल येत् ॥ ११० ॥ कीदृशी परिषत् * दशावरा भवतीत्याह ।

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा ॥ १११ ॥

त्रैविद्य इत्यादि । १११ । यस्यां परिषदि त्रैविद्यास्त्रिवेदः * त्रिवेद हैतुकस्तर्की आन्वीक्षिकी * विद्यावान् तर्की युक्तिवित् * निरुक्तिविद्यावान् धर्म* शास्त्राणाञ्च पाठकः स्यात् । २ । पूर्वाश्रमत्रयवन्तस्त्रयो वा विधदशपण्डितवती सभा * दशावरा परिषद्भवति ॥ १११ ॥ त्र्यवरा परिषत्पुनः * कीदृशीत्याह ।

**आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् । आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम् ॥११९**

आत्मेत्यादि । ११९ । अयमात्मैव देवतादिःपुरुषएव सर्वा देवताः सर्वदेवतामयः * आत्मन्येव सर्वमवस्थितमस्ति * हि यस्मादेषां शरीरिणां कर्म * योगमात्माजनयतिनत्वन्यः । ११९ । कथमात्मनिरूप्य इत्युच्यमितात आह ।

**खं सन्निवेशयेत् खेषु चेष्टनस्पर्शनेऽनिलम् । पक्तिदृष्ट्योः परं तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु १२०**

**मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरम् । वाच्यग्निं मित्रमुत्सर्गे प्रजने च प्रजापतिम् १२१**

खमित्यादि ॥ १२० ॥ यएषदेवतादिःपुरुषस्तस्यशरीरे खेषु सर्व्वं सुच्छिद्रं सुखलु आकाशमाकाशमधि * देवं सन्निवेशयेत् । १ । यच्च किञ्चिच्चेष्टते स्पृशति च * तत्र चेष्टने स्पर्शनेन्द्रिये च * निलमधिदेवं सन्निवेशयेत् २ । यच्चाभ्यवहरतितस्योपक्तयां लोचनपश्यतितद्दृष्टौचादित्यं * परं तेजोऽधिदेवं सन्निवेशयेत् ।३। यस्तन्मात्स्नाद्यास्निग्ध तितत्र * स्नेहे रसनादावपो * ऽधिदेवं सन्निवेशयेत् । ४ । याश्चैताःपुरुषेमूर्त्तयोऽस्थ्यादयो * दृयस्तास्वधिदेवता * पृथिवीं सन्निवेशयेत् ॥१२०॥ मनसीत्यादि ॥१२१॥ यच्चास्मिन्मननमस्तितत्र * मनस्यधिदेवमिन्दुं * चन्द्रमसं सन्निवेशयेत् । १ । यदनेनश्रोत्रेणशृणोतितत्र * श्रोत्रे ऽधिदेवं दिशःसन्निवेशयेत् * क्रान्ते पादे विष्णुमधि * देवमात्मासन्निवेशयेत् । २ । बले ऽधिदेवं हरं सन्निवेशयेत् * वाच्यग्निमधिदेवमुत्सर्गे पायौ * मित्रमधिदेवं प्रजननउपस्थे * ऽधिदेवं प्रजापतिं सन्निवेशयेत् । ३ । इत्येवं सर्व्वदेवतात्मकमात्मानिचसर्व्वमवस्थितमिति । यावन्तोलोके भावविशेषास्तावन्तःपुरुषे यावन्तःपुरुषे तावन्तोलोकइति । १२१ ॥ नन्वेतेषे देवा यान्यतानि कर्म्माणि * कुर्व्वन्तितानि किं स्वय * मेवकुर्व्वन्त्याहोस्वित्किं * प्रयोजिताइत्यतआह ।

**प्रशासितारं सर्व्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥१२२**

प्रशासितारमित्यादि । १ । १२२ । सर्व्वेषां प्रशासितारं * मन्तर्यामिनमणोरणीयांसं रुक्माभं * सुवर्णवदुज्ज्वलप्रभाभावर्णं । १ । स्वप्नधीगम्यं तत्प्रसिद्धं * परं पुरुषं परमात्मानं * परमेशं विद्यात् । २ । अत्रदार ण्यके चोक्तं * सहोवाच याज्ञवल्क्या * एतद्वै तदक्षरं गार्गी ब्राह्मणा अभिवदन्ति । ३ । एतस्य वा अक्षरस्य * प्रशासने गार्गि सूर्य्या * चन्द्रमसौ तिष्ठतः । ४ । एतस्य वा अक्षरस्य * प्रशासने गार्गि द्यावा * पृथिव्यौ विधृते तिष्ठतः । ५ । एतस्य वा अक्षरस्य * प्रशासने गार्गि निमेषा * मुहूर्त्ता अहोरात्राण्य * र्द्धमासा मासा ऋतवः * संवत्सरा इति विधृतास्तिष्ठन्ति । ६ । एतस्य वा अक्षरस्य * प्रशासने गार्गि प्राच्यो * ऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः * पर्व्वतेभ्यः प्रतीच्योऽन्या * यां यां च दिशम न्वेति । ७ । एतस्य वा अक्षरस्य * प्रशासने गार्गि ददतो मनुष्याः * प्रशंसन्ति यजमानं * देवा दर्व्वीं पितरोऽन्वा यत्ताः । ८ । इति । १२२ ।

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥ १२३॥

एतमित्यादि। १२३। योऽणोरणीयान् परः पुरुषः* सर्व्वेषां प्रशासिता* तमेके ऽग्निं वदन्ति* अन्ये त्वेके मनुं वदन्ति* अन्ये प्रजापतिमाहुः। १। एके इन्द्रं वदन्ति परे प्राणं* वदन्त्यपरे शाश्वतं ब्रह्म* वदन्तीत्येते तस्य पर्य्यायाः॥ २॥ १२३॥

एष सर्व्वाणि भूतानि पञ्चभिर्व्याप्य मूर्त्तिभिः। जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्॥१२४॥

एषेत्यादि ॥१२४॥ एष परः पुरुषः खलु घोरः* पापीयान् यतस्ततस्तत्* पञ्चभिः मूर्त्तिभिः पञ्चभिः* स तु पुरुषो ज्ञानवान्* देवदानवादीन् स्वर्गाद्याभिः। १। सर्व्वाणि भूतानि नित्यं व्याप्य* महदहङ्कारमनांसि कर्म्मणा* व्याप्य श्रोत्रादीनि बुद्धीन्द्रियाणि च। २। पाय्वादीनि कर्म्मेन्द्रियाणि च* पञ्चशब्दादयश्चार्थाः* पञ्च महाभूतानि च व्याप्य। ३। तैः पञ्चविंशत्याभावैः* जन्मवृद्धिक्षयैश्चक्रवत्* प्राणिनो नित्यं संसारयतीति* तत्पुरुषादयः पञ्च* मूर्त्तयो लोके व्याख्याताः॥ ४॥ १२४॥

एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना। स सर्व्वसमतामेत्य ब्रह्माभ्येति परं पदम्॥ १२५॥

एवमित्यादि ॥ १२५॥ एवं तत्स्वरूपं यः सर्व्वभूतेषु* य आत्मना परमात्मानं पश्यति* स सर्व्वसमतामेत्य* परमं पदं ब्रह्माभ्येति॥ १॥ माण्डूक्योपनिषद्विचोक्तं* नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं॥ २॥ न प्रज्ञं नाप्रज्ञं न प्रज्ञानघन* मव्यपदेश्यमग्राह्यमेकात्मप्रत्ययसारं प्रशान्तं *शिवमद्वैतं चतुर्थं मन्यन्ते॥ ३॥ एष आत्मा स विज्ञेय इत्यादि॥ ४॥ १२५॥ ग्रन्थं समापयति॥

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन् द्विजः। भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम्॥१२६॥

इत्येतदित्यादि। १२६॥ इति ग्रन्थसमाप्तौ* एतन्मानवं धर्म्मशास्त्रं* भृगुप्रोक्तं द्विजः पठन्* नित्यमाचारवान् भवति* यथेष्टां गतिमवाप्नोति॥ १॥ १२६॥

॥*॥*॥*॥ इति मानवे धर्म्मशास्त्रे *भृगुप्रोक्तायां संहितायां* द्वादशोऽध्यायः॥*॥*॥*॥

॥*॥*॥ इति मनुसंहिता समाप्ता॥*॥*॥

इति मानवे धर्म्मशास्त्रे भृगु* प्रोक्तायां द्वादशाध्यायी* संहितायामम्बष्ठविप्रकुलजातवेदाग(ङ्गा)*धरराये कृतायां। १। प्रमादभञ्जनाख्या* द्वादशाध्यायप्रमाद*भञ्जनी द्वादशोऽध्यायः॥ २॥ चरमवयसि वेदोक्तविज्ञानवद्भ्यो विपुलविमलबुद्ध्या लोचा गङ्गाधरस्ताम्। बहुमुनिवचनार्थै र्व्याख्या देकां विधाय मनुनिगदित धर्म्मसंहितायामगुना। इति।

॥*॥*॥*॥ प्रमादभञ्जनी समाप्ता॥ ०॥ १२॥*॥*॥*॥